कर्म्म बन्धो ज्वरो नृणां तपस्तद्भेषजं कटु ।
आपात मधुरापथ्यमिन्द्रियार्थोऽत्यनर्थकृत् ॥ २८ ॥

अपि च । सन्ताप्यमानैः कृमिभिरेतैः स्वकृतकोषगैः ।
स्वकर्म्मसूत्रबद्धस्योदर्कोऽयमिति दर्श्यते ॥ २९ ॥

तस्मात् संसारिणः स्वकर्म्मसूत्रबद्धा न भवेयुः । तथा काम-क्रोधादीनां वशे न वर्त्तेरन् । यतः ।

हतोऽतिकामाल्लङ्केशो मत्सरात् कुरवोऽसुराः ।
लोभात् क्रोधवशाः क्रोधात् शोकाच्चटकदम्पती ॥ ३० ॥

उर्व्वशी । किं तत् कथ्यतां ।

अर्ज्जुनः । देवि ! श्रूयतां । तद्वृत्तान्तं कथयतां शृण्वताञ्च शरीरमवसीदति । शावकान् व्याधस्य जालबद्धान् वीक्ष्य शोचन्ती चटका आह ।

उक्तार्थं स्पष्टयति कर्म्मबन्धेति । अस्यार्थः सुगमः ॥ २८ ॥

संसारिणः स्वकर्म्मसूत्रबद्धा भूत्वा परत्र यथा सन्तापं नाप्नुयुस्तथैवाचरेयुरित्याह सन्ताप्येति । स्वकृतकोषगैः स्वयं निर्म्मितो यः कोषः तद्गर्भस्थितैः कृमिभिः स्वकर्म्मसूत्रबद्धस्य अयं उदर्कः इदमेवोत्तरफलमित्येव दर्श्यते ज्ञाप्यते इत्यर्थः । कोषकारः कृमिरपि स्वकर्म्मसूत्रेण स्वकृतसूत्रेण बद्ध एव सन्ताप्यते कुविन्देरिति प्रसिद्धिः ॥ २९ ॥

हत इति । मत्सरादन्यशुभद्वेषात् कुरवो हता इति पूर्व्वेण सम्बन्धः । एवं सर्व्वत्र हतेति सम्बन्धः । अन्यत्सुगमं । अस्मिन् श्लोकत्रये व्याकरणपक्षो नास्तीति ध्येयं ॥ ३० ॥

व्याकरणम् ।

मौढ्याच्चेष्यते ॥ २७ ॥ २८ ॥

स्वाविनेशश्चटकपततोऽमिच्छ एषोऽत्यच्छद्यो
मायाबन्धः किमुत भवताऽसर्ज्जि निर्हेतु धातः ।
नापत्यात् प्रत्युपकृतिविधावस्य लोभोऽस्ति कश्चि-
त्तज्ज्ञाने त्वच्छिशुमतिरभूत् सर्ज्जने नस्तिरश्चाम् ॥ ३१ ॥

अथ चटको धैर्य्यमास्थाय शोचन्तीं चटकां प्रति । प्रिये! शोकं त्यज यच्छरीरिणां शोकमोहादिकं स्वकर्म्मपरिपाक-एव तदुक्तं ।

स्वकर्म्म जर्भ भो ह स्य तद्देवानर्थकृद्धत ।
धात्रे किं कुप्यसि भ्रातः स्वेष्टायोगवियोगतः ॥ ३२ ॥

स्वेति । उत भो धातर्व्विधातः! चटकपततः चटकपक्षिणः एष अत्यच्छद्यो मायाबन्धः किं कथं निर्हेतु हेतुशून्यं यथा तथा असर्ज्जि सृष्टः । कीदृशो मायाबन्धः अमिच्छः अबाधनीयः (मिच्छ शबाधे इत्यस्य अलिङ्रूपं ।) किम्भूतस्य पततः स्वावे नेशः स्वेषामात्मीयानामवे रक्षणे न ईट् अप्रभुस्तस्य अशक्तस्येति यावत् । (पतत् पत्ररथाण्डजा इत्यमरः ।) ननु मनुष्याणामिव चटकस्यापि अपत्यात् प्रत्युपकाराय लोभोऽस्तीति तस्यापि अपत्यं प्रति मायाबन्धो युज्यत इत्यत आह नापत्यादिति । अपत्यात् प्रत्युपकृतिविधौ अस्य चटकपततः कश्चिल्लोभो नास्ति तत् तस्मात् नोऽस्माकं तिरश्चां सर्ज्जने सृष्टिकरणे त्वच्छिशुमतिस्तव बालकबुद्धिरभूत् ।

पक्षे । स्वाविने इति आत्मीयस्य रक्षणे इनायाः स्वामिन्याः सम्बोधनं । एषेत्यादिकं उदाहरणं । शः ६ । च ट क प त तः ५ । अमि ७ । छः १ । ३१ ॥

स्वकर्म्मेति । भोः अकृतपुन्य! स्वकर्म्म आत्मीयं कर्म्मैव जर्भ निर्भर्त्सय । (जर्भ-निर्भर्त्सने इत्यस्य रूपं ।) स ह नाशय वा तपोबलादिनेति शेषः । अत्र हकारो वाकारार्थः । स्येति सोय नाशे इत्यस्य रूपं ।) हि यस्मात् तदेव स्वकर्म्म अनर्थकृत्

व्याकरणम् ।

शश्चटक पततोऽमिच्छः । च ट क प तात् परस्य शस्य छः स्यात् अमि परे विकल्पोऽनुवर्त्तते । त्वच्छिशुमतिः ॥ ३१ ॥

"शम्कोटि" । पां "शश्छोऽटि" वामि । सु ।

अथ चटकां मोहात्तज्जाले पतनोद्यतां वीक्ष्य चटकः ।
प्रिये ! मोहो मतङ्गज एवं विवेकाङ्कुशेन दमनीयः ।

देवद्रुङ्ङणनः स्वतो द्विरचितात् पुत्राख्यवृक्षात् फलं
भुङ्क्तेऽमुत्र गतः समं स्वपितृभिर्भुङ्क्ते चिरं मानवः ।
एवं सोऽप्युपकृत् फलोन्मुख उताकस्मात् पतेच्चेत्तदा
वप्ता तस्य निजां तनुं त्यजति किं शोकेन मुह्यन्नपि ॥ ३३ ॥

---

सर्व्वानर्थमूलं । हत खेदे हे भ्रातः ! स्वेष्टायोगवियोगतः स्वाभीष्टस्य अयोगवियोगाभ्यां धातः विधातः किं कथं कुर्याम इत्यन्वयः ।

पक्षे । स्वकर्म जर् इति स्वकर्मजरणकर्त्तुः सम्बोधनं । तच्चेत्रेत्यादिकं उदाहरणं । भ भः १ । हस ६ ॥ ३२ ॥

देवेति । देवद्रुङ् देवयाजकः अर्थात् कृतपुण्यो मानवः अणनो जीवन् पुत्राख्यवृक्षात् फलं भुङ्क्ते अमुत्र परलोके गतः सन् स्वपितृभिः समं सार्द्धं तत्फलं चिरं भुङ्क्ते । कीदृशात् वृक्षात् स्वतः आत्मनः सकाशात् द्विरचितात् द्वाभ्यां स्त्रीपुंसाभ्यां रचितात् सृष्टादिति यावत् । एवमुपकृत् उपकारकः सोऽपि वृक्षः फलोन्मुखे फलजननसमये चेत् यदि अकस्मात् पतेत् तदा अस्य वृक्षस्य वप्ता जनकः शोकेन मुह्यन्नपि किं निजां तनुं त्यजति । (अणन इति अणयङ् प्राणन इत्यस्य रूपं ।)

पक्षे । देवद्रुङ् इति देवयाजकस्य सम्बोधनं । तात्पुत्रेत्यादिकं उदाहरणम् । तत्पुत्र एवेति तात्पुत्रः स्वार्थतद्धितान्तः । ङ ण नः ६ । स्वतः ५ । द्विः १ । अचि ७ । ३३ ॥

व्याकरणम् ।

भभो हस । दान्ते स्थितात् च ट क प तात् परस्य हकारस्य भभः स्यात् वामि परे । तद्धेव । अनर्थकृद्धत ।

"झयो होऽन्यतरस्याम्" पा ॥ ३२ ॥

ङणनः स्वतो द्विरचि । ह्रस्वात् परस्य दान्ते स्थितस्य ङ ण नस्य द्विःस्यादचि परे । मुह्यन्नपि ॥ ३३ ॥

"ङमो ह्रस्वादचि ङमुण् नित्यं" पा । "स्वान्तङोऽचिद्विः" सं ।

निबोध नोनु तच्छोच स्फीतर्द्धिर्यन्न तेऽभवत्।
बीजेऽनुप्ते पुरा चेत् फलतीह नहीच्छताम्॥ ३४॥
प्रिये! शोकमोहौ सर्व्वथैवोज्झ्यौ नतु तौ पालनीयौ। यतः।
यच्छ्रुक्झयो भवति च पस्तस्य स्यात् खसेविके।
छ्झयः स एव स्वे धाम्नि पुष्टश्छेत्ता भुजङ्गवत्॥ ३५॥

निबोधेति। यत् यस्मात् ते तव स्फीतर्द्धिः पुत्रपौत्रादिरूपविपुलसम्पत् माभवत् तत् तस्मात् नु भोः नो शोच शोकं माकुरु। अत्र हेतुमाह। पुरा पूर्व्वकाले बीजे अनुप्ते सति इहकाले इच्छतां जनानां सम्बन्धे चेत् न फलति। तथाहि पूर्व्वजन्मकृतस्य सम्पद्बीजभूतस्य अदृष्टस्य सत्त्वे कथमिह जन्मनि इच्छामात्रेण सम्पत् स्यात् इति निबोध जानीहि।

पक्षे। निबोध नोनु इति नु भोः नोऽस्माकं सकाशात् निबोध इति तु शिष्यावधानार्थं। स्फीतेत्यादिकं उदाहरणं। तत् १। ङः ६। अचः ५॥ ३४॥

यद्इति। हे खसेविके! खे आकाशे सेवति गच्छतीति सा तथा उज्झ निरसनीयं याति रक्षतीति उज्झयः यो जनः एतादृशो भवति तस्य यः पालकस्य स एव उज्झास्त्यज्यः शोकादिः स्वे धाम्नि निजे शरीरे पुष्टः सन् छेत्ता हन्ता स्यात्। यथा निरसनीयो भुजङ्गः स्वीयधाम्नि पुष्टः सन् पालकस्य हन्ता स्यात्तथेत्यर्थः।

पक्षे। अधिक इत्यादिकं उदाहरणम्। यः १। छत् १। झयः १। भवति ८। चयः १। तस्य ६। स्यात् ८। खसे ७। ३५॥

## व्याकरणम्।

तच्छोऽचः। अचः परस्य छकारस्य तत् पूर्व्वोक्तं द्वित्वं स्यादचिपरे। इच्छताम्।
"छे च" पा। "छोऽचः" सं॥ ३४॥

य उक्झयो भवति चयस्तस्य स्यात् खसे। यच्छत् उक्तो झयः स्यात् तस्य स्थाने चयः स्यात् खसे परे। छेत्ता। "खरि च" पा। "झर् झलोः खसुभवोयष् अवावन्ते च" सं॥ ३५॥

वर्द्धमाने शुचोवेगे मुग्धे मा धैर्य्यमुज्झ सः।
जनो झभो यत् परत्रानिरुद्धो धाम पातयेत्॥ ३६॥
एको वाह्यः कोऽपि तद्राट् शास्त्येकः कोऽपि दण्डपाड्।
धर्म्माधर्म्मौ हीष्टानिष्टयोर्हेतू अन्ते च तौ तयोः॥ ३७॥

अथ चटका चटकं प्रति। एभिः शावैर्विना जीवनं परं दुःखायैव, तस्मादेभिः सहैव युगपन्मरणं श्रेयः येनैषां वियोगजः शोको न मां व्यथयिष्यते इत्युक्त्वा तज्जाले न्यपतत्। अथ चटकोऽपि तद्दीच्याः अतिशोकात्तज्जाले पतितो बद्ध आसीत्। अथ व्याधो हृष्टः सर्व्वांस्तान् गृहीत्वा गृहं ययौ। अतोऽहं ब्रवीमि देहवद्भिर्मोहादीनां वशे न भवितव्यमिति। (निष्क्रान्तौ।)

---

वर्द्धेति। हे मुग्धे! शुचः शोकस्य वेगे, वर्द्धमाने सति धैर्य्यं मा उज्झ न त्यज यत् यस्मात् झभः झः प्रचण्डानिलः तन्निभस्तत् सदृशः सजवः सशोकवेगः अनिरुद्धः सन् परत्र अर्थात् परजन्मे धाम शरीरं पातयेदित्यन्वयः। झः प्रचण्डेऽनिले इष्टो इति शब्दाब्धिः।

पक्षे। उदिति वक्तुः सम्बोधनं। पूर्व्वभागः उदाहरणं। झसः ६ं। जवः १ं। झभः १ं। यत् १ं। परत्र ७ं॥ ३६॥

एक इति। एको वाह्यः वहनीयः—कोऽपि तद्राट् तस्य वाहकः एको जनः शास्ति कोऽपि दण्डपाड् दण्डसहिष्णुः। अत्र हेतुमाह। हि यस्मात् धर्म्माधर्म्मौ इष्टानिष्टयोः
इष्टानिष्टयोः अर्थात् सुखदुःखयोः हेतू अन्तेच परकालेच तौ धर्म्माधर्म्मौ तयोरिष्टानिष्टयोः सुखदुःखयोः हेतू इत्यन्वयः।

पक्षे। हेतू इत्यन्तपूर्व्वभागः उदाहरणं। इतिहसूत्रव्याख्याटीका। अन्ते ७ं। च १ं। तौ १ः। तयोः ६ः। ३७॥

व्याकरणम्।

झसोजवोझभो यत्परत्र। झसो जवः स्यात् यत् यदि परत्र झभः स्यात्।
वर्द्धमाने। मुग्धे। अनिरुद्धः "झलां जश्झशि" पां॥ ३६॥
अन्ते च तौ तयोः। विरामेच झपझसयोः स्थाने तौ पूर्व्वोक्तौ चपजवौ स्तोविरामे। तद्राट्। दण्डपाड्। "वावसाने" पां॥॥ ३७॥ इति हसु सन्धि पादः॥ ०॥

अथ पारिपार्श्विका गायन्ति।

जयति कविभारती हितसदुपदेशिनी
सरसहृदया गुणालङ्कृतिसुशोभिनी।
मृदुपदाद्यवयवा ह्लादैकजननी
स्वर्णमयतनूरसिकजनमनोमोहिनी॥ १॥

पुनः कवितामुद्दिश्य।

नान्तस्तमस्किरो यो हृत्पद्मोद्बोध्यपि वेत्ति किं।
सोऽविः समस्ते स्याद्वा के परे तुल्या यशस्करि॥ २॥

---

जयेति। सुकवेर्भारती सत्कविता जयति सर्व्वोत्कृष्टतया वर्त्ततां। कीदृशी हितसदुपदेशिनी रामादिवत् प्रवर्त्तितव्यं न रावणादिवदिति हितस्य उपदेशिनी। गुणालङ्काराभ्यां शोभना सगुणा सालङ्कारेत्यर्थः। मृदुपदाद्यवयवा मृदवः पदाद्यवयवा यस्याः सा तथा। ह्लादैकजननी आह्लादमात्रजनिका सत्कविता साध्वी स्त्री च। स्वर्णमयतनुः स्वर्णं साधु अक्षरं तन्मयतनुः। कामिनीपक्षे सुवर्णवर्णतया तन्मयतनुः॥ १॥

नान्तेति। हे यशस्करि कविते! यः सूर्य्यः अन्तस्तमस्किरो न अन्तःकरणान्धकारविक्षेपको न हृत्पद्मस्य बोधी विकाशको वा न इति वेत्तीः किं कथं सः अविः सूर्य्यस्ते तव समः स्यात् अपितु नेत्यर्थः। तथाहि त्वं अन्तस्तमोनाशिनी हृत्पद्मविकाशिनी चेति भावः। परे अन्ये केवा तव तुल्या भवेयुरिति शेषः। किर इति कृधक्षेपे इत्यस्मात् कप्रत्ययनिष्पन्नं।

पक्षे। पूर्व्वार्द्धं उदाहरणं तुल्येत्यादिकञ्च उदाहरणं।

सः १ं। विः १ं। समस्ते ७ं। स्यात् ८ं। वा १ं। के ७ं। परे ७ं॥ २॥

व्याकरणम्।

सो विः समस्ते स्याद्वा के परे। विसर्गस्य सः स्याद्वा के परे समासे। तमस्किरः यशस्करी॥ २॥

विष्णुशर्म्माणं प्रति।

यत् कान्तेपेतदन्ते नहि भजति रतिं कामिनी नव्यसङ्गात्
तन्नश्चैतत् सुकाव्येन सह परिचयात् प्रेमसार्द्रा श्रुतिर्नः।
प्राचीने यातयामे नहि भजति रतिं नाट्यकाव्यादिशास्त्रे
हादुष्खं दुःखमस्मिन् सदसि न रसवित् विक्रमादित्य आस्ते ॥३॥

अथ विष्णुशर्म्मा शिष्यान् प्रति।

अर्ज्जितो यस्तु विद्यार्थः सत्पात्राय तमिच्छते।
विसर्ज्जनीयः सोऽनन्तयशसीच्छावतांश्वरात् ॥ ४ ॥

---

यदिति। यत् यथा कामिनी नव्यसङ्गात् नव्यस्य यूनः सङ्गं प्राप्य अपेतदन्ते विगतदशने अर्थात् वृद्धे कान्ते भर्त्तरि रतिं न भजति तत् तथा नोऽस्माकं श्रुतिः कर्णः नव्येन एतेन सुकाव्येन सह परिचयात् प्रेमसार्द्रा प्रेमार्द्रा सती यातयामे परिभुक्ते प्राचीने नाट्यकाव्यशास्त्रे रतिमनुरागं न भजति। हा विषादे दुःखं दुष्खं अस्मिन् सदसि सभायां रसवेत्ता विक्रमादित्यो नास्ते इत्यन्वयः। आर्द्रं सार्द्रमिति कोषः। यत्तत्शब्दोऽव्ययं यथेत्यर्थे।

पक्षे। यदिति यत्नवतः सम्बोधनं। नहीत्यादिकं उदाहरणं। एकवाक्यताच ऊहादिना करणीया। क=अन्ते ७। पे ७। तत्=अन्ते ७ ॥ ३ ॥

अर्ज्जीति। यो विद्यार्थः विद्यारूपं धनं अर्ज्जितः स विद्यार्थः सत्पात्राय अनन्तयशसि इच्छावतो जनस्य विसर्ज्जनीयः दातव्यः कीदृशाय तं विद्यार्थं इच्छते स्पृहयते इत्यन्वयः।

पक्षे। तमित्यन्तपूर्व्वभागः उदाहरणं। सभीतिरार्त्तेः सम्बोधनं। इते ७। विसर्ज्जनीयः १। स १। अनन्तय-शसि ७ ॥ ४ ॥

व्याकरणम्।

कान्ते पे तदन्ते। विः सः स्यात् वा समासे कान्ते खकारे पकारे तदन्ते फकारे च परे। दुष्खं, दुःखं। ८। ३। ४६। पां। "सेतु कखपफे वा" सु ॥ ३ ॥

काव्यरूपेण पीयूषं देवान्धः तूसरति क्षितौ ।
तद्विद्भिरेवास्वाद्यं तत् नाज्ञैरनधिकारिभिः ॥ ५ ॥
अन्यैरसैस्तृपघ्न्नान्तरसस्य न तृपो भवेत् ।
क्वापि शस्परतश्चेत्तत् शस्ताम् स्युस्तस्य किं सिताः ॥ ६ ॥

तस्मात् शान्तरसप्रधाने हितोपदेशात्मके सत्कविवाक्ये तद्रसपिपासवो रतिं धास्यन्ति। अपिच, यथा कान्ता सरसता—पादनेनाभिमुखीकृत्य रामादिवद्वर्त्तितव्यं न रावणादिवदिति कान्तमुपदिशति तथा सत्कवितादि रसिकजनानुपदिशति। अत्रोदाहरन्ति ।

---

काव्येति। देवान्धो देवानामन्नं पीयूषं काव्यरूपेण तूसरति छद्मना गच्छति, अर्थात् काव्यच्छलेन अमृतं क्षितौ आविर्भवति इत्यर्थः। तद्विद्भिः काव्यामृतविद्भिः तत्काव्यामृतं आस्वाद्यं। पद्ये। पूर्व्वसूत्रस्य उदाहरणमात्रं । ५ ॥

एतन्नाट्ये शान्तिरसस्य प्राधान्येन तद्वैतत्कर्म्माह अन्यैरिति। शृङ्गारादिभिरन्यैरसैस्तृपस्तृप्तो जनः शान्तरसस्य तृपस्तृप्तो न भवेत्। तृप इति तृप्धातोरिगुपधात् कप्रत्ययेन रूपं। अर्थान्तरमाह। चेत् यदि शस्परतो बालतृणानुरक्तः स्यात् तत्तदा तस्य जनस्य सम्बन्धे सिताः शर्कराः किं शस्ताः प्रशस्ताः स्युः अपितु नैवेत्यन्वयः

पद्ये। तृप इत्यन्तपूर्व्वभागः तास्युरित्यादिपरभागस्य उदाहरणं। भवेत् ८ं। क्व ७ं। अपि १ं। शस् १ं। परतः ७ं। चेत् १ं। तत् १ं ॥ ६ ॥

व्याकरणम्।

क्ते विसर्ज्जनीयः सोऽनन्तयशसि। नास्ति अन्तयः अन्तगतः शस् यस्य तस्मिन् क्ते परे विसर्गः सः स्यात्। यस्तु। इच्छावतश्चिरात् ॥ ४ ॥ देवान्धः तूसरति ॥ ५ ॥

"विसर्ज्जनीयस्य सः। पां।" वेः सोऽशसन्ते क्ते। सुं।

भवेत् क्वापि शस् परतश्चेत्तत्। चेत् यदि परत्र शस् स्यात् तदा विसर्गस्य तत् शस् स्यात् क्वापि नतु सर्व्वत्र। तृपघ्नान्तः। तास्युः। "वा शरि" पां। "शसि शस्" सुं ॥ ६ ॥

जय्याहवेति विरत उरुवेगात् स्मरादितः ।
नृपोऽभूद्वल्लभो नाम्नाऽमृतभुक् लोकवल्लभः ॥ ७ ॥

अथ मन्त्री तं राजानं प्रति ।

देव ! कुमारमहोदयः सिंहासनमर्थयते ।

राजा तं प्रति सक्रोधं । अहो सुशीलमित्र ! कुमारं एवं ब्रूयाः ।

अघो अरेऽवे लुप्तघोभगो भो भ्ययाच्च शिष्टैर्व्वहिरात्मबन्धोः ।
यो राजपुत्रः क्वास आप पित्र्यं सिंहासनं भो अत इच्छ नो तत् ॥ ८ ॥

मन्त्री राजानं प्रति ।

भगो एवं कुमाराय वक्तुं न मयोपयुज्यते ।

---

इदानीं काव्यस्योत्कर्षं दर्शयितुं इतिहासमाह जय्येति । नाम्ना वल्लभो नृपोऽभूत् कीदृशः आहवे युद्धे अतिजय्यो अतिजयशीलः उरुर्महान् वेगो यस्य तादृशात् स्मरादितः कामादेर्व्विरतः अमृतं यज्ञशेषं भुनक्ति इति अमृतभुक् ।

पद्ये । जय्या इति जेतुं शक्यानां सम्बोधनं । उरुरित्यत्र उ इति सम्बोधनं । वेगेत्यादिकं उदाहरणं । हवे ७ं । अति ७ं । वि: १ं । अत: ५ं । उ: १ं ॥ ७ ॥

अघो इति । अरे अघो अघवन् ! अवे ! मेघ ! मेघतुल्य ! यो राजपुत्रः अलुप्ताघः अलुप्तं दीप्तं अघं पापं यस्य स तथा । अभगः नास्ति भगं कीर्त्तिर्यस्य स तथा अभः नास्ति भा दीप्तिर्यस्य स तथा, आत्मबन्धोः स्वपित्रादेः शिष्टैः शासनैः बहिर्व्वाह्यो अभ्ययाच्च गतवांश्च स क्व कुत्र पित्र्यं सिंहासनं आप अतः कारणात् भो भवन् तत् पितृसिंहासनं नेच्छ इत्यन्वयः ।

पद्ये । अरे इत्यन्तपूर्वभागः शिष्टैरित्यादिपरभागस्य उदाहरणं । अवे ७ं । लुप् १ं । अघो भगो भोभ्यः ५ं । आत् ५ं । च १ं ॥ ८ ॥

व्याकरणम् ।

हवेति विरत उः । अकारात् परो विसर्गः उः स्यात् अकारे हवे च परे । नृपोऽभूत् । "अतो रोरप्लुतादप्लुते । हशि च" पां । "अतोऽहव्युः" मु ॥ ७ ॥

अवे लुप्तघभगोभ्यो भ्ययाच्च । अघो भगो भोभ्यः अवर्णाच्च परस्य विसर्गस्य लुप् स्यादवे परे । अघो अरे । भो अतः । अतइच्छ । "अभो भगो अघोभ्योऽवे लुप्" मु ॥ ८ ॥

अथ कुमारस्तन्मुखात्तत् श्रुत्वा चिन्तयतिस्म।

प्राप्तं न यौवने राज्यं लब्धमप्यत ऊर्द्ध्वत:।
भार्य्येव वृद्धावस्थोढ़ा किं मे साधयिता फलं॥ ९॥

अथ स एवमवधारितवान्।

भो धर्म्माविद्धि तातो मे नायच्छद्राज्यमर्थिने।
तस्मात: पितरं हत्वा नेष्ये सिंहासनं बलात्॥ १०॥

यद्वाचि साचिहसिते समपातयद्य:
श्रोत्राच्च्यपातयदिषून् मदनोपि तस्मिन्।
साचिन्तयन्नृपसुतेति पितस्त्वया भो
युद्वाहिता न तत आधिमवैसि नो मे॥ ११॥

---

प्राप्तमिति। अत ऊर्द्ध्वतः यौवनस्योर्द्ध्वतः राज्यं लब्धमपि मे मम किं फलं साधयिष्यति। अत्र दृष्टान्तमाह भार्य्येति॥ ९॥

भो इति। अर्थिने याचमानाय मे मह्यं तत् तस्मात्। अन्यत् सुगमं॥ १०॥

यद्वाचीति। सा नृपसुता इति अचिन्तयत्। किमित्याह भो: पित: त्वया न उद्वाहिता अहमिति शेषः। ततस्तस्मादनुद्वाहात् मे मम आधिं मनोव्यथां नो अवैसि न जानासि। सा कीदृशीत्याह। साचिहसिते साचि वक्रं हसितं यस्मिन् तादृशे यद्वाचि यस्या वचसि यो जनः श्रोत्राच्चि कर्णचक्षुषी अपातयत् तस्मिन् जने मदनोपि इषून् वाणान् अपातयत् इत्यन्वयः।

पद्ये। साचीत्यादिकं उदाहरणं। यसू १ं। षा १ं। अवि ७ं॥ ११॥

## व्याकरणम्।

भगो एवं। अत ऊर्द्ध्वतः॥ ९॥ भो धर्म्म॥ १०॥

यद्वाचि। अत्र यात् भो भगोऽघोभ्यश्च परस्य विसर्गस्य यत् स्यादचि परे षां। यदित्यत्र तकारो वर्णस्वरूपार्थकः। भोयुद्वाहिता। अत आधिं। "भो भगो अघो अपूर्व्वस्य योऽशि" पां। "यशावि" सं॥ ११॥

इचो रे वेदनं दास्यन्नहरत् स्वं कुलस्त्रियाः ।
धैर्य्यं तत् श्वो वरिष्ये तं प्रीतिं यं चक्षुरेष्यति ॥ १२ ॥

अथाद्भुतमाकर्ण्य ।

सुवचो रजनेः शेषेऽथाभ्यामेकमर्थवत् ।
नटोक्तं धीदीपमन्तर्जाततमोनुदं ॥ १३ ॥

अर्थालाभात् साधुवादस्यालाभाच्च सभासदां ।
वैमनस्यादभूत् तौर्य्यत्रिकस्य विलयो यदा ॥ १४ ॥

इचोरइति । इः कामः स एव चोरः इति इचोरः वेदनं पीड़ां दास्यन् कुलस्त्रियाः अर्थान्मम धैर्य्यं स्वं वित्तरूपं धनं अहरत् । तथाच कुलस्त्रिया धैर्य्यमेव धनं तस्य हरणे अतोऽत्र पीड़ा भवतीति तात्पर्य्यं । तत् तस्मात् धैर्य्यहरणकर्तृत्वात् यं जनं प्रति चक्षुः प्रीतिमेष्यति प्राप्स्यति तं जनं श्वः अनागतेऽह्नि कल्ये वरिष्ये ।

पक्षे । अदनमित्यादिकं उदाहरणं । इचः ५ । रः १ । अवे ७ ॥ १२ ॥

सुवच इति । आभ्यां भ्रातृभगिनीभ्यां रजनेः शेषे रात्र्यवसानसमये अर्थवत् कुमारकुमार्य्योः हृदयङ्गमार्थयुक्तं एकं सुवचः अश्रावि श्रुतं । कीदृशं नटो नटाक्तं नटीं प्रति नटेनोक्तं धीदीपं ज्ञानोद्दीपकं स्वस्य अन्तर्जातं यत्तमो गुणविशेषस्तस्य नुदं नाशकं ।

पक्षे । सुप् इति सुपस्य सम्बोधनं । शेषे इत्यादिकं उदाहरणं । अचः ५ । रजनेः ६ ॥ १३ ॥

नटेन नटी कदा उक्तं इत्यत आह अर्थेति । अर्थालाभात् धनलाभस्याभावात् सभासदां धन्यवादस्याप्यलाभाच्च वैमनस्यात् विमनस्कत्वात् तौर्य्यत्रिकस्य नृत्यगीतवाद्यस्य यदा विलयोऽभवदित्यन्वयः ॥ १४ ॥

## व्याकरणम् ।

इचोरोऽवे । इचः परस्य विसर्गस्य रः स्यादवे परे । चक्षुरेष्यति । "समणुधौरुः" णं । "रिचोऽवे" सं ॥ १२ ॥

अचोरजनेः । अचः परस्य रजनेः रेफजातस्य विसर्गस्य रः स्यादवे परे । अन्तर्जातः "रोऽचः" सं ॥ १३ ॥

तद्वचश्च।

सद्वर्गाणां वर्णयुगे वाद्येह कृतिरिष्यते।
तन्मागाः सति! सन्निन्दां लभेथा गीष्पतीच्छया॥ १५॥

बुद्धग्रा गीष्पतिना समावपि पुराऽभूतामसद्धूर्पती
श्लोकार्थावगमाद्बभूवतुरिमौ जातप्रमाहःपती।
हाराद्यैः सुपुरस्क्रियां विदधतुस्तस्योपदेष्टुस्तदा
श्रुत्वा तच्च रहस्यमात्मजमुखाद्राजाप्यदोऽचिन्तयत्॥ १६॥

मद्ये नटेन किमुक्तमित्यत आह सदिति। हे सति! अद्य इह सभायां सत्वर्गाणां साधुसमूहानां वर्णयुक् एव वर्णः प्रशंसा तद्युक् तद्युक्तैव कृतिर्व्यापारः क्रिया वा इष्यते आकाङ्क्षाविषयोभवति तत् तस्मात् सन्निन्दां सज्जनकृतनिन्दां मागाः माप्नुहि गीष्पतीच्छया विधातुरिच्छया लभेथाः लाभं करिष्यसीत्यन्वयः। (वर्णौ द्विजादौ शुक्लादौ स्तुतावित्यमरः।)

पद्ये सदिति गमनशीलस्य सम्बोधनं। तन्मेत्यादिकं उदाहरणं। वर्गाणां ६ :। वर्णयुगे ७ं। वा १ं। आद्ये ७ं। ह १ं। कृतिः १ं। इष्यते ८ं। १५॥

नटवाक्यात् आत्मनः कुकर्मोद्यमनिवर्त्तनरूपार्थावगमात् राजात्मजयोर्विवेको जात इत्याह बुद्धग्रेति। इमौ राजात्मजौ पुरा पूर्वस्मिन् काले बुद्धग्रा बृहस्पतिना समावपि असद्धूर्पती असच्चिन्तास्पदीभूतौ अभूतां जातौ श्लोकार्थावगमात् नटोक्त श्लोकार्थावगमात् जातप्रमाहःपती जातः प्रमारूपो यथार्थज्ञानरूपोऽहःपतिर्ययो स्तौ तथा बभूवतुः। तमोनाशकत्वेन प्रमायाः सूर्यतुल्यत्वेनोपन्यासः। तदा तस्मिन् काले तस्योपदेष्टुः ज्ञानोपदेष्टुर्नटस्य हाराद्यैः पुरस्क्रियां सन्मानं विदधतुः। राजा च तच्च रहस्यं आत्मजमुखात् श्रुत्वा अदः वक्ष्यमाणमिदं अचिन्तयत्। (धूः स्त्री स्यात् भारचिन्तयोरिति कोषः)। १६॥

## व्याकरणम्।

वर्गाणां वर्णयुगे वाद्येह कृतिरिष्यते। कवर्गादि पञ्चवर्गाणां आद्ये एव युगे वर्णद्वये परे पूर्वोक्तक्रिया इष्यते वा। हकारोऽवधारणार्थकः। गीष्पतिः॥ १५॥

"अपि वा" मं।

गीः पतिः। धूर्पती। अहःपती॥ १६॥

अहो काव्यस्य माहात्म्यं यस्मात्तातविभक्तिके ।
रेफे नाविर्भवत्यङ्कः पतिवद्धीस्तमोनुदा ॥ १७ ॥

अतएव कान्तेव कवितापि सदुपदिशतीति यदुक्तं तत् समक्षं परीक्षितमासीत् ।

अथासौ जातवैराग्यः स्थित्वाहोरात्रमाश्रमे ।
उदितेऽहस्करे प्रायादहोभिर्गस्यमाश्रमं ॥ १८ ॥

अथ राजा वनं गतोऽचिन्तयत् ॥

येन मोहस्य नादेर्लोप् तदेतज्जन्मनः सतः ।
फलं स देहो भाराय भुवो यः स्यान्न मुक्तये ॥ १९ ॥

---

किमचिन्तयदित्यत आह अहो इति । अहो आश्चर्य्यं यस्मात् काव्यात् तातविभक्तिके ताते पितरि विनष्टा भक्तिर्यस्य स तथा तस्मिन् रेफे अधमे अङ्कःपतिवत् सूर्य्यवत् तमोनुदा तमोगुणनाशिनी धीर्ज्ञानं न आविर्भवति अपितु तद्वेत्यर्थः । ( रेफा याप्यवमाधमा इत्यमरः । )

पक्षे तातेति प्रियसम्बोधने । पतीत्यादिकं पूर्व्वसूत्रीयोदाहरणं । विभक्तिके ७ं । रेफे ७ं । न १ं । आविर्भवति ८ं । अङ्कः ६ं । १७ ॥

अथेति । अस्यार्थः सुगमः ॥ १८ ॥ येनेति । येनोपायेन मोहस्य अविद्याया लोप्नाशः स्यात् कीदृशस्य मोहस्य नादेः नास्ति आदिर्यस्य स तथा तस्य । तदेव मोहनाशायोपयुक्तं ब्रह्मज्ञानमेव सतः प्रशस्तस्य एतज्जन्मनः अर्थात् मनुष्यजन्मनः फलं । यो देहः शरीरं मुक्तये न स्यात् स देहो भुवो भारायेत्यर्थः । अविद्योपाधिविगमो मुक्तिरितिमतेनेदं ।

पक्षे । येन मो इति यमप्रभोः शिवस्य सम्बोधनं । फलमित्यादिकं उदाहरणं । हसि ७ं । अनादेः ५ं । लोप् १ं । तदेतत् जन्मनः ५ं । सतः ५ं । १८ ॥ १९ ॥

व्याकरणम् ।

विभक्तिके रेफे नाविर्भवत्यङ्कः । अङ्को विसर्गस्य रेफो नस्यात् विभक्तौ के रेफे च परे ॥ १७ ॥ "नाङ्को रकक्तौ" मुं । अहोरात्रं । अहस्करे । अहोभिः ॥ १८ ॥

हस्यनादेर्लोप् तदेतज्जन्मनः सतः । नास्ति आदिर्यस्य तादृशात् तदेतदोः स्थाने जातात् सकारात् परस्य अनुवर्त्तमानविसर्गस्य लोपः स्यात् हसिपरे । स देहः ॥ १९ ॥

"एतत्तदोः सुलोपोऽकोरनञ् समासे हलि" पां ६ । १ २३ । "हसे-तत्तदोऽनञकः सेर्लोपः" मुं ।

सस्त्वेष राजा स्वं चित्तं ब्रह्मण्याधाय तं लयं।
प्राप येनैषको भूपोऽसौबभूवेशतां गतः ॥ २० ॥

सतु राजातिदुरापं साम्राज्यसुखमपि विहाय यद्वानप्रस्था- श्रमं भेजे तत् भद्रमेवाचरितं तेन। यतः।

धीगाढ़ोरस्तिरोधत्तेऽप्रतिरूपेऽनुवर्त्तिनि।
तथानुर्गुरुता प्राचीनस्य गूढ़ा भवत्यलं ॥ २१ ॥

सस्त्वेति। स एष राजा स्वं स्वीयं चित्तं ब्रह्मणि आधाय समर्प्य तं लयं मुक्तिं प्राप येन लयेन ईशतां ब्रह्मत्वं गतः प्राप्तः सन् एषको राजा असौ बभूव तद्विश्वो- ऽभूदित्यर्थः।

पक्षे। पूर्ब्बसूत्रस्य उदाहरणमात्रं ॥ २० ॥

धीगेति। अनुवर्त्तिनि अनुगते उपजीविनि पुत्रादिस्वजने अप्रतिरूपे शीलौ- दार्य्यादिना स्वस्यासदृशे सति प्राचीनस्य नुः पुरुषस्य गुरुता गौरवं गूढ़ा विलुप्ता भवेत् तथा सति धीगाढो धीर्बुद्धिर्गाढा गभीरा यस्य तादृशो जनः अरः शीघ्र- गामी सन् तिरोधत्ते स्वस्यानाचलिताभवति इत्यन्वयः। (अरं शीघ्रे रथाङ्गे च शीघ्रगे पुनरन्यवदितिमेदिनी)।

पक्षे। धीगा इति बुद्धिप्राप्तानां सम्बोधनं। गूढेति उदाहरणं। ढः १। रः १। तिरोधत्ते ८। प्रतिरूपे ७। अनुवर्त्तिनि ७। तथा ७। (अनु ऋ) अनुः ६। गुरुता १। प्राचीनस्य ६ ॥ २१ ॥

व्याकरणम्।

सहि एष राजा। अनादेरितिकिं। असौ बभूव एषको भूपः ॥ २० ॥

ढोरस्तिरोधत्ते प्रतिरूपेऽनुवर्त्तिनि तथाऽनुर्गुरुता प्राचीनस्य।

ढकारो रेफश्च तिरोधत्ते लुप्तो भवति समानरूपे वर्णे पश्चाद्वर्त्तिनि सति तथा- सति प्राचीनस्य पूर्ब्बस्य अनुः ऋवर्ज्जस्य दीर्घता स्यात्। गूढा ॥ २१ ॥

पाणिनिः। "८। ३। १३। १४ ॥ ६। ३। १११ ॥" "ढ्रो ढ्रि दीर्घश्चालुः।" सु।

स्याच्चेत् कुपथमारूढ़ः सूनूरुष्टाच गेहिनी ।
पृथ्वी परिवृढ़स्यापि न सम्पत् सुखकृत्तदेति ॥ २२ ॥

भट्टः विष्णुं प्रति। विद्वन्! एवं ; यतः पुरुषाणां पुत्रकलत्रादिषु विरक्तानामाश्रमान्तरमेव गतिः ।

---

नेपथ्ये ।

अस्ति पुंसां विरक्तानां दारादावाश्रमान्तरं ।
गतिःस्त्रिया दुर्भगाया गतिर्नान्या विना मृतिं ॥ १ ॥

विष्णुः । देव! साध्वो अजामिलनामविप्रस्य पत्नी आयाति।

अथ प्रविश्य सा । (भोग्याया दास्या गृहस्यावृतिनिर्मितौ वेलावसानेऽप्यत्यासक्तं वृद्धं पतिमजामिलं वीच्य तं प्रति ।)

---

स्यादिति। सूनुः पुत्रश्चेत् यदि कुपथमारूढ़ः स्यात् गेहिनी वा रुष्टा चण्डा स्यात् तदा पृथ्वीपरिवृढ़स्यापि चितीशस्यापि सम्पदैश्वर्य्यं सुखकृत् नस्यादित्यन्वयः पद्ये। पूर्व्वसूत्रस्य उदाहरण मात्रं ॥ २२ ॥

इति सन्ध्यध्याय टीका ।

---

अस्तीति। दारादौ पुत्रकलत्रादिषु विरक्तानां पुंसां आश्रमान्तरं वानप्रस्थाद्याश्रमोगतिः दुःखनिवृत्त्युपायोऽस्ति दुर्भगायाः स्त्रियाः मृतिं मरणं विना अन्या गतिर्नास्तीत्यन्वयः ॥ १ ॥

व्याकरणम् ।

आरूढ़ः । सूनूरुष्टा । ऋकारस्य किं? परिवृढ़ः ॥ २२ ॥ इति विसन्धिपादः ।

अहो ब्राह्मणरेफस्यादान्तस्य ते क्वचिदपि दृश्यते विसर्गो न।
दासीजनानुरागस्य यदा गौस्तोपि क्लेशमनुभवसि तदापि
तज्जनस्य योगक्षेमसाधनार्थं धूस्तोऽवसीदसि ॥ २ ॥

गतो घस्तोऽवसाने च विरतो नास्यवेतनात्।
परकृत्यात् पतत् कल्पं स्वधामाऽबुध नेच्छसे ॥ ३ ॥

सहसे च महाक्लेशं मनःस्ववयवेषु च।
वैधक्लेशः क्लेशहरो न सोढुं शक्यते कथं ॥ ४ ॥

अहो इति। ब्राह्मणरेफस्य ब्राह्मणाधमस्य अदान्तस्य अजितेन्द्रियस्य ते तव दासीजनानुरागस्य दासीं प्रति अनुरागस्य विसर्गस्त्यागः क्वचिदपि समये न दृश्यते यदा गौस्तोपि वाक्यप्रयोगतोऽपि क्लेशमनुभवसि तदापि तज्जनस्य दासीजनस्य योगक्षेमसाधनार्थं धूस्तश्चिन्तया अवसीदसि। (धूश्च स्यात् भारचिन्तयोरिति कोषः।)

पक्षे। ब्राह्मणेतिसम्बोधनं। दासीत्यादिकं उदाहरणं। रेफस्य ६ं। अदान्तस्य ६ं। ते ७ं। क्वचित् ७ं। अपि १ं। दृश्यते ८ं। विसर्गः १ं ॥ २ ॥

गतेति। घस्तो दिनं गतः अवसाने च दिनावसानेपि अवेतनात् वेतनशून्यात् परकृत्यात् परस्य कर्मणो विरतो विश्रान्तो नासि न भवसि हे अबुध! पतत्कल्पं स्वधाम स्वगृहं न ईच्छसे इत्यन्वयः। (गृह देहत्विट्प्रभावा धामानीत्यमरः)।

पक्षे। अबुध इति व्यसनिनः सम्बोधनं। गत इति घस इति च उदाहरणं। स्तोः ६ः। अवसाने ७ं। विः १ं ॥ ३ ॥

सहेति। मनः सु अवयवेषु च महाक्लेशं सहसे च सहिष्णुरप्यसि। क्लेशहरो दुःखनाशको वैधक्लेशः तपःप्रभृतिविधेयक्लेशः कथं सोढुं न शक्यते त्वयेतिशेषः।

पक्षे। सहेत्यादिकं उदाहरणं। स १ं। हसे ७ं। च १ं ॥ ४ ॥

व्याकरणम्।

रेफस्यादान्तस्य ते क्वचिदपि दृश्यते विसर्गः। ते तकारे परे क्वचिदपि नतु सर्वत्र। गौस्तः धूस्तः ॥ २ ॥

स्तोऽवसाने विः। सकार रेफयोर्विसर्गःस्यादिरामे परे। गतः अतः ॥ ३ ॥

"स्तोर्विः फे"। सं।

स हसे च। हसे च परे स विधिः स्यात्। मनः सु ॥ ४ ॥

अथ अजामिलस्तत् श्रुत्वा आत्मगतं । अहो उद्बोधितोऽस्मि अनया । परमायुर्दिनं गतमेव पारलौकिकोपकारशून्ये परकृत्ये मुग्धः पतत्कल्पं धाम स्वशरीरं न पश्यामीति सत्यमुक्तमनया । किन्त्वेवं अशक्यपरीहारसंसारस्य मे यथा निस्तारः स्यात्तथैव कश्चिदुपायोऽस्ति नवेति ज्ञातव्यं यतः ।

लघुनद्युत्तरे ध्वंशः पूर्व्वं नश्यति धीश्मतः ।
उत्तरेयं कथमिमं योषिन्मायामहानदं ॥ ५ ॥

तद्भवतु भिक्षार्थं मठेषु भ्रमितव्यमनुषङ्गविधया तत् प्रष्टव्यं । (अथ स परिक्रम्य) अहो अयमध्यात्मशास्त्रवेत्ता भट्टनायकस्तदुपदेशयोग्यः ( इत्युपसृत्य तं प्रणमति । )

भट्टस्तं प्रति । ब्रह्मन् ! कथं मां प्रणमसि ।

लघिति । लघुनद्युत्तरे लघुः क्षुद्रा या नदी तस्या उत्तरे पारगमने धीश्मतो बुद्धिमतोऽपि जनस्य पूर्व्वं उत्तरणात् पूर्व्वकाले ध्वंशः बुद्धंशो नश्यति भयादिति भावः । योषिन्मायामहानदमिमं कथं उत्तरेयं।

पक्षे । धीश्मतदति सुधियां सम्बोधनं । उत्तरेत्यादिकं उदाहरणं । लघु-नदी उत्तरे ७ं । धि १ं । ( अम्शसोः पूर्व्वं ) ध्वंशः पूर्व्वं १ं । नश्यति ८ं ॥ ५ ॥

व्याकरणम् ।

लघुनद्युत्तरे ध्वंशःपूर्व्वं नश्यति । हस्वान्नदीसंज्ञकाच्च उत्तरस्थितो धि अम्-शसोः पूर्व्वश्च नश्यति लोपमाप्नोति । इमं नदं ॥ ५ ॥

" पां ६ । १ । ६८ । १-७ ।" " स्वदीभ्यां ध्वम्शसादेर्लोपः ।" सं ।

अजामिलस्तं प्रति ।

परयशसि दृग्विषये नमामि तथाग्रजन्मा

को गुरुत्वं भवति ननु विद्वन् ॥ ६ ॥

यतः । विद्या जैश्ठं ब्राह्मणानां सैव सूते यशः सताम् ।

ये हत्वान्तस्तमो मूढान् दर्शयन्त्यायती: सृती: ॥ ७ ॥

अतः कथं न त्वां नमेयं ।

परेति । परयशसि परसुत्कृष्टं यशः विद्याजनितमहत्वं यस्य तादृशे जने दृक्विषये चक्षुर्गोचरे सति नमामि तमिति शेषः । ननु भोः विद्वन् ! तथा तादृशः उत्तमयशोयुक्तः कः अग्रजन्मा ब्राह्मणः गुरुत्वं गौरवं न भवति न प्राप्नोति अपितु सर्व्वएव यशस्वी ब्राह्मणः गुरुरेव । ( भवतीति भूजप्राप्तौ इत्यस्य रूपं )।

पक्षे । ननु विद्वन्निति सम्बोधनं । परय-शसि ७ । दृक्विषये ७ । ( नम्-आमि ) नमामि ७ । तथाऽग्रजन्माऽकः ६ । गुरुत्वं १ । भवति ८ ॥ ६ ॥

विद्येति । ब्राह्मणानां विद्यैव ज्यैष्ठं नमस्यताप्रयोजकधर्म्मः सैव विद्या सतां पण्डितानां यशः सूते जनयति । ये ब्राह्मणा विद्यावन्तः अज्ञानरूपं अन्तःकरणस्थतमोऽन्धकारं हत्वा मूढान् अबोधान् आयतीः उत्तरकालीनाः सृतीः पथः दर्शयन्ति । (उत्तरःकाल आयतिरित्यमरः) ॥ ७ ॥

व्याकरणम् ।

परयशसि दृक्विषये नमामि तथाग्रजन्माको गुरुत्वं भवति । परगते शसि तथा नमयुक्ते आमि ज्ञानविषये सति अग्रजन्माकः पूर्व्वजातस्य अकः दीर्घत्वं भवति ॥ ६ ॥

“पां ६ । १ । १०२ ॥ ६ । ४ । ३ ॥ शसुनामिधः” । सुं । आयती सृती: ॥ ७ ॥

पुन्नामयशसो न स्यात् दिग्बधूकर्णपूरता ।
चेत्तदा धनकौलिन्यगुणान् बन्ध्यान् प्रचक्षते ॥ ८ ॥

अतस्त्वं धन्योऽसि यत्ते विद्याजनितयशोमञ्जरी दिग्विलासिनीनां कर्णपूरतामाप्नोति (इत्युपविशति ।)

भट्टः । विप्र ! उपवेशस्ते भिक्षाक्षतिकरः ।

विप्रः । अनुपवेशोऽपि शरीरक्षतिकरः । तद्भवतु पाठविरतिर्म्माभूत् ।

भट्टः । शिष्या अवधातव्यं ।

अतः परे वक्ष्यमाणाः षड़ादेशाः श्रुतीरिताः ।
निशामयन्तु तान् विप्रा यत्नतो गदतो मम । ९ ॥

पुन्नामेति । पुंसां नाम्नः यशसश्च चेत् यदि दिग्बधूकर्णपूरता दिश एव वध्वः स्त्रियस्तासां कर्णपूरता कर्णभूषणत्वं नस्यात् तदा पुंसां धनकौलिन्यगुणान् बन्ध्यान् विफलान् प्रचक्षते वदन्ति ।

पक्षे । दिगित्यादिकं उदाहरणं ।

पुं-नाम-य-शसः ६ं । न १ं । स्यात् ८ं ॥ ८ ॥

अतइति । अतः परे एतदनन्तरं श्रुतीरिता वेदोदिताः षड़ादेशाः परमेश्वरस्याख्याः षट् वक्ष्यमाणाः मयेति शेषः ।

पक्षे । अतः परे अकारात् परे ॥ ९ ॥

व्याकरणम् ।

पुन्नामयशसोनस्यात् । सुखान्न पुंलिङ्गशब्दोत्तरागतस्य शसो न स्यात् । गुणान् बन्ध्यान् ॥ ८ ॥

" तस्माच्छसो नः पुंसि " । णां- । " पुंसित्तु शस् न " । सुं ।

तान् ॥ ९ ॥

**पारायालं किं भवाब्धेर्मन्दाष्टाभिर्नयामिनैः**
**अयामिनैर्वा प्रहरैस्तृष्णोल्लोलेन शस्यते ॥ १० ॥**
**न स्यात् बोधाद्विना मोक्षो न सोपि जायतेस्य च**
**अविपक्वकषायस्य संसाराब्धौ निमज्जतः ॥ ११ ॥**

पारेति। हे मन्द! विवेकवैराग्यादिरहित! भवाब्धेः पाराय किं कथं अलं समर्थोभविष्यसीत्यर्थः। पारगमनासामर्थ्ये हेतुमाह। यामिनैः यामिनी रात्रिस्तत्सम्बन्धीयैः अयामिनैः यामिनीसम्बन्धिभिन्नैः अष्टाभिः प्रहरैः तृष्णोल्लोलेन तृष्णा विषयस्पृहा सैव उल्लोलो महोर्म्मिस्तेन न शस्यते विषयस्पृहाया मुक्तेः प्रतिबन्धकत्वात्।

पक्षे। मन्दा इति अपटूनां सम्बोधनं। मिनैश्च प्रहरैः इति उदाहरणं। मिनैरिति परिमाणे नायकैरित्यर्थः। अत्र वाकारः अवधारणे पूर्व्वश्लोके अतःपरे इत्यनेन अकारात् परे एते आदेशा भवेयुरितिबोध्यं। टा-भिः-नयां ६ः। इन, ऐः, अयाः १ः॥ १० ॥

ननु विषयस्पृहावतामपि यागादिभिर्मुक्तिर्भविष्यतीत्यत आह नस्यादिति। बोधादात्मज्ञानात् विना मोक्षो नस्यात् सोपि बोधः अविपक्वकषायस्य अक्षीणपापस्य अस्य संसाराब्धौ निमज्जतः संसारिणः न जायते। तदुक्तं नारदीये "कषाये कर्म्मभिः पक्वे ततो ज्ञानं प्रजायते इति। (कषायः पापरसयोरिति कोषः)।

पक्षे। बोधादित्यादिकं उदाहरणं। अविपक्वेत्यादिकं परस्त्रतीयोदाहरणं। नसि १ं। आत् १ं। नमः ६ं। अपि १ं। जायते ८ं। स्य १ं। च १ं॥ ११ ॥

## व्याकरणम्।

टाभिर्नयामिनैः अयाः। अकारात् टा भिस् ने इत्येषां स्थाने इन, ऐस्, अयाः स्युः। पाराय, मिनैः, उल्लोलेन॥ १० ॥

पां ७। १। ६॥ "टा भिस् ङे ङसि ङसोसामिनैसयात् स्य योसोऽतः"। सुं।

नस्यात्। अकारात् परं नसि आत् स्यात्। बोधात्। नसोपि जायते स्य। कषायस्य॥ ११ ॥

धिये यतस्व रे शंयोर्भवे दोर्दण्डयोर्बलं ।
किं कुर्य्यात् ज्ञाननाव्योयं सिन्धुस्तार्य्यो न सन्तरात् ॥ १२ ॥

तदुपायश्च समाधिस्तस्मिंश्च विवेकवैराग्यशमदमादयोऽधिकारास्तच्च मनः शुद्ध्यर्थं कर्म्मापेच्चतइति आदेशाः षट् ।

शिष्याः । गुरो! घटते नैतत् । यतः

दुर्हृत् स्मरात् परोऽणो नो यत् सोऽदान्तोऽन्तरे गतः ।
क्व वापवर्गेणाच कं वियुङ्क्तेऽवारणः स न ॥ १३ ॥

---

ननु रोचनार्था फलश्रुतिरिति कर्म्ममात्रस्यैव मुक्तिसाधनत्वमुक्तं अतः कर्म्मजन्यादृष्टबलेनैव भवाब्धिरुत्तार्य्य इत्यत आह धियेति। धिये तत्त्वज्ञानार्थं यतस्व यत्नं कुरु, भवे संसारे अर्थात् भवपारविषये शंयोः शं काम्यकर्म्मजन्यादृष्टरूपं शुभं तद्विद्यते अस्येति शंयुस्तस्य दोर्दण्डयोर्बलं अर्थात् स्वबाहुबलरूपं यत् काम्यकर्म्मादृष्टं तत् किं कुर्य्यात् किं कर्त्तुं शक्नोति? एतदेव दर्शयति। अयं सिन्धुः भवसमुद्रः ज्ञाननाव्यः ज्ञानरूपनौकया तार्य्यः ज्ञानमेव नौर्नौका तया उत्तार्य्यते यः स ज्ञाननाव्यः सन्तरात् बाहुसन्तरणेन न तार्य्यः। (नाव्यं त्रिलिङ्गं नौतार्य्ये इत्यमरः।)

पक्षे। रे शं! शुभयुक्त! धिये वाधाय यतस्वेति शिष्यावधानार्थं। दण्डयोरित्यादिकं उदाहरणं। योस् १ं। भवेत् ८ं। ओस् १ं॥ १२॥

ननु कामादयस्तत्त्वज्ञानस्य प्रतिबन्धका इति तत्त्वज्ञानमसाध्य मित्याह दुर्हृदिति। अणः प्राणिनः स्मरात् कन्दर्पात् परोऽन्यो दुर्हृत् शत्रुर्नो नास्तीत्यर्थः। यत् यदि अदान्तोऽदमितो भवेदितिशेषः। असौ अवारणः स्मरः अन्तरे हृन्मध्ये गतः सन् क्व वा कुत्र वा कं जनं अपवर्गेण मोक्षेण न वियुङ्क्ते अपितु सर्व्वजनमेव मोक्षेण वियुङ्क्ते। अण् इति अणड प्राणने इत्यस्य क्विपिरूपं (द्विषत् द्वेषण दुर्हृद इत्यमरः। दान्तस्तुदमिते इतिचामरः)।

पक्षे। दुर्हृदिति अन्यमनस्कस्य सम्बोधनं। स्म पादपूरणे। रात् ५ं। परः १ं। णः १ं। नः १ं। यत् १ं। सः १ं। अदान्तः १ं। अन्तरे ७ं। गतः १ं। (कु-अवा) कवा ३ं। पवर्गेण ३ं। च १ं॥ १३॥

## व्याकरणम्।

योर्भवेदोः। ओसः स्थाने योस् स्यात्। दण्डयोः॥ १२॥

अतः समाधिर्दुर्निवह एव।

इत्यपि श्रूयते साध ऋषादपि परः सुहृत्।
नानुगन्ता स एवैको नृणां लोकं गमिष्यतां ॥ १४ ॥
ऋषीणां वर्ध्य चेन्मोक्षो बोधादेवेति निश्चितं।
तस्यासाध्यतया मोक्षोऽभवद्दूरे पराहतः ॥ १५ ॥

गुरुः। तं प्रति। परिणामवैराग्यादिना क्रमश एव कामादयो निरसनीयाः।

शिष्यः धर्मस्यैवोत्कर्षं दर्शयन्नाह इतीति। इदमपि विद्धि जानीहि हे साध! साधक! ऋषात् यागादिकाम्यकर्माद्दृष्टरूपधर्मात् परोऽन्योपि सुहृत् नो नास्तीत्यर्थः। तस्य सौहार्दं दर्शयति सएव धर्मएव एकः परलोकं गमिष्यतां जनानां सह गन्ता सह गमिष्यतीत्यर्थः।

पक्षे। साधो इति सम्बोधनं। सुहृदित्यादिकं उदाहरणं।

ऋषात् ५ं। अपि १ं। परः १ं ॥ १४ ॥ ऋषीति। अस्यार्थः सुगमः। पक्षे पूर्व्वसूत्रस्य उदाहरणमात्रं ॥ १५ ॥

व्याकरणम्।

रात् परो णो नो यत् सोऽदान्तोऽन्तरे गतः कवा पवर्गेणाच। रेफात् परो मो णः स्यात् यत् यदि स नकारोऽदान्तः स्यात् कवर्गेण अवेन पवर्गेण च अन्तरे व्यवधाने गतस्तेत्यर्थः। अवारणः ॥ १३ ॥

"रषाभ्यां नो णः समानपदे।" पाणिनिः। "पूर्णोदान्ते नोऽव कुप्वन्तरेऽप्यतद्धात्वपकयुवाङ्क्षः मसेप् स्यादेनैकाचकोस्तु वा"। मुं।

इत्यपि श्रूयते साधऋषादपि परः। ऋकारात् षकाराच्च परो नो णः स्यात् हे साधो! इत्यपि श्रूयते। नृणां ॥ १४ ॥ ऋषीणां ॥ १५ ॥

शिष्या: । स्त्रीभावेणारातिषट्कं धीरेणापि सदान्तरे ।
यत् समासादितस्याद्येवास्पदं तद्धृदालयात् ॥ १६ ॥

अतोऽशक्यमेवैतत् । अपिच ।

रत्नप्रभवणे काचो जायते वा कुतोऽपि स: ।
नो जातु मोहकाचोत्थे स्त्रीहीणां हृदि चिन्मणि: ॥१७॥

स्त्रीभावेति । स्त्रियां भावो यस्य तादृशेन अर्थादजितेन्द्रियेण जनेन धीरेणापि पण्डितेनापि सदा अन्तरे अन्तरात्मनि यत् अरातिषट्कं कामक्रोधादिरूपं समासादि प्राप्तं अद्येव वर्त्तमान दिने इव आलयात् मरणपर्य्यन्तं तत् हृत् तस्य जनस्य हृदयं तस्य अरातिषट्कस्य आस्पदं आश्रय: स्यात् इत्यन्वय: । तथाहि अदान्तस्य संसारिण: मानसं अद्य यथा कामक्रोधाद्यास्पदं तथैव तन्मरणपर्य्यन्तं न तस्य कदापि विश्रामइत्यर्थ: ।

पक्षे । धीरेणेत्यन्तपूर्व्वभाग: उदाहरणं । हृदालयादिति हृदालयगन्तु: सम्बोधनं । अपि १ । स: १ । दान्तरे ७ । यत् १ । समासात् ५० । इतस्याद्येवास्पदं १ । ( इत-सि-आद्य = ईप् = आस्पदं ) तत् ७ ॥ १६ ॥

रत्नेति । कुतोऽपि कारणवशात् रत्नप्रभवणे रत्नस्याकरे काचो जायते वा भवत्यपि वा जातु कदाचिदपि मोहकाचोत्थे मोहरूपकाचोत्पत्तिस्थाने स्त्रीहीणां हृदि स्त्रियां ईहा आकाङ्क्षा येषां तादृशानां अर्थात् संसारिणां हृदये स चिन्मणिर्ज्ञानरत्नं नो जायते इत्यन्वय: ।

पक्षे । रत्नप्रभो इति सम्बोधनं । जातु इत्यादिकं उदाहरणं । अनेकाच: ५ । जायते ८ । वा १ । अकुत: ५ । अपि १ । स: १ । न: १, ॥ १७ ॥

व्याकरणम् ।

अपि स दान्तरे यत् समासादितस्याद्येवास्पदं तत् । स उक्तनिमित्तात् परगतो नकार: दान्तरे पदान्तरे स्थितोपि ण: स्यात् यत् यदि समासादुत्तरे इतस्य गतस्य स्याद्यस्य ईपो वा आस्पदं स्यात् तत् तदेत्यर्थ: । स्त्रीभावेण ॥ १६ ॥

अनेकाचो जायते वाऽकुतोऽपि स न: । स नकारो निमित्तवत् पदोत्तरगत: समासादुत्तरविहितस्यादिना ईपा वा सहित: अनेकाच: पर: अकुत: कवर्गभिन्नवर्णात् परो ण: स्याद्वा अर्थादेकाच: कवर्गाच्च परो नित्यं ण: स्यात् । स्त्रीहीणां । "८ । ४ । १, २, ११-१३ । पां" ॥ १७ ॥

दूदमपि चिन्त्यते।

न किं दुःखाब्धिमुत्तीर्णाः सतृष्णा विषयेष्वपि।

पितृणां तर्पणात् कव्यैऋभवाणाञ्च प्रीणनैः॥ १८॥

तस्मात् कर्म्मैव वरं। भट्टनायकः। मैवं।

शृणोतूक्तिमभव्यास्य निर्गतां परमात्मनः।

जायेते कर्म्मबोधाभ्यां बन्धमोक्षौ नृणामिति॥ १९॥

सर्व्वे सभ्येह मन्यन्ते सर्व्वेभ्यः कर्म्म सद्बलि।

यत् स्रष्टुं वा खण्डयितुं ईश्वरा अपि नेश्वराः॥ २०॥

कर्म्मणापि मुक्तिः स्यात् इति दर्शयन्नाह न किमिति। विषयेषु संसारेषु सतृष्णा अपि वासनायुक्ता अपि कव्यैः पित्राद्यैः पितृणां तर्पणात् ऋभवाणाञ्च देवानाञ्च प्रीणनैः लोकाः किं दुःखाब्धिं नोत्तीर्णाः अपितु उत्तीर्णा एव॥ १८॥

शृणोत्विति। हे अभव्य! परमात्मनः आस्यविनिर्गतां उक्तिं वाणीं शृणोतु भवानितिशेषः। कासौक्तिरित्याह। कर्म्मबोधाभ्यां नृणां यथायोग्यं बन्धमोक्षौ जायेते कर्म्मणा बन्धः बोधान्मुक्तिरित्यन्वयः।

पक्षे। उ भो शृणुतेति शिष्यावधानाय। निर्गतेत्यादिकं उदाहरणं। क्ति म भ वि ७। आ १। अस्य ६।, ॥ १९॥

सर्व्व इति। हे सभ्य! इह संसारे सर्व्वे मुनयः सर्व्वेभ्यः कर्म्मैव सद्बलि बलवत्तरं मन्यन्ते यत् कर्म्म स्रष्टुं निर्म्मातुं खण्डयितुं वा ईश्वरा अपि ब्रह्मादयोऽपि न ईश्वराः न प्रभवः।

पक्षे। सर् इति गमनशीलस्य सम्बोधनं। शेषभागः उदाहरणं। ब्वे ७। सभि ७। ए १। ( ह १।) मन्यन्ते ८:. ॥ २०॥

व्याकरणम्।

उत्तीर्णाः सतृष्णाः पितृणां तर्पणात्। व्यवधानेतु ऋभवाणां। प्रीणनैः॥ १८॥

क्ति मभव्यास्य। विभक्तिसम्बन्धिमभवि परे अकारस्य आस्यात्। कर्म्मबोधाभ्यां। "सुपि च" पा। "आ क्तिमभवि" सु॥ १९ :

ब्वे सभ्ये ह मन्यन्ते। बहुवचने सभि परे अकारस्य ए मन्यन्ते। हकारो ऽवधारणे। सर्व्वेभ्यः। "बहुवचने झल्येत्" पा। "ब्वेस् भ्यः" सु॥ २०॥

ब्रह्मादीनां सर्ज्जनादि कर्म्माधीनं ननु स्वतः ।
नु मा मोहेन चिनु तत् भवानां कारणं हि तत् ॥ २१ ॥

तच्चात्मज्ञानं निष्कामकर्म्मभिरपि भवति। तदुक्तं भगवद्गितायां। कर्म्मणैवहि संसिद्धिमास्थिता जनकादय इति ।

तस्मात् । नद्या आपश्च सुलभा वन्यानां प्रसवा अपि ।
नारायणेति वाणीनां वश्यतास्ति बिभेषि किं ॥२२॥

नसंख्यातोऽपि च मलः सप्तानां जन्मनामपि ।
नामसङ्कीर्त्तनाद्विष्णोः क्षणादेव विनश्यति ॥ २३ ॥

---

ब्रह्मेति। ब्रह्मादीनां सर्ज्जनादि कर्म्म कर्म्माधीनं ननु स्वतः स्वशक्तिमात्रेण नु भोः मोहेन तत् कर्म्म माचिनु सञ्चयं माकुरु। हि यस्मात् तत् कर्म्म भवानां पुनर्ज्जन्मनां कारणं ।

पक्षे। ननु इत्यन्तपूर्व्वभागः उदाहरणं हे इति सम्बोधनं नेत्यादिकं उदाहरणं। स्वतः ५ं। नुम् १ं। आमः ६ं॥ २१ ॥

कर्म्मणैवेति। संसिद्धिं आत्मज्ञानं श्रीधरस्वामिना तथैव व्याख्यातं।

नद्येति। वन्यानां वनसमूहानां प्रसवाः फलपुष्पाणि अन्यत् सुगमं। तथाहि विष्णोर्नाम ग्रहण तत्पूजादिरूपकर्म्मतोपि ज्ञानं भवतीति कथं बिभेषीत्यर्थः।

पक्षे। सुलभा वन्यानामित्यादिकं उदाहरणं। नद्याः ५ं। आपः ५ं। च १ं॥ २२ ॥

नसंख्यात इति। नसंख्यात असंख्यात इत्यर्थः। अत्र वैकल्पिकत्वात् नञोऽकरादेशाभावः। मलः पापं अन्यत् सुगमं।

पक्षे। मलमित्यादिकं उदाहरणं। न-संख्यातः ५ं। अपि १ं। च १ं॥ २३ ॥

व्याकरणम् ।

स्वतोनुमामः। स्वतो ह्रस्वात् परस्य आमो नुम् स्यात्।

ब्रह्मादीनां। भवानां ॥ २१ ॥

नद्या आपश्च। नदीसंज्ञकशब्दात् आपश्च परस्यामो नुम् स्यात्। वन्यानां वाणीनां। “ह्रस्व नद्यापो नुट्। पां ॥ २२ ॥

न-संख्यातोऽपिच। नान्तसंख्यायाश्च परस्यामो नुम् स्यात्। सप्तानां। “षट् चतुर्भ्यश्च” पां ॥ २३ ॥

यदुक्तं । साङ्केतं पारिहास्यम्वा आनुषङ्गिकमेव वा ।
वदन्नारायणायेति मुच्यते सर्व्वकर्म्मभिरिति ॥ २४ ॥

अहो संसारिणां विषयाकृष्टचेतसां तदपि न घटते । तदेवं पश्य ।

स्ववयोवर्षसंख्यायाः स्मरत्यपि न मूढधीः ।
इतश्चतुर्णां षसाम्वा वर्षाणां परतोऽपि वा ।
मृतेऽनपत्ये दायादे दायं लप्स्य इति स्मरन् ॥ २५ ॥

अथैतत् श्रुत्वा अजामिलः आत्मगतं । अहो नारायणेति नाममाहात्म्यं तस्मात् मत्प्रियपुत्रस्य नारायणेति नाम कर्त्तव्यं येन सर्व्वावस्थास्वेव तन्नामग्रहसम्भवात् मम निस्तारो भविष्यतीति निश्चित्य भट्टनायकं प्रणम्य निश्चक्राम ।

इत्यन्तर्व्याकरणे हितोपदेशात्मके नाव्यपरिशिष्टनाम नाटके नारायणनाममाहात्म्यं नाम प्रथम रात्रिविनोदः ।*

साङ्केतमिति । सुगमं ॥ २४ ॥ स्ववयइति । मूढधीर्विषयविमूढचित्तोजनः स्वस्यात्मनो वयोवर्षसंख्यायाः स्मरत्यपि न भावयत्यपि न । किं कुर्व्वन् इतः एतत्-कालमारभ्य चतुर्णां षसाम्वा वर्षाणां परतोऽपि अनपत्ये अपत्यशून्ये दायादे ज्ञातौ मृते सति दायं तस्य धनं लप्स्ये इति स्मरन् चिन्तयन् । स्याच्चिन्ता स्मृतिरितिकोषः षट्चरणश्लोकोऽयं ।

पक्षे । स्ववयोव इति आत्मीयवयोरक्षकस्य सम्बोधनं । षसंख्यायाः ५ । स्मरति ८ । अपि १ ॥ २५ ॥

व्याकरणम् ।

षसंख्यायाः स्मरत्यपि । षसंख्यायाः रान्तषान्तसंख्याशब्दादपि आमो नुम्-स्यादिति स्मरति । चतुर्णां षसां । "नुमामः स्वद्याप् सङ्ख्या ष्णः" सु ॥ २५ ॥

अथ प्रविश्य सूत्रः परिक्रम्य आकाशे कर्णं निधाय अरे! को रौति।

नेपथ्ये। जयति महाराजस्य वङ्गतिलकस्य प्रताप इति उच्चै-र्हिस्त्रिः।

नटी। आर्य्य! कोप्यर्थी अभियोक्तुमायातीति निष्क्रान्तौ।

अथ नृपानुमत्या प्रतीहारेण सह अन्त्यजो भिक्षुको धूलि-धूसरिताङ्गोरुदन् प्रविशति। अयं वङ्गतिलको नृप इति तमुप-सृत्य शिरस्यञ्जलिं विधाय राजन्! ममाभियोगे कर्णः पातनीयः। अहमन्त्यजः क्षुधार्त्तो हलायुधनाम्नो द्विजस्याङ्गनं प्रविष्टः।

अथ मामाहन्तुमुद्यतं गृहपतिं तं ब्राह्मणं अब्रवं ब्रह्मन्! अहमेव क्षुधया मुग्धोऽस्मि। भवान् कथमेवं प्रमाद्यति। क्रोधस्य वेगं धारय। यतः।

अरिषु वरोवत रोषः स उदेति कुतोऽपि विन्द्वन्तरेपि।
सतु यदि जातोऽदान्तस्तज्जानीयादिलाच्चलेभेषु॥ १॥

अरिष्विति। वत खेदे अरिषु शत्रुषु मध्ये रोषः क्रोधो वरः श्रेष्ठः स रोषः विन्द्वन्तरे विन्दुर्ज्ञानवान् तस्य अन्तरेपि अन्तरात्मन्यपि कुतोपि कारणात् उदेति उत्पद्यते। सतु रोषः यदि अदान्तोऽदमितो जातः स्यात् तत् तदा इलाच्चलेभेषु इला मदिरा रलयो रैक्यात् इलामस्तीति इलात् तादृशो यश्चलेभः चञ्चलहस्ती तन्मध्ये जानीयात् गणयेत्। तं रोषमिति शेषः। तथाहि अदमितं रोषं मदमत्तचञ्चलहस्तिषु मध्ये गणयेत् तत्तुल्यं जानीयात् इतिभावः।

पक्षे। अरिषु वर इति उदाहरणम् रे इति अवतरोइतिच रत्नकण्ठस्य सम्बोधनं। षः १ सः ६ उदेति ८ कुतः ५ (अपि) विन्द्वन्तरे ७ (अपि) सः १ (तु) (यदि) जातः १ अदान्तः १। तत् २। जानीयात् ८। इलात् ५। (च)॥ १॥

व्याकरणम्।

षः सउदेति कुतोपि विन्द्वन्तरेपि सतु यदि जातोऽदान्तस्तज्जानीयादिलाच्च। कवर्गात् परस्य सस्य षः स्यात् विन्द्वद्विविन्द्व्यवधानेपि सतु सकारो यदि जातः अदान्तश्च स्यात् इलाच्च परस्य तत् षत्वं जानीयात्। अरिषु भेषु। "अपदान्तरस्य मूर्द्धन्यः। पाँ॥ १॥

तस्मादेतद्वचनेन धैर्य्यमास्थेयं एवमुक्तोपि । स विप्रः रे आत्मज । यागस्थलीं दूषयसि दूरीभव । इति मां ताडितवान् । इति मम अभियोगः । एतदपि श्रोतव्यं यदुपदिष्टं मम पित्रा ।

राट् शिष्यान् यत्र नो शास्ति वसेस्तत्र नात्मज ।
सदा तत्रोषितस्यार्त्तिर्यथोत्तमसरौ मयोः ॥ २ ॥

तस्माद्राजा दुर्वृत्ता अवश्यं शासनीयाः ।

पिता ते भूमिसाद्भूतो योऽशिषत् धर्मतः प्रजाः ।
अद्यापि कीर्त्तिरस्ता न त्वस्य सात इतीष्यते ॥ ३ ॥

राडिति । राट् राजा यत्र देशे शिष्यान् शासनार्हान् नो शास्ति शासनं न करोति हे आत्मज ! तत्र नो वसेः वसतिं न कुर्य्याः । हि यस्मात् तत्र शासनरहिते देशे उषितस्य जनस्य सदैव आर्त्तिः पीड़ा भवतीति शेषः । यथा उत्तमसरौ उत्तमसरभूमौ मयोः मृगस्य सदैवार्त्तिः स्यात् तथेत्यर्थः । मयुर्ना किन्नरे मृगे इति मेदिनी ।

पद्ये । यत्रेत्यन्तपूर्व्वभागः तत्रेत्यादिकश्च उदाहरणं । शास्तिवसेः ६ । ( च १ । ) ॥ २ ॥

पितेति । ते तव पिता भूमिसात् भूतः भूमिपरिणतोऽभूत् मृत इति यावत् यो धर्म्मतः प्रजा अशिषत् शास्तिस्म त्वस्य तव पितुः कीर्त्तिरद्यापि अस्ता न, लुप्ता नाभूत् । अत्र हेतुमाह ते तव सा कीर्त्तिरितीष्यते ।

पद्ये । अस्तेत्यन्तपूर्व्वभागः उदाहरणं । न १ । त्वस्य ६ । सातः ६ । ( इति ईष्यते ) ॥ ३ ॥

व्याकरणम् ।

शास्तिवसेश्च । शासधातोर्व्वसधातोश्च अकृतस्यापि सस्य षः स्यात् । शिष्यान् उषितस्य । "क्विलात् कृतोऽसात् सः षोऽदान्ते षुव्यन्तरेपि शास वस घस सादाच्च" सु ॥ २ ॥

न त्वस्य सात इतीष्यते । सातस्त्वस्य सात्प्रत्ययस्य सस्य षत्वं नस्यात् । भूमिसात् ॥ ३ ॥

अपिच—

पश्य सर्व्वमिदं प्राज्ञ! धर्म्मेऽजस्रेरतो जयी।
राजते सर्व्वतोऽधर्म्मात् सर्व्वे यान्ति पराभवं॥ ४॥

तस्मात् अधर्म्मो यथा न त्वां स्पृशेयुस्तथैव विना पक्षपातेन विचारणीयं। राजा हि व्यवहारकर्म्मणि निरूपरोध्यो निरपेक्ष्यश्च।

अत्रेतिहासं शृणोतु! कश्चिद्राजा कुलीनवंशजः कञ्चिन्महाकुलं विप्रर्षिमुपगम्य बहुतुष्टाव।

अथ विप्रः नृपं प्रति।

राजन्! गुणारोपो नहि मद्विधानां तोषाय भवति यत्नि-हीनं जनं प्रति पद्माक्षेति प्रयोगवत्। अपिच।

यद्वाच्येकवचनमपि स्मेशं गुणं नानुवदति नु तस्मै।
साधवो न रोचन्ते तद्ध्यज्ञानां रतिस्थानं॥ ५॥

---

पश्येति। हे प्राज्ञ! इमान् सर्व्वान् अर्थात् लोकान् पश्य। किमन्यदित्यत आह अजस्रे सतते धर्म्मे धर्म्मजनके कर्म्मणिरतः आसक्तो जनः सर्व्वतः सर्व्वत्र जयी सन् राजते उत्कर्षेण दीप्यति अधर्म्मात् अधर्म्माचरणात् सर्व्वे जना पराभवं दुःखशोकाद्यभिभवरूपं पराजयं यान्ति प्राप्नुवन्ति।

पद्ये। धर्म्मज इति सम्बोधनं। इदं मदुक्तं सर्व्वं पश्य जानीहीति शिष्यावधानार्थं। राजते इत्यादिकं उदाहरणं। स्रेः ५ं। अतः ५ं। जस् १ं। इः १ं॥४॥

यद्वाचीति। यद्वाचि यस्मिन् वाङ्मयप्रबन्धविशेषे एकं वचनमपि वाक्यमपि ऐशं पुणं ईश्वरसम्बन्धिगुणं न अनुवदति नानुकीर्त्तयति नु भोः साधवस्तस्मै वाक्प्रपञ्चविषये न रोचन्ते न रुचिं दधति हि यस्मात् तद्वाक्यं अज्ञानां मूर्खाणां रतिस्थानं अनुरागास्पदं। स्म इति पादपूरणे तु हि च स्म ह वै पादपूरणे इत्यमरः।

पद्ये। अपिकारस्तुकारार्थे वचनन्तु इत्यर्थः। शं गुणं मङ्गलजनकं गुणमित्यन्वयः। (ची एकवचनं) च्येकचनं १ं। (अपि) स्मै १ं॥ ५॥

व्याकरणम्।

स्रेरतोजयिः। अकारान्तात् स्रेः सर्व्वनामशब्दात् परो जस् इः स्यात्। सर्व्वे। "जसः शी। पां"॥ ४॥

तस्मादीश्वरएव स्तोतुं युज्यते। अपिच।

अकस्माज्जायतेऽप्येक वचनं यद्यसङ्गतं।
तस्मात् जिह्वां दशति सन् वृथा वाग्व्ययकातरः॥ ६॥

अतो वृथा वाक्प्रपञ्चेनालं।

राजा। विप्रर्षेस्तव स्तवनं ममानन्दाय भवतीति सार्थक-मेवैतत् नतु वृथा। विप्रः। यद्येवं तदा।

सर्व्वस्मिन् नित्य आनन्दो ज्ञानात्मा राजते नृप!
प्रविष्टोऽन्तःपुरेऽस्मिंस्तमनुसन्धेहि लप्स्यसे॥ ७॥

---

अकस्मादिति। यदि एकवचनमपि अकस्मात् असङ्गतं अहृदयङ्गमं सङ्गति शून्यं वा भवति तस्माद्धेतोः सन् साधुः जिह्वां दशति। अत्र हेतुमाह। वृथेति।

पक्षे। अक इति दुःखिनः सम्बोधनं। यदीत्यादिकं उदाहरणं। स्मात् १। जायते ८। पी-एकवचनं १॥ ६॥

सर्व्वेति। हे नृप! ज्ञानात्मा ज्ञानस्वरूपः तथा नित्यः आनन्दस्वरूपश्च ईश्वरः सर्व्वस्मिन् प्राणिनि राजते दीप्यते अस्मिन् अन्तःपुरे अन्तरात्मारूपपुरे प्रविष्टः सन् तं नित्यानन्दं अनुसन्धेहि अन्वेषणं कुरु लपस्यसे तत्रैव लप्स्यसे इत्यन्वयः।

पक्षे। आनन्देत्यादिकं उदाहरणं। स्मिन् १। नित्यः १॥ ७॥

व्याकरणम्।

ध्येकवचनमपि स्मै। ची चतुर्थी तस्या एकवचनन्तु स्मै स्यात्। तस्मै। "सर्व्वनाम्नः स्मै। पां": "स्नेजस् ङे ङसि ङीनामिस्त्रौ स्मात् स्मिनोऽतः। सुं"॥ ५॥

स्मात् जायते प्येकवचनं। पी पञ्चमी तस्या एकवचनं स्मात् स्यात्। तस्मात्। "ङसि ङ्योः स्मात् स्मिनौ पां"॥ ६॥

स्मिन् नित्यः। अकारान्तात् स्रेः परः नित्यः निसंज्ञकः त्यः प्रत्ययः स्मिन् स्यात्। अस्मिन्॥ ७॥

अयोग्ये मयि गुणारोपो व्यर्थः । तद्भवतु अत्रागमने प्रयोजनं ज्ञातुमिच्छामि ।

राजा । श्रुतं मया तवास्ति कन्यारत्नमेकं तच्च रत्नभुजामस्माकमुरस्येव शोभते इति तदर्थं भवतो दारिद्र्यापनोदनार्थञ्च इहागतोऽस्मि ।

विप्रः । सस्मितं ।

वसुमादामोहमूलं यच्छतोऽपीशतो बुध !
नित्यानन्दोदयः केषामासीत् सम्पद्विचेतसां ॥ ८ ॥

इति ज्ञानिन उपदिशन्तीति सम्पदो नेच्छामि । किञ्च दारिद्र्येऽपनीतेऽपि कुलधर्म्मातिपातजनितदुरितं को मेऽपनेष्यति इति स्वधर्म्मे स्थितस्य मम मरणमपि श्रेयः । यतः ।

शुभाशुभानां भोगोन केवलं दृश्यते परे ।
लोकेऽस्मिंश्चश्रुतं पूर्व्वमुखाद्वेतीक्ष्यते च तत् ॥ ९ ॥

वसुमेति । हे बुध ! यच्छतोपि ददतोपि ईशतः ईश्वरात् वसुधनं मादाः माग्रहाण । ननु अर्थोपि पुरुषार्थएव इति तद्दाने का हानिरित्यत आह मोहमूलमिति चित्तविकारस्य कारणं सम्पद्विचेतसां ऐश्वर्य्यलुब्धानां केषां नित्यानन्दोदयः नित्यानन्दमय ब्रह्मसम्वित् आसीत् अपितु न केषामपि ।

पक्षे । व इति वरुणस्य सम्बोधनं । हकारोऽवधारणे । मूलमित्यादिकं उदाहरणं । सुम् १ । आन् ५ । आमः ६ ॥ ८ ॥

शुभेति । शुभानामशुभानाञ्च कर्म्मणां भोगः केवलं परे परलोके जायते इति न किन्तु अस्मिंश्च लोके जायते इति पूर्व्वपुरुषाणां मुखादपि श्रुतं तत् ईक्ष्यते च अस्मिन्नपि लोके प्राक्तन शुभाशुभ भोगो वीक्ष्यते इत्यर्थः । चाकारः समुच्चये ।

पक्षे । लोकेत्यन्त पूर्व्वभाग उदाहरणं । स्मिन् १ । च १ । पूर्व्वमुखात् ५ । वा १ ॥ ९ ॥

व्याकरणम् ।

सुमादामः । आत् अवर्णान्तात् स्वेः परस्य आमः सुम् स्यात् । केषां । "आमि सर्व्वनाम्नः सुट् । षां" । "आत्सुमामः । सं" ॥ ८ ॥

मन्यते स्मादपि तथा यत् स्मुतं पूर्व्व आगमे ।
इहापि नरकः स्वर्गोऽपरान्नैव विशिष्यते ॥ १० ॥

राजा । आः त्वत्तोपि महाकुलः सादरं मह्यं कन्यां दत्तवान् । धर्म्मज्ञस्य तस्य कथमेतादृशी बुद्धिर्नोदियाय स किं न साधुः नवा स किं धनेश्वरो जातो यशो नोपार्ज्जयति ।

विप्रः । एवं भवत्यपि ।

समे समा न जायन्ते एकोदरभवा अपि ।
केप्यन्तरस्मै शोचन्ति प्रयातं स्वान् गृहान्तरे ॥ ११ ॥

---

मन्यतेति । अस्मादपि हेतोः अस्मिन्नपि लोके शुभाशुभभोगदर्शनादपि हेतोस्तथा मन्यते । किंमन्यते इत्यत आह आगमे शास्त्रे पूर्व्वे पूर्व्वकाले यत् स्मुतं इहापि नरकः स्वर्ग इति सः अपरात् परस्मात् परकालीन स्वर्गनरकात् न विशिष्यते । न वैलक्षण्येन ज्ञायते ।

पक्षे । आगमे इति आगतायाः सम्बोधनं । इहेत्यादिकं उदाहरणं । मन्यते ८ᐟ । स्मात् १ᐟ । अपि १ᐟ । तथा १ᐟ । यत् १ᐟ । स्मुतं १ᐟ । पूर्व्व आगमे ७ᐟ ॥ १० ॥

समेति । एकोदरभवा अपि समे सर्व्वे समास्तुल्या न जायन्ते केपि जनाः स्वान् आत्मीयान् प्रयातं गृहान्तरे गृहमध्ये स्थित्वा यद्वा गृहान्तरे भिन्नगेहे प्रयातं अन्तरस्मै परिधानवस्त्राय शोचन्ति ।

पक्षे । समे इति समशब्दस्य सर्व्ववाचित्वात् स्मिसंज्ञकत्वेन जसः इः । समा इति तुल्यवाचित्वात् न तथा । अन्तरस्मै इति अन्तर शब्दस्य परिधानवस्त्र-वाचित्वेन स्मिसंज्ञकत्वं अन्तरे इति मध्यवाचित्वेन न तथा ॥ ११ ॥

व्याकरणम् ।

स्मिंस्स्मुतं पूर्व्वमुखाद्धेतोरुच्यते च तत् । स्मुतं स्मिन् पूर्व्वमुखात् पूर्व्वादेः स्माद्वा तदोच्यते च । परे । "पूर्व्वादेः स्मात्स्मिनौ वा तौ" । सु ॥ ८ ॥

मन्यते स्मादपि तथा यत् स्मुतं पूर्व्वआगमे । पूर्व्वस्मिन् शास्त्रे यत् स्मात् स्मुतं तदपि तथा पूर्व्वादेर्व्विकल्पेन मन्यते । अपरात् ॥ १० ॥

समे समाः अन्तरस्मै अन्तरे ॥ ११ ॥

केऽपि सन्तीश्वराः स्वानां स्वानां स्वेषाञ्च पोषकाः।
अर्ज्जयन्तो यशः स्वस्मिन् कन्यारत्नप्रभावतः॥ १२॥
सर्व्वेऽपरेऽस्वे सर्व्वस्मिन् समये हृत् प्रसर्पति।
सतामेवासतां नैतत् साध्वन्यानां हि लक्षणं॥ १३॥
नशक्यन्ते च साध्वन्ये ज्ञातुमाकृतिभिः क्वचित्।
परं श्रद्धाप्रवृत्तिभ्यां साध्वन्यास्युर्व्विनिश्चिताः॥ १४॥

---

यदुक्तं स किं धनेश्वरो यशोनोपार्जयतीति तस्य प्रत्युत्तरयति केपीति। केपि एकोदरभवा जनाः स्वानां धनानां ईश्वराः अधिपतयः स्वानां ज्ञातीनां स्वेषां आत्मीयानाञ्च पोषकाः सन्तः सन्ति। किं कुर्व्वन्त इत्यत आह यशः अर्जयन्त इति स्वस्मिन् आत्मनीत्यर्थः। अत्र स्वशब्दस्य ज्ञातिधनभिन्नार्थे सर्व्वनामसंज्ञेति तस्योदाहरणं॥ १२॥

यदुक्तं स किं नसाधुस्तस्योत्तरयति। सर्व्वेति। सर्व्वस्मिन् समये सर्व्वे महादेवे सतामेव साधूनामेव हृत् मनः प्रसर्पति नतु असतां। सर्व्वे कीदृशे अपरे नसन्ति परे अनात्मीया यस्य स तथा तस्मिन् अस्वे न सन्ति स्वे आत्मीया यस्य स तथा तस्मिन् एतद्धि एतदेव साध्वन्यानां साधूनां तद्भिन्नानाञ्च लक्षणं। अत्र सर्व्वशब्दस्य संज्ञावाचित्वेन अपरे अस्वे इति परशब्दस्य स्वशब्दस्य च गौणत्वेन तथा साध्वन्याना-मिति अन्य शब्दस्य द्वन्द्वसमासस्थितत्वेन सर्व्वनामत्वाभावः॥ १३॥

उक्तमेव स्पष्टयन् दर्शयति न शक्येति। क्वचिदपि आकृतिभिः अवयवैः साध्वन्ये साधवस्तद्भिन्नाश्च ज्ञातुं न शक्यन्ते। परं केवलं श्रद्धाप्रवृत्तिभ्यां साध्वन्याः परिचिताः स्युः। एतेन अपात्राय कन्यादातुः असत्प्रवृत्त्या असाधुत्वं सूचितं। अत्र द्वन्द्वे जसि अन्य शब्दस्य स्विसंज्ञा विकल्पः॥ १४॥

## व्याकरणम्।

ज्ञातिधने किं स्वानां स्वानां। अन्यत्र स्वेषां स्वस्मिन्॥ १२॥

संज्ञायां किं सर्व्वे शिवे इत्यर्थः। गौणे किं अपरे अस्वे। द्वन्द्वे किं साध्व-न्यानां॥ १३॥

जसि किं साध्वन्ये साध्वन्याः॥ १४॥

कर्म्मपूर्व्वा नराः सन्तोऽसन्तस्तु कर्म्मणाऽधराः ।
पराश्च नीचानीचाश्च पराः स्युः कर्म्मणा परं ॥ १५ ॥

तद्भवतु भवितव्यं भवत्येवेति मम कन्यापि प्रौढ़ा आत्मनो हिताहितविवेचनक्षमैवेति तामेवानुसरतु मम कर्म्मक्षतिर्म्माभूत् ।

अथ राजा तामुपगम्य मनोगतमावेदयत् । अथ सा अबला सस्मितं । अहह मनसिजस्य विक्रमो जयति । यतः ।

यथा विलास्यगतजरस् समीच्यते
तथा जराविकृतिमितोपि वाचि तु ।
स्त्रियाः क्वचित् श्रुतिविषयेऽद्भुतन्त्वदो
ऽभ्युपैतिनिर्ज्जरस्त उपासने जरां ॥ १६ ॥

कर्म्मेति । कर्म्मपूर्व्वाः कर्म्मणा पूर्व्वाः अग्रिमाः अग्रगण्या इति यावत् । तादृशा जनाः सन्तः साधव उच्यन्ते कर्म्मणा अधरा नीचाः नरा असन्त असाधव उच्यन्ते । तथा पराश्च श्रेष्ठा अपि कर्म्मणा नीचाः स्युः नीचाश्च नीचा अपि परं केवलं कर्म्मणैव पराः श्रेष्ठाः स्युः ॥ १५ ॥

यथेति । अगतजरः अप्राप्तजरावस्थः पुरुषो यथा विलासी समीच्यते तथा स्त्रियाः वाचि कामिन्या वचसि श्रुतिविषये श्रवणगोचरे सति जराविकृतिमितोपि जरया देहवैषम्यं प्राप्तोपि पुमान् विलासी समीच्यते । तथाहि कामिन्या वचसि श्रुते वृद्धोपि तरुणायते इत्यर्थः । अदः इदन्तु अद्भुतं निर्जरः सौ देवस्य उपासने पूजने अर्थात् स्टेज प्रतिष्ठित देवस्यार्च्चनसमये जरामभ्युपैति प्राप्नोति ।

पद्ये । वि-लास्यगत इति विशिष्ट न्हत्यगतस्य सम्बोधनं । स्त्रिया इत्यादिकं उदाहरणं । जरस् १ । समीच्यते ८ं । तथा १ं । जरा १ं । विकृतिं २ । इतः १ं । अपि १ं । वा १ं । अचि ७ं । तु १ं ॥ १६ ॥

व्याकरणम् ।

तृतीया समासे किं कर्म्मपूर्व्वाः । तृतीया समासयोग्यस्थले किं कर्म्मणाऽधराः । परा इति श्रेष्ठ वाचित्वेन व्यवस्थाशचित्वा- भावान्न शिसंज्ञा ॥ १५ ॥

राजानं प्रति। राजन्! तृतीये वयसि स्थितस्य ते वृद्धाश्रमएव युज्यते कामिन्या आश्रमं कथमुपागतोऽसि। अनन्तरं विहस्य। एवं युज्यतेऽपि। यतः।

हृत्पदाद्याः पृथक् सन्त्यादिश्यन्ते ते न केन वा।
येषां यादृक् प्रवृत्तिः स्यात् प्रयुज्यन्ते तथैव ते॥ १७॥
सतां हृत् पत् स्वयं याति विष्णुं तत्सदनं प्रति।
असतां हृत् स्वयं याति कामिनीं तद्गृहं प्रति॥ १८॥

अतोऽत्र तवागमनं सकारणमेव। किन्त्वेवं अनार्य्यस्य तव सम्पर्कमात्रेण पावनं मम कुलं दुष्येदित्यतो निवर्त्तेऽहं अनार्य्यसम्पर्कात्। यदुक्तं।

---

हृदिति। हृत् मनः पदाद्यवयवाश्च पृथक् पृथगेव सन्ति पृथक् धर्म्माः सन्ति केन वा केनापि सता असता वा जनेन ते हृत्पदाद्या न आदिश्यन्ते स्वस्वकर्म्मकरणाय न आज्ञाप्यन्ते किन्तु येषां सतामसताञ्च यादृक् प्रवृत्तिः स्यात् ते हृत्पदाद्याः तथैव प्रयुज्यन्ते अनादिष्टा अपि हृत्पदाद्याः पुरुषेच्छानुसारेण तत्तत् स्वीयकर्म्मणि स्वयमेव नियुक्ता भवन्तीत्यर्थः।

पक्षे। समुदाय पद्यमिदं सूत्रं॥ १७॥

यदुक्तं तदेव दर्शयति सतामिति। सतां हृत् मनः स्वयं अनादिष्टमपि विष्णुं प्रति याति पत् पादः स्वयं तत्सदनं विष्णोरायतनं प्रति याति असतां पुनस्तत् हृत्पदादिकं कामिनीं तस्या गृहं प्रति च स्वयं याति॥ १८॥

व्याकरणम्।

जरस् समीच्यते तथा जरा विकृतिमितोपि वाचित्। जराशब्दो जरस् स्यात् तथा विकृतिमितोपि पुंस्त्वादिना विकृतोऽपि जराशब्दस्तथा स्यात् वा अचिपरे। निर्जरसः। "जराया जरसन्यतरस्याम्। पां।" "जरस् जराचित्।" मु॥ १६॥

हृत्पदाद्या इति। हृत्पदादयः शब्दाः पृथक् सन्ति केन वा पण्डितेन हृत्पदाद्या आदिश्यन्ते इति येषां पण्डितानां यादृक् प्रवृत्तिः स्यात् तैस्तथैव शब्दाः प्रयुज्यन्ते॥ १७॥ हृत् पत्॥ १८॥

पाप्मनः पावि गङ्गाम्भो वर्षोद्वा सङ्गि दुष्यति।
इति मन्वन् निवर्त्तेत पावनोऽवमसंयुजः॥ १९॥

राजा। बाले! धनेनैव तव पितुः कुलं भविष्यति

बाला। (तं प्रति)

दृश्यते वा नीतिविदस्तव धाम्नि धनं बहु।
निमग्नं ते कुलं पङ्के उन्मज्जति न तत् किमु॥ २०॥

तदस्तु।

शाकेन वा मानधनस्य मे पितुः प्रयान्त्वहानि स्मरतो हरीशयोः।
नाम्नी अहन्यङ्कस्तैकधामनी संस्तूयमानस्य कुलीनसंसदि॥२१॥

अनार्य्यस्य अकुलीनस्य। पाप्मेति। पाप्मनः पापवतः पावि पवित्रताजनकं गङ्गाम्भः वर्षोद्वा वृष्टिजलेन सङ्गि सम्पर्कि सत् दुष्यति इति मन्वन् मन्यमानः सन् पावनः पवित्रताजनको जनः अर्थात् साधुजनः अवमसंयुजः अवमा नीचास्तेषां संयुजः संयोगात् संसर्गात् निवर्त्तेत निन्दितसंसर्गं न कुर्य्यादित्यर्थः।

पक्षे। पाप्मन इति पूर्व्वाङ्कमुदाहरणवाक्यं। (ईति १। मनु ८।) अत् १। निवर्त्तेत ८। पौ ७। अनः ६। अवमसंयुजः ६॥ १९॥

दृश्यत इति। नीतिविदो राज्ञस्तव धाम्नि गृहे बहुधनं दृश्यते च ते तव कुलं पङ्के निमग्नं अभूदितिशेषः। उः भोः तत् कुलं किं कथं न उन्मज्जति उत्थितं न भवति।

पक्षे। विद इत्यादिकं उदाहरणं। वा १। नीति ७॥ २०॥

शाकेनेति। मानधनस्य मम पितुः शाकभोजनेन वा अहानि दिनानि यान्तु किं कुर्व्वतः। अह्नि अहनि प्रतिदिनं हरीशयोर्व्विष्णुशिवयोर्नाम्नी नामद्वयं स्मरतः। नाम्नी कीदृशे अस्तैकधामनी अस्ताश्रदीभूते। कीदृशस्य कुलीनसभायां स्तूयमानस्य। पक्षे। पूर्व्वसूत्रस्य उदाहरणं॥ २१॥

व्याकरणम्।

इति मन्वन् निवर्त्तेत पावनोऽवमसंयुजः। अनोऽत् अकारः निवर्त्तेत अर्थात् लोपमाप्नोति वमसंयुक्तात् परस्य न स्यादिति मनु जानीहि। उद्‌ना, पाप्मनः। "अल्लोपोनः" पां। "सदानोऽल्लोपोऽस्वस्मात् पौ वाईत्वङ्यो"। सं॥ १९॥

दृश्यते वा नीति। अनोऽकारस्य निवृत्तिः स्यात् वा नौ ईति च परे। धाम्नि। "विभाषाङिश्योः" पां॥ २०॥

नेदृक् धनं मम पिता स्पृहयति । इदमपि चिन्त्यं ।

संसारातिज्वरे भोगी राजन्! को मुक्तिमाप्तवान् ।
यदम्ब्वधिकफे नो लुप्तलतेऽस्य स्यान्न शर्मकृत् ॥ २२ ॥

अतः संसारिणो बहुदाराधिगमः संसारवृद्धये भवतीति निवर्त्तस्व । अपिच ।

यदीच्छेः सुखदि प्रीतिं सुदृढामिष्टसाधनीम् ।
तत् साधवाऽनघे रच्या लुप्यन्ति यत्स्मृतो मलाः ॥ २३ ॥

संसारेति । संसारः स्थाद्दष्टोपनिबद्धनश्वरशरीरपरिग्रहः स एव अतिज्वरः विरज्वरः तत्र को वा भोगी जनः दारापत्यसम्पदादिसुखभोगी जनः मुक्तिमाप्तवान्? अपितु न कोपीत्यर्थः । अर्थान्तरन्यासेन तमेवार्थं दर्शयति यदिति । यत् यस्मात् अधिककफं कफमधिकृत्य भूतं इति अधिककफं विकारविशेषस्तस्मिन् अम्बु जलपानं तस्य रोगस्य लुप्तलते लोपनिमित्तं न स्यात् न भवतीत्यर्थः । न वा शर्मकृत् सुखकृत् भवतीत्यन्वयः ।

पक्षे । यदिति यत्नवतः सम्बोधनं । अम्बु इति वरुणस्य सम्बोधनं । लते इत्यादिकं उदाहरणं । अधिककफे ७ । नः ६ । लुप् १ ॥ २२ ॥

यदीति । यदि सुखदि सुखदातरि सुदृढां इष्टसाधनीं प्रीतिं इच्छेः त्वमिति-शेषः । तत् तदा हे धव! हे नर! सा प्रीतिः अनघे भगवति रच्या रचनीया कर्त्तव्येति यावत् । यत्स्मृतो यत्स्मर्त्तुर्जनस्य मलाः पापानि लुप्यन्ति । स्मृत इति स्मृधातोः क्विपि रूपं । तथाहि ईश्वरे एव प्रीतिः कर्त्तव्येति भावः । (पतिप्र खि-नरा धवाः इत्यमरः) ।

पक्षे । यत् स्मृत इति अमला इति च सम्बोधनं । तत् सा इत्यन्तपूर्व्वभागं उदाहरणं । धवाः १ ः । नते ६ । अचि ७ । आः १ ः । लुप्यन्ति ८ ः ॥ २३ ॥

व्याकरणम् ।

अधिककफे नो लुप् । धिभिन्नफे परे नस्य लुप् स्यात् । शर्म्म, हे राजन् ॥ २२ ॥
"न लोपः प्रातिपदिकान्तस्य" पा । "नो लुप् फेऽधौ" मु ।

धवानघेरच्या लुप्यन्ति । धवा धातुसम्बन्धीया आः नघे विभिन्नस्य अचि परे लुप्यन्ति । सुखदि । "आतो धातोः" पा । "धोरा लोपीऽच्यधौ" मु ॥ २३ ॥

राजा । सत्यं, तथापि मणीरत्नस्य राज्ञामस्माकं कृते एव धाता सृष्टं इति तस्मै स्पृहयामः ।

बाला । (तं प्रति) सत्यमेतत् ।

सदा वोऽवित् परस्यै वोदितौ क्षीरत्नसन्मणी ।
प्रतीच्छास्ते किन्तु नेच्छ कौस्तुभं विष्णुवक्षसः ॥ २४ ॥

अयोग्ये स्पृहां त्यज । ( चापमुद्दिश्य राजानमाक्षिपति । )

विराजसि गुणी युक्त कोट्यर्थैश्चापवंशज ।
किन्तु ते परपीड़ायै नम्रता गुणकोटयः ॥ २५ ॥

---

सदेति । हे अवित् ! अज्ञान ! सदा सर्व्वस्मिन् काले परस्यैव उदितौ प्रकाशितौ क्षीरत्नसन्मणी प्रति क्षीरत्नं प्रति सन्मणिं प्रति च वो युष्माकं इच्छा आस्ते किन्तु विष्णुवक्षसः कौस्तुभं न इच्छ न स्पृहय ।

पक्षे । सद इति गमनशीलस्य सम्बोधनं । क्षीरत्नेत्यादिकं उदाहरणं । आवः ६ । ( उ इत् ) वित् परस्य ६ । ( एव १ । ) उदितौ १ः ॥ २४ ॥

विरेति । हे चाप धनुः ! हे वंशज ! राजपक्षे हे कुलीनवंशज ! त्वं विराजसि दीप्यसे । कीदृशः गुणी ज्यायुक्तः । पक्षे गुणी विद्यादिगुणयुक्तः । कोट्यर्थैर्युक्त कोटिर्धनुषोऽग्रभागः तद्रूपा ये अर्था वस्तूनि तैर्युत् तद्युक्तः । राजपक्षे कोटिसंख्यकधनयुक्तः । किन्तु ते तव नम्रतागुणकोटयः परपीड़ायै परेषां दुःखार्थमित्यन्वयः । ( कोटिरस्याटनीत्यमरः । )

पक्षे । विरा इति विशेषेण दातुः सम्बोधनं । कोट्येत्यादिकं उदाहरणं । जसि ७ । गुणी १ । युत् १ ॥ २५ ॥

व्याकरणम् ।

आवोवित् परस्यैवोदितौ । वित्परस्यैव उकारेकारपरस्यैव औकारस्य उदितो उकारेकारौ स्तः । सन्मणी ।

" प्रथमयोः पूर्व्वसवर्णः " पां । " युष्मदस्मदौ " । मु ॥ २४ ॥

जसि गुणी युत् । जसि परे इकारे उकारस्य गुणी गुणयुक्तः स्यात् । गुणकोटयः । " जसि च " पां । णुभि जसं ङितस्तु " मुं ॥ २५ ॥

अहो विद्धि परोऽपि स्यात् गुणग्राही गुणी यदि ।
तदा तादृग् भयं नास्मात् मूर्खात् राज्ञो यथा सखे ॥ २६ ॥

इति यत् श्रुतमासीत् तदद्य दृष्टमासीत् ।

राजा । ( साक्षेपं ) ।

यद्गुणो नानुबन्धेन स प्रशस्यः कवेरहो ।
कौलिन्यं यत्र दोषाब्धेर्नमोऽस्यै गौड़भूमये ॥ २७ ॥

कुलं दोषोत्थमिति तदपि दोष एव नतु गुणः, नहि विषाद्-मृतमुत्पद्यते इति कथं कुलीनाहमिति आत्मानमभिमन्यसे ।

बाला । ( तं प्रति )

अहो इति । विद्धि जानीहि । परोपि शत्रुरपि यदि गुणग्राही गुणी च स्यात् तदा अस्मात् शत्रुतः तादृक् भयं न भवतीति शेषः, हे सखे ! यथा मूर्खात् राज्ञः सकाशात् भयं जायते ।

पक्षे । अधिकारो जसोऽपेक्षया उक्तसमुच्चयार्थकः । गुणीत्यादिकं उदाहरणं । धिपरः १ । ( अपि १ । ) गुणग्राही १ ॥ २६ ॥

यदिति । अनुबन्धेन दोषोत्पादेन यत् गुणो न अर्थात् यो गुणो दोषजनितो न भवति सएव गुणः कवेः पण्डितस्य प्रशस्यो भवति । अहो आश्चर्य्यं यत्र भूमौ दोषाब्धेः दोषसमुद्रात् अर्थात् दोषसमूहात् कौलिन्यं कौलिन्यरूपो गुणः अस्यै गौड़भूमये नमः ।

पक्षे । यदिति यत्नवतः सम्बोधनं । नम इत्यादिकं उदाहरणं । गुणः १ । नानुबन्धे ७ ॥ २७ ॥

व्याकरणम् ।

विद्धि परोपि स्यात् गुणग्राही । धिः परे यस्य तादृशो यित् उकार इकारस्य गुणग्राही स्यात् । सखे । "ह्रस्वस्य गुणः" पा ॥ २६ ॥

गुणो नानुबन्धे । उकारेकारयोर्गुणः स्यात् नकारानुबन्धे परे । दोषाब्धेः भूमये । "घेर्ङिति" पा ॥ २७ ॥

गुणी कुर्व्वन्ति दोषांश्च बलिनोऽमी गुणा नव ।
श्रीकण्ठकण्ठे गरलकालिमा भूषणायते ॥ २८ ॥

राजा । भवतु वा इति तु चिन्तयन् अनुतपामि ।

सद्‌गुणाग्राहिणो नाटादोयुतश्च स्त्रिया नहि ।
हावो दुःखाय नागर्य्या पुरुषे पशुना समे ॥ २९ ॥

इति यत्श्रुतं तत् त्वय्येव घटते । यतो रसिकाया विलासिन्या वरवर्णिन्या महाकुलायास्तव ललाटफलके उदयाचलोपत्यकारण्यवासिना मनुष्याभाषेण सार्द्धमुद्वाहः क्षणसंसर्गश्च अभिनवविधात्रा श्रीमता बल्लालेन लिखितः ।

अथ बाला । (किञ्चित् शिरोऽञ्चलेनाच्छाद्य राजानं प्रति) सत्यमुक्तं भवता ।

गुणीति । अमी बलिनो नव गुणा दोषांश्च दोषानपि गुणीकुर्व्वन्ति गुणस्वरूपान् कुर्व्वन्ति । अत्र दृष्टान्तमाह । श्रीकण्ठकण्ठे शिवस्य कण्ठे गरलकालिमा भूषणायते । तथा नवगुणेषु पतितो मध्वादिदोषोऽपि गुणोभवतीत्यर्थः ॥ २८ ॥

सद्‌गुणेति । सद्‌गुणाग्राहिणः सद्‌गुणानां ग्रहणे अशक्तान् पुरुषान् अदोयुतः एतत्सद्‌गुणयुक्तः त्वं नाट न गच्छ । स्वगुणस्य प्रकाशार्थं तत्समीपं मागच्छेत्यर्थः । अत्र हेतुमाह । पशुना समे तुल्ये पुरुषे तादृशपुरुषसमीपे नागर्य्या नगरोद्भवाया नार्य्या हावः शृङ्गारभावजक्रियाविशेषः विलासललितादिः दुःखाय नहि, अपितु तादृशपुरुषेण तद्‌ग्रहणात् सः तस्या दुःखायैव भवतीत्यर्थः । नागर्य्या इत्यनेन तस्या विलासाभिज्ञत्वं सूचितं । पशुनेत्यनेन च हावानभिज्ञत्वं कामुकत्वञ्च व्यज्यते ।

पक्षे । सद्‌गुणानां सम्यक्ग्रहीतृणां सम्बोधनं । हावेत्यादिकं उदाहरणं ना १ । टा १ । अदोयुतः ५ । (च १ ।) स्त्रियां ५ । नहि १ ॥ २९ ॥

व्याकरणम् ।

नाटाऽदोयुतश्च स्त्रिया नहि । अदसः इदुतश्च परष्टा नी स्यात् स्त्रीलिङ्गात् न स्यात् । पशुना ।

“आङो नाऽस्त्रियाम्” पां । “टादसयास्त्रियान्तुना” सु ॥ २९ ॥

शिलैड़मूकापि निसर्गतो जड़ा-
प्यधित्यकारण्यभवा फलार्थिना ।
आनीय पूज्या शुचिना द्विजेनना-
ऽवरेण वैधं किमदोऽन्यथा भवेत् ॥ ३० ॥

अपिच । सत्कुलीनायाः क्षणिकोपि सद्वरसंसर्गः स्वर्गीय मोक्षाय वा भवति ।

अतएवोक्तं । "क्षणमपि सज्जनसङ्गतिरेका
भवति भवार्णवतरणे नौका" इति ।

राजा । तद्भवतु । इति तु चिन्त्यते, तव पिता भ्राता च विधिना वञ्चितः । यतः केवलमार्य्याभिमानी कशिपु-विहीनो मनुजैरविज्ञातो वनेचरप्रतिवासी पर्णशालायामध्यासीनः केवलं विसीदति, मम सम्पर्कात् पर्णशालापि स्वर्णशाला भवितुमर्हतीति मतिर्नोत्पद्यते ।

बाला । (तं प्रति) ।

नावसीदति कुत्रापि गुणवान् स्वप्रकाशकः ।
वनस्थेनापि मणिना तामस्यां किं न दीप्यते ॥ ३१ ॥

---

शिलेति । शिला शालग्रामशिला । एड़मूकापि वक्तुं श्रोतुं अशक्तापि निसर्गतो जड़ापि प्रकृतपक्षे शीतलापि अधित्यका पर्व्वतोर्द्ध्वभूमिस्तदरण्यभवा शिला शालग्रामशिला आनीय फलार्थिना शुचिना द्विजेन पूज्या नतु अधमेन नीचेन । अदः एतद् वैधं विधिकृतं निर्ब्बन्धनं किं कथं अन्यथा भवेदित्यन्वयः । नावरेणेत्यनेनच कुलीन-वंशजस्य राज्ञः अत्रानधिकारित्वं व्यज्यते ।

पक्ष । पूर्व्वसूत्रस्य उदाहरणमात्र ॥ ३० ॥

यदुक्तं मनुजैरविज्ञातो वनेचरप्रतिवासीत्यस्य प्रत्युत्तरयति नावसीदतीति । तामस्यां अन्धकारान्वितरात्रौ । अन्यत् सुगमं ।

पक्षे । पूर्व्वसूत्रस्य उदाहरणं ॥ ३१ ॥

व्याकरणम् ।

शुचिना ॥ ३० ॥ मणिना ॥ ३१ ॥

किञ्च वनेपि ईश्वरएव अन्नं दास्यति। यतः।

विभोरिष्टेरन्नसिद्धिः स्वोद्योगान्नहि सा भवेत्।
किं कोष्ठस्थेच्यतेप्यस्य नाशो वेर्निश्चलाकृतेः॥ ३२॥

किञ्च मम पिताभ्राता च सुखेच्छासत्वेपि अन्न स्वर्णशालां नोपावसत् तदपि न शोचामि। यतस्तावज्जनोपयुक्तगुणहीनाविति सुतरामेव विषीदतः। यतः।

सुखार्थी सीदति भवे गुणबन्धौ गुणायुतः।
निर्डौरकः किं कुरुते हस्ताप्राप्याम्बुते प्रधौ॥ ३३॥

---

यदुक्तं कथिपुविहीन इत्यत्र प्रत्युत्तरयति विभोरिति। विभोः ईश्वरस्य इष्टेः इच्छातः अन्नसिद्धिः ईश्वरेच्छयैव देहिनामन्नलाभः स्यादित्यर्थः। हि यस्मात् स्वोद्योगात् स्वकीयकायकृतव्यापारात् सा अन्नसिद्धिर्नस्यात्। एतदेव दर्शयति, कोष्ठस्य कोषे डिम्बं तत्र तिष्ठतीति कोष्ठः तादृशस्य अस्य वेः पक्षिणः अशो भोजनं न ईच्यतेऽपि न दृश्यतेऽपि त्वयेति शेषः। कीदृशस्य निश्चलाकृतेः निश्चलशरीरस्य। तथाहि डिम्बस्यस्य पक्षिणः ईश्वरेच्छां विना स्वतः परतो वा अन्नसिद्धिर्नसम्भवतीत्यर्थः। (इष्टिर्यागेच्छयोरित्यमरः।)

पद्ये। सूत्रस्य पूर्व्वापरभागौ उदाहरणं। (षी-अस्य) प्यस्य ६। ईच्यते ८। (पी-अस्य) प्यस्य ६। नाशः १। (ओ-एः) अवेः ५॥ ३२॥

सुखेति। गुणायुतः गुणहीनो जनः सुखार्थी सन् भवे दारादिमयसंसारे सीदति अवसन्नो भवति। भवे कीदृशे गुणबन्धौ गुणएव बन्धः सङ्घायो यत्र स तथा तस्मिन्। तदेव दर्शयति, निर्डौरकः डोरएव डौरकः स्वार्थे कप्रत्ययः। निर्नास्ति डौरको रज्जुर्यस्मिन् तादृशो जनः हस्ताप्राप्याम्बुते हस्तेन अप्राप्यं अम्बुतं जलं यस्य तादृशे प्रधौ कूपे किं कुरुते किं कर्त्तुं शक्नोति। (पुस्तकादेर्ब्बन्धसूत्रे डोरकः परिकीर्त्तितः इति कोषः।) गुणाइति गुणवतां पाठकानाम्बा सम्बोधनं। पूर्व्वापरभागौ उदाहरणं। युतः ५। निः १। डौः १॥ ३३॥

व्याकरणम्।

व्यस्येच्यते प्यस्य नाशोऽवेः। अवेः ओकारैकारात् परस्य प्यस्य षी षष्ठी तस्याः अकारस्य पीपञ्चमी तस्याः अकारस्य च नाशः लोप ईच्यते। विभोः, इष्टेः, निश्चलाकृतेः। "ङसि ङसोश्च" पां। "ङस्ये ङीलोपः" सु॥ ३२॥

अहो राजन् ! आत्मानं कथं न शोचसि । यतः ।

चितोऽहं राड़िति परेऽटेर्लोपनमवेहि यत् ।

नुतीनां विंशतेर्नौक्तौ चाटौच शमिता यमः ॥ ३४ ॥

अतस्तद्भयशान्त्यर्थं ।

नुविराड़ाधिसे स्थाने ऋत आनन्दसंज्ञके ।

मोदस्व सं मुदं दाता सखा सख्युः परोपि सः ॥ ३५ ॥

अथ राजा (तस्याः भ्रातरमुपसृत्य सविनयं ।)

चितइति । अहं राट् राजेति चितः ज्ञानस्य परे परस्मिन् काले लोपनं अटेः प्राप्त्याः इति अवेहि जानीहि अहं राजा इति बोधस्य परकाले लोपो भविष्यतीत्यर्थः । कदेत्याह, यत् यदा नुतीनां स्तुतीनां विंशतेः अर्थात् विंशतिसंख्यकस्तवादपि तथा चाटौ उक्तौ विनयवचसि च यमः यमराजः न शमिता न शान्तिं प्राप्स्यति । (चाटुर्विनयवाचि चेति कोषः ।)

पक्षे । चित इति चेतनवतां सम्बोधनं । अहरा इति अहमितिशब्दवतां सम्बोधनं । यदिति यत्नवतां सम्बोधनं । ङिति ७ं । परे ७ं । टेः ६ं । लोपनं १ं । अवेहि ८ं । तीनां ६ः । विंशतेः ६ं । न.१ं । क्तौ ७ं ॥ ३४ ॥

नुवीति । नु भो विराड़् राजन् ! आनन्दसंज्ञके आनन्दाख्ये परमात्मनि मोदस्व, कीदृशे ऋते सत्यस्वरूपे आधिसे आधिर्मानसी व्यथा तं स्यति नाशयतीति आधिसस्तस्मिन् स्थाने, स मुदं दाता हर्षदानशीलः सख्युः परोपि सखा सएव इत्यन्वयः । नु विरा इति विशेषेण दातुः सम्बोधनं । डा १ं । अधिसेः ६ं । स्थाने ७ं । ऋतः ५ं ॥ ३५ ॥

व्याकरणम् ।

युतो निर्ङौः । इदुतः परे निर्ङौः स्यात् । गुणवन्त्वौ, प्रङ्गौ ।

"अच्च घेः" पां । "युङ्भ्यां ङेर्डौः" सुं ॥ ३३ ॥

ङिति परे टेर्लोपनमवेहि तीनां विंशते र्नौक्तौ । ङिति परे टेर्लोपः स्यात् विंशतिशब्दस्य तीनामपि लोपनमवेहि नतु क्तौ विभक्तौ परे । चाटौ ।

"टेः" पां । "टेर्लोपो ङिति विंशते स्ते स्लङ्ग" सुं ॥ ३४ ॥

डाधिसेः स्थाने ऋतः । ऋकारान्तात् परस्य धिभिन्नसे स्थाने डास्यात् । सखा ।

"सख्यदू भ्यां सेर्डधेः" सुं ॥ ३५ ॥

विपदोघावृतः सख्युः स्मरेत् वृद्धिमितः श्रियः ।
यः स्मरेदुपकर्त्तारं सखायं सुहृदेव सः ॥ ३६ ॥

सख्युराटान्तिके नास्य येन सख्या न ग्टह्यते ।
समो विभागो विपदां सुखमात्रांशभागिना ॥ ३७ ॥

तस्मादहमेव तव सखा । यतः उपकर्त्तारं त्वां चिरं मनी-करिष्यामि विपदि बन्धुरस्मीति मामवेहि ।

इति श्रुत्वा स विप्रस्तूष्णीम्बभूव । (अथ विभाव्य) राजन् ! यद्येवं प्रतिजानीयाः तदैवैनां भगिनीं ते प्रयच्छेयं ।

राजा । किन्तत् ?

विप्रः । मम भागिनेयो राजा भविष्यतीति ।

राजा । एवं तवैव पादाय शपे सत्स्वपि जेष्ठपुत्रेषु तव भागिनेयो राजा भावीति ।

अथ राजा तां विवाह्य स्वपुरं गतः ।

विपेति । विपदोघावृतः विपत्समूहावृतः सन् सख्युः स्मरेत् सखायं स्मरतीत्यर्थः । यो जनः श्रियः सम्पदः वृद्धिमितः वृद्धिं प्राप्तः सन् उपकर्त्तारं सखायं स्मरेत् स एव सुहृत् ।

पक्षे । विपद इति सर्पाणां सम्बोधनं । इतः श्रियः इत्यादिकमुदाहरणवाक्यं । घौ ७ । ऋतः ६ । सख्युः ६ । स्मरेत् ८ । वृद्धिं २ ॥ ३६ ॥

सख्युरिति । अस्य सख्युरन्तिके समीपे न आट नागच्छ, येन सख्या विपदां समो विभागो न ग्टह्यते । किम्भूतेन सुखमात्रांशभागिना ।

पक्षे । अन्तिकेत्यादिकं उदाहरणं । सख्युः ६ । आ १ । टा १ ॥ ३७ ॥

व्याकरणम् ।

घावृतः सख्युः स्मरेत् वृद्धिं । घौ परे ऋकारस्य सख्युश्च वृद्धिमिच्छति । उपकर्त्तारं, सखायं । "घौ त्रिः" सु ॥ ३६ ॥

सख्युराटा । सखिशब्दात् परः टा आ स्यात् । सख्या । "सख्युष्टाङितामाए उसुसौ" सु ॥ ३७ ॥

सखिना सचिवेनापि व्यवहारेक्षणेन च ।
मुक्तसङ्गः स द्वितीयाद्वितीयोऽभूद्गतो गतः ॥ ३८ ॥

अथ अभियोक्तुरभ्युदयस्य मुखादेतत् श्रुत्वा वङ्गतिलको पृच्छ आत्मगतं ।

अहो अमीषां मूढानां तत्त्वधीः स्यात् कथं नु भोः ।
नानुबन्धा ययुरुरावस्तेऽस्ते मादनेऽच्युताः ॥ ३९ ॥

सतः साध्योः सुखाप्तिः स्यात् सख्युरत्र परत्र च ।
अहो हृद्योपि मदनो दुःखायेह परत्र च ॥ ४० ॥

वङ्गतिलकः । अरे आनन्द ! ततः स राजा किमकरोत् ?
अभियोक्ता । स राजा तदवस्थयैव बहुकालं निनाय । अथैकदा तस्य महिषी विलपन्ती आह । देव ! मम मातुलस्य

---

सखिनेति । स राजा द्वितीयाद्वितीयः द्वितीया भार्य्या सैव द्वितीया यस्य स तथा सन् सखिना तथा सचिवेन तथा व्यवहारावेक्षणेन व्यवहारो राजकर्म्म तद्दर्शनेन च मुक्तसङ्गः त्यक्तसम्बन्धोऽभूदित्यन्वयः ॥ ३८ ॥

अहो इति । तत्त्वधीः तत्त्वज्ञानं । नु भोः । नानुबन्धाः नास्ति अनुबन्धो दोषोत्पादो येषां तादृशाः सन्तः जना मादने मदनसम्बन्धीये उरौ महति अस्ते अस्ते क्षिप्ते सति, अच्युता ययुः ।

पक्षे । अस्ते मादने अच्युता इति जितेन्द्रियाणां सम्बोधनं । नानुबन्धा इत्यत्र विसर्गस्य अकारे परे यकारः । नानुबन्धाः १ :-। (ए ङस् ङस् ओ) ययुरुरावः १ :- ॥ ३९ ॥

सतइति । सतः साधोः सख्युः सकाशात् सख्युः अत्र परत्रापि सुखाप्तिः सुखप्राप्तिः स्यात् । हृद्यो हृदिभवः पक्षे सुहृत् । (हृद्यः सुहृदि हृद्भवे इति कोषः ।)

पक्षे । पूर्व्वस्तनस्य उदाहरणमात्रं ॥ ४० ॥

व्याकरणम् ।

सखिना ; क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति न्यायात् ॥ ३८ ॥

नानुबन्धा ययुरुरावः । सखिशब्दात् परस्थिताः नकारानुबन्धाः ए, ङस्, ङस्, ओकाराः स्युः ॥ ३९ ॥ सख्युः, सख्युः ॥ ४० ॥

आपराधस्य भवता वधनकृविगादानदण्ड आदिष्ट स्तन्ममोपरो-धेन त्वन्तव्यं अन्यथाहं प्राणांस्त्यक्ष्यामि।

राजा। प्रिये! मैवं।

राज्यं देहो मम कीर्त्तिः शौर्यं त्वय्यर्पितं मया।
केवलं रक्षितं सत्यं सत्ये धर्म्माय यत्नतः॥ ४१॥

तन्तु दातुं न शक्नोमि। आदिष्टं स्वयमन्यथा कुर्व्वन् धर्म्मे सत्यो क्षिमुत्तरं दास्यामि? राजा हि व्यवहारेऽनुपरोद्धा भवति। तस्मात् प्रिये! एतादृशानुरोधान्निवर्त्तस्व। एतन्नि-मित्तं यदि प्राणांस्त्यजसि तथापि सत्यं त्यक्तुं न शक्नोमि।

अन्त्यजः। अतोऽहं ब्रवीमि। देव! अहं नीचः अयन्तु प्रत्यर्थी ब्राह्मणः दृत्यपरोधोऽनादेयः।

वङ्गतिलकः। (एतत् श्रुत्वा हृष्टः तं प्रति।) पश्चात् यथाविधि विधास्यामि। ततः स राजा किमकरोत् यदि जानासि तत् कथ्यतां।

अन्त्यजः। अथैकदा राजपुरोहितो हितमिच्छुः राजान-मुपगम्याह राजन्! तृतीये वयसि नत्ययैतत् अम्रयुज्यते।

तस्मै तु जगतां पत्यै रोचस्व नृप! किं स्त्रिया।
पत्थेष्टानि न सिध्यन्ति स्त्रीणां पतुरसेवनात्॥ ४२॥

---

राज्यमिति। अस्यार्थः सुगमः॥ ४१॥

तस्मै इति। जगतां पत्यै ईश्वराय रोचस्व अनुरागं धारय। हे नृप! स्त्रियाः किं स्यात् किं फलं भवेत्। अत्र दृष्टान्तमाह। पत्युरसेवनात् सेवकानां दृष्टानि अभीष्टानि न सिध्यन्ति। पत्ये। वनादिति जलपायिनः सम्बोधनं। पूर्व्वभागः उदाहरणं। पत्युः ५। अमे ७॥ ४२॥

व्याकरणम्।

पत्युरसे। पतिशब्दात् परस्थिता टा नकारानुबन्धाश्च आ, ए, ङस्, ङसि औकाराः स्युः असमासे। पत्यै। असे किं जगत्पतिना। (पाणिनि व्याकरणे सखिपतिशब्दसाधननियमस्तु विभिन्न एव)। "पत्युर से" सु॥ ४२॥

तेन हि जगत्पतिना तोषितेन शचीशत्वमपि दातुं शक्यते । राजन्निदमपि चिन्त्यं ।

अहो यति यति आसादयति तति तति सह शरीरार्द्धेन पाणिगृहीतायै यस्यै समर्पयतकि·सुडतिप्रत्ययात् द्वितीयाप्रीत्या सोऽस्ति लुक्सञ्चयः पाथेयमपि नेतुमक्षमो निराश्रयान् कति कति दुरध्वान् गमिष्यन् सकृदपि तयेति न चिन्त्यते ॥ ४३ ॥

अपिच ।

यदीहैको दस्युर्दशनवषड़ाह्यान्यपि परं
वसेत् ग्रामोपान्ते भवति न किमस्मादपचयः ।
न संख्यातः षड़्भ्यः सततमपकृद्भ्यः स्वभवने
वसङ्ग्रो गोपायेदहह परमार्थान् किमु भवान् ॥ ४४ ॥

अहो इति । अहो आश्चर्य्यं । सुट् विषयलुब्धो जनः यति यति आसादयति यावत् धनं उपार्ज्जयति तति तति तावद्धनं पाणिगृहीतायै भार्य्यायै डतिप्रत्ययात् शरीरार्द्धेन सहैव समर्पयतकि अर्पयति । शरीरार्द्धं स्मृता जायेति दम्पत्योर्मध्यगं धनमिति स्मरणात् । स सुट् जनः द्वितीया प्रीत्या भार्य्याया प्रीत्या प्रीतियुक्तोऽस्ति तिष्ठति लुक्सञ्चयः लुप्तधनसञ्चयः निराश्रयान् कति कति दुरध्वान् दुर्गम्यपथान् गमिष्यन् पाथेयमपि शरीरायास-धनव्ययाभ्यां पुन्यसञ्चयरूपं पारलौकिकभोग्यमपि नेतुमक्षमो भवति इति तया भार्य्यया सकृदपि न चिन्त्यते ।

पक्षे । समर्पयत, किमु इत्यन्तपूर्व्वभागः उदाहरणं । सञ्चयेत्यादिकं उदाहरणं । मञ्चयः सञ्चयकर्त्ता । डतिप्रत्ययात् ५ । द्वितीया प्रीत्यासः ६ । अस्ति ८ । लुक् १ ॥ ४३ ॥

यदीति । यदि एको दस्युश्चौरः इह संसारे ग्रामोपान्ते ग्रामस्य समीपे परं केवलं दश नव षड़ह्यान्यपि वसेत् तदा तस्मात् चौरात् नसंख्यातोऽपचयः असंख्याता हानिर्न भवति ? अपितु भवत्येव । अहह खेदे स्वभवने निजगृहे सततं वसङ्ग्रः षड़्भ्यः अपकृद्भ्यः चौरेभ्यः अर्थात् कामक्रोधादिभ्यः किमु कथं परमार्थान् परम-धनानि प्रकृतपक्षे परमार्थान् पुरुषार्थान् गोपयेत् ।

पक्षे । यदित्यादिकं उदाहरणं । नसंख्यातः ५ । षड़्भ्यः ५ । सुः १ ॥४४॥

व्याकरणम् ।

डति प्रत्ययात् द्वितीयाप्रथमाप्रत्यययोः असो लुक् अस्ति भवतीत्यर्थः । यति, यति, तति, तति । "डति च" पां । "डति संख्याभ्यो जस् शसो लुक्" सं ॥ ४३ ॥

अतः कामादयोऽपकारिणो निजधाम्नो दूरीकरणीयाः। इति श्रुत्वा स राजा जातवैराग्यो वनं विवेश। एतत् श्रुत्वा वङ्गतिलको हृष्टः। (अनन्तरमानीतं प्रत्यर्थिनं विप्रं प्रति।) ब्रह्मन्! एतादृशक्रोधस्य वशे वर्त्तसे, यत् क्षुधार्त्तमन्नार्थिनं स्वाश्रममुपस्थितं पानीयमप्यदत्त्वा ताडितवानसि। श्रणोत्वेवं।

यन्नामित्रेरयत्कोपस्य रोद्धुं प्रभवेस्तदा।

क्रोधे तमुत्सृजार्थानां त्रयाणां परिपन्थिनि॥ ४५॥

अपिच। ब्रह्मन्! भवद्विधानां निन्दा मादृशां कर्णौ यथा न स्पृशेत् तथैव वर्त्तितव्यं। यतः सन्निन्दा सतां कर्णे शूलायते। अत्रेतिहासं शृणु। दुर्य्योधनस्य सभायां दुःशासने द्वैतवनवासिनः पाण्डवान् निन्दति उच्चैर्हसन्तं कर्णं प्रति विदुरः।

सन्निन्दने सृजति यो द्वौ कर्णौ सरसं सहि।

कौलटेरस्त्यदग्र्याणां स्याद्विषाहतिवत् श्रुतौ॥ ४६॥

---

यदिति। यत् यदि अमित्रे अहिते अर्थात् अपकारिणं प्रति कोपस्य स्वं वेगं रोद्धुं धारयितुं न प्रभवेः न प्रभुर्भवसि अर्थात् न शक्तोभवेः, तदा क्रोधे क्रोधं प्रति तं कोपस्य वेगं उत्सृज त्यज। क्रोधस्यापकारित्वं दर्शयति। क्रोधे कीदृशे त्रयाणां अर्थानां पुरुषार्थानां धर्म्मकाममोक्षाणां परिपन्थिनि प्रतिबन्धके।

पद्ये। यदिति यत्नतः सम्बोधनं। कोपस्येत्यादिकं उदाहरणं। नामि ७ं। त्रेः ६ं। अर्थं १ं॥ ४५॥

सन्निन्देति। योजनः सन्निन्दने साधूनां निन्दायां सरसं सानुरागं यथास्यात्तथा द्वौ कर्णौ सृजति क्षिपति, स कौलटेरः असज्जन्मा ज्ञेयः इतिशेषः। अग्र्याणां महतां त्यत् निन्दनं श्रुतौ कर्णे दृष्ट्याहतिवत् वाणस्याघातवत् स्यादित्यन्वयः। अत्र त्यद्शब्दस्तद्शब्द-समानार्थकः।

पद्ये। सहीत्यन्तपूर्व्वभाग उदाहरणं कौल इति कुलजन्मनः सम्बोधनं। आहतीत्यादिकं पूर्व्वसूत्रीयं उदाहरणं। टेः ६ं। अः १ं। त्यदग्र्याणां ६ः। स्यादिषु ७ः॥ ४६॥

व्याकरणम्।

नसंख्यातः षड्भ्यः सः। नान्तसंख्याशब्दात् षष् शब्दाच्च सः पूर्व्वोक्तविधिः स्यात्। दश, नव, षट्। "स्नान्ता षट्" पा॥ ४४॥

अथ दुःशासनं प्रति ।

व्यसनानि स्पृहेयुः स्वं दीप्तलक्ष्मीं यथा तथा ।
विदधातु न दीवीतो माद्यन्नाशमुपैति यत् ॥ ४७ ॥

पुनः कर्णं प्रति । अहो कर्ण ! तव तु चण्डप्रतापपक्षस्य अनार्य्यस्य पाण्डवानां प्रदीप्तयशःस्यसहमानस्य म्लानिमुपगतस्य मलिनस्य एवमुदन्हासो युज्यते । तदेवं पश्य ।

नशः स्तीक्ष्णांशुपक्षस्य पङ्कजस्य श्रियोमुदः ।
असहिष्णोः सुधांशूंश्चातन्द्रीन् विश्वमुदे विधोः ॥ ४८ ॥

---

व्यसनेति । दीप्तलक्ष्मीं दीप्ता लक्ष्मीर्यस्य तादृशं स्वमात्मानं यथा येन प्रकारेण व्यसनानि अष्टादश दोषविशेषाः स्पृशेयुः तथा न विदधातु तथाहि प्रदीप्तसम्पदा जनेन व्यसनेषु न प्रवर्त्तितव्यं यत् यस्मात् दीवी लक्ष्मीवो दीप्तदीप्तोजनः माद्यन् सन् नाशं उपैति शंकल्याणं न प्राप्नोति । (दीर्लक्ष्मीस्त्रव्ययं क्रोधे इतिकोषः ।) पक्षे । तथेत्यन्तपूर्व्वभागः उदाहरणं । विदिति ज्ञानवतः यदिति यत्नवतः सम्बोधनं । अधातुनदीवीतः ५ । अमाद्यं १ । नाशं २ । उपैति ८ ॥ ४७ ॥

नशइति । विधोश्चन्द्रस्य सुधांशूंश्च अमृतभूतकिरणानपि असहिष्णोः पङ्कजस्य श्रियोमुदः शोभायाः मोदनस्यैव नशः नाशो भवतीति शेषः । सुधांशून् कीदृशान् विश्वमुदे विश्वेषां हर्षाय अतन्द्रीन् नास्ति तन्द्रीः प्रमीला येषां ते तथा तान् जाग्रत इत्यर्थः । पङ्कजस्य कीदृशस्य तीक्ष्णांशुः सूर्यः तत्पक्षस्य । अत्र पङ्कजशब्देन पापसम्भूतत्वं व्यज्यते । (पङ्कः कर्द्दमपापयोरिति कोषात् ।) तथाहि पद्मस्य चान्द्रीयानां विश्वहर्षजनकसुधांशूनां असहिष्णुत्वे पापसम्भवत्वं तीक्ष्णांशुपक्षत्वञ्च हेतुरितिभावः । पक्षे । तीक्ष्णेत्यादिकं उदाहरणं । न १ शस् १ ॥ ४८ ॥

व्याकरणम् ।

नामि वेरयङ । त्रिशब्दस्य अयं स्यात् नामि परे । त्रयाणां । "त्रेस्त्रयः" पा । "त्रेरयङ् नामि" मु ॥ ४५ ॥

टेरस्त्यदष्याणां स्यादिषु । त्यदादीनां टेरकारः स्यात् स्यादिषु । द्वौ । "त्यदादीनामः" पा । "त्यदां टेरः सौ" मु ॥ ४६ ॥

अधातु नदीवीतोऽमाद्यं नाशमुपैति । धातु-नदीसंज्ञक-शब्दभिन्नात् उकारेकारान्तात् अमाद्यं अमः आदिरकारो लोपमाप्नोति । दीप्तलक्ष्मीं ॥ ४७ ॥

विद्यादेवस्येतद्द्वयमचिरे स्यान्न चेतना।
सदा परानिष्टचिन्ताऽसद्धियां सन्ततो ज्वरः॥ ४९॥

ब्राह्मणाचार्यं प्रति।

उवीक्ष्यते गुरोश्चोत स्पृहा पार्थेषु नाधुना।
यतस्ते निर्भुवो दीना हृतस्वा वनवासिनः॥ ५०॥

---

विद्यादिति। विद्यादिदमपि जानीयात् भवानिति शेषः। असद्धियां कुबुद्धीनां जनानां सदा परेषां अनिष्टचिन्तैव सन्ततोज्वरः सन्ततज्वरतुल्यः अविच्छिन्नत्वे न दुःखकरत्वाच्च। इतः अस्मिन् लोके धवस्य मनुष्यस्य इयं चेतना बुद्धिः अचिरे अचिरकालेन न स्यात्। किन्तु कालान्तरे इयं चेतना भविष्यत्येवेति भावः।

पक्षे। रे इति सम्बोधनं। स्यादित्यादिकं उदाहरणं। विद्यात् ८ं धवस्य ६ं। ईतः ६ं। द्वयम् १ं। अचि ७ं॥ ४९॥

उ इति। उत इति वितर्के। उ भोः गुरोश्च आचार्यस्यापि अधुना पार्थेषु पाण्डवेषु स्पृहा नो वीक्ष्यते। यतो यस्मात् ते पाण्डवा निर्भुवः दीनाः हृतस्वाः हृतधनाः वनवासिनश्च।

पक्षे। स्पृहेत्यादिकं उदाहरणं। उ १ं। ईक्ष्यते ८ं। गुरोः ६ं। च १ं। ऊतः ६ं॥ ५०॥

व्याकरणम्।

न भवेत्। चेतुमनीषिणात् उकारेकारान्तात् धातो न स्यात्। अतन्द्रीन्। "श्रुतोऽक्षुमनीच्छोविहीषीः" ६॥ ४८॥

विद्यात् धवस्येत द्वयमचि। धवस्य धातुसम्बन्धीयस्य ईतः ईकारस्य द्वयम् विद्यात् अचि परे। असद्धियां॥ ४९॥

उवीक्ष्यते गुरोश्चोतः। धातोर्गुरोरूकारस्य उव ईक्ष्यते अचि परे। निर्भुवः। "अचि श्नुधातुभ्रुवां योरियङुवङौ" पा। "धारियुवचि" मु॥ ५०॥

गुरो ! इदमपि जानीहि ।

रणे जयी राट् लभते भुवं नाकभुवं हतः ।
ब्रह्मन् जयी हतो वाजौ तत् द्वयं न त्वमाप्स्यसि ॥ ५१ ॥

अतोऽस्य यत् सैनापत्याय स्पृहयसि तस्य प्रयोजनं न जानीमः । हत ! हत !

चकारकोर्द्धं धातोर्व्वीतोऽव्यौकः सन्तमसनाशाय ।
बीधश्चान्तस्तमोल्वं मूढैस्तदपिहत नेच्यते पन्थाः ॥ ५२ ॥

दुर्य्योधनं वा किं ब्रूमः । यतः !

अनेका च स्पृहयति स्वर्गं दिव्यं व्रतैर्वधूः ।
भर्त्तुर्मूर्द्धि न्यस्य भारं यस्याचैव व्रतं स्त्रियाः ॥ ५३ ॥

---

रणइति । राट् राजा रणे युद्धे जयी सन् भुवं लभते रणे हतो वा नाकभुवं स्वर्गं लभते । हे ब्रह्मन् ! आजौ युद्धे जयी हतो वा त्वं तत्द्वयं भुवं स्वर्गञ्च न लप्स्यसे । पक्षे पूर्वसूत्रस्य उदाहरणमात्रं ॥ ५१ ॥

चकारेति । धाता विधाता सन्तमसनाशाय विश्वव्यापकान्धकारनाशाय उर्व्वीतः पृथिवीतः ऊर्द्धं अव्यौकः अविःसूर्यः तस्य औकः स्थानं चकारक चकार स्वार्थे कः । अन्तस्तमोल्वं अन्तः अन्तर्गतं तमोलुनाति यः तादृशं बोधञ्च चकार हत खेदे तदपि तस्मादपि मूढैः अज्ञैः पन्थाः नेष्यते । (औकश्चौकश्च विज्ञेयमिति कोषः(

पक्षे । चकारोऽवधारणे । कः सन्तमसेत्यादिकं उदाहरणं । कारकोर्द्धं १ं । धातोः ५ं । वीतः ६ं । व्यौ १ः ॥ ५२ ॥

अनेकेति । अनेकाच अनेकापि वधूः योषित् व्रतैः करणभूतैः स्वर्गं दिव्यं स्वर्गे क्रोड़नं स्पृहयति इच्छति ; स्पृहेः कर्म्मणि चतुर्थी अनित्यत्वात् । किं कृत्वा इयत आह । भर्त्तुर्मूर्द्धनि भारं व्रतसम्पादकसम्भारद्रव्यस्य भारं न्यस्य अर्पयित्वा । कीदृशस्य भर्त्तुः यस्य भर्त्तुरचैव पूजैव स्त्रिया व्रतं ।

पक्षे । स्वर्गेत्यादिकं उदाहरणं । अनेकाचः ६ं । स्पृहयति ८ं ॥ ५३ ॥

व्याकरणम् ।

भुवं । नाकभुवं ॥ ५१ ॥ कारकोर्द्धं धातोर्व्वीतोव्यौ । कारकात् धातोः वीतः उकारेकारस्य यवौ स्तः अचि परे ।' तमोल्वं ॥ ५२ ॥

भवानपि तद्वत् यस्य गुरोरर्च्चनमेव रणे जयाय भवति तस्यैव मूर्द्धनि सैनापत्यभारं यच्छिनीषति। अलमतिविस्तरेण।

लोभादि व्यस्य धाम्नः स्वात् प्रध्यः क्रीड़त निर्भयाः
प्रीत्या क्रूरे जने कस्य हानिर्नाश्रयवैरिणि ॥ ५४ ॥

एते एव स्वधाम्नि पुष्टाः पातयिष्यन्ति।

एतत् श्रुत्वा कर्णः। (राजानं प्रति)

स्याद्धीतो नाग्रहो येन हितान्युपदिशेत् स किं।
नहि जिज्ञासवे क्वापि जन्मान्धाः सत्पथब्रुवः ॥ ५५ ॥

अतः पण्डिताभिमानिनं दुर्म्मुखं विपक्षसपक्षं अविदुरं विदुरं दूरीकरोतु भवान्।

लोभेति। हे प्रध्यः! प्रकृष्टबुद्धिसन्तः! लोभादि लोभमोहादिकं स्वात् धाम्नः स्वगृहात् अर्थात् स्वदेहात् व्यस्य दूरीकृत्य निर्भयाः सन्तः क्रीड़त अत्रक्रीड़ां कुरुत। आश्रयवैरिणि क्रूरे जने प्रीत्या प्रीतिहेतोः कस्य जनस्य हानि नं भवतीति शेषः। तथाहि लोभमात्सर्य्याहङ्कारादय एव पुरुषस्य शत्रवस्तस्मात् ते दूरीकरणीयाः।

पक्षे। लोभ इति लोभवतः सम्बोधनं। धाम्न इत्यादिकं उदाहरणं। आदिव्यस्य ६ ॥ ५४ ॥

स्यादिति। येन जनेन ग्रहः सत् ज्ञानं न वीतः विशेषेण न प्राप्तः स्यात्, सः जनः किं कथं हितानि उपदिशेत्। हि यस्मात् जिज्ञासवे जनाय जन्मान्धा जनाः क्वापि न सत्पथब्रुवः सत्पथोपदेष्टारो नस्युरित्यन्वयः।

पक्षे। गृहेत्यादिकं उदाहरणं। स्यात् ८। वीतः ६। न १ ॥ ५५ ॥

व्याकरणम्।

अनेकाचः स्पृहयति। अनेकाचो धातोस्तथा स्तः। द्विध्यं। "एरनेकाचोऽसंयोगपूर्व्वस्य" पा ॥ ५३ ॥

आदिव्यस्य। आदौ व्यं अव्ययं यस्य तादृशधातोय उकारेकारस्य यौ स्तः अचि। प्रध्यः ॥ ५४ ॥

स्याद्धीतो न। स्यात् संयोगात् परस्य धातोः उदितौ न य्वौ स्तः।

सत्पथब्रुवः ॥ ५५ ॥

विदुरः । सुतरामेव भवतां विदूरएवास्मिति ।
(सोऽश्वत्थामानं प्रति) भवन्त एवैषां कुलक्षयमिच्छन्ति ।
अपि च । विप्रकुलजन्मापि भवान् आबाल्यात् केवलं धनुष्पाणिः पुरः पश्चाच्च धावमानो राजानं सेवते स्वधर्म्माचरणविहीनो देवार्षादि ऋणानि कदापनेष्यते । हत ! हत !

अप्येकवर्षाहृणतः पुनः कारया
भुवद्भूतरभुवः पत्युर्बिभेति लोकः ।
अहो बहुजनिपञ्चर्णतोपि महेश-
काराभ्वो बिभेति न कोपि ॥ ५६ ॥
सुधियोऽपि न मन्यन्ते माययाकृष्टचेतसः ।
सुधियामपि मोहिन्या स्वायुषोऽहरहः क्षयम् ॥ ५७ ॥

---

अप्येकेति । एकवर्षात् एकवर्षं व्याप्य भूतादपि ऋणतः ऋणाद्धेतोः द्रुतरभुवः पत्युः द्रुतरस्य क्षुद्रस्य भूपतेः काराभुवः कारा बन्धनगृहं तद्रूपाया भुवः स्थानात् लोको बिभेति । तथाहि एकवर्षीये ऋणेऽपि कृते क्षुद्रनृपस्यापि कारागारात् लोको बिभेति । पुनःशब्दस्तुकारार्थे । अहो आश्चर्यं बहुजनि पञ्चर्णतोऽपि बहु-जन्मकृतेभ्यो देवपित्रादिभ्यः पञ्चऋणेभ्योऽपि हेतुभ्यः महेशकाराभ्वः महेशस्य परमे-श्वरस्य काराभुः नरकरूपायाः कारागृहभुवः न कोपि बिभेति ।

पक्षे । एक इति मुख्यस्य सम्बोधनं । अपि प्रश्ने । पत्युरित्यादिकं उदाहरणं । वर्षाहृणतः ५ । पुनःकारायाः ५ । भुवः ५ । द्रुतरभुवः ५ ॥ ५६ ॥

सुधीति । माययाकृष्टचेतसः सुधियोऽपि अहरहः आयुषः क्षयं न मन्यन्ते न जानन्ति । मायया कीदृश्या सुधियामपि मोहिन्या मोहजनिकया ।

पक्षे । मायेत्यादिकं उदाहरणं । सुधियः ६ । अपि १ । न १ । मन्यन्ते ८ ॥५७॥

व्याकरणम् ।

वर्षादृणतः पुनः कारया भुव द्रुतरभुवः । वर्षादृण पुनः काराशब्देभ्यः परस्य भुवद्रुतरभुवोपि न स्यात् । महेशकाराभुः ॥ ५६ ॥

सुधियोऽपि न मन्यन्ते । सुधीशब्दस्यापि तत्र मन्यन्ते । सुधियां ।
"कव्याद्यनेकाचोऽस्यादृणपुनर्वर्षाकाराद्यन्यभूसुधियो यौ" सु ॥ ५७ ॥

ब्रह्मन्! तव सावित्रीदीक्षापि वृथैव । यतः ।

नरो भवनदीनीतोऽप्याप यां निस्तरां तरीम् ।

सौवर्णीं मन्यते तां स क्रीडार्थां सिन्नियां भवे ॥ ५८ ॥

( पुनः दुर्य्योधनं प्रति । )

गुणवानृद्धियुक्तश्च नियुक्तो धर्म्मकर्म्मसु ।

पितः! स्यान्मत्सरासङ्गात् व्यसनी व्यसनान्मृतिः ॥ ५९ ॥

नर इति । नरोमर्त्यः भवनदीनीतोऽपि स्वकर्म्मणा भवरूपनदीं प्रापितोऽपि यां सौवर्णीं स्वर्णमयीं प्रकृतपक्षे शोभनवर्णमयीं मन्त्ररूपां निस्तरां निस्तारहेतुभूतां नौकां आप प्राप्तवान्, स मर्त्त्यः भवे संसारे तां तरीं क्रीडार्थां क्रीडामात्रप्रयोजनिकां मन्यते । भवे कीदृशे सिन्नियां सित् वितर्कः परलोको नास्ति प्रत्यक्षप्रमाणाभावात् इति वितर्कस्तन्नियां तत् प्रापके ।

पक्षे । नरोभव इत्यस्य उ भीः नर! भव प्राप्नुहि स्त्वार्थमिति शेषः । तरीमित्यादिकमुदाहरणवाक्यं । नदीनीतः ५ं । ( अपि १ं । ) आपः ५ं । आम् १ं । निः १ं ॥ ५८ ॥

गुणेति । गुणवान् ऋद्धियुक्तोऽपि जनः धर्म्मकर्म्मसु नियुक्तोऽपि हे पितः! मत्सरासङ्गात् अन्यशुभद्वेषी मत्सरः तेनासङ्गात् नरो व्यसनी भवति, व्यसनात् मृतिर्म्मरणं भवतीत्यर्थः ।

पक्षे । धर्म्मेत्यादिकं उदाहरणं । गुणवान् १ं । ऋत् १ं । धियुक्तः १ं । ( च १ं । ) नियुक्तः १ं ॥ ५९ ॥

## व्याकरणम् ।

नदीनीतोऽप्यापयाम् निः । नदीसंज्ञकात् नीशब्दादापोपि निः आम् स्यात् । सिन्नियां । " ङे राम्नद्याम्नीभ्यः " पां । " न्यापृदीभ्यो ङेराम् " सु ॥ ५८ ॥

गुणवान् ऋद्धियुक्तश्च नियुक्तः । धिसंयुक्तो निसंयुक्तश्च ऋत् गुणवान् स्यात् । पितः । " ऋतो ङि सर्व्वनामस्थानयोः " पां । " गुङिंध्योः " सु ॥ ५९ ॥

तस्मादेतेषु मत्सरेषु अनुरक्तो मा भूः। एते हि त्वां पातयितुमिच्छन्ति। (कर्णं प्रति) यत् त्वया पूर्व्वकाले प्रतिज्ञातं "भ्रातस्तुभ्यं प्रदास्यामि रणे जित्वा धनञ्जयमिति"; तस्य सार्थक्यञ्च घोषयात्रायामेव परीक्षितमासीत्; अतः वृथा त्वं गर्व्वं करोषि।

कर्णः। (सक्रोधं)

द्वेष्टोत्थातुर्महान् क्षीणादपकर्त्तुर्निवर्त्तते।
नेक्ष्योऽज्ञः क्षीण उन्मेषीपीनोडुराजविद्विषः॥ ६०॥

अतः समये एव मम विक्रमं द्रक्ष्यसि।

विदुरः (उच्चैर्विहस्य) एवं।

---

द्वेष्टेति। महान् जनः उत्थातुः उत्थानशीलस्य वृद्धिं प्राप्तस्य जनस्य द्वेष्टा वैरी स्यात् क्षीणात् दुर्ब्बलात् अपकर्त्तुर्वैरिणः सकाशात् निवर्त्तते। तथाहि क्षीणे रिपौ वैरितां न करोति। एतदेव दर्शयति; पीनोडुराजविद्विषः पीनः पूर्णो यः उडुराजश्चन्द्रः तस्य विद्विषो राहोः क्षीण उन्मेषी क्षीणः सन् उन्मेषी प्रकाशशीलः अज्ञश्चन्द्रः नेक्ष्यः न दर्शनयोग्योऽपि भवति इत्यन्वयः। तथाहि सम्पूर्णचन्द्रस्यैव विद्वेषिणो राहोः क्षीणचन्द्रो न दर्शनयोग्यो भवति। नेक्ष्यइति अर्थार्थे यः। उत्थातुरिति उत्पूर्व्वकस्याधातो वृद्धियुक्तोऽर्थः।

पक्षे। क्षीण इत्यन्तपूर्व्वभाग उदाहरणं। उन्मेति उत्कष्टश्रीयुक्तायाः सम्बोधनं। आजविद्विष इति छागारीणां सम्बोधनं। षी, पी, नः ६। डुः १॥६०॥

व्याकरणम्।

षीपीनोडुः। ऋकारात् परस्य षष्ठ्याः षस्याच्च नकारस्य डुः स्यात्। उत्थातुः, अपकर्त्तुः। "ऋत उत्" पा। "ऋतो ङो डुः" सं॥ ६०॥

लघौ ऋतो गुणो लब्धौ चेदाकाशं स लङ्घयेत् ।
नरः कृत्रिमभासोऽयं डयते पश्यतोर्द्धतः ॥ ६१ ॥

अथ शकुनिः । (सरोषं) अहो दासीपुत्रोऽसौ अक्षक्रीड़ां प्रतिबध्नाति, केनानीतोयमत्र?

विदुरस्तं प्रति । तव भगिनीपतिर्येनानीतः अहमपि तेनैवानीतोऽस्मि । श्रोतव्यं ।

तथानुयातुर्जामातुर्दुहितुश्चोपजीविनः ।
का मानिता यः पुष्णाति मानी जामातरौ स हि ॥ ६२ ॥

लघाविति । चेत् यदि लघौ क्षुद्रे जने लब्धौ दीर्घः ऋतः प्रदीप्तो गुणः स्यात् । अर्थात् यदि क्षुद्रो जनः अतिशयगुणयुक्तः स्यात् तदा स जनः आकाशं लङ्घयेत् । एतदेव दर्शयति । हे नरः ! पुरुषाः ! अयं कृत्रिमभासः डयते उड्डीन आस्ते ऊर्द्धतः ऊर्द्ध पश्यत ; कृत्रिमभासः घुड्डीति प्रसिद्धः ।

अस्य श्लोकस्य द्वितीयार्द्धे "गुणान्वितं कागदं हि दिवमाक्रामते नरः" इत्यपि पाठः क्वचित् पुस्तके दृश्यते ।

पक्षे । ल इति इन्द्रस्य सम्बोधनं, लब्धीत्यादिकमुदाहरणवाक्यं । घौ ७ । ऋतः ६ । गुणः १ ॥ ६१ ॥

तथेति । जामातुरनुयातुः अनुगतस्य अर्थात् पोष्यस्य तथा दुहितुः कन्याया उपजीविनो जनस्य का मानिता को मान इत्यर्थः । यः पुमान् जामातरौ दुहितृजामातरौ पुष्णाति स पुमान् मानीत्यर्थः । जामातरौ इत्येकशेषः ।

पक्षे । उपजीवीत्यादिकं उदाहरणं । (तथा १ ।) (नु १) यातुः ६ । दुहितुः ६ (च १ ।) ॥ ६२ ॥

व्याकरणम् ।

घौ ऋतो गुणः । ऋकारस्य गुणः स्यात् घौ परे । "वाक्सस्तृटणोः" सु ॥ ६१ ॥

तथानुयातुर्जामातुर्दुहितुश्च । यातृ-जामातृ-दुहितॄणां तथा घौ गुणः स्यात् । नु सम्बोधने । जामातरौ ॥ ६२ ॥

तृणो नो मन्यते सोऽपि स्वसुर्भर्त्तारमेव यः ।
उपजीवत्यभ्युपेत्य श्यालेति ख्यातिमुत्फुलन् ॥ ६३ ॥

अये गान्धार ! तवाच्चपातैनैषां कुलक्षयोऽनुमितो भवति । यथा—

शरीररथसव्येष्ठुरात्मनो मितिसाधनं ।
स्पन्दएव न यत् स्पन्दी विना सव्येष्ठरं रथः ॥ ६४ ॥

( पुनर्दुर्य्योधनं प्रति )

गान्धारीमातः ! यत्र साधूनां निन्दाऽसूया हिंसा द्वेषः प्रवर्त्तते न तत्र क्षणमपि ज्ञानिनो वसेयुः । अतोहं तीर्थानि सेवितुं गच्छामि । भवता च ममोपदेशः स्मर्त्तव्यः । यथा—

पिता माता तथा भ्राता विद्यात् परतरो न यः ।
शास्ति पुत्रं भ्रातरं वा सदा दुर्द्यूतदेविनं ॥ ६५ ॥

---

तृणेति । यो जनः स्वसुर्भर्त्तारं भगिन्या भर्त्तारं उपजीवति । किं कृत्वा उत्फुलन् प्रफुल्लो भवन् सन् श्यालेति ख्यातिमुपेत्य अङ्गीकृत्य, स जनः तृणादपि जनः लघुर्मन्यते ।

पक्षे । तृण इति तृणशब्दस्य अदान्तत्वात् णत्वं । भर्त्तेत्यादिकं उदाहरणं । तृणः ६ । नो १ । मन्यते ८ । सः १ । ( अपि १ ॥ ६३ ॥

शरीरेति । शरीररूपो यो रथस्तस्य सव्येष्ठुः सारथेः आत्मनः जीवात्मनः मितिसाधनं देहोयं जीववान् इत्याकारकानुमितेः साधनं स्पन्दएव शरीरव्यापार एव । यत् यस्मात् सारथिं विना रथः स्पन्दी न भवतीति शेषः ।

पक्षे । शरीररथ इति जीवात्मनः सम्बोधनं । आत्मेत्यादिकं उदाहरणं । सव्येष्ठुः ६ । च १ ॥ ६४ ॥

पितेति । पिता माता भ्राताच परतरः अतिशयपरः शत्रुरिति विद्यात् जानीयात् । यः पिता भ्राता वा सदा दुर्द्यूतदेविनं पुत्रं भ्रातरं वा न शास्ति ।

पक्षे । य इत्यादिकं उदाहरणं । पिता १ । माता १ । ( तथा १ । ) भ्राता १ । विद्यात् ८ । परतरः १ ः । न १ ॥ ६५ ॥

व्याकरणम् ।

तृणोनो मन्यते सोपि स्वसुः । तृणन्तस्य स गुणो न मन्यते स्वसृशब्दस्यापि । भर्त्तारं ॥ ६३ ॥

रसेऽलीनामिवादीर्घोऽनुरागः शस्यते नृणाम्।
विभवेष्वोपभोगान्न सरघाणामिव स्थिरः॥ ६६॥
स्त्रीणां मधुरदृग्भावो दौर्घनस्याय योगिनाम्।
अदान्तोऽत्र निमग्नश्चेत् पङ्के गौरिव सीदति॥ ६७॥
स्वल्पांशस्याप्यायुषो यत् सद्व्ययं स्वहिते रतः।
अकरिष्यस्तदाश्रोष्यो गां मे नेत्याह धर्म्मराट्॥ ६८॥

रसइति। नृणां पुरुषाणां आ उपभोगात् उपभोगपर्य्यन्तं विभवेषु सम्पत्सु अदीर्घोऽनुरागः शस्यते प्रशस्यते, रसे पुष्परसे अलीनां भ्रमराणामिव। यथा भ्रमराणां उपभोगपर्य्यन्तं मकरन्देऽदीर्घोऽनुरागः तथा इत्यर्थः। रसे सरघाणां मधुमक्षिकाणां स्थिरोऽचलोऽनुराग इव विभवेषु अनुरागो न शस्यते।

पक्षे। रसेऽली इति रसे काव्यरसे अलीव त्वमिति प्रशंसापरमिदं वाक्यं। आगः शस्यते इत्यादिकं उदाहरणं। नामि ७ं। वा १ं। दीर्घः १ं। नुः ६ं॥ ६६॥

स्त्रीणामिति। स्त्रीणां कामिनीनां मधुरदृक् स्निग्धा दृष्टिः भावो विलासादिश्च योगिनामपि दौर्घनस्याय मनोविकाराय भवतीति शेषः। चेत् यदि अदान्तोऽजितेन्द्रियः पुरुषः, अत्र कामिनीनां मधुरदृष्टौ विलासे च निमग्नः अत्याविष्टः स्यात् तदा सोऽदान्तः पङ्के गौरिव विषीदति।

पक्षे। स्त्रीणां मधुरदृगिति सुदृश्यस्य सम्बोधनं। मनस्यायेत्यादिकं उदाहरणवाक्यं। घौ ७ं। ओत् १ं। औः १ं॥ ६७॥

स्वल्पेति। यत् यदि स्वहिते रतः सन् आयुषः स्वल्पांशस्यापि सद्व्ययं अकरिष्यः त्वमिति शेषः तदा मे मम गां वाणीं न अश्रोष्यः, इति धर्म्मराट् यम आह वक्तीत्यर्थः। तथाहि पूर्व्वकाले ये सत्कर्म्म कुर्व्वन्ति ते यमस्य मम वाणीं न शृण्वन्तीति यम एवं वक्तीत्यर्थः।

पक्षे। स्वल्प इति क्षुद्रस्य सम्बोधनं। अपेरत्यादिकं उदाहरणं। अम् शसि ७ं। आ १ं॥ ६८॥

व्याकरणम्।

पिता माता तथा भ्राता विद्यात् परतरो न। पित्रादयः शब्दाः परतरौ न परे अन्ते ऋ येषां ते परतरः तादृशा न स्युः। भ्रातरं। "पिता माता ननान्दा ना मर्त्त्यैर्दृभ्रातृयातरः। जामाता दुहिता देवा न त्वष्टा ना दृगे दृश" सु॥ ६५॥

नामि वा दीर्घोनुः। नामि परे नृशब्दस्य दीर्घो वा स्यात् नृणां।

"नृच" पां। "नुर्व्वा नामि घेः" सु॥ ६६॥

सन्धिं करोष्यहो राभिररिभिर्दूरतश्चरैः।
सुभयोरातिचक्रात् किं स्वधामस्थात् बिभेषि न॥ ६९॥

इत्युपदिश्य विदुरस्तीर्थानि निषेवितुं निश्चक्राम।

राजा। (अन्त्यजं प्रति)

अहो श्वानवह! यद्यपि विप्रोऽयं सापराधो दण्डार्ह-स्तथाप्यस्य कायिको दण्डो न युज्यते। यतः।

---

सन्धिमिति। अहो आश्चर्यं सभयो भीतः सन् दूरतश्चरैः दूरे चरद्भिरपि अरिभिः शत्रुभिः सह राभिर्धनैर्द्वारभूतैः सन्धिं समतां करोषि, स्वधामस्थात् स्वराष्ट्रस्थितात् प्रकृतपक्षे स्वशरीरस्थितात् अरातिचक्रात् शत्रुसमूहात् कामक्रोधादिरूपात् किं कथं न बिभेषि।

पक्षे। दूरतश्चरैरित्यन्तपूर्व्वभागः उदाहरणं। अतिचक्रादिकं पूर्व्वसूत्रीयो-दाहरणं। रैः १। सभयोः ७:। रा १॥ ६९॥

व्याकरणम्।

घार्यादौः। घौ परे ओत् औः स्यात्। गौः। "ओरौ घौ" सु॥ ६७॥
अंशस्या। अमि शसि च परे आ स्यात्। गां। "आ अमशसोः" सु॥ ६८॥
रैसभयोरा। सभयोः परयोः रैशब्दो रा स्यात्। राभिः।
"रायो हलि" पा। "रैरासुभि" सु॥ ६९॥

इति अजन्त पुंलिङ्ग पादः।

अज्ञानध्वान्तलोप्याप्तः प्रौत्येकवचनन्तु यत् ।
उपादिशन्मां सा वाचा सदा जागर्त्ति मे हृदि ॥ १ ॥ यथा—
ब्रह्माशीव सदा शङ्करो हीनोऽपि ब्रह्मवर्चसैः ।
दिवा हीनोऽपि महसा दीपोऽप्यद्भुतशक्तिमान् ॥ २ ॥
विद्धि चेद्भवतीराप औरसो ब्राह्मणः सुतः ।
द्यूतवेश्ये सेवतेऽपि जात्या तदपि स द्विजः ॥ ३ ॥

अज्ञानेति। अज्ञानध्वान्तलोपी अज्ञानरूपान्धकारनाशकः आप्तः प्रत्ययितः पुरुषः अर्थात् गुरुः यदेकवचनं प्रौत्या मां उपादिशत् सा वाचा तद्वाक्यं सदा मे मम हृदि जागर्त्ति। (आप्तः प्रत्ययितस्त्रिष्वित्यमरः।)

पक्षे। अज्ञानध्वान्तेति अज्ञानपुरुषस्य सम्बोधनं। यदित्यादिकं उदाहरणं। लोपि १। आप्तः ५। प्रौत्येकवचनं १ ॥ १ ॥

ब्रह्मेति। ब्रह्मवर्चसैः साङ्गवेदाध्ययनजनिततेजोविशेषेण हीनोऽपि ब्रह्मा ब्राह्मणः आशीव सर्वस्य विपद्धन्ता इव सदा आशङ्करः। अर्थान्तरन्यासमाह। दिवा दिवसे महसा दीप्त्या विहीनोऽपि दीपः अद्भुतशक्तिमान् अद्भुतसामर्थ्यवान् भवतीति शेषः। अत्र दीपोऽपीत्यपिकारस्य विहीन इत्यत्रान्वयः। (ब्रह्मा विप्रः प्रजापतिरित्यमरः।)

पक्षे सूत्रस्य पूर्वापरभागः उदाहरणम्। ङसात् ५। ईपः ५। (अपि १) ॥ २ ॥

विद्धीति। यो ब्राह्मणः ब्राह्मणस्य औरसः सुतः स्वक्षेत्रे स्वबीजजातः पुत्रः चेत् यदि दुरात्मा दुष्टं मदिरां पिबतीति स तवा भवतीति द्यूतवेश्ये सेवतेऽपि स जात्या द्विजः, इत्येतत् विद्धि जानीहि इत्यन्वयः।

पक्षे। अस इत्यादिकं उदाहरणं। अयः क्षेपक इति तदर्थः। (विद्धि ८। (चेत् १।) (भवति ८।) ईः १। आपः ५। औः १ ॥ ३ ॥

व्याकरणम्।

लोप्याप्तः प्रौत्येकवचनं। आप्तः आवन्तात् प्रौत्यस्य प्रथमाप्रत्ययस्य एकवचनं लोपि स्यात्। सा। वाचा। "आबोङ्सात् सेर्लोपः" सु ॥ १ ॥

ङसादीपोऽपि। ब्रह्मा। आशी। शक्तिमान्।

विद्धि चेत् भवतीराप औः। आपः परः औः ईर्भवति चेतनावान् इति विद्धि। द्यूतवेश्ये। "औ आपः" पा। "यौरापः" कु ॥ ३ ॥

अत्र ब्रह्मराक्षसीशिवसम्वादं शृणु ।

ब्रह्मराक्षसी (शिवं प्रति)।

देवदेवतएष्टाधावोसि चापोमय ! प्रति ।
प्रवणां कृपया भक्तामविद्याविद्ययोः प्रभुः ॥ ४ ॥

अवाप्तोयं नितान्तन्तु शरणं नो बिभेति सन् ।
अपि दण्डभृतस्तस्मै नमोऽजाया हराय ते ॥ ५

शिवस्तां प्रति । सुभ्रु ! किमर्थयसि ।

सा (तं प्रति) ।

---

देवेति । हे देवदेवते ! हे आपोमय ! जलमूर्त्ते ! त्वं एष्टा इच्छावान् सन् प्रवणां प्रह्वां भक्तां प्रति कृपया धावोऽसि च धावनशीलोऽसि एव प्रत्यासन्नोऽसि एव इति यावत् । प्रवणां प्रति धावने जलमयत्वं हेतुः । अपां प्रवणभूमिगामित्वात् । (प्रवणः क्रमनिम्नोर्व्यां प्रह्वे इत्यमरः ।) आपस् शब्दोऽप्यस्ति आपोभिर्मार्ज्जनं कुर्य्यादिति सर्व्वमापोमयं जगदित्यादि प्रयोगात् । एः १ं । टा धौ ७ं । औसि ७ं । (च) आपः ६ं ॥ ४ ॥

अवाप्त इति । सन् साधुः यं त्वां नितान्तं एकान्तं शरणं अवाप्तः सन् दण्डभृतो यमादपि नो बिभेति तस्मै अजाया अविद्याया हराय नाशकाय ते तुभ्यं नमः ।

पक्षे । अवेति रक्षकस्य सम्बोधनं । तन्वित्यादिकं उदाहरणं । आप्तः ५ं । यम् १ं । निता ६ः ॥ ५ ॥

व्याकरणम् ।

एटावाबोसि चापः । आपः एः स्यात् टाधौ ओसि च परे । स्त्रत्वात् पुंस्त्वं । हे देवदेवते । कृपया, अविद्याविद्ययोः । "आङि चापः सम्बुद्धौ च" पां । "धि टौस्येः" मुं ॥ ४ ॥

आप्तो यम् निता । निता ने, नसि, नस, नि, इत्येषां स्थाने यम् स्यात् । अजायाः । "या डापः" पां । "ङितां यम्" मुं ॥ ५ ॥

सर्व्वस्यामप्यवस्थायां हृद: पद्मास्य! मागम: ।
सर्व्वनाम्न: स्वोपि नान्य एतस्या मेस्ति कश्चन ॥ ६ ॥

अपि च । मोक्षं शिवत्वं ब्रह्मत्वम्वा लभेयमिति या स्पृहा मे पुरासीत् एकदन्तमुखीये मां प्रति अम्बेत्याकारके श्रवणविषये सम्बोधनेऽसौ भवति लघुरम्बेति शब्दस्य अम्बिके इति शब्दस्य च बालप्रयुक्तस्य समं किमपि यन्नास्ति नारीणाम् ॥ ७ ॥

---

सर्व्वेति । हे पद्मास्य! सर्व्वस्यामपि अवस्थायां हृदो मनसोमागमः मागच्छ सर्व्वनाम्नः शिवस्य नाम्नः अन्योऽपि स्वो धनं एतस्या मम कश्चन नास्ति । (स्वोऽस्त्रियां धने इत्यमरः) ।

पक्षे । स्तूलस्य पूर्व्वापरभागौ उदाहरणं । पद्मा विस्तृतेत्यर्थः । स्यमागमः १ । सर्व्वनाम्नः ५ । स्वः १ । ( अपि १ ) ॥ ६ ॥

मोक्षमिति । मोक्षं शिवत्वं ब्रह्मत्वम्वा लभेयं प्राप्नुयां इत्याकारा या स्पृहा मे मम पुरासीत् इदानीं एकदन्तमुखीये एकदन्तो गणेशस्तन्मुखसम्भूते मां प्रति अम्बेत्याकारे सम्बोधने श्रवणविषये सति असौ मोक्षादिस्पृहा लघुर्भवति । अत्र हेतुमाह । यत् यस्मात् बालप्रयुक्तस्य अम्बेति शब्दस्य अम्बिकेति शब्दस्य च समं किमपि नारीणां नास्ति । अत्र एकदन्तशब्दः गणेशस्य शिशुत्वसूचकः ।

पक्षे । पूर्व्वापरभागौ उदाहरणं । पूर्व्वभागस्य कथञ्चिदूहादिना एकवाक्यता कार्य्या । श्रवणविषये ७ । सम्बोधने ७ । सौ ७ । भवति ८ । लघुः १ । अम्बेतिशब्दस्य ६ ॥ ७ ॥

व्याकरणम् ।

स्यमागमः सर्व्वनाम्नः स्वोपि । आबन्तात् सर्व्वनाम्नः परेषां नितां स्यमागमः स्यात् पूर्व्वस्य ह्रस्वोपि । सर्व्वस्याः एतस्याः । "सर्व्वनाम्नः स्याड्ह्रस्वश्च" पां । "स्वेः स्यम् स्वश्च" सु ॥ ६ ॥

श्रवणविषये सम्बोधने सौ भवति लघुरम्बेतिशब्दस्य । अम्बेत्यानुपूर्व्विकशब्दस्येत्यर्थः । अम्ब, अम्बिके ।

"अम्बार्थनद्यो ह्रस्वः" पां । "स्वभ्रदी ह्यजम्बार्थानां धौ स्वः" सु ॥ ७ ॥

जयाद्याः सुभ्रुवोऽपीश ! सम्बुद्धेरशीप्रयुक्तया ।
प्रीत्या सुभ्रु ! सखीत्येवं मन्यन्ते स्वकृतार्थताम् ॥ ८ ॥
मह्हेड् ! स्वतस्ते शान्तस्य भौपकृर्परभृतयः ।
किरीटिनोऽन्ये त्वां द्वास्था दिवानिट्सु दिदृक्षवः ॥ ९ ॥
देव ! मम जिज्ञास्यमस्ति तव कर्णः पातनीयः ।
सम्राट् विधेयः सक्रान्तराजोभ्राजो यजोपि च ।
धर्म्मप्राट् सर्व्वदा देवेट् नाम्नास्ते कुरुजाङ्गले ॥ १० ॥

---

जयेति । हे ईश ! प्रीत्या ईशोपयुक्तया ईशी ब्रह्माणी तया प्रयुक्तया उच्चारितया हे सुभ्रु ! हे सखि ! इत्येवं सम्बुद्धा सम्बोधनेन जयाप्रभृतयः सुभ्रुवः स्त्रियः स्वस्य आत्मनः कृतार्थतां मन्यन्ते । पक्षे । जया इति जययुक्तानां सम्बोधनं । ईशेत्यादिकं उदाहरणं । ग्राः ६ँ । सुभ्रुः ६ँ । ( अपि १ँ । ) ॥ ८ ॥

मह्हेड़िति । हे मह्हेड् महेश ! स्वतः स्वभावतः शान्तस्य ते तव कर्प्परभृतयः स्कपालादिकं भौपं भूषणं । (भौपमितिभूषाशब्दस्य स्वार्थे ष्यः त्रैलोक्यमितिवत् नपुंसकत्वं ।) अन्ये किरीटिनः अर्थादिन्द्रादयः दिवानिट्सु दिवारात्रिषु द्वास्थाः द्वारि स्थिताः सन्तः त्वां दिदृक्षवः सन्तीतिशेषः ।

पक्षे । सूत्रस्य पूर्व्वापरभागौ उदाहरणं । शान्तस्य ६ँ । भौ ७ँ । षङ् १ँ ॥९॥

सम्राड़िति । कुरुजाङ्गलदेशे देवेट् नाम्ना सम्राट् आस्ते । कीदृशः विधेयः विनयग्राह्यो सक्रान्तराजः सक्रान्तयते शान्तायेति सक्रान्तास्तेषां राजा । भ्राजो दीप्यमानः यजो यागकर्त्ता धर्म्मं पृच्छतीति धर्म्मप्राट् । (विधेयो विनयग्राह्योत्यमरः) ।

पक्षे । विधेयः १ँ । सः १ँ । क्रान्तराजः ६ँ । भ्राजः ६ँ । यजः ६ँ । ( अपि १ँ । ) ॥ १० ॥

व्याकरणम् ।

ग्राः सुभ्रुवोपि । ग्रा नदीसंज्ञकस्य सुभ्रूशब्दस्य च ह्रस्वः स्यात् धौ परे । सुभ्रु, सखि ॥ ८ ॥

शान्तस्य भौ षङ् । शान्तशब्दस्य भौ परे षङ् स्यात् । मह्हेड्, निट्सु ॥ ९ ॥

विधेयः स क्रान्तराजो भ्राजो यजोपि । क्रान्तादीनामपि स उक्तः षङ् विधेयः । सम्राट्, धर्म्मप्राट्, देवेट् । "व्रश्च भ्रस्ज सृज मृज यजराज भ्राजच्छशां षः" पां ॥ १० ॥

तत्र व्रजोऽप्यस्त्यसतां तस्यैकः पुरुषोमया।
यस्तः कण्ठपरिव्राट् सोऽदृङ्क्ष्याङ्गारवत् गले ॥ ११ ॥
सतु पापदण्ड एवं तमहं जानामि। यथा स एवं।
स्वधर्मस्य सृजो दृश्योऽस्रजो भ्रस्जश्च नास्तिकः।
पापात्मा तमहं शोद्धुं न शक्ता विश्वसृट्! कथं ॥ १२ ॥
दङ्क्ष्यदो रोड् देवेश! सहसान्ते परेड् तुषः।
व्यसनं स्वमनालोच्याभीष्टं यच्छसि चाशुतोट्। १३।

---

तत्रेति। तत्र देशे असतां पापखण्डानां व्रजः समूहोऽप्यस्ति तस्य असत्समूहस्य मध्ये एकः पुरुषः मया यस्तः कवलीकृतः स कण्ठपरिव्राट् कण्ठगतः सन् गले गलावच्छेदे मां ददाह। तत्र ७'। व्रजः ६'। (अपि १'।) अस्ति ८'॥ ११।

स्वधर्मेति। स्वधर्मस्य सृजः विसर्जनशीलः दृश्यः उच्छेत्ता अस्रजः आत्मानं नमाष्टि जलादिना न शोधयतीति स तथा। अतएव भ्रस्जः भ्रष्टः पतित इति यावत्। अन्यत् सुगमं। (सृजोऽस्रज इति इगुपधात् कप्रत्यये सिद्धं)।

पक्षे। स्वधर्मस्येति धर्मयुक्तस्य यः स्वः आत्मीयस्तस्य कर्म्मोधनं। सृजः ६'। दृश्यः ६'। स्रजः ६'। भ्रस्जः ६'। (च)॥ १२॥

दङ्क्ष्येति। हे परेड् परमेश्वर! अन्ते प्रलयसमये रोट् रोषान्वितः सन् अदो विश्वं सहसा दङ्क्ष्यसि तुष्टः सन् स्वं आत्मीयं व्यसनं विपदं अनालोच्यापि अभीष्टं यच्छसि। (रोड़िति रुषधातोर्क्विच् प्रत्यये सिद्धं)।

पक्षे। सूत्रस्य पूर्व्वापरभागौ उदाहरणं। हसान्ते ७'। परे ७'। ड् १'॥ (तु १'।) षः ६'॥ १३॥

व्याकरणम्।

तत्र व्रजोप्यस्ति। तत्र राजादिगणमध्ये व्रजोपि षड् अस्ति। परिव्राट्॥ ११॥

सृजो दृशो मृजो भ्रस्जश्च। एषामपि षङ् स्यात् भौ परे। विश्वसृट्। "भ्रस्ज्राज भ्राज यजव्रज सृज मृज व्रश भ्रस्जां षङ् भौ" सू॥ १२॥

हसान्ते परेड् तुषः। षस्य तु डः स्यात् हसे विरामे च परे। रौट्, तोट्। "षोड़ः फे" सू॥ १३॥

देवाद्यायम् नितान्तं मे संशयो जायते हृदि।
तद्बीजं संशयच्छित्यै दास्यै मेऽमतये वद॥ १४॥

शिवस्तां प्रति। क्षमि! न जानासि, वह्निवत् यस्त्वया ग्रासीकृतस्तं ब्राह्मणसुतं जानीहि। तादृक् तेजो नेतरेषां सम्भवति।

राक्षसी। विप्रद्वेष्टेरयावाप्तवैचित्तः सर्व्वदैव यः।
द्वे सन्ध्ये अपि नोपास्ते तं ब्रूमो ब्राह्मणः कथं॥ १५॥

प्रियचतसा चतुर स्त्रियामेव विभक्तौ।
प्रत्यन्ते वसति च तिसृभिर्जातिस्त्यक्तः स किं ब्राह्मणः॥ १६॥

देवेति। हे देव! अद्य मे मम हृदि नितान्तं अयं सन्देहो जायते तद्बीजं संशयकारणं संशयच्छित्यै संशयनाशाय अमतये बुद्धिरहितायै दास्यै मे मह्यं वद।

पक्षे। देव इति सम्बोधनं तमित्यादिकं उदाहरणं। द्याः ५। अम् १। नितां ६ः॥ १४॥

विप्रेति। यः पुरुषः सर्व्वदैव इरया मदिरया अवाप्तवैचित्त्यः प्राप्तमोहः विप्राणां द्वेष्टा अन्यत् सुगमं। पक्षे। विप्रेति सम्बोधनं। आप्तवैचित्तेत्यादिकं उदाहरणं। द्वेः ६। टेः ६। अः १। आप १॥ १५॥

प्रियेति। प्रिया उपभोग्यास्तत्स्रो यस्य स प्रियचतसा स्त्रियामेव स्त्रीसमीप एव चतुरः पटुः प्रत्यन्ते म्लेच्छदेशे विभक्तौ विभागे वसत्यपि। अन्यत् सुगमं।

पक्षे। प्रियइति सम्बोधनं। प्रत्यन्तेत्यादिकं उदाहरणं। चतसा १। चतुरः ६। स्त्रियां ७। (एव १) विभक्तौ ७॥ १६॥

व्याकरणम्।

द्या यम् नितां। नदीसंज्ञकात् परेषां नितां स्थाने अम् स्यात्। छित्यै, अमतये। "आण् नद्याः" पां॥ "द्याङिताम्म्" मु॥ १४॥

द्वेष्टेर आप। द्विषव्दस्य टेरकारः स्यात् पयादाप। द्वे।
"टेरत्वे सत्याप" मु॥ १५॥

चतसा चतुरः स्त्रियामेव विभक्तौ। चतुरः शब्दस्य चतसृः स्यात् स्त्रीलीङ्गे एव विभक्तिमात्रे परे। चतसृभिः॥ १६॥

शिवः । द्योतयति तिस्रो जगती र्निजभासा
सवितृरूपा या त्रिपदा ।
प्रविशति सा त्रिः कर्णे यस्य सोपि
नमस्यस्तिसृणां जातीनां ॥ १७ ॥
गुरुवन्मन्यताम्चत् सोप्यतिनिन्द्रपथेन हि ।
जातीनां तिसृणां पूज्यो विप्रो मन्त्रेण संस्कृतः ॥ १८ ॥

इति श्रुत्वा राक्षसी (आत्मगतं) । अहो ।
तिसृणाञ्च चतसृणां जातीनामन्तरा भुवाम् ।
तिस्रश्चतस्रो युवतीः सेवतेऽयं दिवानिशम् ॥ १९ ॥

द्योतेति । सवितृरूपा सूर्य्यस्वरूपा या त्रिपदा गायत्री निजभासा तिस्रो-जगतीर्द्योतयति सा त्रिपदा यस्य कर्णे त्रिः त्रिवारं प्रविशति सोपि तिसृणां जातीनां नमस्यः ।

पक्षे । सूत्रस्य पूर्व्वापरभागो उदाहरणं प्रविशेति प्रविष्टस्य सम्बोधनं । तिसा १ । त्रिः १ ॥ १७ ॥

गुरुवदिति । मन्त्रेण गायत्रीमन्त्रेण संस्कृतो विप्रः तिसृणां जातीनां पूज्यः अतिमन्दपथेन ऋदपि गतोऽपि स गुरुवत् मन्यतां । (ऋदिति ऋगतावित्यस्य क्विपि सिद्धं) ।

पक्षे । अतीत्यादिकं उदाहरणं । गुरुवत् १ । मन्यतां ८ । ऋत् १ । सः १ ॥ १८ ॥

तिसृणामिति । अन्तराभुवां सङ्कीर्णानां तिसृणां चतसृणाञ्च जातीनां सङ्कीर्णजातीनामित्यर्थः । शेषः सुगमः ॥ १९ ॥

व्याकरणम् ।

तिसा त्रिः । त्रिशब्दः तिसृः स्यात् स्त्रीलिङ्गे विभक्तौ । तिस्रः । "त्रिचतुरा स्त्रियां तिसृचतसृ" पां । "स्त्रियां त्रिचतुरो स्तिसृचतसृ" मु ॥ १७ ॥

गुरुवन्मन्यतां ऋत्सः । तिसृ चतसृ आदेशसम्बन्धी ऋकारः दीर्घवन्मन्यतां । तिसृणां । "ऋवत् नौ" मु ॥ १८ ॥

चतसृणां, तिस्रः चतस्रः ॥ १९ ॥

इति चिन्तयति स्म ।

शृणोत्वथ नतभ्रूः स्त्री धातुः सेव्याङ्घ्रिपङ्कजं ।
नत्वा सागात् सन्ति यत्र सुभ्रुवोऽन्याः स्त्रियोऽत्रपाः ॥ २० ॥
येन सर्व्वधने स्वांशः परस्त्रीवात्मगेहिनी ।
मन्यते स्वस्त्रियं हित्वा परस्त्रीः सेवते च यः ॥ २१ ॥
अहो ब्राह्मणमाहात्म्यं निन्द्यो विप्रोपि वह्निवत् ।
इति सा धीमती स्त्रीणां स्त्रियां मध्ये न्यवेदयत् ॥ २२ ॥

तस्मान्ममेयं बुद्धिरुदेति । अस्य सापराधस्य विप्रस्य स्वस्थानान्निर्व्वासणं दण्डो युज्यते इति ।

इत्युक्त्वा निष्क्रान्ताः सर्व्वे ।

इति महामहोपाध्याय श्रीकृष्णानन्दवाचस्पतिकृतौ अन्तर्व्याकरणनाट्यपरिशिष्टनामनाटके द्वितीयरात्रिविनोदः ।

---

शृणोत्विति । अथ अनन्तरं शृणोतु नतभ्रूः स्त्री राक्षसी धातुर्विधातुः सेव्यं अङ्घ्रिपङ्कजं यस्य तं शिवं नत्वा यत्र अन्या अत्रपाः राक्षस्यः सुभ्रुवोऽन्या स्त्रियश्च सन्ति तत्र अगात् जगाम । पक्षे । शृणोत्वथ नत इति शिष्याणामवधानार्थं । सेव्येत्यादिकं उदाहरणम् । भ्रूः १ । स्त्री १ ; । धातुः १ ॥ २० ॥

येनेति । येन पुरुषेण सर्व्वधने अर्थात् परधने स्वांशः स्वकीयांशः मन्यते परस्त्री आत्मगेहिनीव मन्यते यश्च स्वस्त्रियं हित्वा परस्त्रीः सेवते । पक्षे । अम् शस् पर स्त्री १ । वा १ ॥ २१ ॥

अहोइति । इति इत्येवमालोच्य सा राक्षसी स्त्रीणां मध्ये धीमती बुद्धिमती स्त्रियां मध्ये पूर्व्वोक्तं सर्व्वं न्यवेदयत् ॥ २२ ॥

व्याकरणम् ।

भ्रूः स्त्री धातुः । भ्रूशब्दः स्त्रीशब्दश्च धातुसंज्ञः स्यात् । सुभ्रुवः स्त्रियः । "स्त्रियाः" पां । "स्त्री भ्रुवुः" सु ॥२०॥

अम् शस् पर स्त्री-वा । अम् शस् च परे यस्य तादृश स्त्रीशब्दो धातुसंज्ञो वा स्यात् । स्त्रियं स्त्रीः । "वाऽम् शसोः" पां । "स्त्रीवाम्शसोः" सु ॥ २१ ॥

स्त्रीणां स्त्रियां ॥ २२ ॥

**इत्यजन्तस्त्रीलिङ्गसंग्रहः ।**

सोऽव्याद्दुग्धो वो मातृकुक्षौ पेयभक्तैरवर्द्धयत् ।
उत्पन्नस्तनाश्लेषकाले पूर्व्वं स्तन्यमसूचयत् ॥ १ ॥

नान्द्यन्ते सूत्रधारः । नटीं प्रति ।

प्रिये ! समन्तात् पश्य अस्य गौडभूमिमण्डलेश्वरस्य नवद्वीप-वासिनः कुमारस्य उद्वाहमहोत्सवे व्यासतुल्या निमन्त्रिताः पण्डिता आगता एते उपविशन्ति ।

(अथ पाश्चात्याः पण्डिताः परिचाययन्ति ।)

तर्कोऽज्ञानतमोलुप्तः स्वालोकेन प्रकाशितः ।
येन मिश्रेण मित्रेण वयं तस्यानुयायिनः ॥ २ ॥

अथ दीधितिकारानुयायिनो गदाधरमतोपासकाः प्राच्याः परस्परोऽसहनाः (सोपहासं साक्षेपं तान् प्रति) । अहो मैथिलाः ! भवन्तः सन्ति ।

अहो मिश्रानुयायिनो वयमिदानीं कलिकाताभिधेयनाम्नान् कुतूहलितसर्वलोकैकलोचनहर्षानिशा भवन्तः । मिथ्या दूरतः कालेन पाद्य-मैत्रेय उच्यते तद्भवतु किन्तु न वयं भवद्विधानामुपहासयोग्याः ।

---

सोऽव्यादिति । स ईश्वरः वो युष्मान् अव्यात् पायात् यः मातृकुक्षौ पेयभक्तैः पेयं जलं भक्तं अन्नं तैः अवर्द्धयत् । उत्पन्नस्तनाश्लेषकाले वो युष्माकमुपकाराय पूर्व्वं जननात् पूर्व्वकाले स्तन्यं दुग्धं असूचयत् ॥ १ ॥

तर्क इति । येन मिश्रेण पक्षधरमिश्रेण मित्रेण सूर्य्येण अज्ञानतमोलुप्तस्तर्क-शास्त्रं स्वालोकेन स्वकीय आलोकनामकग्रन्थेन प्रकाशितः तस्य मिश्रस्य अनुयायिनो मतानुवर्त्तिनो वयं [illegible] सूर्य्योऽपि स्वकीयालोकेन अन्धकारलुप्तं वस्तु प्रका-शयतीति मिश्रस्य सूर्य्यसादृश्यं व्यक्तं ॥ २ ॥

दर्शनश्रुत्यलङ्कारवन्ति सन्ति सुखानि नः ।
पुराणस्मृतयोऽप्येषां दीप्ता विषयवेदिनां ॥ ३ ॥

तदिदं श्रोतव्यं । वयं शक्तुभोजिन इतिसत्यं तेन किं ।
तेषां फलं किं पखण्डातो मत्स्यं येऽश्नन्ति वङ्गजाः ।
मत्स्यादः सर्व्वमांसादइतुयक्तं येन गण्यते ॥ ४ ॥

प्राच्यास्तान् प्रति ।
न तथाधिर्जायतेतो मत्स्याशनात् पारलौकिकः ।
स्वाचारसन्ध्यार्च्चात्यागात् यथा मित्राग्रजन्मनाम् ॥ ५ ॥

दर्शनेति । विषयवेदिनां विषयो ज्ञेयवस्तु तद्वेदिनां नोऽस्माकं सुखानि सन्ति । तथाहि विषयज्ञानमस्ति वक्तुमपि शक्यते इतिभावः । कीदृशानि सुखानि दर्शनश्रुत्यलङ्कारवन्ति दर्शनं चक्षुः श्रुतिः कर्णस्तद्रूपालङ्कारयुक्तानि । तथाहि द्रष्टुं श्रोतुञ्च शक्यते न वयं अन्धाः बधिरा वेतिभावः । एषां अर्थादस्माकं पुराणस्मृतयोपि पुरातनस्मरणमपि दीप्ता एव अर्थात् स्मृतिभ्रंशोऽपि नास्माकं जात इतिभावः ।

प्रकृत पक्षे । अस्माकं सुखानि दर्शनश्रुत्यलङ्कारवन्ति दर्शनशास्त्र-स्मृतिशास्त्र-अलङ्कारशास्त्रयुक्तानि । एभाश्चास्माकं पुराणस्मृतयोऽपि अष्टादशपुराणस्मृति-शास्त्राण्यपि दीप्तानीत्यर्थः । तिलकः शाक्यातिपाल्योधेस्तविहारमित्यर्थः ॥ ३ ॥

तेषामिति । ये वङ्गजा मत्स्यं अश्नन्ति तेषां पखण्डातः निन्द्यातः किं फलं । शेषः सुगमः । पक्षे । सूत्रस्य पूर्व्वापरभागौ उदाहरणं । पखण्डातः ५ं । ( सि अम् ) स्यम् १ं । मत् १ं ॥ ४ ॥

न तथेति । अतः अस्मिन् लोके मत्स्याशनात् मत्स्याशनात् पारलौकिकः परलोकसम्बन्धः तथा आधिः तादृशी मानसी व्यथा न जायते हे मित्र ! मित्र-कल्पन्तोय ! अग्रजन्मानां ब्राह्मणानां स्वाचारसन्ध्यार्च्चात्यागात् यथा पारलौकिक आधिर्भवतीत्यन्वयः । पक्षे । मत्स्येत्यादिकं उदाहरणं । न १ं । ( तथा १ं । ) धिः १ं । जायते ८ं । अतः ५ं ॥ ५ ॥

व्याकरणम् ।

पखण्डातो मत्स्यम् । पखण्डलिङ्गाकारान्तात् परः सि अम् च सत् भवति । तकारो वर्णस्वरूपबोधकः । फलम् । इत्युक्तम् । "अतोऽम्" पां । "क्लीबात् स्वमोऽधेश्चौऽतः" सु ॥ ४ ॥

न तथा धिर्जायतेऽतः । अदन्तनपुंसकात् विकल्पा सो न स्यात् । मित्र ! ॥५॥

पाश्चात्याः ।

कण्ठगा भवतीरावः पण्डाडीजात्तदाङ्कुरः ।
अस्तु चेत् फलतः श्रौतस्मार्त्ते वीरस्य कर्म्मिणी ॥ ६ ॥

प्रायेण वङ्गजा वीराः शेषास्तत्सङ्गदूषिताः ।
आगमालोकिनो वेदे पातयन्त्यपि नाक्षिणी ॥ ७ ॥

प्राच्यास्तान् प्रति ।

अहो मैत्रेयाः ! बहुवचनस्य शिरसः शूलानि भवन्तीति
वागजालेनालं पाश्चात्या यूयं परिच्छिताः स्थ ॥ ८ ॥

कण्ठेति । पौरुषार्थी इरा वाणी कण्ठगा भवति पश्चातीत्यर्थः । वक्तुं शक्नोतीतिभावः । चेत् यदि वीरस्य वीराचारस्य अर्थात् तन्त्रानुयायिनः श्रौतस्मार्त्ते श्रुत्युक्तस्मृत्युक्तकर्म्मिणी फलतः फलजननी समर्थौ भवतः तदा पण्डात् फलजननी असमर्थात् बीजात् अङ्कुरोऽस्तु भाव इत्यन्वयः । कण्ठगा इरा मदिरा तुम्बान-मिति श्लिष्टार्थो द्रष्टव्यः । (इरा भूवाक् सुराप्सु, स्यादित्यमरः) ।

पक्षे । कण्ठगा इति सम्बोधनं । भवति ८ं । ई: १ं । आवः ६ं । पण्डात् ५ं ॥ ६ ॥

प्रायेणेति । वङ्गजाः प्रायेण वीराः वीराचाराः शेषास्तत्संसर्गदुष्टाः । आगम-शास्त्रदर्शिनः वेदे अक्षिणी चक्षुषी पातयन्ति इत्यपि न ।

पक्षे । पूर्व्वस्लोकस्य उदाहरण मात्रं ॥ ७ ॥

बहुवचनेति । बहुवचनस्य बहूनि वचनानि यस्य तादृशस्य जनस्य अर्थात् वाचालस्य शिरसः शूलानि वेदना भवन्ति इति हेतोः वाग्जालेन अलं वृथा ।

पक्षे । बहुवचनस्य ६ं । शिः १ं । भवः ६ं ॥ ८ ॥

व्याकरणम् ।

भवतीरावः पण्डात् । क्लीबात् परस्य ( आवः ) औकारस्य ईर्भवति । श्रौत-स्मार्त्ते, कर्म्मिणी । “नपुंसकाच्च” पां । “क्लीबाद्वौ” सुं ॥ ६ ॥

अक्षिणी ॥ ७ ॥

अथ नटी गायति।

यातु परपुरुषे प्रियताऽप्रकाशिनी
सा तु सखि! रहसि प्रियमननावसायिनी।
स्पृहयतो न विषयीकरणेऽर्हतोऽक्षिणी
मिलनमपि यदि भवति तन्नसति धामनि ॥ ९ ॥

सूत्र: (नट्या अनाहतसुरोद्दशा तां प्रति)।

मेघ आकाशमत्येति मूढे जातेऽस्य सम्बरे।
एष्यन्ति सभ्या वैचित्र्यं सम्बराहितचापलाः ॥ १० ॥

यात्विति। परपुरुषे अप्रकाशिनी या प्रियता प्रेम हे सखि! सा तु प्रियतः रहसि निर्जने प्रियस्य नायकस्य मननावसायिनी चिन्तामात्रेण पर्यवसन्ना। अक्षिणी स्पृहयतः अर्थात् द्रष्टुं इच्छां कुरुतः विषयीकरणे प्रत्यक्षीकरणे नार्हतः। यदि कदाचित् तेन प्रियेण मिलनं स्यात् सति धामनि मानुषदेहे न स्यात्।

प्रकृतपक्षे। परपुरुषः परमात्मा अप्रकाशिनी प्रियता भक्तिः योगधारणारूपा यदि सम्भवत्यात् तेन परमात्मना मेलनं स्यात् धामनि शरीरे सति न स्यात्। अन्यत् सुगमं। (गृहदेहत्विट्प्रभावा धामानीत्यमरः) ॥ ९ ॥

मेघ इति। मेघ आकाशं अत्येति अतिक्रामति पततीत्यर्थः। हे मूढे! अस्य मेघस्य सम्बरे जले जाते सति सभ्याः सम्बरेण जलेन आहितं जनितं चापलं चापल्यं येषां ते तथा सन्तः वैचित्र्यं एष्यन्ति प्राप्स्यन्ति। प्रकृतार्थस्तु। मेघः मेघ-पर्य्यायक पयोधरशब्दवाच्यः स्तन इत्यर्थः। आकाशं आकाशपर्य्यायकाम्बरशब्द-वाच्यं वस्त्रमित्यर्थः। अत्येति अतिक्रामति। तव पयोधरः वस्त्रमतिक्रान्त इत्यर्थः। नैयायी लक्षणेयं आलङ्कारिकप्रसिद्धा। हे मूढे! अस्य पयोधरस्य सम्बरे सम्वरणे-ऽजाते सति सभ्याः सम्बराहितेन कन्दर्पेण चापलाः, सन्तः वैचित्र्यं मोहं प्राप्स्यन्तीत्यर्थः ॥ १० ॥

व्याकरणम्।

बहुवचनस्य शिरसः। बहुवचनस्य असः अर्थात् जस्शसोः शिः स्यात्। मूलानि। "जस्शसोः शिः" पा। "जस्शसोः शिः" सं ॥ ९ ॥

एतत् श्रुत्वा नटी ससम्भ्रममुर आच्छादयति। नैयायिका अङ्गुमुखा आकाशमालोकयन्ति।

कश्चिदालङ्कारिकः (स्थूलं प्रति)। अहो नट! तवाभिप्रेतमर्थं त्वया प्रयुक्तं मूढ़े इति पदं व्यञ्जयति यतस्तत् पदं यथा श्रुतार्थे व्यर्थं। नटि! त्वमपि धन्यासि इति तस्यै स्वोत्तरीयमर्पयति।

अथ पाश्चात्या (बाह्व उत्तोल्य)। अहो महाशय! ज्ञातं आलङ्कारिको भवानिति।

अथ अलङ्कारानभिज्ञाः परस्परंमुखमालोकयन्ति।

पुनः पाश्चात्याः। महाशयाः! मेघ आलोकितो नवा? (इत्युक्त्वे विहस्य) अहह! कविभारती जयति।

चातुर्यं कविभारत्या विद्युः किं शुष्कतार्किकाः।
नेतरान् पश्यति दृशा ऋज्वा वक्रदृशा कवीन्॥ ११॥
वक्त्येकं हृदयेऽन्यत्तदङ्गभङ्ग्या व्यनक्ति सा।
तद्भङ्गीं ये न जानन्ति विद्युस्ते किं तदाशयं॥ १२॥

प्राच्याः (सक्रोधं)।

अहो व्यनक्तीति यदुक्तं तत्र व्यञ्जनैव न मन्यतेऽस्माभिः। नास्तिकैरीश्वरो मन्यते इति किं प्रमाणवद्भिः श्रद्धावद्भिः सद्भिः

चातुर्य्येति। कविभारत्याः कवितायाश्चातुरीं केवलं तर्कशास्त्रविदः किं कथं विद्युः जानीयुः। कविभारती वक्रदृशा वक्रदृष्ट्या कवीन् पश्यति ऋज्व्या अवक्रया दृष्ट्या इतरान् कविभिन्नान् पश्यतीत्यन्वयः॥ ११॥

वक्तीति। एकं एकमर्थं वक्ति शब्दशक्त्या बोधयति हृदये अन्यत् तात्पर्य्यविषयीभूतं वस्तु धत्ते इति शेषः। तत् तात्पर्य्यविषयीभूतं वस्तु अङ्गभङ्ग्या पदविन्यासभङ्गीविशेषेण व्यनक्ति व्यञ्जनया बोधयति। शेषः सुगमः॥ १२॥

स नोपायते ? व्यञ्जनावृत्तिं ये मन्यन्ते अस्य सुधीराज्ञस्य सभायामस्माकानां सम्मुखे ते विचारं कुर्वन्तु।

एतत् श्रुत्वा वैयाकरणेषु हसत्सु तार्किकेषु ग्लानिमुपगतेषु तार्किकसपक्षो वैशेषिकः। अहो वैयाकरणा अपि तार्किकान् उपहसन्ति। तत्त्वविदामपि भ्रमो जायते।

दृग्दूषणानुबन्धो नुः शौरउस्रे जलभ्रमः।
यथा तथापभ्रंशेपि दोषा वीजानि मानसाः॥ १३॥

वेदान्ती तं प्रति। (सस्मितं)।

सत्यं दोषो भ्रमे हेतुः सत्वविद्येति कथ्यते।
यान्यपभ्रंशितान्यस्य तत्राविद्यैव कारणं॥ १४॥

---

दृगिति। नुः पुरुषस्य शौरे सूर्य्यसम्बन्धीये उस्रे किरणे यथा दृग्दूषणानुबन्धः दृशः चक्षुषि दूषयतीति दृक्दूषणः पित्तादिरूपो दोषविशेषः तदनुबन्धः तत्प्रयुक्तौ जलभ्रमो जायते तथा अपभ्रंशेपि च्युतसंस्कृतौ अपि मानसा दोषा वीजानि कारणानि।

पक्षे। दृगदूषद्इति ज्ञानदूषकस्य सम्बोधनं। रे सम्बोधने। णानुबन्धः १ं। नुः १ं। शौ ७ं॥ १३॥

सत्यमिति। भ्रमे भ्रमं प्रति दोषो हेतुः इतिसत्यं सतु दोषः अविद्येति कथ्यते। वेदान्तमते भ्रमस्य अविद्याजन्यत्वात्। अस्य तार्किकस्य यानि अपभ्रंशितानि च्युतसंस्कृतानि भ्रमात् जातानि तत्र अविद्यैव कारणं। अस्य विद्या नास्तीति-भावः॥ १४॥

## व्याकरणम्।

णानुबन्धो नुः शौ। क्लीवस्य शौ परे णकारनुबन्धो नुः स्यात् अर्थात् नुण् स्यात्। रे सम्बोधने। वीजानि, अपभ्रंशितानि। "शि सर्व्वनाम स्थानं" धा॥ १३॥ १४॥

कश्चिच्छाब्दिकस्तं प्रति । (सस्मितं) ।

अहो विद्वन्! नैवं। अस्य सुधीरास्यस्येति यत् वाक्यमनेन प्रयुक्तं तस्य व्युत्पत्तिभ्रमादेव भवन्त एवमुपहसन्ति । हे सुधीराः! अस्य आस्य संमुखे इति तस्यार्थः ।

आलङ्कारिकः । अहो तावतापि अप्रयुक्तत्वदोषो दुरुद्धरः करन्त्विति कृञकृतावित्यस्य धातोः प्रयोगस्य निग्रहस्थलत्वात् । अथ नैयायिकः (सक्रोधं) ।

यमस्य सम्मुखे नैवं शुभहीनो बिभेति ना ।

यथा चत्वारि मानानि विदुषोऽग्रेऽस्य शाब्दिकः ॥ १५ ॥

वेदान्ती । एवमेवेति । (सस्मितं शाब्दिकमालोकयति) । अथ नैयायिकः ।

वेदान्तिनं प्रति । आः पाप! दुरात्मन्! त्वं प्रत्यक्षपरिकल्पितस्यापि सिद्धपदार्थस्यापलपसीति नास्तिकस्त्वं सत्सभायोग्यो नासि । वेदान्ती ।

यमेति। शुभहीनः पुण्यहीनो ना पुरुषः यमस्य संमुखे एवं न बिभेति ? यथा चत्वारि मानानि प्रत्यक्षोपमानानुमानशब्दरूपाणि चतुष्टयप्रमाणानि विदुषो जानतस्तार्किकस्य सम्मुखे शाब्दिको बिभेति इत्यन्वयः ।

पक्षे । शुभेत्यादिकं उदाहरणं । यमस्य ६ । सम्मुखे ७ । न १ । एवं १ ॥१५॥

व्याकरणम् ।

यमस्य संमुखे नैवं । यमस्यादौ नुण् नस्मात् । चत्वारि । "नुणयमादौ भसन्तरस्यादौ तु वा" सुं ॥ १५ ॥

स्याद्दीर्घतापो महतोऽघावधौ निग्रहे नहि ।

महन् ! महान्ति दुःखानि निर्व्वीजेऽसीमनिग्रहे ॥ १६ ॥

तद्भवतु । वयं पापा नास्तिका वेदान्तोऽपि न शास्त्रं तदप्यस्तु त्वामहमेवमुपदिशामि ।

अपथ्याङ्गिरिकी त्याज्या संसारेऽस्मिन् चिरज्वरे ।

नौषधं साहि तच्छान्त्यै यथैवापः कफज्वरे ॥ १७ ॥

तार्किकः । आः पाप ! अध्यात्मशास्त्रेषु सारमाङ्गिरिकीं दूषयसि किं सा मोक्षाय नोपयुज्यते । वेदान्ती ( सस्मितं ) । ब्राह्मण एव तद्वेत्तीति । तद्भवतु ।

---

स्यादिति । अघावधौ अघं अपराधः अवधिः सीमा यस्य सतथा (अपराधेपि किं कुर्व्वन्तीति कोपः) । तादृशे महतो निग्रहे महाजनकृतनिग्रहे नहि दीर्घतापः नातिदुःखं स्यात् । तथाहि अपराधपर्य्यन्तमहाजनकृतनिग्रहो न दुःखायेत्यर्थः । हे महन् ! निर्व्वीजे निष्कारणे असीमनिग्रहे महान्ति दुःखानि भवन्तीति शेषः ।

पक्षे । निग्रहेत्यादिकं उदाहरणं । स्यात् ८ । दीर्घता १ । अपः ६ । महतः ६ । धौ ७ । अघो ७ ॥ १६ ॥

अपेति । अस्मिन् संसारे अदृष्टकृतशरीरपरिग्रहे चिरजातमन्ततज्वरस्वरूपे अपथ्यभूता या आङ्गिरिकी तर्कविद्या सा त्याज्या । हि यस्मात् सा तर्कविद्या तच्छान्त्यै तत् चिरज्वरशान्त्यै नौषधं । यथा कफज्वरे आपः ॥ १७ ॥

व्याकरणम् ।

स्याद्दीर्घतापो महतो घावधौ । अपो महतश्च अकारस्य दीर्घता स्यात् अघौ धौ परे । महन् । महान्ति । "नसन्महतोऽघावधौ धौ" सू ॥ १६ ॥

आपः ॥ १८ ॥

नोन्वग्र्य सोऽपि भवति साधोः सेव्यः सदागमः ।
यस्माद्धनानि सिध्यन्ति शर्म्माणि सुयशांसि च ॥ १८ ॥

अथ राजा । अहो दीपज्ञाः ! अलमुपहासेन । दीधितिकारानुयायिना तार्किकेण सह विचारयन्तु तेनात्मनोऽपि दोषा उद्बोधिता भविष्यन्ति । यतः ।

स्यात् समस्तोऽन्येभ्य एव स्वदोषो ज्ञानगोचरः ।
न स्वतोऽक्ष्णोर्यथादर्शादन्यन्नात्र प्रमापकम् ॥ १९ ॥

नोन्विति । नु भोः अग्र्य ! अग्रपूज्य ! सोऽपि सदागमः सत्शास्त्रं तर्करूपः साधोः सेव्यः नो भवति अपितु सेव्य एव भवति । सेव्यत्वे हेतुमाह । यस्मात् शास्त्रात् धनानि शर्म्माणि सुखानि सुयशांसि च सिध्यन्ति । तथाहि आक्रिञ्चिकी मोक्षसाधनं मा वा भवतु धनादीनि सिध्यन्तीति सा सेवनीयेतिभावः ।

पद्ये । सेव्येत्यादिकं उदाहरणं । नः ६ । (नु अग्र्य) न्वग्र्यः ६ । अपि १ । भवति ८ । सा । ऽधोः १६ ॥ १८ ॥

स्यादिति । समस्तोऽपि निखिलोऽपि स्वदोषः स्वकीयो दोषः अन्येभ्यः परत एव ज्ञानगोचरः स्यात् न स्वतो बोधविषयः स्यात् । यथा अक्ष्णश्चक्षुषः आदर्शात् दर्पणात् अन्यत् किमपि तत्र स्वदोषज्ञाने प्रमापकं प्रमितिजनकं न अस्तीति शेषः ।
पद्ये । स्वेत्यादिकं उदाहरणं । स्यात् ८ । सः १ । सः १ । तः १ । अन्येभ्यः ५ ∴ । (एव १ ।) ॥ १९ ॥

व्याकरणम् ।

नोन्वग्र्य सोपि भवति साऽधोः । नो नान्तस्य तथा न्वग्र्यसोऽपि नुः अनुस्वारः अग्र्यः आदिभूतो यस्य सचासो मश्चेति न्वग्र्यसः । तथाहि नान्तस्य अनुस्वारादिसकारान्तस्य च धातुभिन्नस्य सा दीर्घता स्यात् अधो धौ । धनानि, शर्म्माणि, यशांसि ॥ १८ ॥

स्यात् समस्तोऽन्येभ्य एव । अन्त्यादेः परः स मः स्वमोः स्थाने जातो मकारः सः स्यात् । अन्यत् ॥ १९ ॥

एते नैयायिकाः काव्यव्याकरणादिकं तुच्छीकुर्व्वन्ति एषामिका विद्या सुशिक्षिता । अतएवोक्तं ।

तरैकतरतो नैव हिनावं श्रयते पुमान् ।
तस्मादेकतरं श्रेयः श्रेयं पूर्व्वैरितीरितं ॥ २० ॥

अथ वेदान्ती । हेम ! यदाशिष्यति ।

सामीप्यात्मा लक्षणा चेत् तदा गङ्गापदात्तटे ।
उपस्थितेऽपि कस्तां बोधयेद्वृत्त्यनाश्रयाम् ॥ २१ ॥

औदासीन्येन तद्बोधं चेत् स्वीकुर्व्वन्ति तार्किकाः ।
तदा किमपराध्यन्ति मेयत्वादीनि धीमतां ॥ २२ ॥

तरेति । एकतरतः एकश्चासौ तरस्तरणसाधनञ्चेति एकतरस्तेन तर पारंगज । (तरतइति तृतीयायास्तस् । यद्वार्थेशा पञ्चमी एकतरं आश्रित्येत्यर्थः) । पुमान् हिनावं नैवाश्रयते । तस्माद्धेतोः एकतरं श्रेयं ॥ २० ॥

सामीप्येति । चेत् यदि लक्षणा सामीप्यात्मा सामीप्यस्वरूपा उच्यते इतिशेषः ; तदा गङ्गापदात् तटे उपस्थितेऽपि वृत्त्यनाश्रयां शक्तिलक्षणारूपवृत्तिरहितां तस्तां सामीप्यस्वरूपलक्षणां को बोधयेत् ? नैयायिकमते शक्यसम्बन्धस्यैव लक्षणात्वात् गङ्गायां वसतीत्यत्र गङ्गापदस्य शक्यो नीरप्रवाहस्तस्य सामीप्यरूपसम्बन्धएव लक्षणा· पदार्थो वाच्यः तथा च लक्षणया तीरस्योपस्थितौ शाब्दबोधो भवति अत्र सामीप्यरूपलक्षणायां गङ्गापदस्य वृत्त्यभावात् कथं सामीप्यस्योपस्थितिरिति भावः ॥ २१ ॥

औदासीन्येति । औदासीन्येन शक्तिलक्षणाभिन्नेन गङ्गापदस्य येन केनापि सम्बन्धेन तद्बोधं सामीप्योपस्थितिं यदि तार्किकाः स्वीकुर्व्वन्ति तदा धीमतां समीपे मेयत्वादीनि प्रमेयत्ववाच्यत्वादयः पदार्थाः किं अपराध्यन्ति किमपराधं कृतवन्तः । सामीप्ये वृत्तिरहितेन गङ्गापदेन यथाकथञ्चित् सम्बन्धवशात् तत्सामीप्यं यद्युपस्थाप्यते तदा गङ्गापदेन मेयत्ववाच्यत्वादीनां कथं नोपस्थितिः यथाकथञ्चित् सम्बन्धस्य तेष्वपि सत्त्वात् इति शाब्दिकानामाशयः ॥ २२ ॥

व्याकरणम् ।

एकतरतो नैव । एकतरं । २० ।

## अथ आलङ्कारिकः ।

गङ्गायां वसतीत्युक्तिः पावनत्वादिलब्धये ।
तीरेऽन्यथा मुख्यशब्दप्रयोगेऽत्र कियान् श्रमः ॥ २३ ॥

अनुमानं नात्र मानं व्यभिचारादिदोषतः ।
फलबोधस्य शाब्दत्वात् तयानुव्यवसायतः ॥ २४ ॥

वेदान्ती ।

चान्द्री मूर्त्तिर्निष्कलङ्का नास्ति पीतापि पद्मिनी ।
मत्युनङ्गाङ्गनाप्येषा दृष्टेयं याङ्गनाङ्गना ॥ २५ ॥

---

अत्र आलङ्कारिकमतमुपन्यस्यति गङ्गायामिति। गङ्गायां वसतीति प्राचामुक्तिस्तीरार्थे लक्षकगङ्गापदप्रयोगः तीरे पावनत्वादिलब्धये पवित्रत्वशैत्यादिज्ञानाय-अन्यथा मुख्यशब्दप्रयोगे तटवाचकतीरशब्दप्रयोगे कियान् श्रमः ? यदि लक्षणामूलव्यञ्जनया तीरे शैत्यपावनत्वबोधो लाक्षणिकगङ्गापदप्रयोगस्य प्रयोजनं नस्यात् तदा निरर्थकमेव तीरे गङ्गापदप्रयोगः तीरेवसतीति प्रयोगस्यैव युक्तत्वादितिभावः ॥२३॥

अनुमानमिति। अत्र तीरनिष्ठपवित्रत्वादौ नानुमानं मानं मितिजनकं व्यभिचारादिदोषादित्यर्थः आदिपदात् स्वरूपासिद्धिपरिग्रहः। तथाहि तीरं पवित्रं गङ्गापदजन्यबोधविषयत्वादित्यादिप्रकारा यद्यनुमितिस्तदा गङ्गायां वसति म्लेच्छ-इति वाक्यजन्यबोधविषये म्लेच्छे व्यभिचारः यदि च गङ्गापदलक्ष्यार्थत्वं हेतुस्तदापि-गङ्गापदलक्ष्यार्थत्वस्यापवित्रवस्तुन्यपि सम्भवात्तदन्तर्भावेण व्यभिचारः, यदि च गङ्गापदवाच्यत्वं हेतुस्तदा स्वरूपासिद्धिरेव दोषः। अत्र तीरं पवित्रं गङ्गापदशक्तिलक्षणयोरन्यतरस्मादित्यनुमितौ न व्यभिचारादिदोषः इत्यतो हेत्वन्तरमाह फलबोधस्येति, फलबोधस्य तीरे पवित्रत्वरूपफलबोधस्य शाब्दत्वात् शाब्दबोधत्वात् नानुमानमिति पूर्वेणान्वयः, शाब्दत्वे हेतुमाह तयानुव्यवसायत इति, तथा च ज्ञानरूपेण अनुव्यवसायः मानसप्रत्यक्षविषयत्वादित्यर्थः। तीरे पवित्रत्वबोधोत्तरकालं तीरे पवित्रत्वं शाब्दयामि नत्वनुमिनोमीत्याकारकानुभवादित्यर्थः। तथाच तीरे पवित्रत्वादिबोधार्थं व्यञ्जनावृत्तिः स्वीकार्य्येत्यालङ्कारिकाणां मतं॥ २४ ॥

सत्ता नावच्छिद्यते चेत् प्रतियोगिन्यवर्त्तिना ।
धर्म्मेण तर्हि भविता सत्काव्यस्यास्य का गतिः ॥ २६ ॥
नास्ति पीता पद्मिनीति वाक्याद्यो योगिनामपि ।
पीतत्वं नास्ति पद्मिन्यामिति बोधः कथञ्चन ॥ २७ ॥
विवक्षितार्थासिद्धिः स्यान्नञो भेदार्थताश्रये ।
व्यर्थतास्तिपदस्यापि भवेद्वा सिद्धसाधनम् ॥ २८ ॥
अथ नैयायिकेषु तुष्णीं स्थितेषु शाब्दिका वेदान्तिनं प्रति ।

चान्द्रीति । अङ्गने गच्छन्तीं कामपि सुन्दरीं दृष्ट्वा कश्चिदाशङ्कते । निष्कलङ्का चान्द्रीमूर्त्तिर्नास्ति पीता पद्मिन्यपि नास्ति तथा च इयं चन्द्रोन पद्ममपि नेतिभावः । एषा अनङ्गस्य कामस्य अङ्गनापि न । अत्र हेतुमाह येयं सुन्दरी अङ्गनाङ्गना अङ्गने चत्वरे अङ्गति गच्छतीति अङ्गनाङ्गना दृष्टा । अत्र काव्ये निष्कलङ्कचन्द्रमूर्त्त्याद्यभावः प्रतीयते, नैयायिकमते तत्र सत्तापि तन्मते अलीकप्रतियोगिकाभावानङ्गीकारात् निष्कलङ्कचन्द्रमूर्त्त्यादेरप्यलीकत्वात्; तथाच तन्मते एतत्काव्यस्य धाच्छ्रोतासम्भव इत्याह सत्तेति । सत्ता प्रतियोगिता चेत् यदि प्रतियोगिन्यवर्त्तिना प्रतियोगिनि चन्द्रमूर्त्त्यादावसता धर्म्मेण निष्कलङ्कत्वादिना नावच्छिद्यते तर्हि अस्य सत्काव्यस्य का गतिर्भवितेत्यन्वयः । निष्कलङ्कत्वाद्यवच्छिन्नचन्द्रमूर्त्त्यादिनिष्ठप्रतियोगिताकाभावाप्रसिद्धेः शाब्द[illegible]धासम्भव इतिभावः ॥ २५ ॥ २६ ॥

नैयायिकमते उक्तश्लोकाच्चन्द्रमूर्त्तौ निष्कलङ्कत्वाभावः प्रतीयते एवं पद्मे पीतत्वाभावः अङ्गनायां अङ्गरहितत्वाभावः प्रतीयते । तद्दूषयति नास्ति पीतेति । नास्ति पीता पद्मिनीति वाक्यात् योगिनामपि पद्मिन्यां पीतत्वं नास्ति इत्याकारको बोधः कथमपि न भवतीत्यर्थः ॥ २७ ॥

अत्र पद्मिनी न पीतेति नञो भेदार्थकत्वे दोषमाह विवक्षितेति । नञो भेदार्थताश्रये भेदार्थकत्वे विवक्षितार्थासिद्धिः पीतपद्मात्यन्ताभावस्यैव विवक्षितार्थत्वात् तस्यासिद्धिर्भवेदित्यन्वयः । अस्तिपदस्यापि व्यर्थता भवेत् एवं पद्मादौ पीतादिभेदस्य सिद्धत्वात् सिद्धसाधनदोषोऽपि स्यादतोऽलीकप्रतियोगिकाभावः स्वीकार्य्य इति वेदान्तिनामभिप्रायः ॥ २८ ॥

भवाञ्जरातो विकृतौ च मन्यते निजं वपुः सज्जरसं कदापि न।
जिगीषया क्षिप्तमनाश्चहो नृणामनादिदुर्व्वासनमत्यजाजरं ॥२९॥

अतो निवर्त्तस्व। नव्यतार्किकाणां पुरतो जिगीषया भवतो वाक्यप्रयोगो न युज्यते।

कवयो राजानं प्रति।

राजन्! दर्शनवेत्तारः काव्यं कवीनप्यवजानन्ति इतिषयं तेषां सभायां स्थक्ता इवास्महे।

आलङ्कारिकस्तान् प्रति। अहो कवयः! नैयायिकानामवज्ञया भवतां काव्यस्य च नोपादेयत्वहानिः स्यात्। यतः।

जानाति यः काव्यगुणान् स एवाद्रियते कवीन्।
सुन्दर्य्य एव धम्मिल्ले प्रीत्या बिभ्रति चम्पकं ॥ ३० ॥

इत्तश्च चन्द्रं प्रति।

भवानिति। भवान् जरातः वार्द्धक्यात् विकृतौ च विकृतिदशायामपि आत्मीयं वपुः सज्जरसं सती वर्त्तमाना जरा वार्द्धक्यं यत्र तादृशं न मन्यते। किम्भूतः जिगीषया क्षिप्तमनाः। अहो आश्चर्य्यं नृणां अनादिदुर्व्वासनं अत्यजं अजरञ्च इत्यन्वयः।

पक्षे। भ इति दीप्तिमतः सम्बोधनं। निजेत्यादिकं उदाहरणम्। वा १ं। अम् १ं। जरातः ५ं। विकृतौ ७ं। (च १ं।) मन्यते ८ं॥ २९॥

जानातीति। अस्यार्थः सुगमः। (धम्मिल्लः संयताः कचा इत्यमरः)॥ ३०॥

व्याकरणम्।

वाञ्जरातो विकृतौ च मन्यते। वा अम् जरातः (इत्यत्र मकारस्यानुस्वारे तस्य अकारः।) तेन विकृतिदशायामपि जराशब्दात् परस्य सुमोर्म्मस्य अम् स्यात् वा। सज्जरसं, अजरं। "जरातोऽम् वा" सू ॥ २९॥

तन्मा विषीद सुषमारिणि पद्मषण्डे
स्वो विश्वतापशमनाम्हतरश्मिरेति ।
यन्नादरं हरशिरोमुकुटाहतस्त्वं
नोत्फुल्लयस्यवनिभृत्तनयाक्षिपद्मम् ॥ ३१ ॥

अथ विदूषको बद्धाञ्जलिरवनतो दर्शनवेदिनः प्रति । भोः अवधातव्यम् ।

आत्मैको ब्रह्मणो नान्यो मोक्षो ब्रह्मणि तल्लयः ।
मोक्षे हेतुर्ब्रह्मसम्विदिति केचित् प्रचक्षते ॥ ३२ ॥
आत्माऽनेकः परात्मानन्यो दुःखध्वंसोऽस्य मुक्तता ।
तत्रात्मतत्त्वधीर्हेतुर्मुक्ताविति वदन्त्यपि ॥ ३३ ॥
नीरूपं ब्रह्म वक्त्येकः साकारं वक्ति चापरः ।
साकारञ्चानेकविधमप्येतत् कस्यचिन्मतम् ॥ ३४ ॥

---

तन्मेति । स्वः आत्मीयः विश्वतापशमनोऽम्हतरश्मिः पद्मषण्डे पद्मसमूहस्य समीपे यत् आदरं न एति न प्राप्नोति तत् तस्मात् माविषीद विषादं माकुरु । पद्मानामहङ्कारजनकं विशेषणमाह पद्मसमूहे कीदृशे सुषमारिणि सुषमा परमा शोभैव रा धनं यस्य तत्तथा तस्मिन् । पद्मषण्डे इत्यत्र सामीप्यार्थे सप्तमी । विषादाभावे हेतुमाह हरशिरोमुकुटाहतः सन् अवनिभृत्तनयायाः भवान्या अक्षिपद्मं त्वं न उत्फुल्लयसि न विकाशयसि अपितु विकाशयस्येव । अत्र अवनिभृत्तनयेत्यनेन भवान्या राजकन्यात्वं व्यज्यते । (भूभृत् भूमिधरे नृपे इत्यमरात्) ।

पक्षे । पद्मेति पद्मसंज्ञस्य सम्बोधनं । षण्डे ७ं । स्वः १ं ॥ ३१ ॥

आत्मेति । आत्मा एकएव ब्रह्मणः परमात्मनो भिन्नो न. तल्लयः आत्मनो लयः ब्रह्मसम्वित् ब्रह्मज्ञानं मोक्षं प्रति हेतुः इति केचित् पण्डिताः प्रचक्षते कीर्त्तयन्ति ॥ ३२ ॥

आत्मानेक इति । आत्मा अनेकः नाना, परात्मा, परमात्मा अन्यः पृथक् अस्य आत्मनः दुःखध्वंसः आत्यन्तिकदुःखनिवृत्तिः मुक्तता मुक्तिरित्यर्थः तत्र मुक्तौ आत्मतत्त्वज्ञानं हेतुः ; इत्यपि केचित् वदन्ति ॥ ३३ ॥

निरूपेति । अस्यार्थः सुगमः ॥ ३४ ॥

व्याकरणम् ।

षण्डे स्वः । क्लीवे दीर्घस्य स्वः ह्रस्वः स्यात् । सुषमारिणि ।
"ह्रस्वो नपुंसके प्रातिपदिकस्य" पां । "क्लीवे स्वः" मुं ॥ ३१ ॥

तत्र कस्य वचः सत्यं तन्नः सप्रपथं वद ।
नानरथा नो भवत्यास्था विरुद्धे वचने मिथः ॥ ३५ ॥

यतः ।

तितीर्षुर्दुस्तरं धीमानाश्रयेत सतीं तरीम् ।
शास्त्वैवासत्तरीं श्रित्वा विपत्तिं याति यत् पुमान् ॥ ३६ ॥

एतत् श्रुत्वा दर्शनशास्त्रविदस्तूष्णीं परस्परं मुखमालोकयन्ति ।

पुनर्व्विदूषकः ।

अहो महोदयाः ! विदुषां सभायामविदुषो वाक्यात् विदुषां कोपो भवत्येव तस्मात् ।

येनातिलोप् जायतेऽस्य मयि कोऽप्युदियाय यः ।
कोपो वः प्रार्थये युष्मांस्तत् साञ्जलि दयावतः ॥ ३७ ॥

---

तत्रेति । सप्रपथं यथा स्यात् तथा नोऽस्मान् तद्वद । मिथः परस्परं विरुद्धवचने नोऽस्माकं आस्था न भवेत् ॥ ॥ ३५ ॥

तितीर्षुरिति । धीमान् बुद्धिमान् जनः दुस्तरं तितीर्षुः सन् सतीं प्रशस्तां शास्त्रैव तरीं नौकां आश्रयेत । यत् यस्मात् असत्तरीं श्रित्वा विपत्तिं प्राप्नोति ॥ ३६ ॥

येनेति । वोयुष्माकमपि मां प्रति यः कोऽपि कोप उदियाय, अस्य कोपस्य येन प्रकारेण अतिलोप् अत्यन्तं लोपो जायते तदहं साञ्जलि यथा स्यात्तथा युष्मान् दयावतः प्रार्थये । (लोप् इति लुपधातोर्व्विच् प्रत्यये सिद्धं) ।

पक्षे । येनेति यमप्रभाः सम्बोधनं । अतिलोप् १ । जायते ८ । स्यमः ६ । इकः ५ ॥ ३७ ॥

व्याकरणम् ।

अतिलोप् जायते स्यमयिकः । इगन्तात् क्लीवात् स्यमोऽतिलोपः स्यात् । अतिशब्देन स्थानित्वाभावः सूचितः । स्यम इत्यस्मात् विसर्गस्य यकारः । साञ्जलि ।

"स्यमोमंपुंसकात्" पा । "स्यमोर्लुक्" स ॥ १७ ॥

अथ कश्चिदागमवेत्ता विदूषकं प्रति ।

महाशय ! यदुक्तं भवता "अस्य वचः सत्यमिति" तदेते अतत्त्वविदः सत्पथं वक्तुं नार्हन्ति ।

मान्येक ! यामिनो नुन्नचिदावरणसंशयाः ।
ये तएवैव माख्यातुं शक्ता येषां विदक्षिणी ॥ ३८ ॥

एते तु दर्शनविदोऽतत्त्वविदो जिगीषयैव परमतं दूषयन्तो विवदमानाः केवलं ज्ञानपथं रुन्धन्ति । तत एव इदानीन्तनाः साधकाः आत्मतत्त्वज्ञानान्मुक्तिरुत वा ब्रह्मज्ञानादिति सन्दिहन्तो ज्ञानपथं दूरतः परिहरन्ति । अहन्तु सत्पथं वच्मि शिवस्य वचः सत्यमिति तदहमेव मुपदिशामि ।

न दर्शनाम्बुधौ दृष्टेऽणुर्व्वा स्यात् संशयच्छिदः ।
ईशा सन्दर्शितं वर्त्मासन्दिग्धं श्रय तत् सुधे ! ॥ ३९ ॥

मान्येकेति । हे मान्येक मानिनां श्रेष्ठ ! ये यामिनः योगिनः नुन्नचिदावरण संशयाः नुन्नौ छिन्नौ चिदावरणसंशयौ यैः ते तथा । चित् यथार्थतत्त्वज्ञानं तस्य आवरणं अविद्याशक्तिविशेषः यत् सत्त्वे ब्रह्मज्ञानं नोत्पद्यते । ते एव योगिनः एवं सत्पथं आख्यातं शक्ताः येषां वित् यथार्थज्ञानमेव अक्षिणी चक्षुषी ।

पक्षे । मान्य इति सम्बोधनं । दावरणसंशयाः छिन्नावरणसंशयाः दाइति दोय छेदे इत्यस्य रूपं । इकः ६ं । आमि ७ं । नो १ं । नुण् १ं । अचि ७ं ॥ ३८ ॥

नेति । दर्शनाम्बुधौ दर्शनशास्त्रं अपारत्वेन अम्बुधिरिव तस्मिन् दृष्टे सति संशयच्छिदः संशयच्छेदस्य अणुर्व्वा लेशोऽपि न स्यात् तत् तस्मात् हे सुधे ! सुधिकुलं ईशा शिवेन सन्दर्शितं वर्त्म पन्थानं श्रय आश्रय । कीदृशं असन्दिग्धं । (लवलेशकणाणव इत्यमरः ।

पक्षे । दर्शनाम्बु इति पूर्व्वसूत्रस्योदाहरणं । धौ ७ं । (दृष्टे ७ं ।) णुः १ं । वा १ं ॥ ३९ ॥

व्याकरणम् ।

इकयामिनो नुन्नचि । इगन्तस्य क्लीवस्य नुण् स्यात् अचिपरे नत्वामि । (इकः इत्यस्मात् विसर्गस्य यकारः) अक्षिणी । "इकोऽचि विभक्तौ" पां । "नुमिकोऽच्यनामि" सुं ॥ ३८ ॥

धौ दृष्टे णुर्व्वा । इगन्तस्य क्लीवस्य धौ परे गुणो वा स्यात् । सुधे ! "णुर्धौ वा" सुं ॥ ३९ ॥

छित्वाक्षमालां स्वोपास्यदेवताया: पुर:स्थित: ।
शिरस्याधाय गङ्गां स योगीश: किं मृषाऽवदत् ॥ ४० ॥
अपिच । ईशाज्ञाऽपालको दण्डी भवतीत्यत्र वोच्यते ।
अतो वहाम: शीर्षण्याज्ञां हरस्याव्याहतां सुधि! ॥ ४१ ॥
शिवनाम्ना पुरुषार्थ: प्रतिपाद्यते
येनैकेनार्थेन तन्नामनावा ।
वाटाद्याचिरे पारं संसारापारवारिणो
महाभीतेर्मोहभ्रमिणश्च ॥ ४२ ॥

---

शिवोक्तवचनस्य सत्यत्वे हेतुमाह छित्वाक्षमालामित्यादि । अस्यार्थ: सुगम: ॥४०॥

ईशेति । ईशाज्ञापालक: ईशस्य प्रभो: आज्ञाया: शासनस्य अपालको जन: दण्डः दण्डार्हो भवति इति अत्र लोके वोच्यते । अत:कारणात् हे सुधि! सुधिकुल हरस्य विश्वसंहर्त्तु: अव्याहतां आज्ञां शीर्षणि मस्तके वहाम: ॥ ४१ ॥

शिवेति । येन एकेन केवलेन शिवनाम्ना शिवेतिनाम्ना अर्थेन महाधनभूतेन पुरुषार्थ: धर्मार्थकाममोक्षरूप: प्रतिपाद्यते उत्पाद्यते तन्नामनावा वा तच्छिवनामरूपनौकया एव अद्य वर्त्तमानशरीराधिकरणकाले अचिरे अचिरकालेन संसाररूपस्य अपारवारिण: पारं अट गच्छ । कीदृशस्य वारिण: । महाभीते: महाभीतिर्यस्मात् तत्तथा तस्य । मोहभ्रमिण: मोह एव मायैव भ्रमि: आवर्त्तो यस्मिन् तत्तथा तस्य । (एके मुख्यान्यकेवला इत्यमर:) ।

पक्षे । शिवेति मङ्गलयुक्तस्य रे इति च सम्बोधनं । नावा इत्यत्र वा शब्द: इवार्थे । नाम्ना ३ । पुरुषार्थ: १ । प्रतिपाद्यते ८ । येन ३ । एकेन ३ । अर्थेन ३ । तत् १ । नाम १ । ना वा १ । ( ना इव ) टाद्यचि ७ ॥ ४२ ॥

व्याकरणम् ।

नाम्ना पुरुषार्थ: प्रतिपाद्यते येनैकेनार्थेन तन्नाम नावा वा टाद्यचि । येन इगन्तक्लीवेन नाम्ना शब्देन एकेन अर्थेन पुरुषार्थ: पुंरूपार्थ: प्रतिपाद्यते बोध्यते तन्नाम ना वा पुमानिव वास्यात् टादावचि परे । ( ना वा इत्यत्र वाशब्द इवार्थे ) महाभीते:, मोहभ्रमिण:, संसारापारवारिण: ।

"तृतीयादिषु भाषितपुंस्कं पुंवत् गालवस्य" पाणिनि: । "पुंवत् वार्थोक्तपुंस्कं टाद्यचि" सु ॥ ४२ ॥

प्रमदा यच्चक्थि दधि अच्चण: स्थाने स्थितोऽपि हि ।
अनङ्गो नाशकत् यस्य विकर्त्तुं चित्तमण्वपि ॥ ४३ ॥
नमोऽस्तु शम्भवे तस्मै ज्ञानदाय चिदात्मने ।
अच्णां त्रयं माल्यमस्थ्नां दध्नोरूपञ्च बिभ्रते ॥ ४४ ॥
स एव हि स्वोऽविदे च स्फुरत्करुणयागत: ।
ददाति जितगु ज्ञानं तुच्छीकृतरि नौमि तम् ॥ ४५ ॥
इत्येवमुक्ते तं आगमवागीशं सर्व्वे साधु साध्विति प्रशशंसु: ।

---

प्रमदा इति। अनङ्ग: काम: अच्ण: स्थाने दृष्टिपथे स्थितोऽपि यस्य शिवस्य चित्तं विकर्त्तुं विकृतीकर्त्तुं अण्वपि स्वल्पमपि न अशकत्। किम्भूत: शिव:। यच्छक्थि यस्य सक्थि ऊरु: प्रमदा: कामिनो: दधि धारणशीलं। तथाहि ऊरुदेशे विकारहेतुभूतायां स्त्रियां सत्यामपि कामो दृष्टिगोचरोऽपि चित्तस्य विकारजनने शक्तो नासोदित्यर्थ:।

पक्षे। प्रमदायदिति प्रमत्ततायां यत्नवत: सम्बोधनं। गो गणेश एतञ्च पूर्व्वसूत्रीयोदाहरणवाक्यत्वेन सार्थकं। सक्थि दधि अच्ण: ६ं। स्थाने ७। अस्थित: ६ं। (अपि १ं।) अनङ् १ं ॥ ४३ ॥

नमोऽस्त्विति। बिभ्रते इत्यस्य अच्णां त्रयमित्यादिषु अन्वय:।

पक्षे। पूर्व्वसूत्रस्य उदाहरणमात्रं ॥ ४४ ॥

वाक्यसमाप्तौ गुरुं स्तौति स एवेति। यो जन: स्फुरत्करुणया दीप्यमानकरुणया आगत: सन् अविदे अज्ञानाय ज्ञानं ददाति स एव स्व: आत्मीय: तं नौमि। कीदृशं ज्ञानं जितगु जितो गौश्चक्षुर्येन तत्तथा। ज्ञानिनां ज्ञानमेव चक्षुरुच्यते। पुन: कीदृशं तुच्छीकृतरि तुच्छीकृतो रा धनं यस्मात् ज्ञानादित्यन्वय:।

पक्षे। परभाग: उदाहरणं। स: १ं। एव १ं। हि १ं। स्व: १ं। (उ इत्) वित् १ं। एच: ६ं। स्फुरत् १ं ॥ ४५ ॥

व्याकरणम्।

सक्थि-दधि-अच्ण: स्थानेऽस्थितोपि अनङ्। टाद्यचि सक्थ्यादीनां स्थाने अनङ् स्यात्। अत्र अस्थितइतिषष्ठ्यास्तम् सूत्रत्वात्। अच्णां अस्थ्नां दध्न:।

"अस्थि दधिसक्थ्यच्णामनङुदात्त:" पां। "दध्यस्थिसक्थ्यच्णोऽनङ्" सं ॥४३॥४४॥

स एव हि स्वो विदेचस्फुरत्। एच: स्थाने स्फुरत् वित् उत् इव स्व: ह्रस्व: स एव हि। जितगु तुच्छीकृतरि।

"एच इग्घ्रस्वादेशे" पां। "एचो युत् स्वम्" सं ॥ ४५ ॥

इति अजन्तनपुंसकलिङ्गपाद:।

अथ सूत्रधारः (नेपथ्याभिमुखमवलोक्य) अये कियन्तो वैष्णवलिङ्गिनः कियन्तश्च शाक्तलिङ्गिनः कियन्तश्च शैवलिङ्गधारिणः अत्रानुसरन्ति।

स्मरत सदा शचीनन्दनमुदारं
तरसि यदि भवपयोनिधिमपारम्।
दलितहरितालरुचिरुचिरमविकारं
कलिकलुषकलनाय करुणावतारम्॥ १॥

एवं गायन्तो वैष्णवाः अहो वयं श्रीमद्गौराङ्गाधिष्ठितं श्रीधाम नवद्वीपं जिगमिषवो द्वित्रिदिनान्यत्र गौड़ाधिपस्य नरपतेरतिथिशालायां वत्स्याम इति परिक्रम्य उपविशन्ति। अनन्तरं।

केयं परिलसति ललना शवशिवहृदि निहितचरणा
विकटदशना लोलरसना नरकरकृतरसना।
तरुणतरणिरुचिनयना सजलजलदरुचिविवसना
सृक्कगलितरुधिरवदना सुमधुरमृदुहसना॥ २॥

एवं गायन्तः शाक्ताः प्रविश्य अहो वयं श्रीमत्कालीघाटमहापीठात् प्रत्यागतास्तूर्णं योगिनीपीठं जिगमिषवः। अनन्तरं।

सिद्धजक्षादिकगणयुक्तश्च द्विर्द्विरन्वहं।
ताण्डवैर्व्विदधत् प्रीतिं भूभृज्जाया जयत्यजः॥ ३॥

---

स्मरतेति। कलिकलुषकलनाय कलिपापसंहाराय। अन्यत् सुगमं॥ १॥

केयमिति। अस्यार्थः सुगमः॥ २॥

सिद्धेति। अजः शिवो जयति सर्व्वोत्कृष्टतया वर्त्तते। कीदृशः। सिद्धजक्षादिकगणयुक्तः। सिद्धाः जक्षाश्च देवयोनिविशेषाः तदादिगणयुक्तः सन् अन्वहं प्रतिदिनं द्विर्द्विः अर्थात् प्रातः सायं द्विवारं ताण्डवैर्नर्त्तनैः भूभृज्जायाः गिरिजायाः प्रीतिं सन्तोषं विदधत् कुर्व्वन्नित्यन्वयः। (अजाविष्णुहरच्छागाः इत्यमरः) चतुर्ग-

एवं स्तुवन्तः शैवाः प्रविश्य अहो वयं श्रीमद्वैद्यनाथं महापीठं जिगमिषवः ।

अथ स्मृत्यादिशास्त्राध्यापकाः कियन्तो वयमतिथयो वर्द्ध-मानाधिपेन निमन्त्रितास्त्वलितास्त राजधानीमितुप्रपविशन्ति ॥

अथ कश्चित् पृच्छति ।

वाढोहो जायते भौम देवासौ मेऽविपश्चितः ।
छेत्तुमर्हसि तं धीर ! तमोऽन्तर्हव्यवाड़िव ॥ ४ ॥

तृतीयवर्णादि जक्षशब्दोऽप्यस्ति । तथाच । जक्षयति भक्षयति इति वर्ग्यादिरपि । जक्षणाज्जक्षमित्याहुः रक्षणाद्रक्ष उच्यते । पुस्तकान्तरे पलजक्षादिकगणश्च इत्यपि पाठो दृश्यते । तत्र । पलं मांसं जक्षति भक्षयन्तीति पलजक्षाः पिशाचाः । अन्यत् पूर्ववत् । गणः इत्यस्मात् विसर्गस्य यकारः ।

पक्षे । अन्यकुमित्यादिकं उदाहरणं । सिद्धजक्षादिकगणः १ । उक्ताः १ । च १ । द्विः १ । द्विः १ ॥ ३ ॥

वाढेति । हे भौमदेव ब्राह्मण ! अविपश्चितोऽबुधस्य मे मम असौ वाढो दृढः ऊहो वितर्को जायते हे धीर ! तं ऊहं वितर्कं छेत्तुमर्हसि । अत्र सादृश्यमाह । अन्तस्तमः अन्तरस्थं तमोऽन्धकारं हव्यवाट् वह्निरिव । यथा अभ्यन्तरस्थमन्धकारं वह्निर्नाशयति तथेत्यर्थः ।

पक्षे । वा इति वायोः सम्बोधनं । भदेव इति ब्रह्मणः सम्बोधनं । शेषः उदा-हरणं । ढः १ । ह्रः ६ । जायते ८ । भौ ७ ॥ ४ ॥

व्याकरणम् ।

सिद्धजक्षादिकगण उक्ताश्च द्विर्द्विः । प्रसिद्धजक्षादिकगणः द्विरुक्ताश्च द्विर्मसः स्यात् । विद्वत् । "द्विरुक्तजक्षादी द्विः" सु ॥ ३ ॥

ढो ह्रो जायते भौ । ह्रस्य ढः स्यात् भौ परे । हव्यवाट् । "ह्रो ढः" पा । "ह्रो ढो भौ" सु ॥ ४ ॥

माभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि ।
श्रुतिरेषा निगूढार्था सर्व्वेषां श्रुतिगोचरा ॥ ५ ॥
सदादिश्चेज्जायतेऽघस्तदा दानतपोमखैः ।
स्वं शोधयति देहभुगित्याचारोहि दृश्यते ॥ ६ ॥
कृतकलुषः किमु कृच्छ्रैर्भवति तनुधक् यदि भोज्यमघं स्यात् ॥
वितरति कस्तरपण्यं यदि सन्तरतरा तरङ्गिणी स्यात् ॥ ७ ॥
अन्यच्च । भृत्सुवरा विषयेभ्यो मन आदीनीन्द्रियाण्यपाकृष्य
प्रतिकृत्य च स्मरादिमानामन्त्यभभानां जवानां सहसान्ते
तत्तत्पराः पञ्चत्वाप्ताः परपदं विशन्तीति किम्वदन्ती-
मात्रं नतु तद्वास्तवं अभुदभिस्तत् प्रतिबन्धकानां
षड्रीणां कामादीनां दुर्जेयत्वात् ॥ ८ ॥
इत्येव मम मोहान्धकार उदेति ।

---

माभुक्तमिति । सुगमं ॥ ५ ॥

सदेति । सदादिः सन् साधुस्तदादिः तत्प्रभृतिः साधुरसाधुरित्यर्थः चेत् यदि अघः पापवान् भवति तदा दानादिकर्म्मभिः देहभुक स्वदेहद्रोहकारी सन् स्वमात्मानं शोधयति इत्याचारो लोकेऽस्मिन् दृश्यते ।

पक्षे । दानेत्यादिकं उदाहरणं । सः १ं । दादिः १ं । चेत् १ं । जायते ८ं । घः १ं । तदा ७ं ॥ ६ ॥

कृतेति । यदि अघं पापं भोज्यं अवश्यं भोक्तव्यं स्यात् तदा कृतकलुषोजनः शुद्ध्यर्थं कृच्छ्रैर्व्रतैः किमु तनुधक् शरीरदाहको भवति । अर्थान्तरन्यासमाह । यदि तरङ्गिणी नदी बाहुभ्यां सन्तरतरणा स्यात् तदा को जनः तरपण्यं आतरं वितरति ददातीत्यन्वयः ॥ ७ ॥

भृदिति । भृत्सु ज्ञानिषु मध्ये वराः श्रेष्ठाः विषयेभ्यो रूपादिभ्यो मन आदीनि इन्द्रियाणि अपाकृष्य तथा अन्त्यभभानां अन्ते प्रलये भवतीति अन्त्यः तादृशी

व्याकरणम् ।

सदादिश्चेज्जायते घस्तदा । स इकारो यदि दकारादिः स्यात् तदा घो जायते । देहभुक् । "दादेर्घातोर्घः" पा । 'दादेर्घः' सु ॥ ६ ॥ तनुधक् ॥ ७ ॥

स ध्वान्तेषु धवानां स्यान्मोहेषु विशतां सुहृत्।
बुभुत्सूनामबुद्धार्थान् यः स्याद्धीदीपदीपकः॥ ९॥

अथ स्मृतिवेत्ता उत्तरयति।

भूतद्रुहो मुहोऽघं किं नोभौ नाशयतो द्विज।
तपो गङ्गाम्बुसेकश्च मुग् किं वेदः स्मृतिश्च मुट्॥ १०॥

यो भः प्रचण्डोवायुः स इव भान्तीति अन्त्यभभाः तादृशानां स्वरादिमानां काम-क्रोधादीनां जवानां वेगानां प्रतिकृत्य निवारणं कृत्वा अर्थात् प्रलयकालोद्भूत-प्रचण्डवायुसदृशकामादीनां वेगान् निवार्य्य तत्तत्परा तत्शब्देन ब्रह्मोच्यते। तच्छब्दो ब्रह्मणो नामेति श्रुतेः। तत्परास्तदेकचित्ताः पश्चत्वाप्राः मृताः सन्तः अन्ते अन्तिमकाले सह्मा परपदं विशन्ति इति किम्वदन्तीमात्रं जनश्रुतिमात्रं। (भः प्रचण्डानिले वर्षे इति कोषः)।

पक्षे। स्वरेति शिष्याबधानार्थं आम्रेत्यादिकं उदाहरणं। आदिमानां ६ ∴। अन्त्यभभानां ६∴। जवानां ६∴। सहसान्ते ७ं। तत् तत् पराः १∴। पञ्च १∴॥ ८॥

सध्वेति। मोहेषु मोहरूपान्धकारेषु विशतां धवानां मनुष्याणां सम्बन्धे यो जनः धीदीपदीपकःबुद्धिरूपप्रदीपोद्दीपकः स्यात् स एव सुहृत्। किम्भूतानां अबुद्धार्थान् अज्ञातवस्तूनि बुभुत्सूनां बोद्धुमिच्छतां।

पक्षे। मोहेत्यादिकं उदाहरणं। सध्वान्तेषु ७∴। धवानां ६∴। स्यात् ८ं॥ ९॥

भूतेति। भूतद्रुहः प्राणिहिंसकस्य मुहो मूढस्य अघं पापं किं तपःप्रायश्चित्त-व्रतादिकं गङ्गाम्बुसेकश्च उभौ न नाशयतः किम्वा वेदो मुग्भ्रान्तः किम्वा स्मृतिश्च मुट्भ्रान्ता। तथाच प्रायश्चित्तप्रतिपादको वेदः स्मृतिश्च किं मिथ्या वदतीत्यर्थः।

पक्षे। भूतेति सम्बोधनं। द्रुहः ६ं। मुहः ६ं। घङ् १ं। किं १ं। नो १ं। भौ ७ं॥ १०॥

व्याकरणम्।

आदिमानामन्त्यभभानां जवानां सहसान्ते तत्तत् पराः पञ्च। अन्त्यभभानां आदिमानां आदिभूतानां जबानां स्थाने तत्तत्पराः पञ्च तत्तत्वर्णपरवर्णाः पञ्च स्युः सहसान्ते हसेन सह विरामे हसे विरामे चेत्यर्थः। भुत्सु अभुद्भिः। "एकाचो बशो भष् भषन्तस्य स्ध्वोः" पा। "भभान्तस्यादि जवां भभाः फे, धोस्तु सध्वेऽन्ते च" सु॥ ८॥

सध्वान्तेषु धवानां स्यात्। धवानां धातुसम्बन्धिनां से ध्वे विरामे परे सः पूर्व्वोक्तविधिः स्यात्। बुभुत्सूनां॥ ९॥ द्रुहो मुहो घङ् किं नोभौ। द्रुहोमुहश्च

नश्यो भवत्यपि महेनसां गङ्गाम्बुविप्रुषः ।
स्वर्गात् स्वाध्यायतो दानात् नगन्नानेति न किं श्रुतं ॥ ११॥
तस्मादकृतप्रायश्चित्तविषयैषा श्रुतिः ।

अथ नैयायिकः ।

तपोज्ञानादयः साक्षात् पापनट्हेतवो नहि ।
कायव्यूहं भावयन्ति युगपद्भोगसाधनं ॥ १२॥
अथ स्मार्त्तो नैयायिकं प्रति ।
तवाहो मन्यतेऽपि प्राचीनस्यौर्व्वामरस्य तत् ।
वचः किन्तु प्रमाणौहां सतां न हृदयङ्गमं ॥ १३ ॥

नश्यइति । गङ्गाम्बुविप्रुषः गङ्गाम्बुबिन्दोः स्वर्गात् स्वाध्यायात् वेदाध्ययनात् महेनसामपि महापातकानामपि नश्यः नाशीभवति । हे नट् ज्ञान ! नष्टचुके ! इति किं नश्रुतं । नश्यः ६ं । भवति ८ं । अपि १ं ॥ ११ ॥

तपइति । तपस्तत्त्वज्ञानादयः साक्षात् सम्बन्धेन पापनट्हेतवः पापनाश-हेतवो न किन्तु परम्परयेत्यर्थः । युगपदेकदा भोगसाधनीभूतं कायव्यूहं भावयन्ति जनयन्ति ॥ १२ ॥

तवेति । अहो भोः प्राचीनस्य वृद्धस्य और्व्वामरस्य उर्व्वीसम्बन्धीयदेवस्य अर्थात् ब्राह्मणस्य तव तद्वचो मन्यतेऽपि किन्तु प्रमाणौहां प्रमाणभृतां सतां पण्डितानां हृदयङ्गमं न । तथाहि तव सिद्धान्ते प्रमाणं नास्तीति भावः ।

पक्षे । स इति चौरस्य सम्बोधनं । वाहः ६ं । मन्यते ८ं । पिप्राचीनस्य ६ं । औः १ं । वा १ं ॥ १३ ॥

व्याकरणम् ।

यङ् किं नस्यात् विकल्पेन स्यात् भौ परे । लुग् लुट् । "वा द्रुह मुह ष्णुह ष्णिहाम्" पां । "मुह्यां घङ्वाभौ" । सुं ॥ १० ॥

नश्यो भवत्यपि । नशधातोस्यापि तथा स्यात् । नग् ११ । नट् १२ । वाहो मन्यते पिप्राचीनस्य और्व्वा । वाहो वा औः स्यात् पिपूर्व्वस्य । प्रमाणौहां । "वाहो यौ पौ श्वेतात् तु वा" सुं ॥ १३ ॥

अपिच ।

भोगश्चेदावश्यकः स्यात्तत् पापौघापिभुज्यतां ।
क्रमशो युगपद्वाको विशेषः शैघ्र्यमान्द्ययोः ॥ १४ ॥ तस्मात् ।
अनादुः साध्यकृच्छ्राद्यैर्यातयन्ति वृथा वपुः ।
इति मे संशयो भोज्यं कर्म्मेति श्रुतिशिष्ट्राट् ॥ १५ ॥

अथ मीमांसकस्तं प्रति ।

नैयायिकानां स्वकपोलकल्पितोऽयं सिद्धान्तः । प्रायश्चित्तादीनां कायव्यूहजनने मानाभावात् । श्रूयतां ।

प्रारब्धं कर्म्म भोगेन कर्म्मान्यत् तपसा व्रतैः ।
क्षीयते इतिसिद्धान्तः श्वेतवाहोगुरोर्मतः ॥ १६ ॥

---

भोगइति । भोगेनैव पापक्षय इति यदि पापस्य भोग आवश्यकः स्यात् तत्तदा पापौघा पापघ्नता क्रमश एव पापं भुज्यतां युगपदेकदा वा भुज्यतां भोगस्य शैघ्र्यमान्द्ययोः को विशेषोऽस्तीत्यन्वयः ।

पक्षे । पूर्व्वस्थलस्य उदाहरण मात्रं ॥ १४ ॥

अनादइति । अनइत्लुप्राणिनि इत्यस्य रूपं । अनाः प्राणिनः कृच्छ्राद्यैः व्रतादिभिः वृथैव वपुः शरीरं यातयन्ति । इति मे मम संशयः भवतीति शेषः । कीदृशस्य । मम कर्म्म अशुभं कर्म्म भोज्यं अवश्यं भोक्तव्यं इतिश्रुतिशिष्ट्राट् श्रुतिर्व्वेदः तस्याः शिष्टिः आज्ञा तां वहतीति श्रुतिशिष्टिवाट् तस्याःश्रुतेराज्ञावाहस्येत्यर्थः । शिष्टिराज्ञेति कोषः ।

पक्षे । साध्येत्यादिकं उदाहरणं । अनात् ५ । उः १ ॥ १५ ॥

प्रारब्धमिति । प्रारब्धं भोगारब्धं कर्म्म भोगेनैव क्षीयते अन्यत् प्रारब्धभिन्नं कर्म्म तपःप्रभृतिकर्म्मभिः क्षीयते । श्वेतवाहइन्द्रस्य गुरोर्व्बृहस्पतेरित्यर्थः ॥ १६ ॥

## व्याकरणम् ।

पापौघा । १४ । अनादुः । अनवर्णात् परस्य वाहो वा ऊ स्यात् पौपरे । शिष्ट्राट् । "अनादुः" सुं ॥ १५ ॥

श्वेतवाहः ॥ १६ ॥

द्वितीयप्रश्ने उत्तरयति ।

अचरणाचत्वरनड्वन् को निरोद्धुमलतेऽनडुहो धावन् ।
चतुरोपिहि तत् क्रमशो दमयेत दुर्द्दमानुपायैः ॥ १७ ॥

इति दुर्द्दरूकं । अथ प्रश्नकर्त्ता सभ्यस्तं प्रति ।

स्मरतोऽप्येणदृग्धावान् चत्वारोऽर्थाश्च बिभ्यति ।
उद्यतेषोर्म्मनसिजात् कउपायोस्ति तद्दमे ॥ १८ ॥
कवेऽहो दुश्चलेऽसौन सौहार्द्दं भजते स्मरः ।
अनड्वानपि हृज्जन्मा तदप्यस्य वशं जगत् ॥ १९ ॥

---

अचरणेति । हे अचरणचत्वरनड्वन् ! चरणचतुष्टयरहित वृष ! न सन्ति चरणानि चत्वारि यस्येति विग्रहः अर्थात् हे अज्ञान ! को जनः धावन् सन् अनडुहो निरोद्धुं अलते शक्नोति तत् तस्मात् चतुरोजनः क्रमशएव उपायैः दुर्द्दमान् दमयेत अर्थात् कामादीन् उपायैः क्रमशो दमयेत् । अनडुहः ६ं । धौ ७ं । अन् १ं । चतुरः ६ं । ( अपि ) ( हि ) ॥ १७ ॥

स्मरतइति । एणदृग्धावान् एणदृशां सुन्दरीणां भावान् विलासादीन् स्मरतोऽपि जनस्य मनसिजात् कन्दर्पात् चत्वारोऽर्थाः पुरुषार्था यदि बिभ्यति भयं प्राप्नुवन्ति । कीदृशात् उद्यतेषोः उद्यतवाणात् तद्दमे तस्य कन्दर्पस्य दमने उपायः कोऽस्तीत्यन्वयः ।

पक्षे । स्मरतोऽप्येणदृगिति कन्दर्पविजयापि सुन्दरस्य कस्यचित् सम्बोधनं धौ ७ं । आन् १ं । १८ ॥

कवेइति । अहो आश्चर्य्यं हे कवे ! असौ अनड्वान् दुर्दान्तत्वेन अनड्वत्सदृशः स्मरः कामः हृज्जन्मापि नोऽस्माकं सौहार्द्दभाक् न अर्थात् दुर्हृत् । तदपि तथापि जगत् तस्य वशमिति दृश्यते । ङः १ं । दृश्यते ८ं । सौ ७ं । न १ं ॥ १९ ॥

व्याकरणम् ।

अनडुहोधावन् चतुरोपिहि तत् । अनडुहश्चतुरश्च धौ परे अन् स्यात् अचरणसत्यः । अनड्वन् । "अम् सम्बुद्धौ" पां ॥ १७ ॥

धावान् । अनडुहश्चतुरश्च धौपरे आन स्यात् । चत्वारः ।
"चतुरनडुहोरामुदात्तः" पां । "अनड्चतुरोऽणानौ धिघ्योः" सं ॥ १८ ॥
ह्रो दृश्यते सौन । अनडुहोहस्य नस्यात् सौ परे । अनड्वान् ।
"सावनडुहः" पां । "ह्रो नः सौ" मु ॥ १९ ॥

रफेदङ्गमयं येषां शरैस्तानेव क्रन्तति ।
तैरेव चोष्यतेऽस्याज्ञानड्भिरिव नश्युतैः ॥ २० ॥

अथ कश्चित् योगाभ्यासी ।

मनस्तथाव स्वन्तस्य पातोयन्नाङ्गनाङ्कदे ।
मुञ्च सङ्गमविद्दद्भिः सत्सङ्कल्पी सदा भव ॥ २१ ॥
मन्यते गुरुतात्वन्त्यस्यातः स्यात् सावधौ सुखे ।
धीमन् ! कियानुत्कर्षस्तत् यतस्वानवधौ सुखे ॥ २२ ॥

---

रफेदिति । अयं कन्दर्पः येषां जनानां अङ्गं मनः रफेत् गच्छेत् आश्रयेत् प्राप्नोति । रफगत्यामित्यस्य रूपं । तानेव जनान् शरैः क्रन्तति छिनत्ति तैरेव जनैः नश्युतैः नष्टि विद्धैः अनडुद्भिरिव अस्य कामस्य आज्ञा उह्यते । पक्षे । र इति अग्नेः गमयमइति गमनसंयमस्य सम्बोधनं । फे ७ । दङ् १ ॥ २० ॥

मनइति । तथा तेन प्रकारेण स्वं स्वकीयं मनः अव रक्ष यत् येन प्रकारेण अङ्गनाङ्कदे कामिनीरूपगर्त्ते तस्य मनसः पातः पतनं न स्यात् । तदुपायमाह मुञ्चेति । सत्सङ्कल्पी भव अर्थात् असत्सङ्कल्पं त्यजेत्यर्थः । पक्षे । मन इति मननशीलस्य सम्बोधनं । पातेत्यादिकं उदाहरणं । (तथा) वस्वन्तस्य ६ ॥ २१ ॥

ऐन्द्रियसुखस्य हेयत्वमाह मन्यत इति । अन्त्यस्य अन्ते प्रलये तिष्ठतीति अन्त्यस्तस्येव गुरुता गौरवं मन्यते अतः अस्मिन् लोके सावधौ अवधिः सीमा तेन सह वर्त्तमानं सावधि तादृशे सुखे कियान् उत्कर्षः स्यादस्तीत्यर्थः । तत् तस्मात् अनवधौ सीमारहिते सुखे मोक्षरूपे यतस्व यत्नं कुरु । मिलाइखानुभवस्य मुक्तिस्वमनेनेदं । मन्यते ८ । गुरुता १ । अत्वन्त्यस्य ६ । अतः ६ । स्यात् ८ । सौ ७ । अधौ ७ ॥ २२ ॥

व्याकरणम् ।

फेदङ् । अनडुहो दङ् स्यात् फे परे । अनडुद्भिः ।
"वसुसंसु ध्वंसनडुहां दः" पा । "स्रम्ध्वस् वस्वनडुहां दङ् फे" सु ॥ २० ॥
तथा वस्वन्तस्य । वसुप्रत्ययान्तस्य तथा अर्थात् फे परे दङ् स्यात् । अविद्वद्भिः ॥ २१ ॥

मन्यते गुरुतात्वन्त्यस्यातः स्यात् सावधौ । अतुप्रत्ययान्तस्याकारस्य दीर्घता स्यात् अधौ सौ परे । कियान् । अधौ किं धीमन् !
"अत्वसन्तस्य चाधातोः" पा । "अत्वसोधोः सौ वोऽधौ" सु ॥ २२ ॥

श्रूयते सोऽप्यधोऽरामलोकं नैति पुनर्मृतः ।
अनेनाः कर्मभिर्ज्ञानमाप्नोत्यपि गृहे सुवः ॥ २३ ॥

अतः कामादीनां निग्रहं विनापि मोक्षः सुलभः ।

उतावयोऽन्तरात्मानमन्तर्यजनेनैव यजन्तेऽवयाजो
यदिह सोऽन्तः परेऽसंख्यातधामास्ते सतां बहि-
रवयास्तु लोकानेवानुरञ्जयति ॥ २४ ॥

अथ कश्चित् छात्रं प्रति । विद्वन्! श्रूयतां ।

भक्तिद्वेषावुभावेव मोक्षे हेतू ध्रुवं श्रुतम् ।
तयोः कारणता कीदृक् सुमेधस्तन्निरुच्यतां ॥ २५ ॥

---

श्रूयत इति । अनेनाः पापरहितो जनः अपि गृहे सुवः सुखेन वसन्नपि कर्मभिरेव ज्ञानं आप्नोति स मृतः सन् पुनः अधःस्थितं अरामलोकं अरमणीयं भुवनं नैति न गच्छति इति श्रूयते । तदुक्तं कर्मणैव हि संसिद्धिमास्थिता जनकादय इति । श्रूयते ८' । सः १' । (अपि) अधोः ६' ॥ २३ ॥

उतेति । उत भोः अवयः ! यागशील ! अवयाजो याजका जनाः अन्तरात्मानं परमेश्वरं अन्तर्यजनेनैव यजन्ते पूजयन्ति । यत् यस्मादिह जगति स परेट् परमेश्वरः सतां अन्तःअन्तःकरणे एवास्ते । स कीदृशः असंख्यातधामा असंख्येयतेजाः । बहिरवयास्तु बहिर्यजनशीलस्तु केवलं लोकान् अनुरञ्जयति । अवयाजः ६' । (यदि) इमः १ । अन्तः १' । परे ७ । इमं १' ॥ २४ ॥

भक्तीति । तयोर्भक्तिविद्वेषयोः कारणता मोक्षं प्रति हेतुता कीदृक् केन रूपेण हे सुमेधः ! तन्निरुच्यतां । पद्यं । पूर्वसूत्रस्य उदाहरणमात्रं ॥ २५ ॥

व्याकरणम् ।

श्रूयते सोऽप्यधोः । धातुविकल्पाधन्तस्यापि तत्त्वात् । अनेनाः । भोः किं सुवः ॥ २३ ॥

अवयाजो यदि इमोन्तः परे इमं । अवयाजो इमं स्यात् यदि परत्व इमो विरामो वा स्यात् । अवयाः । हे अवयः ।

"अवयाः श्वेतवाः पुरोडाश्" गां । "श्वेतवाहुक्थशास् पुरोडशां इमं" मं ॥ २४ ॥

सुमेधः ॥ २५ ॥

तत् श्रुत्वा कश्चित् वैष्णवलिङ्गी पदावलीवेत्ता बङ्कभक्तजन-पुरस्कृत: उपभोग्याभिर्विलासिनीभि: सहोपविशन् मोक्षस्या-नुपादेयत्वमाह।

मोक्षो नो सन् येन भावस्य लुप् स्यात्

स्यान्तस्यारात् फेरवोऽहं वरं वा।

कुञ्जे यस्मिन् नन्दसूनुर्रसाभि:

क्रीडन्नास्ते तद्द्विषामस्तु मोक्ष:॥ २६॥

उर्के साधु: सुखं भुञ्ज्यात् किं स्यात् भूते सुखात्मके।

सितास्वादे विरक्त: सन् क इच्छति सितात्मताम्॥ २७॥

मोक्षइति। मोक्षो मुक्ति: नो सन् न साधु:। येन मोक्षेण भावस्य दास्य-वात्सल्यमधुरेत्यादेर्भावस्य अर्थे लुप् लोप: स्यात्। तत् तस्मात् यस्मिन् कुञ्जे नन्दसूनु: कृष्ण: रसाभि: गोपीभि: क्रीडन् आस्ते तस्य कुञ्जस्य आरात् समीपे अहं वरं फेरव: शृगाल: स्यां भवेयं। तद्द्विषां विष्णोर्विद्वेषिणां मोक्षोऽस्तु। ब्रह्म-ण्येव लयं यान्ति प्रायेण रिपवो हरे:। इतिब्रह्माण्डपुराणवचनादितिभाव:।

पक्षे। सूत्रस्य पूर्व्वापरभागौ उदाहरणम्। लुप् १। स्यात् ८। स्यान्तस्य ६। आरात् ५। फे ७।॥ २६॥

मुक्तितोपि दास्यादिरूपभक्तेर्माहात्म्यमुत्कर्षं दर्शयति उर्केति। साधु: उर्के जीवन् सन् सुखं भुञ्ज्यात् सुखात्मके सुखस्वरूपे भूते सति किं स्यात् किं प्रयोजनं स्यात्। तथाहि ईश्वरस्य सुखस्वरूपत्वेन तदेव सुखमुपभुञ्जीत तत्सारूप्यं विफलमिति भाव:। एतदेव दर्शयति। क: सन् पण्डित: सिताया: शर्कराया: आस्वादविरक्त: सन् सितात्मतां शर्करास्वरूपतां इच्छति इत्यन्वय:। (उर्केइति उर्कजीवने इत्यस्मात् क्विपि रूपं॥ २७॥

व्याकरणम्।

लुपस्यात् स्यान्तस्यारात् फे। संयोगान्तस्य लुप् स्यात् फे परे नतरात् परस्य। सन्। क्रीडन्। "स्यान्तस्याराल्लुप् फे" म्॥ २६॥

रात् किं ? उर्क॥ २७॥

तत् श्रुत्वा प्रश्नकर्त्ता साश्चर्यमाह।
जानामि नो गुरुर्नापि वर्त्मैतन्मामदर्शयत्।
उपासकानां पन्थानां मतश्चेत् गृह्यते तदा॥ २८॥

पदावलीवेत्ता वैष्णवः।
नान्तेवासी गुरोर्यः स्यात् कथञ्चासौ भवेद्गुरुः।
अधाविनो येन यत्नोऽन्वायी स स्यात् पथोऽस्य किम्॥ २९॥
शौचाचारविहीनेषु धूर्त्तैर्नीतेष्वसत्पथम्।
श्रद्धाहीनेषु धर्म्मोपदेशनानि फलीनि न॥ ३०॥

जानामीति। एतत् वर्त्म इमं पन्थानं अर्थात् भवदुक्तं मतं नो जानामि, नापि-गुरुः एतत् वर्त्म मां अदर्शयत्। अन्यत् सुगमं।

पद्ये। जाइति जन्यस्य सम्बोधनं। नामि ७। नः ६। गुरुः १॥ २८॥

नान्तेवासीति। योजनः गुरोः अन्तेवासी शिष्यो न स्यात् अर्थात् सद्गुरोः सकाशात् यस्य शिक्षा नास्ति असौ जनः कथं गुरुर्भवेदितिशेषः। येन जनेन यत्र पथि नो अधावि धावनं न कृतं सजनः अस्य पथः कथं अन्वायी प्रदर्शकः स्यात्।

पद्ये। सूत्रस्य पूर्व्वापरभागौ उदाहरणम्। सौ ७। भवेत् ८। गुरुः १। अधौ ७। इनः ६॥ २९॥

शौचेति। धूर्त्तैर्व्वञ्चकैः असत्पथं नीतेषु प्रापितेषु धर्म्मोपदेशनानि फलीनि फलवन्ति न भवन्तीतिशेषः। शौ ७। च॥ ३०॥

### व्याकरणम्।

नामि नो गुरुः। नामि परे नान्तस्य दीर्घः स्यात्। पद्मानां।
"नोपधायाः" पां। "नो नामि घैः" मुं॥ २८॥

सौ भव्याद्गुरुः अधाविनः। इनन्तस्य दीर्घः स्यात् अधौ सौ परे। अन्तेवासी। "इन् पूषार्य्यमेनोऽधौ सौ शौ घैः" मुं॥ २९॥ शौच। शौ परेच तथा स्यात्। फलीनि "इन् हन् पूषार्यम्णां शौ" पां॥ ३०॥

अतोऽहं युष्माकं मोपदिशामि । तत् श्रुत्वा प्रश्नकर्त्ता । असावस्मद्गुरुनिन्दकः अस्य वचनानि कर्णदाहीनीति कर्णौ पिधाय गन्तुमुद्यतं वीक्ष्य कश्चित् शैवलिङ्गी यथेष्टाचारी कृत्ति-वासाः तं हस्ते गृह्णन् तं प्रति । महाशय ! उपविशतु गुरु-निन्दकोऽसौ स्वयमेव नङ्क्ष्यति गुरोस्तव वा का क्षतिः । तदेवं पश्य ।

दहन् सुवर्णमङ्गारो भस्मसात् भवति स्वयम् ।
भागुरुत्वमहत्त्वानि हेम्नो नाशीनि न क्वचित् ॥ ३१ ॥

अपि चार्य्य महन् पुष्णो द्विट् राहुर्लोकचक्षुषः ।
तत् किं तमोहा वाच्यः स्यात् चण्डालं तं हि वक्ति तत् ।३२।

दहन्निति । हेम्नः सुवर्णस्य भा दीप्तिः गुरुत्वमहत्त्वानि च क्वचिदपि न नाशीनि न नष्टानि भवन्तीतिशेषः । सुवर्णपदेन प्रशंसनीयत्वं व्यज्यते । वर्णित-वस्तुनिविस्तारे इत्यस्य रूपत्वात् ।

पक्षे । पूर्व्वसूत्रस्य उदाहरणमात्रं ॥ ३१ ॥

अपिचेति । अपिच अन्यञ्च पश्येत्यर्थः । हे आर्य्य ! सत्कुलोद्भव ! हे महन् ! लोकचक्षुषः पुष्णः सूर्य्यस्य द्विट् द्वेष्टा राहुः तत् तस्मात् राहुद्वेषमात्रात् तमोहा सूर्य्यः वाच्यो निन्दनीयः स्यात् अपितु नेत्यर्थः । तत् तस्मात् कर्म्मणः तं हि तमेव राहुं चण्डालं वक्ति लोकइतिशेषः । तथाहि गुरुरेव लोकचक्षुस्तमोनाशकश्च तस्य निन्दनादयमेव चण्डाल इतिभावः ।

पक्षे । द्विडित्यादिकं उदाहरणम् । ( अपिच ) आर्य्यमहन्पुष्णः ६ ॥ ३२ ॥

व्याकरणम् ।

कर्णदाहीनि । नाशीनि ॥ ३१ ॥

अपिचार्य्यमहन्पुष्णः । एषामपि दीर्घः स्यात् । तमोहा ॥ ३२ ॥

भैरव्याह भैरवं प्रति । सत्यमेतत् ।
वाच्यो न पूषा ननु किन्तु यस्त्वसौ
यथेष्टमाचार्य्यजिनच्छदः पतन् ।
अनाह्निकाचारतमश्चरोऽद्विजो
नचास्य चक्षुर्नतमोनुदर्य्यमा ॥ ३३ ॥

तत् श्रुत्वा कश्चित् शाक्तो वीराभिमानी कषायपटो भैरव्याः सकोपमिवाग्रन् एवं प्रत्याह ।

द्वेष्टान्धकघ्नः शक्राद्यावासद्रुखण्डामोहनोऽनतः ।
योऽश्वो ज्ञेयोऽघकारः स मानघ्नो महतां सताम् ॥ ३४ ॥

---

वाच्यइति । ननु भोः पूषा सूर्य्यः वाच्यो निन्दनीयो न, किन्तु यस्त्वसौ अजिनच्छदः पतन् अजिनं चर्म्म छदः पक्षो यस्य तादृशो यः पतन् पक्षी चर्म्मचटी वादुड़ इतिनामपक्षी असौ निन्द्यः । अर्य्यमा सूर्य्यः अस्य पक्षिणो न चक्षुः न वा तमोनुत् अन्धकारनाशकः, दिवान्धत्वात् रात्रिचरत्वाच्च । स कीदृशः यथेष्टाचारी स्वेच्छाचारी अनाह्निकाचारतमश्चरः नास्ति आह्निकः दिवाकर्त्तव्यः आचारो गमनभोजनादिरूप आचारो यस्य स तथा तमश्चरः अन्धकारचरः ततः कर्म्मधारयः । अद्विजः डिम्बजाताः पक्षिणो द्विजास्तद्भिन्नः एकदैवोत्पन्नत्वात् । शैवलिङ्गपक्षे । यस्त्वसौ यथेष्टाचारी अजिनच्छदः कृत्तिवासाः तमश्चरः तमोगुणावलम्बी अनाह्निकाचारः सन्ध्यावन्दनादिहीनः अद्विजः अब्राह्मणः अतएव पतन् पतितः । अस्य एतादृशस्य जनस्य गुरुर्न चक्षुः न वा तमोगुणनाशकः इति तात्पर्य्यार्थः । ( पतत्पत्त्ररथाण्डजा इत्यमरः ) ।

व्याकरण पक्षे । पूर्व्वसूत्रस्य उदाहरणमात्रं ॥ ३३ ॥

द्वेष्टेति । अस्य योजना अन्धकघ्नः शिवस्य शक्राद्य द्वेष्टा कमलीनां खण्डानां मोहनः भ्रामकः अनतः अनम्रः सतां साधूनां मानघ्नः सः अघकारः पापकारी ज्ञेयः ।

पक्षे । पूर्व्वापरभागौ उदाहरणं । घ्नः ६ । अनतः ६ । यः १ । श्वः १ । ज्ञेयः १ । घकारः १ । सः १ ॥ ३४ ॥

व्याकरणम् ।

पूषा । अर्य्यमा ॥ ३३ ॥ घ्नोऽनतः यो श्वो ज्ञेयोघकारः सः । नास्ति अतृयस्य तादृशस्य घ्नो यो श्वः स घकारः स्यात् । अन्धकघ्नः । मानघ्नः ॥ ३४ ॥

तदयं पाषण्डो हन्तव्यः । यतः ।

अहत्वा निन्दकं योऽवाङ् गुरुनिन्दां शृणोति सः ।
धीचणिन्नुमतोऽघायचयीचत इति श्रुतेः । ३५ ।

तदहं वीरः षट्कर्म्मकुशलः अभिचारेनास्य खलस्य पाषण्डस्य निराकर्त्तास्मि ।

मुष्ट्यन्तराश्चोपि खला विशङ्क्या विवर्द्धिता यल्लघवोपि हिंस्राः ।
भवेयुरच्छिन्ननखोपि यूनां प्रियास्तनाश्वं व्रणमादधाति ॥ ३६ ॥

अहत्वेति । योजनः निन्दकं जनं अहत्वा अवाङ् अधोमुखः सन् गुरुनिन्दां शृणोति नुभोः धीचणिन् ! धीरेव ईक्षणं चक्षुर्विद्यते अस्येति धीचणिन् इति सद्गुणज्यरीतिवदविरुद्धं । स जनः अघायचयी पापसञ्चयी मतः कथितः । इति श्रुते इतिशास्त्रे ईच्चते ।

( श्रुतं शास्त्रावधृतयोरिति कोषः ) ।

पक्षे । धीच इति बुद्धिचक्षुः सम्बोधनं । पूर्व्वापरभागौ उदाहरणं । (श इत्)
णित् १ । नु १ । मतः १ । घौ ७ । अच ५ ॥ ३५ ॥

मुष्ट्यन्तरेति । मुष्ट्यन्तराश्चोपि मुष्ट्यन्तरे मुष्टिमध्ये अश्नन्ति ये ते तथा अत्या-सक्ता इत्यर्थः । तादृशा अपि खला विशङ्क्याः आशङ्कनीयाः । यत् यस्मा लघवोपि क्षुद्रा अपि ते विवर्द्धिताः सन्तः हिंस्राभवेयुः । इममर्थं दर्शयति । यूनां अच्छिन्नमखोपि प्रियायाः स्तनगतं व्रणं आदधाति जनयति ।

पक्षे । पूर्व्वसूत्रस्य उदाहरणं ॥ ३६ ॥

व्याकरणम् ।

णिन्नुमतोघायच योच्चते इतिश्रुते । अवौ णकारेत् नु, अच् यस्मात् णकारानुबन्धा नुः मतः कथितः घौ परे । इतिशास्त्रे ईच्चते । अच इत्यस्मात् विसर्गस्य यकार आगमः । "उगिदचां सर्व्वनामस्थानेऽधातोः" णं । "मिदचोऽन्त्यात्परः णिघौ" सूं ॥ ३५

मुष्ट्यन्तराश्चः । प्रियास्तनाश्वं ॥ ३६ ॥

तत् श्रुत्वा शैव उच्चैर्हसन् शाक्तं प्रति ।
विद्वन् ! त्रासोऽरितोभाव्योऽवितोऽपि सच्च चेद्भवेत् ।
तदा शक्तिं भजन् वीर ! किं त्वं साधितवान् फलं ॥ ३७ ॥

वैष्णवः सस्मितम् ।

नह्विरुक्तेः फलं जाने पशुहिंसासवादिकम् ।
वीरत्वफलमासे तत् बिभ्यद्वीरेष्वहं पशुः ॥ ३८ ॥
वेशद्वार्ष्वानन्दसुप्यपि वीरङ्कं शक्तिभाग्वरम् ।
कतिष्वहःसु नाद्राक्षं श्वभ्योऽद्भ्यः स्वावनेऽक्षमम् ॥ ३९ ॥

विद्वन्निति । हे विद्वन् ! अरितः शत्रुत एव त्रासो भयं भाव्यः चिन्तनीयः चेत् यदि सच्च त्रासः अवितोऽपि मित्रतोऽपि भवेत् तदा हे वीर ! शक्तिं सामर्थ्यं भजन् त्वं किं फलं साधितवान् । पक्षान्तरे । हे वीर ! वीराचारिन् ! शक्तिं देवतां भजन् सन् अन्यत् समानं ।

व्याकरणपक्षे । पूर्वापरभागौ उदाहरणं । ( ऋ इत ) रितः ५ । भाव्यः १ । ( उ इत ) वितः ५ । ( अपि ) सः १ ॥ ३७ ॥

नह्विरुक्तेरिति । ह्विरुक्तेः ह्विवारं उक्तस्य फलं न अस्तीति शेषः । जाने अहं वेद्मि पशुहिंसासवादिकं वृथापशुहिंसामदिरापानादिकमेव वीरफलं वीराचारस्य फलं । तत् तस्मात् वीरेषु वीराणां समीपे पशुरहं पश्वाचारी अहं बिभ्यत् त्रसन् सन् आसे तिष्ठामि ।

पक्षे । परभाग उदाहरणं । न १ । ह्विरुक्तेः ६ । फलं २ । जाने ८ ॥ ३८ ॥

वेशेति । वेशद्वार्षु वेश्यालयस्य द्वारेषु आनन्दसुपि आनन्दशय्यायां आनन्देन सुप्यते अस्यामिति आनन्दसुप् तस्यां । शक्तिभाग्वरं सामर्थ्यवतां श्रेष्ठं । प्रकृत पक्षे शक्त्युपासकश्रेष्ठं कं वीरं शूरं । प्रकृतपक्षे कं वीराचारिणं कतिषु अहःसु न अपश्यं अपितु सर्वानेव वीरान् बहुषु अहःसु वेश्याद्वारि दृष्टवानहं । किम्भूतं अद्भ्यः भुञ्जानेभ्यः कुक्कुरेभ्यः स्वावने आत्मनो रक्षायां अक्षमं अशक्तं । मदा-वेशेनाचेतनत्वात् यो वीरः कुक्कुरतः आत्मरक्षणे अशक्तः स कथं परं हन्यादिति-भावः । पक्षे । पूर्वापरभागौ उदाहरणं । सुपि ७ । विः १ । रङ् १ ॥ ३९ ॥

व्याकरणम् ।

रितोभाव्योवितोपि सः । ऋकारेतः उकारेतश्च स नुम् भाव्यः । विद्वन् । भजन् ॥ ३७ ॥

न ह्विरुक्तेः फलं जाने । ह्विरुक्तस्य फलीभूतं णत्वषत्वादि न पश्यामि । बिभ्यत् ॥ ३८

शाक्तः सक्रोधं । आः कष्टं अयं खलु कियद्भिर्मुखैः पारिषदैः कृतोजित आत्मानं बहुमन्यमानः अस्मानपि वीरान् अव-जानाति । शैवः सस्मितम् ।

पौतेन हि शुनस्तूर्व्वोरत्योजस्तावद्दीप्यते ।
शुना तेन तु यावन्न द्वीपिगन्धोऽनुभूयते ॥ ४० ॥

शाक्तः वैष्णवं प्रति । रे पाप ! शुनां सदृशषट्कर्म्मकुशला वयमिति मनागपि हृदि न जागर्त्ति ।

अहो तथावेतमघोनोयूनश्च्यवनस्य यत् ।
कृत्याभिचारिकी सास्त्रं मघोनोऽस्तम्भयत् करम् ॥ ४१ ॥

पौतेनेति । पोतानां शिशूनां समूह इति पौतं तेन पोतसमूहेन शुनः कुक्कुरस्य ऊर्व्वोः ऊरुद्वयस्य अत्योजः अतिबलं तावदेव दीप्यते । तेन तु शुना द्वीपिगन्धो व्याघ्रस्य गन्धो यावत् न अनुभूयते नोपलभ्यते इत्यन्वयः ।

पक्षे । अत्योज इत्यादिकं उदाहरणं । पौ ७ । त ७ । नहि १ । शुनः ६ । (तु १ । ऊः १ । वः ६ ॥ ४० ॥

अहोइति । अहो यनश्यावनस्य अश्विनीकुमारस्य चिकित्सया तरुणीभूतस्य च्यवनस्य मुनेः अभिचारिकी कृत्या अभिचारक्रिया मघोन इन्द्रस्य साऽऽवज्रं करं यत् अस्तम्भयत् अहो अघो ! अघवन् ! तथा तद्वृत्तान्तं न अवेतं अवगतं न अपितु त्वया अवगतमेवेत्यर्थः । तथा २ । अवेत ८ । मघोनः ६ । यूनः ६ ॥ ४१ ॥

व्याकरणम् ।

सुपि वीरङ् । रङ् विसर्गः स्यात् सुपि परे नत्वन्द रेपस्य । अद्भः सु । रङः किं द्वार्षु ।

"रोः सुपि" पा । "रङो विः सुपि" मु ॥ ३८ ॥

पौ ते नहि शुनस्तूर्व्वः । श्वन्शब्दस्य व ऊः स्यात् पौ परे नतु तद्धिते । शुना । "श्वयुवमघोनामतद्धिते" पा । "श्वयुवमघोनामुर्व्वोऽतेपौ" मु ॥ ४० ॥

तथावेत मघोनो यूनः । एतयोरपि व ऊः स्यात् पौ परे नतु ते । मघोनः, यूनः ॥ ४१ ॥

(वैष्णव: सस्मितम्।)

यौवनं किं विजानीयात् दुर्व्वासा: किल वेत्ति न:।
वैष्णवायाम्बरीषायाभ्यचरत् यो जटां लुटन्॥ ४२॥

अथ विदूषक: वैष्णवादीन् प्रति। अहो महाशया: एते सभ्या: विरक्ता: एवं वदन्ति। हा किं कष्टं एते पाषण्डा: कथं विवदन्ते प्रश्नस्योत्तरं न स्पृशन्ति। अथ कश्चिन्मीमांसक: स्वमतसिद्धमुक्तिपदार्थनिर्व्वचनेन वैष्णवस्य मतं खण्डयन् तमुपहसन्नाह।

धवमनोऽयमफेरवजन्म नो
लसति नित्यसुखानुभवार्थिनो।
अहहतविद्विड़सौ बकुजम्बुकी
रतिफलां जनिमिच्छति किं प्रशान्॥ ४३॥

---

यौवेति। यौवनं युनां समूह: किं विजानीयात् दुर्व्वासा मुनिरेव नोऽस्मान् वैष्णवान् वेत्ति जानाति यो दुर्व्वासा: जटां लुटन् जटां छिन्दन् सन् वैष्णवाय अम्बरीषाय राज्ञे अभ्यचरत् अभिचारं कृतवान्॥ ४२॥

धवेति। धवमन: मनुष्यस्य मन: अयमफेरवजन्म अयमं अधमं यत् फेरवजन्म शृगालजन्म तत्त लसति नेच्छति किम्भूतं नित्यसुखानुभवार्थि नित्यसुखसाक्षात्‌कारात्मकं मोक्षं अर्थयते इति तत् तथा। अहो आश्चर्य्यं असौ वैष्णव: अहृतविद्विट् अहृतस्य मोक्षस्य विद्वेषी बकुजम्बुकीरतिफलां जनिं जन्म इच्छति किं कथमसौ प्रशान् शान्तिरसस्थ:? पतिशाखिनरा धवा इत्यमर:।

पद्ये। अरवेत्यादिकं उदाहरणं। धव म १ं। न: १ं। यमफे ५ं॥ ४३॥

व्याकरणम्।

अतस्थिते किं? यौवनम्॥ ४२॥

धवमनोयमफे। धातुसम्बन्धिमस्य न: स्यात् मे मे फेव परे। प्रशान्।
"मो नो धातो:" पां। "धोर्मो न: फम्बि" सु॥ ४३॥

तत् श्रुत्वा दुरितनिवृत्तिरूपमुक्तिवादी नैयायिकः ।

अये ! मीमांसकोच्चैर्व्वाग्घ्युत्तरस्यपथस्थितः ।
न मद्विधो ना पन्थानमेत्यन्यैर्न्यस्तकण्टकम् ॥ ४४ ॥

मीमांसकः सस्मितम् ।

जाल्मेन सहसा वाटे रथ्ये कृष्टेऽपि कण्टकैः ।
पिनद्धोपानहां रोढुं शक्यः पन्थाः सखे नहि ॥ ४५ ॥

---

अये इति । अये मीमांसक ! उच्चैर्वाक् सम् हि अवधारणे अपथस्थितः सन् उत्तरसि उत्तरयसीत्यर्थः मद्विधो ना पुरुषः अन्यैः न्यस्तकण्टकं पन्थानं न एति न गच्छति । तथाहि नित्यसुखसाक्षात्कारो मोक्ष इति मतं दूषितमस्माभिरितिभावः ।

पक्षे । अये इत्यादिकं सम्बोधनं । थिध इत्यादिकन्तु उदाहरणं । घ्युत्तरस्य ६ । पथः । ६ । थितः ६ । नमत् १ ॥ ४४ ॥

जाल्मेनेति । जाल्मेन असमीक्ष्यकारिणा जनेन सिद्धे प्रसिद्धे वाटे वर्त्मनि कण्टकैः कृष्टेऽपि पिनद्धोपानहां सपादुकानां जनानां किं स पन्थाः रोढुं आरोढुं नहि शक्यः अपितु शक्य एवेत्यर्थः वाटो मार्गो हतिस्थाने इति कोषः ।

पक्षे । जाल्मेन सहेत्यस्य रोढुमित्यनेन सम्बन्धः रथ्ये कृष्टेत्यादिकं उदाहरणं सो ७ । आः १ । टेः ६ ॥ ४५ ॥

व्याकरणम् ।

घ्युत्तरस्य पथः थितो नमत् । घिः उत्तरे यस्य तस्य पथिन् शब्दस्य थितः थस्य इत्व इति तस्य थितः नमत् नम् अत् च स्यात् थस्य नम स्यात् इकारस्य आकारः स्यात् । पन्थाः ।

"पथिमथ्यृभुक्षां थितो नं मौ घौ" सू ॥ ४४ ॥

सातादेः । पथिन् शब्दस्य टेराः स्यात् सौ परे । "पथिमथृभुक्षामात्" इत्यादि पा । "टेरा सौ" सू ॥ ४५ ॥

नैयायिकः । वयं जाग्रमाएव । तद्भवतु एतस्य प्रत्युत्तरयतु भवान् ।

लोपोऽघावचितस्य स्यात् देहस्याघे हतेऽथ किम् ।
स्वावच्छेदं विना जन्यज्ञानं केन यथोत्थितम् ॥ ४६ ॥

देहं विना नित्यसुखानुभवरूपमोक्षो न सम्भवति तस्य जन्यज्ञानस्वरूपत्वात् ।

जीवस्य यत् कर्म्मपाशमोक्षो मोक्षः स एव हि ।
अत्यन्तदुःखहानिर्व्वा यथोऽन्यान् त्यज दुर्गमान् ॥ ४७ ॥

एतत् श्रुत्वा कश्चित् बौद्धमतावलम्बी पाषण्डः । अहो जीवः कः तस्य मोक्षोवेति ।

जगद्वेष्टोत्तरयशोयोऽड़ौर्व्वानलद्दीप्तिमान् ।
बुद्धो दयालुर्जयति यस्याष्टौ सिद्धयः करे ॥ ४८ ॥

लोप इति । अघे पापे हते अर्थात् मोक्षदशायां ज्ञानात् पापे नष्टेसति अघावचितस्य पापेन सञ्चितस्य देहस्यापि लोपः स्यात् अथ देहनाशानन्तरं स्वावच्छेदं स्वस्य अन्यज्ञानस्य अवच्छेदं अवच्छेदकीभूतं देहं विना किं कथं जन्यज्ञानं नित्यसुखानुभवरूपं अन्यज्ञानं केन यथा उत्थितं जनितं स्यात् । स्वावच्छेदकीभूतं शरीरं विना जन्यज्ञानं न सम्भवतीत्यर्थः ।

पक्षे । देहेत्यादिकं पदाहरणं । लोपः १ । अघो ७ । अचि ७ । तस्य ६ । स्यात् ८ ॥ ४६ ॥

जीवस्येति । अत्यन्तदुःखहानिः आत्यन्तिकदुःखनिवृत्तिः । अन्यत् सुगमं ॥ ४७ ॥

जगदिति । दयालुः सर्व्वभूतहिंसापरिशून्यः बुद्धो जयति । कीदृशः जगद्वेष्टोत्तरयशो योऽड़् जगद्व्यापकं यत् उत्तरं उत्तमं यशः तत् शुष्यते इति स तथा

व्याकरणम् ।

लोपोघावचितस्य स्यात् । तस्य पथिन् शब्दस्य टेर्लोपः स्यात् अघावचि परे । यथा । "भस्य टेर्लोपः" पां । "लोपोऽव्ययघो" मु ॥ ४६ ॥ पथः ॥ ४७ ॥

अष्टोत्तरयशोजो डौर्व्वा । यस् च जस् च इति योजः तस्य अष्टशब्दोत्तरयः उत्तरगतः यस् जस् च डौर्व्वास्यात् । अष्टौ । "अष्टाभ्य औश्" पां । "आष्टनो जश्शसोर्डौः" मु ॥ ४८ ॥

उक्तौ वाङ्ग ततायां किं फलं ह्यष्टासु दिक्ष्वपि ।
अनुसन्दधतो मेऽभून्नात्मा क्वाप्यक्षिगोचरः ॥ ४९ ॥

तस्मान्नास्त्यात्मा भूतान्येव चेतनावन्ति अतो भूतानां भूतेषु लयएव मुक्तिः । अथ प्रविश्य वेदान्ती बहुशिष्यवृतस्तन्मतं निराकुर्व्वन्नाह ।

भ्रमएवायं बोधइति मन्यतेऽसावियमयमिदमिति
स्त्रीत्वपुंस्त्वयोरभावात् यदेकमिव ब्रह्माद्वितीयं ।
तस्य न पुमान् न योषिदपि जगतीयमपि तन्मयीति ॥ ५० ॥

जगद्व्यापि उत्तमयशोयुक्त इत्यर्थः । क्रीड़िति जुषधातोर्क्विप् प्रत्यये सिद्धं । अष्टौ सिद्धयः । अणिमादयः । उत्तर प्रतिवाक्ये स्यात् विराटतनये पुमान् विष्णु श्रेष्ठे इति कोषः ।

पक्षे । जगदेइति गच्छतः पक्षिणः सम्बोधनम् । अष्टोत्तरयशोजः १ । क्रौः १ । वा १ ॥ ४८ ॥

उक्ताविति । अङ्ग सम्बोधने । ततायां विस्तृतायां उक्तौ वाचि वा किं फलं हि यस्मात् अष्टासु दिक्षु अपि अनुसन्दधतो मे अनुसन्धानं कुर्व्वतो मम । क्वापि आत्मा दृग्गोचरो नाभूत् । अर्थात् आत्मा नास्तीत्यर्थः ।

पक्षे । उ सम्बोधने गइति गन्धर्व्वस्य सम्बोधनम् । अन्यत् उदाहरणं । क्तौ ७ । वा १ । आङ् १ ॥ ४९ ॥

भ्रमइति । असौ इयं अयं इदमित्यर्थं बोधो भ्रमएवेति मन्यते । भ्रमत्वे हेतुमाह स्त्रीत्वेत्यादिकं सुगमं ।

पक्षे । सूत्रस्य पूर्व्वापरभागौ उदाहरणं । मन्यते ८ । सौ ७ । इयम् १ । अयम् इदमिति १ । स्त्रीत्वपुंस्त्वयोः ७ ॥ ५० ॥

व्याकरणम् ।

क्तौ वाङ् । अष्टनः आङ् स्याद्वा क्तौ परे । अष्टासु । "अष्टनः आ विभक्तौ" पां । "आ क्तौ वा" मु ॥ ४९ ॥

मन्यते सावियमयमिदमिति स्त्रीत्वपुंस्त्वयोः । इदमितिशब्दः स्त्रीलिङ्गपुंलिङ्गयोः क्रमात् इयम् अयम् स्यात् सौ परे । अयम्, इयम् । "७ ।२ । १०८ । १११" पां । "इदमोऽयमियं पुंस्त्रियोः सौ" मु ॥ ५० ॥

अयमेकोपि बहुधा भवति। तथाहि।

विश्वस्यादौ भवेन्मोदोऽदःप्रतीकोऽप्युरत्यये।
अस्य मध्ये तदितिअव मोम्वाच्यं तदिमे त्रयः॥ ५१॥

अरे नो जायतेऽनगिदमष्टौ सिध्यन्त्यस्य सिद्धयः स्वतएव
अनेनैव हृदिस्थेन अनयोः सदसत्प्रवृत्त्योर्नियोज्यन्ते दैहिनः॥५२

---

विश्वस्येति। अदो ब्रह्म विश्वस्यादौ सृष्टिसमये मः ब्रह्मा भवेत् भवतीत्यर्थः। मकारेणोच्यते ब्रह्मेति कोषः। अत्यये प्रलयसमये अदः प्रतीकः अमुष्य विश्वस्य प्रतिकूलः संहारकारकः उः रुद्रो भवति तत् ब्रह्म मध्ये स्थितिसमये अः विष्णुरपि पालकस्वरूपो भवति। इत्येवंरूपेण तत् ब्रह्म इमे ब्रह्मादयस्त्रयोऽभवत् ओङ्कारपदवाच्यं भवतीत्यन्वयः। अकारोविष्णुरुद्दिष्ट उकारस्य महेश्वरइति। प्रतिकूले प्रतीकोऽस्त्रीति कोषः।

पक्षे। उरत्यये इत्यादिकं उदाहरणं। विश्वस्यादौ ७'। भवेत् ८। मः १'। दः १'। अदः प्रतीकः १'। (अपि ३' ॥ ५१ ॥

अरे इति। इदं ब्रह्म नो जायते उत्पत्तिरहितमित्यर्थः। अनक् न नश्यतीति अनक् अविनाशीत्यर्थः। अस्य ब्रह्मणोऽणिमादयः अष्टौ सिद्धयः स्वतएव सिध्यन्ति अनेनैव ईश्वरेण हृदिस्थेन सता अनयोः ज्ञायमानयोः सदसत्प्रवृत्त्योर्देहिनो नियोज्यन्ते।

पक्षे। ध्वान्तस्येत्यादिकं उं। ध्वान्तस्य बुद्धिनाशकस्य। अरे इति सम्बोधनं। अमः १'। जायते ८'। अनगिदमः ६'। टौसि ७'॥ ५२ ॥

## व्याकरणम्।

विश्वस्यादौ भवेन्मोदोऽदःप्रतीकोपि। सकलस्यादौ परे अर्थात् विभक्तिषु परासु अदःशब्दावयवीभूतोदः अपिकारादिदमोदश्च मः स्यात्। इमे। "७। २। १०९। पाणिनिः" "दोमोऽदश्चक्तौ" सूं॥ ५१॥

अनोजायतेऽनगिदमष्टौसि। अकृवर्ज्जितस्य इदमुशब्दस्य स्थाने अनो जायते टौसि परे। अनेन अनयोः। "७। २। ११२। पाणिनिः" "टौसोदमोऽनकोऽमः" सूं॥ ५२॥

अन्येऽस्मिन् हेतुरीशेच्छाऽसभ्यः कर्त्तास्मि वेत्त्यदः ।
शिक्षास्य नास्ति किं शक्त्या कोषं निर्म्मातिरसौ कृमिः ॥ ५३ ॥

तेनैवेश्वरोऽनुमितोभवति ।

विदूषकः अहो मनोदया ! भवतां वृथावाक्प्रपञ्चेन न प्रकृतार्थसिद्धिर्भवति पूर्व्वपक्षस्योत्तरं चिन्तयत यदि समर्थाः ।

(वेदान्ती) श्रूयतां ।

द्वेषो दृढोऽस्तु परमेष्ठिनि वास्तु भक्ति-
रेभिः सदैव मनु वाङ्मनसे पतेतां ।
प्रार्थ्योऽस्ति कोऽत्र तु भवद्भिरदः परोपि
कूटस्थ एव यदि तद्विषयः कथञ्चित् ॥ ५४ ॥

अन्यइति । अन्ये उत्पत्तिमति अस्मिन् पुरोवर्त्तिनि जगति ईशेच्छा हेतुः असभ्यो जनः अहं कर्त्तास्मि अदः इतिवेत्ति मन्यते तस्य ज्ञानस्य भ्रमत्वे बाधकमाह । असौ कृमिः पट्टसूत्रकारः कीटः किंशक्त्या किंसामर्थ्येन कोषं निर्म्माति तस्य कीटस्य तन्निर्म्माणे शिक्षा नास्ति कोषनिर्म्माणस्यादर्शनात् । शिक्षेति अभ्यासस्योपलक्षणं । तस्मादैशिकशक्त्यैव निर्म्मातीति सिध्यतीतिभावः ।

पक्षे । पूर्व्वापरभागौ उदाहरणं । समि ७ । अः १ ॥ ५३ ॥

द्वेष इति । परमेष्ठिनि परमेश्वरे दृढो द्वेषोऽस्तु । अथवा भक्तिरस्तु । ननु द्वेषात् कथं सिध्यतीत्यत आह । एभिर्भक्तिद्वेषैः सदा सर्व्वावस्थायामपि द्वेषमनु ईश्वरं प्रति वाङ्मनसे पतेतां । तथाहि योनिप्रियो द्वेष्यो वा भवति तं प्रति सर्व्वदैव वाक्यं मनश्च पततीति प्रसिद्धिः । ननु किन्तेनेत्यत आह एष कूटस्थः एकरूपतया कालव्यापी अथोद्गोश्वरः कथञ्चित् केनापि भक्तिद्वेषादिना यदि तद्विषयः स्यात् तदा एभिर्न्द्भिः अदः परोपि एतदन्योपि प्रार्थ्यः प्रार्थनीयः कोऽस्ति अपितु न कोपि ।

पक्षे । न्द्भिरित्यनत्यरं ए सम्बोधनम् । भिः १ । अदः परः १ । (अपि) कूटस्थः १ ॥ ५४ ।

व्याकरणम् ।

सूभ्यः । अनक इदमः अः स्यात् से भे च परे । अस्मिन् । अस्य ।

"७ । २ । ११३ । पाणिनिः" "समाः" सं ॥ ५३ ॥

भिरदः परोपि कूटस्थः । अनगिदमः परः अदःपरोपि भिस् एकरूपतया व्यापी स्यात् अथेन तस्य नत्वैस् । एभिः । "७ । १ । ११ । पाणिनिः ।"

"भिस् भिसोऽदसश्च" सं ॥ ५४ ॥

महेश्वरे वाङ्मनसयोः संयोगएव मोक्षसाधनं तं विना मोक्षसामग्री नान्यास्ति स तु येन केनापि भूयात्।

( विदूषकः। )

यद्येवं तर्हि विद्वेषोऽमीभिर्नाश्रियते कथम्।
मोक्षोपायोह्यसावेव निरपेक्षः सुनिर्व्वहः॥ ५५॥

( वेदान्ती। )

स्वतो नोत्पद्यते भावः परतोवापि देहिनाम्।
नाभ्यां समुदिताभ्यां वा ईशेच्छा हेतुरस्य च॥ ५६॥

अथ प्रश्नेषूत्तरितेषु सर्व्वैं तं साधुसाध्विति। वेदान्ती पृच्छति।

कावेतौ भोः द्वितीयाटौ सीदैतयोर्व्वादानुवादेऽवच्छते
एनः शृण्वतां तदेनावेनांश्च ज्ञातुमिच्छामि॥ ५७॥

यद्येवमिति। यदि एवं विद्वेषोपि मोक्षे हेतुः स्यात्तर्हि अमीभिर्लोकैः कथं विद्वेषो नाश्रियते। हि यस्मात् असावेव मोक्षोपायो निरपेक्षः जपपूजादिकं नापेक्षते सुनिर्व्वहः सुखेन निर्व्वाह्यः।

पक्षे। पूर्व्वसूत्रस्य उदाहरणमात्रं॥ ५५॥

स्वत इति। भावः दास्यवात्सल्यमाधुर्य्यवैरादिभावानामेकतरोपि भावः स्वतः परतः समुदिताभ्यां मिलिताभ्यां स्वपराभ्यां वा न जायते। अस्यच भावस्य ईशेच्छा हेतुः। ईश्वरस्य इच्छयैव भावविशेषो भवतीत्यर्थः।

पक्षे। सूत्रस्य उदाहरणमात्रं॥ ५६॥

काविति। द्वितीयाटौ द्वितीयया भार्य्यया सह अटति गच्छतीति तौ तथा एतौ कौ। एतयोश्च वादानुवादे अवच्छते श्रुते सति शृण्वतां जनानां एनः पापं सीद अतिशयेन सीदति नश्यतीत्यर्थः। सीदेति भृशार्थे क्विः। सीदेत्यनेन पापं भवतीति व्यज्यते दुरुक्तेः पापजनकत्वात् पापनाशकत्वाभावाच्च। तत्तच्छादेतौ सश्लोकौ एतान् शैवलिङ्गादींश्च।

व्याकरणम्।

अमीभिः॥ ५५॥ आभ्यां॥ ५६॥

द्वितीयाटौसीदैतयोर्व्वादानुवादेऽवच्छते एनः। द्वितीयाटौसि परे इदमेतदो-रदैतयोर्भागयोरेनः स्यात् वादस्यानुवादे उक्तेः पश्चादुक्तौ अवच्छतायां॥ ५७॥

( विदूषकः ! )

यमिमं वीक्षसे धीमन् ! जटिलं कृत्तिवाससम्।
भूतेशानुचरं सिद्धं विद्धेनं भूतिभूषणम्॥ ५८॥

सदारौ याविमौ वादे सीदतोऽलं रुषा मनु।
एनौ वृन्दावनक्रोष्टुमहापीठभगादमौ॥ ५९॥

यद्विमे चासते सभ्या निष्पन्दाः सस्मितानना:।
एनान् विदूषकान् विद्धि द्वन्द्ववैचित्र्यदर्शिनः॥ ६०॥

म्लेच्छपत्रं मर्द्दयन्ती येयमास्तेऽस्य फेरवी।
एनेन भिद्यते भ्रान्त्वा गृह आसीनयाऽनया॥ ६१॥

पक्षे। कावेतावितिं पृथिव्यामागतयोः सम्बोधनम्। द्वितीया टौसि ७ं। इदैतयोः ६ः। वादानुवादे ७ं। अवधूते ७। एनः १ं॥ ५७॥

यमिति। कृत्तिवाससं चर्म्माम्बरं भूतिभूषणं भस्मभूषणं। एनं भूतेशानुचरं शिवस्यानुचरं विद्धि जानीहि। भूतेशानुचरपदेन इमं भूतं विद्धीति व्यज्यते।

पक्षे। पूर्व्वसूत्रस्य उदाहरणमात्रं॥ ५८॥

सदाराविति। यौ इमौ सदारौ सस्त्रीकौ वादे विवादे अलमत्यर्थं सीदतः अवसादं प्राप्नुतः एनौ। वैष्णवशाक्तौ वृन्दावनश्रृगालकालीघाटादिमहा-पीठव्याघ्रौ मनु जानीहि इत्यन्वयः।

पक्षे। सूत्रस्य उदाहरणम्॥ ५९॥

येति। द्वन्द्ववैचित्र्यं विवादवैचित्र्यं॥ ६०॥

म्लेच्छेति। म्लेच्छपत्रं गांजा इतिख्यातं। अस्य वैष्णवस्य। एनेन वैष्णवेन। अनया वैष्णव्यातु गृहे आसीनया भिद्यते।

पक्षे। पूर्व्वसूत्रस्य उदाहरणमात्रं॥ ६१॥

व्याकरणम्।

एनौ। एनान्। "२। ४। ३४" पा। "द्वितीयाटौस्स्वेनः" सू ॥ ५८॥ एनं एनौ॥ ५९॥ एनान्॥ ६०॥ एनेन॥ ६१॥

येयं कात्यायनी ग्रस्तं गायन्ती यस्य पार्श्वतः।
पूजाहोमजपाः पञ्च मकारा एव चैनयोः॥ ६२॥

अयन्तु वैष्णवः शूद्रकुलोद्भवो वैराग्यमाश्रितस्त्यक्तगार्हस्थ्याश्रमो निखिलपदावलीवेत्ता बहुवैष्णवीसेवितपादपद्मः एवं परमभागवतं जानीहि।

(वेदान्ती।) अहो पण्डाश्रमी पाषण्डोयं। यतः।
गार्हस्थ्यमेव शूद्रस्याश्रम एकोऽस्ति नापरः।
फेरवीयूथपो नापि श्रुतो नैष्ठिकनाश्रमी॥ ६३॥

तस्मात्। असमाधियुजोऽन्त्यस्य समासे ननु मागमः।
परेऽघावचया युक्ताः स्युरेभिर्लिङ्गिभिः सह॥ ६४॥

येयमिति। कात्यायन्यर्द्धवृद्धा या काषायवसनाधवेत्यमरः। ग्रस्तं लुप्तवर्णपदं यथास्यात् तथा गायन्ती अस्य पार्श्वतः शाक्तस्य पार्श्वे एनयोः भैरवीशाक्तयोः पञ्चमकाराः मद्यादिपञ्चकं।

पद्ये। उदाहरणमात्रं॥ ६२॥

गार्हस्थ्यमिति। ननु शूद्रस्यापि नैष्ठिकनाश्रमोस्ति इत्यत आह फेरवीयूथप-इति वैष्णवीपतिरित्यर्थः तथाहि दारसम्भोगिनां नैष्ठिकनाश्रमस्यासम्भव इत्यर्थः॥ ६३॥

असमाधीति। ईश्वरोपासनारूपो यः समाधिस्तस्याभावयुक्तस्य अन्त्यस्य अन्त्यजस्य समासे सहासते यत्रेति समासः एकासनं तस्मिन् मागमः मागच्छ एभिर्लिङ्गिभिः सह युक्ताः संसर्गिनः परे संसर्गोत्तरकाले अघावचयाः अघानि पापानि अवचिन्वन्ति सञ्चिन्वन्ति ये ते तादृशाः स्युः।

पद्ये। अवचयेत्यादिकं उदाहरणं। असमाधियुजः ६। अन्त्यस्य ६। समासे ७। न १। नुमागमः १। परे ७। घौ ७॥ ६४॥

व्याकरणम्।

असमाधियुजोऽन्त्यस्य समासे न नुमागमः परे घौ। असमाध्यर्थक युज्शब्दस्य अन्त्यवर्णस्थाने नुमागमः स्यात् घौ परे नतु समासे। "७। १। ७१। पाणिनिः"। "युजिरोऽसे नुण् घौ" सं॥ ६४॥

विहस्य पुनः सएव ।

अन्नार्थिनो भावसृजो विधत्ते
कङ्कं नवोपायमुतोदरार्थम् ।
बिभर्त्ति कौपीनमसृग्धराम्वा
काषायवासोऽप्यपरे दिशञ्च ॥ ६५ ॥

सर्व्वानुरक्तः सन् स्वेष्टाङ् चुक्रुञ्च स्थितिमुत्तमाम् ।
लिङ्गी क्रुङ्ङिव धर्म्मात्मा देवद्वेषोऽस्य भक्तता ॥ ६६ ॥
युङ् दिशोपि विनिर्याति रङ्ख्या स्वोदराङ् परम् ।
त्यक्तस्वधर्म्माचेर्षायुङ् धूर्त्तः सर्व्वप्रतिग्रहः ॥ ६७ ॥

---

अन्नेति। भावान् सत्त्वानि सृजतीति भावसृजो विधाता अन्नार्थिनो जनस्य कं कं वा उपायं अन्नोपायं न विधत्ते ? उत भोः यत् यस्मात् उदरार्थं कौपीनं बिभर्त्ति असृग्धरां चर्म्म कोपि बिभर्त्ति अपरः काषायवासो बिभर्त्ति। दिशञ्च दिग्वस्त्रञ्च बिभर्त्ति ?

पक्षे। अन्नार्थिनइति सम्बोधनं। कं नवेत्यादिकं उदाहरणं। भौ ७। असृजः ६। विधत्ते ८। कङ् २॥ ६५॥

सर्व्वेति। सन् साधुः सर्व्वानुरक्तः स्वेष्टाङ् स्वेष्टदेवपूजकः उत्तमां स्थितिं उत्तमं पदं मर्य्यादां वा चुक्रुञ्च प्राप लिङ्गी कपटव्रती क्रुङ् इव बक इव धार्म्मिकः अस्य लिङ्गिनः देवद्वेषः अन्यदेवताद्वेष एव भक्तता भजनं।

पक्षे। पूर्व्वापरभागौ उदाहरणं। अङ् चुक्रुञ्चः ६॥ ६६॥

युङिति। रङ्ख्या उपपत्त्या सह युङ् युक्तः सन् दिशोपि अर्थादतिदूरे नाना दिशो विनिर्याति भ्राम्यति परं केवलं स्वोदराङ् स्वोदरं अञ्चति पूजयतीति स तथा। सर्व्वप्रतिग्रहः सर्व्वेभ्यः प्रतिग्राही। युङ् दिशः ६। (अपि)॥ ६७॥

व्याकरणम्।

भावसृजो विधत्ते कङ्। असृजः कङ् विदधाति भौ परे। असृक।

"३।२।५८। ८।२।३०, ६२। पाणिनिः"। "ऋङ् क्रुङ् युङ् सृग् दिग सृग्ट त्विक् दृष्टक् दृक् स्पृक् सृगुणिङ्गां कुङ भौ" सुं॥ ६५॥

अङ् चुक्रुञ्चः। अञ्चवर्गान्तक्रुञ्चां कङ् स्यात् भौ परे। अनुरक्तः, क्रुङ्, भक्तता॥ ६६॥

युङ् दिशोपि। युजो दिशश्च कङ् स्यात् भौ परे। ईर्षायुङ्॥ ६७॥

सदाङ्गनाङ्गसङ्गस्रगुष्णीषोऽपि विना भवेत्।
ईशानुकम्पा वाक्चित्तवर्णस्रङ्मात्रसाधना ॥ ६८ ॥

एतत् श्रुत्वा लिङ्गिनः सक्रोधं वेदान्तिनं प्रति। श्रूयताम्।

वक्तापि स्यात् क्वचित् श्रोता जेता जेयो भवेत् क्वचित्।
ऋत्विजोऽप्यस्ति ऋत्विग्यदुपाध्यायस्य चापरः ॥ ६९ ॥
नशीतोष्णस्पृग्दृशोऽपि योगिनोऽमत्सरक्रुधः।
अविवेकी अवैरागी भवादृग्ब्रह्मवित् कथम् ॥ ७० ॥

अहो भवत्यपि। एकं ब्रह्मैवाद्वितीयं का वा योषित् कोवा पुमान् कोवा ब्राह्मणः केवेतरवर्णाः का वा दिक् कावा विदिक् इत्यादिजल्पन्तस्त्यक्तसमस्तवर्णधर्म्माचारा नित्यनैमित्तिकक्रिया हीनयथेष्टाचारशीला धर्म्मशास्त्रविद्वेषिणो धूर्त्ताः श्रद्दधानान् शिष्टान् द्विषन्ति उपहसन्ति च ईदृशा ब्रह्मज्ञानिनो बहवः सन्ति।

---

सदेति। सदा अङ्गनासङ्गं विना स्रजं मालां उष्णीषं विनापि ईशस्य अनुकम्पा भवति। अनुकम्पा कीदृशी वाक्चित्तवर्णस्रङ्मात्रसाधना वाक् च चित्तञ्च वर्णस्रक् वर्णमाला तन्मात्रं साधनं करणं यस्याः सा तथा।

पक्षे। सदाङ्गनाङ्गसङ्गेति कामुकस्य सम्बोधनं। स्रगुष्णीषः ६ं। (अपि) ॥६८॥

वक्तेति। उपाध्यायस्यापि अपरोऽन्य उपाध्यायोऽस्तीत्यर्थः। ऋत्विजः ६ं। (अपि) ॥ ६९ ॥

नशीतेति। योगिनो जनाः अमत्सरक्रुधः न स्तः मत्सरक्रुधौ अन्यशुभ द्वेषक्रोधौ येषां ते तथा। नशीतोष्णस्पृग्दृशः नास्ति शीतोष्णस्पृशः शीतोष्ण-स्पर्शस्य दृक् ज्ञानं येषां ते तथा शीतोष्णस्पर्शज्ञानरहिता इत्यर्थः दृक् ज्ञाने ज्ञातरि त्विषु इति कोषः।

पक्षे। नशीतोष्ण इति योगिनः सम्बोधनम्। योगिन इत्यादिकं उदाहरणं। स्पृक्दृशः ६ं। (अपि) ॥ ७० ॥

व्याकरणम्।

स्रगुष्णीषोऽपि। एतयोरपि कङ् स्यात् भौ परे। अक् वाक् ॥ ६८ ॥
ऋत्विजोऽपि। ऋत्विक्। वक्ता ॥ ६९ ॥ स्पृग्दृशोऽपि। भवादृक् स्पृक् ॥ ७० ।

पुंसां सुकृतिनां ब्रह्मसाक्षात्कार: स्वतोऽभवत् ।
श्रुतिस्मृत्यादिशास्त्रेषु श्रद्दधाना हता वयं ॥ ७१ ॥
एकएव मुक्तो जीवन्मुक्तोऽभवदिति श्रुतम् ।
इदानीं पुनरीक्ष्यन्ते प्रायेण पुरुषास्तथा ॥ ७२ ॥
धर्मस्य लोप: स्याद्यस्य सोऽरक्ष: कोपितस्य हि ।
तस्य तत् यो धर्मछट् स्यात् स्वतएव स नङ्क्ष्यति ॥ ७३

( स्वगतं प्रति )

अयं देवयियक् द्वेषी दृष्ट्वैवास्मान् तथाविधान् ।
द्वेषो वाढ्स्वस्य जात: सको नैति विलोपनम् ॥ ७४ ॥

पुंसामिति । साक्षात्कार: प्रत्यक्षात्मकज्ञानं । स्वत: समाधिकर्म्मादिभि-विनापीत्यर्थ: ॥ ७१ ॥

एक इति । तथा जीवन्मुक्ता इत्यर्थ: । अन्यत् सुगमं ॥ ७२ ॥

धर्म्मेति । यस्य जनस्य स्वधर्म्मलोप: स्यात् स जन: तस्य धर्म्मस्य कोपितस्य क्रोधितस्य अरक्ष: स्यात् तं जनं धर्म्मो न रक्षतीत्यर्थ: । तत् तस्मात् यो जनो धर्म्मछट् धर्म्मच्छेदक: स्यात् स जन: स्वतएव नङ्क्ष्यति ।

पक्षे । धर्म्मस्येत्यस्य तस्येति परेणान्वय: धस्येत्यादिकं उदाहरणं ।

लोप: १ । स्याद्यस्य ६ । स: ६ । अरक्ष: ६ । क: १ । ( अपि ) तस्य ६ ॥ ७३ ॥

अयमिति । देवान् यष्टुमिच्छतीति देवयियक् तस्य द्वेषी अयं वेदान्ती अस्मान् तथाविधान् देवयजनशीलान् दृष्ट्वैव अस्य यो वाढो दृढो द्वेषो जात: सक: सद्वेषो विलोपनं निवृत्तिं नैति न प्राप्नोति । सक इति त्यादिष्वास भोस इत्यनेन अकागम: ।

पक्षे । पूर्व्वभाग: उदाहरणं । ध: ५ । ( वा १ । ) ढ: ५ । स्वस्य ६ । जात: १ । स: १ । क: १ । न १ । एति ८ । विलोपनं २ ॥ ७४ ॥

व्याकरणम् ।

लोप: स्याद्यस्य सोऽरक्ष: कोपि तस्य । संयोगादिस्थितस्य सस्य लोप: स्यात् तस्य तादृशस्य अर्थात् संयोगादिस्थितस्य रक्षभिन्नस्य कस्यापि लोप: स्यात् भौ परे । छट् । “ ८ । २ । २९ । पाणिनि: ” । “स्कादे: सो लोप: कोऽषढन्यरक्ष: ” सु ॥ ७३ ॥

षोवाढस्वस्य जात: सको नैति विलोपनं । षकारात् ढकारात् वा स्वस्य अन्यस्य स्थाने जात: स ककारो लोपं न प्राप्नोति । ( एकस्त्वोन्येतरावपीत्यमर: ) ॥ ७१ ॥ यियक् ॥ ७४ ॥

वेदान्ती सस्मितम् ।

पशुरसौ किमु वशी स्याच्छिष्टस्य यदि भवति विप्रतोदः सः ।
प्रीत्यैकवचने प्रयुक्तेऽत्यदान्तोपि नरो वशी स्यान्न स पशुः ॥ ७५ ॥

अथ स्मार्त्तादयः सानुनयं वेदान्तिनं प्रति ।

तथायुष्मन् मन्यते त्वोदयितः स्यात् यथा रविः ।
हिताय लोके क्षमया अपि त्वं क्षमया समः ॥ ७६ ॥

तस्मात् क्षमैव युज्यते ।

पशुरिति । ह भोः शिष्टस्य जनस्य असौ पशुः किं कथं वशी स्यात् अशिष्टो जनो यदि विप्रतोदः विगतप्रतोदः पशुताड़नयष्टिरहितः स्यात् प्रीत्या प्रीतिपूर्व्वकं एकवचने एकस्मिन्नपि वाक्ये प्रयुक्ते सति अत्यदान्तोपि अत्यशान्तोपि नरो वशी स्यात् न स पशुर्वशीस्यादित्यन्वयः ।

पद्ये । विप्रतद्रत्यन्तपूर्व्वभागः नरइत्यादिपरभागश्च उदाहरणं । दः १ । सः १ । प्रीत्यैकवचने ७ । प्रयुक्ते ७ । त्यदां ६ । नः १ । ( अपि १ । ) ॥ ७५ ॥

तथेति । रविः सूर्य्यः उदयितः सन् यथा लोके भुवने हिताय स्यात् भवति हे आयुष्मन् ! त्वा त्वां तथा मन्यते मद्विधो लोक इतिशेषः । क्षमया तितिक्षयापि त्वं क्षमया पृथिव्याः समः ।

पद्ये । दयीत्यादिकं उदाहरणं । (तथा १ ।) युष्मत् १ । मन्यते ८ । त्वः १ ॥ ७६ ॥

व्याकरणम् ।

दः सः प्रीत्यैकवचने प्रयुक्ते त्यदान्तोपि । त्यदादीनां दस्तोपि सः स्यात् प्रीत्यः प्रथमाप्रत्ययस्तस्यैकवचने प्रयुक्ते सति । असौ । सः । "७ । २ । १०६ । पाणिनिः" "त्यदादीनां सः सौ" सू ॥ ७५ ॥

तथा युष्मत् मन्यते त्वः । प्रथमैकवचनमनुवर्त्तते । त्वं । "युष्मदस्मदोस्त्वाहौ युवावौ यूयवयौ तुभ्यमह्यौ तवममौ सिद्‌-जस ङ ङे ङसृसु" सू ॥ ७६ ॥

कं योयूयो भवति स प्रीतप्रासि येन वीक्षित: ।
सताऽसेचनकायूयं ज्ञाता: सद्भिर्नहीतरै: ॥ ७७ ॥
तवादेशो भवति न: श्रुतावस्तवत् ॥ ७८ ॥
त्वदेकवचने श्रुते शंयुवो द्विवचने स्पृहां धत्ते
आत्मसममिति त्वय्येवास्माकं परमा प्रीतिरासीत् ॥ ७९ ॥
सुविद्वन्! हितवाची क्व परो युष्मत् समोच्यते ।
तुभ्यो तातो मोहतमोऽस्माकं तुभ्यं नमोऽस्तु न: ॥ ८० ॥

कमिति। येन सता पण्डितेन प्रीत्या अनुरागेण वीक्षितोसि दृष्टोसि स जनः कंयोयुय: कं आनन्दस्तेन योयूयते अतिशयेन युक्तो भवतीति स तथा। तादृशो-भवति आनन्दयुक्तो भवतीत्यर्थः। सद्भिरेव यूयं असेचनकाः ज्ञाताः इतरैः पामरैः तथा न ज्ञाताः। (तदसेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनादित्यमरः)।

पक्षे। कं यो इति सुखिनः सम्बोधनं। येनेत्यादिकं उदाहरणं। यूयः १। भवति ८। सः १ प्रीत्यासि ७॥ ७७॥

तवेति। आदेशः उपदेशः पक्षे। अस्तवदिति सम्बोधनं। तवादेशः १। भवति ८। नस् श्रुतौ ७॥ ७८॥

त्वदिति। त्वदेकवचने श्रुते सति आत्मसमं श्रोतॄणां सभा शंयु आनन्दयुक्तं सत् वो युष्माकं द्विवचने स्पृहां धत्ते। शंशब्दो मङ्गलार्थः स्पृहेत्यादिकं उदाहरणं। त्वत् १। एकवचने ७। श्रुते ७। युवः १। द्विवचने ७॥ ७९॥

सुवीति। युष्मत्परः त्वत्तोऽन्यः हितवाचो क्व,कुत्र समोच्यते अपितु न कुत्रापि। उत भोः अतः कारणात् अस्माकं मोहतमः तुभ्य नाशय। तुभ्यद्धिंसने इत्यस्य लोट् रूपं। नोऽस्माकं तुभ्यं नमोऽस्तु।

पक्षे। सुविद्वन् हित इति सम्बोधनं। वाकारश्चार्थे। अतेत्यादिकं उदाहरणं अत गच्छेत्यर्थः। चोक्तपरः १। युष्मत् १। समोच्यते ८। तुभ्यः १॥ ८०॥

व्याकरणम्।

यूयोभवति स प्रीत्यासि। स युष्मच्छब्दः युयः स्यात् प्रीत्यस्य प्रथमाप्रत्ययस्य असि परे। यूयं॥ ७७॥

तवादेशोभवति नस् श्रुतौ नस् श्रुतौ षष्ठ्या एकवचनश्रुतौ युष्मदस्तवादेशः स्यात्॥ ७८॥ त्वत् एकवचने श्रुते युवो द्विवचने। त्वयि॥ ७९॥

चोक्तपरो युष्मत् समोच्यते तुभ्यः। चोक्तपरः चतुर्थ्येकवचनपरः। तुभ्यं॥८०॥

( वेदान्ती तान् प्रति ) परमा प्रीतिर्नृणामसिद्धैव । यतः ।

रसावहोऽस्मत् प्रियोसाविति बोधो नृणामहम् ।
मृषा मन्येऽनुपकृतौ विपरीतायते स यत् ॥ ८१ ॥
सममोदसमदावौ क्व द्वयो रेकस्य सम्पदापदोरिति आवयोः
परमा प्रीतिरिति लोकानां भ्रम एव ॥ ८२ ॥
हरिद्राचूर्णयोः सङ्गात् मिथः प्रव्यक्तरागयोः ।
प्रीतिर्मयेक्ष्यते साध्वी सा हि हेत्वनपेक्षिणी ॥ ८३ ॥

---

रसेति । असौ अस्मत्प्रियो रसावहः रसमनुरागं आवहतीति स तथा । इति नृणां बोधमहं मृषा मिथ्या मन्ये यत् यस्मात् स बोधः अयमस्मत् प्रिय इति बोधः अनुपकृतौ उपकाराभावदशायां विपरीतायते विपरीतो भवति । तथा हि उपकारनिबन्धन एव नृणां प्रीतिरिति भावः । शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रस इत्यमरः ।

पद्ये । र इति वह्नेः सम्बोधनं । प्रियेत्यादिकं उदाहरणं । सौ ७ । अहः १ । अस्मत् १ ॥ ८१ ॥

समेति । एकस्य जनस्य अर्थात् प्रियजनस्य सम्पदापदोः द्वयोर्जनयोः सममोदसमदावौ समानहर्षसमानानुतापौ क्व कुत्र अपितु न कुत्रापि स्यातामिति भावः । दाव इति अनुतापार्थकदुधातोर्घञि रूपं ।

पद्ये । सममोद स इति सममोददातुः सम्बोधनं । मदावौ १ः । क द्वयोः ७ः ॥ ८२ ॥

हरिद्रेति । हरिद्राचूर्णयोरेव प्रीतिः साध्वी मया ईक्ष्यते यत् यस्मात् सा प्रीतिः हेत्वनपेक्षिणी हेतुं नापेक्षते या सा तथा । ननु तयोः प्रीतौ किं प्रमाणं इत्यत आह । मिथः परस्परं सङ्गात् मिलनात् प्रव्यक्तः प्रकाशितो रागः ययोः तौ तथा । रागस्तु मात्सर्य्ये लोहितादिषु क्लेशादावनुरागेच इति मेदिनी ।

पद्ये । पूर्व्वस्थलस्य उदाहरणमात्रं ॥ ८३ ॥

व्याकरणम् ।

मावहोऽस्मत् । मौ परे अस्मच्छब्दो मः स्यात् । अह ॥ ८१ ॥

मदावौ कद्वयोः । अस्मच्छब्दो मदावौ स्यात् एकवचनद्विवचनयोः । आवयोः ॥ ८२ ॥ मया ॥ ८३ ॥

अस्मद्वयोजसित्यस्य त्वं नातो न सर्व्वमन्त्रभृः ।
वयं चाल्पैव सुहृदां मौलं वैराग्यमाश्रिताः ॥ ८४ ॥
विद्मो वयं द्रविणबुद्धिवयोविहीनम्
जायात्मजोऽपि न तथाद्रियते पुमांसम् ।
हार्दं नृणां सुहृदि यत्तु तदोपकारा
द्दर्कोऽम्बुजस्य निरुपाधि परं ध्रुवं तत् ॥ ८५ ॥

अलं विस्तरेण ।

आप्त मह्योऽस्ति नैतेव जानेऽहं रोचते भवान् ।
मह्यमाप्तं विदित्वैव तद्वक्ष्ये वो यथामति ॥ ८६ ॥

---

अस्मादिति । अस्मादृशः अस्माकं हस्तानां वयः न प्रजसिस्व न प्राप्तवानसीत्यर्थः अतः कारणात् सर्वं न मन्त्रभृः न ज्ञातवानसि ॥ ८४ ॥ अस्मद् १ । वयः १ । जसि ७ ॥ ८४ ॥

ननु भवान् किं ज्ञानवान् इत्यत आह विद्म इति । वयं विद्मः जानीमः किं द्रविणं बलं धनं बुद्धिः प्रतिभारूपा वयो यौवनं तैर्विहीनं पुमांसं जाया भार्या आत्मजोऽपि तथा पूर्ववत् न आद्रियते । अन्येषां का कथा । नृणां यत्तु हार्दं प्रियता सेवा तत् तदोपकारात् उपकारपर्यन्तमेव भवति । परं केवलं अर्कः सूर्य्यः अम्बुजस्य तत् हार्दं निरुपाधि उपकारादिनिरपेक्षं ध्रुवं अचलम् इति विद्मः इत्यन्वयः । ( द्रविणन्तु बलं धनमित्यमरः ) ॥ ८५ ॥

आप्तेति । आप्तो भ्रमप्रमादादिरहितो मह्यो मनुष्यो नास्ति इत्येवाहं जाने । मह्यां पृथिव्यां भव इति मह्यः । भवान् आप्तं विदित्वैव मह्यं रोचते अनुरागी भवति । तत् तस्मात् वो युष्मान् यथामति यथाज्ञानं वक्ष्ये ।

पक्षे । आप्त इति सम्बोधनम् । अवजाने इत्यादिर्वा उदाहरणं । मह्यः १ । अस्ति ८ । ने त्ये ७ ॥ ८६ ॥

व्याकरणम् ।

अस्मद्वयो जसि अस्मच्छब्दो वयः स्यात् जसि परे । वयम् ॥ ८४ ॥ ८५ ॥

मह्योऽस्ति ने त्ये । अस्मच्छब्दो मह्यः स्यात् ने प्रत्यये परे । मह्यं ॥ ८६ ॥

क्षणसहवासादेव भवतां चित्तं मे ज्ञातमासीत् । तेन च ।

सम्भाव्याङ्ग प्रवर्त्तेथा विसृजेस्त्वं मितं वचः ।
आत्मवादी परेषां हृत् नास्पृष्टो वा वदेः क्वचित् ॥ ८९ ॥

इति वृद्धानामुपदेशोपि नातिक्रान्तो भवति । तद्भवतु परन्तु स्वयमसिद्धः तथाहि ।

कलेः स्वभावमाज्ञाय लोकानां चरितानि च ।
नेच्छे पलायितुं स्थानं धर्म्मं त्वां किमुदर्शये: ॥ ९० ॥

अपिच ।

विद्विट् जययशोभ्योनडभ्यमितोपि पुण्यभाक् ।
धिगस्मान् निर्ज्जितान् षड्भिर्विमुखान् वैरिणां जये ॥९१॥

सम्भाव्येति । अङ्ग सम्बोधनं सम्भाव्य सम्यक् विचिन्त्य प्रवर्त्तेथाः कर्म्मणीति शेषः तथा आत्मवादी परेषां हृत् आत्मैव मितं परिमितं वचः विसृजेः अस्पृष्टः सन् न वदेः ।

पक्षे । गेति गणेशस्य सम्बोधनं । (स अम भ औ) सम्भावि ७ । आङ् १ ॥ ८९ ॥

कलेरिति । सुगमं । ९० ॥ विद्विडिति । अभ्रमितो सुखाय शक्त्या शत्रोरभिमुखं गमनशीलो जनः विद्विट् जययशोभ्यः विद्विषां यो जयः तज्जन्ययशस्य तदर्थं नट् नष्टोपि पुण्यभाक् । षड्भिरर्थात् कामक्रोधादिभिर्निर्ज्जितान् अस्मान् धिक् । धिक्कारे हेतुमाह । द्विषतां शत्रूणां अर्थात् कामादीनां जये विमुखान् ।

पक्षे । विद्विट् जयय इति शत्रुवधाय गमनशीलस्य सम्बोधनं । इत्येत्यादिकं उदाहरणं । इतः कामस्य त्राता । (शस् भ्यस्) शोभ्यः १ । न डभ्यम् १ ॥९१॥

व्याकरणम् ।

सम्भाव्याङ् । युष्मदस्मदोः आङ् स्यात् स अम् भ औकारे च परे । “७ । २ । ८८ । पाणिनिः” “स भ गौष्वाङ्” सु ॥ ८९ ॥

त्वां ॥ ९० ॥ शोभ्यो न डभ्यम् । शम् भ्यस् च न डभ्यम् क्रमात् स्यात् । अस्मान् । “७ । १ । २९, ३०, ३२, ३१, २७ । पाणिनिः” । “शस् भ्यम् ङसि भ्यस् ङस् साम् न डभ्यम् तत ङाकमः” सु ॥ ९१ ॥

अपिच ।

यो जड़: स्यान्न सोऽन्यांस्तु शक्तो बोधयितुं भवेत् ।
तथापि तव तोषाय विवक्षा मम जायते ॥ ९२ ॥

स्मार्त्तादय: ।

सामयार्कं त्वमस्माकं संसारक्लेशसम्भवं ।
वाचा पीयूषवर्षिण्या दया युष्माकमस्ति यत् ॥ ९३ ॥

प्रजपी क्व बहुवचनस्य तत् परोपि न तृप्यतीति विद्म:
तथापि यूयमेव भवनदीपारोपायं वक्तुमर्हथ इति
युष्मदारात् स्थिता: स्म: ॥ ९४ ॥

योजड़ इति । यो जनो जड़ोऽज्ञ: स जन: अन्यान् लोकान् बोधयितुं न शक्तो भवेत् ।

पक्षे । योज इति योजनकर्त्तु: सम्बोधनं । ङ: १ । सप्रात् ८ । नस: ६ ॥ ९२ ॥

सामेति । त्वमस्माकं संसारक्लेशसम्भवं अर्कं दु:खं सामय प्रशान्तं कुरु । यस्मात् युष्माकं दया परदु:खविमाशेच्छा अस्ति । सामयेति सामतृक सान्त्वने इत्यस्य रूपं ।

पक्षे । त्वमित्यादिकं उदाहरणं । साम: १ । आकम् १ ॥ ९३ ॥

प्रजेति । प्रकृष्टस्वाध्यायविशिष्टो जन: तत्परोपि बहुवाक्प्रपञ्चकुशलोपि क्व कुत्र स्वाध्यायी जन: बहुवचनस्य तृप्यति बहुवाक्येन तृप्तो भवति अपितु न क्वापि जपस्य व्याघातादितिभाव: । अन्यत् सुगमं । ( स्वाध्याय: स्यात् जप इत्यमर: ) ।

पक्षे । प्रजइति सम्बोधनं । पीकबहुवचनस्य ६ । तत् १ ॥ ९४ ॥

व्याकरणम् ।

ङ: सप्रान्नस: । युष्मदस्मदो: नस: स्थाने ङ: स्यात् । तव मम ॥ ९२ ॥

सामयार्कं । युष्मदस्मद: साम आकम स्यात् । अस्माकं युष्माकं ॥ ९३ ॥

पीकबहुवचनस्य तत् । पी पञ्चमी तस्या: एकवचनस्य तत् तकार: स्यात् । युष्मत् । ९४ ।

वेदान्ती ।

अटामि नावेङ् तितीर्षुरापगाम्
घट्टः क वास्य क तरिः क नाविकः ।
इत्येव दुराढन्नवगन्तुमक्षमो-
ऽन्यादिश्यते वा तदहो मया त्वयि ॥ ८५ ॥

स्मार्त्ताः । ब्रह्मण् ! धर्म्माधर्म्माविहलोके परत्र च सुख-दुःखे जनयतः इति जानन्तोपि लोका धर्म्मविमुखा अधर्म्मएव प्रवर्त्तन्ते अत्र कारणं ज्ञातुमिच्छामः । वेदान्ती । शृण्वन्तु ।

किं बहुवचनैर्वोनो भवति द्वितीयादियुगविभक्तीनां तिसृणां धर्म्मः एकैकपादेन हीनो भवतीति वोविदितमेवेति तदेव लोकानामधर्म्मप्रवृत्तौ हेतुः ॥ ८६ ॥ कारणान्तरं वदामि ।

---

अटेति । अङ्ग सम्बोधने आपगां नदीं तितीर्षुः सन् नावे नौकानिमित्तं अटामि भ्रमामि नद्याः क वा कुत्र वा घट्टः क वा तरिः क वा नाविकः इत्येवाहं दुराढन् अन्वेषणं कुर्व्वन् अवगन्तुं ज्ञातुं अक्षमः तत् तस्मात् त्वयि तव समीपे किं कथं मया आदिश्यते पारोपायं उपदिश्यते ।

पक्षे । अ इति विष्णोः ग इति गन्धर्व्वस्य सम्बोधनं अन्यत् उदाहरणं । टामि ७ । नौ ७ । एङ् १ ॥ ८५ ॥

किमिति । उ भोः नोऽस्माकं बहुवचनैर्व्वा अधिकवाक्यप्रयोगैर्व्वा किं भवेदिति शेषः । अर्थात् बहुवाक्यप्रयोगेन प्रयोजनं नास्तीत्यर्थः । द्वितीयादियुगविभक्तीनां तिसृणां अर्थात् त्रेतादीनां युगविभागानां त्रयाणां धर्म्मः एकैकपादेन हीनो भवतीति वोयुष्माकं विदितं । विदितमिति ज्ञानार्थकविद्धातोर्व्वर्त्तमाने क्तः ।

पक्षे । किं शब्दो विकल्पार्थकः । (किं १ ) बहुवचनैः ३ । वस् १ । नस् ४ । भवति ८ । द्वितीयादियुगविभक्तीनां ६ । तिसृणां ६ ॥ ८६ ॥

व्याकरणम् ।

टामिनावेङ् । टा च आम् च तस्मिन् टामि नौ च परे युष्मदस्मदोरेङ् स्यात् । मया त्वयि ॥ ८५ ॥

किं बहुवचनैर्वोनो भवति द्वितीयादियुगविभक्तीनां तिसृणां द्वितीयादीनां युग्मविभक्तीनां तिसृणां अर्थात् द्वौचौषौणां बहुवचनैः सह युष्मदस्मदोः स्थाने क्रमात् वस् नस् स्यात् । वः ॥ ८६ ॥

कलौ ब्रह्मा वृषस्य त्रीन् पादान् भग्नान् वीक्ष्य कोपादाह ।
नियोज्या मे धर्म्मगुप्त्यै ये मूर्खाः स्वोदरम्भराः ।
भ्रश्यन्तु ते मे आदिष्टं ऐरावणरथादयः ॥ ९७ ॥

अथागतौ प्रणतौ कृताञ्जली सत्विन्द्रौ प्रति ।
इवान्तौ द्वैरदमती वामशापं तथैव तत् ।
शिष्यौ विनाङ्कुशं कुम्भी नाज्ञाकारी हि हस्तिपान् ॥ ९८ ॥

नियोज्या इति । धर्म्मगुप्त्यै धर्म्मस्य रक्षार्थं स्वोदरम्भरा ये मूर्खा ये मम नियोज्या नियुक्ता आसन् ते नियोज्या मे मम आदिष्टं आदेशं भ्रश्यन्तु ऐरावण-रथादयः इन्द्रादयः क्र अपूर्वा कुर्वन्त्वर्थः ।

पक्षे । स्वोदरम्भरा इति पूर्व्वभागः उदाहरणं । ऐरावणरथादय इत्यस्य पूर्व्वेणान्वयः । भ्रश्यन्तु ८ । ते १ मे १ । आदिष्ट १ । कः ३ ॥ ९७ ॥

इवेति । द्वैरदमती द्विरदो हस्ती तत्सम्बन्धिनी मतिर्बुद्धिर्ययोः तादृशौ वां युवां इवान्तौ इव्यन्तौ इवो इव्यं अन्तं शोभ्यं ययोः तादृशौ तथा अकार्षि तत् तस्मात् द्विरदमतित्वात् हेतोः शिष्यौ शासनीयौ भवन्ताविति शेषः । हि यस्मात् कुम्भी हस्ती अङ्कुशं विना हस्तिपां हस्तिपालकानां आज्ञाकारी नस्या-दित्यन्वयः ।

पक्षे । इकारः पादपूरणे सम्बोधने वा अदमतीत्यादिकं उदाहरणं । वां १ । नौ १ । द्वैः ३ ॥ ९८ ॥

व्याकरणम् ।

भ्रश्यन्तु ते मे आदिष्टं कैः । एकवचनैः सह ते मे आदेशः स्यादिति भ्रश्यन्तु । मे ॥ ९७ ॥

वान्नौ द्वैः । द्विवचनैः सह वां नौ स्यात् । वां ॥ ९८ ॥

(मनुं प्रति)

अहो अहंयोऽमत्वा मामादेशो भावितो न यत् ।
तत् त्वा पदात् भ्रंशयिष्ये यस्मान्मा मंस्यसे पुनः ॥ ९९ ॥

(मनुः) ब्रह्मण् ! तव चाद्यनियोगे समादृतादेशा एते ह्यष्टौ न प्रहरान् निद्रान्ति वृषस्य पादहानिस्तु नियोज्यानां पुरुषाणां प्रामादिकी नतु ममैव ॥ १००

अहोइति । हे अहंयो ! अहङ्कारयुक्त ! मां अमत्वा अवज्ञाय यत् यस्मात् आदेशो ममाज्ञा नभावितः न चिन्तितः तत् तस्मात् त्वा त्वां पदात् मनुत्वपदात् भ्रंशयिष्ये यस्मात् पदभ्रंशकरणात् पुनर्मा मां मंस्यसे प्रभुत्वेन ज्ञास्यसीत्यन्वयः ।

पद्ये । अस इति अभ्यीकस्य सम्बोधनं । न यदित्यादिकं उदाहरणं । त्वा, मा, अमा ३ं । आदेशः १ं । भावितः १ं ॥ ९९ ॥

ब्रह्मेति । हे ब्रह्मण ! हे धातः ! तव च नियोगे नियोज्यते अस्मिन्निति नियोगः धर्म्मपालनरूपं कर्म्म तस्मिन् एते वयं समादृतादेशाः समादृतः आदेश आज्ञा यैः तादृशाः सन्तः अष्टौ प्रहरान् दिवारात्रौ न निद्रान्ति वृषपाद-हानिस्तु धर्म्मस्य पादहानिस्तु नियोज्यानां पुरुषाणां अस्माभिर्नियोज्यास्तस्य पालने नियुक्ता ये पुरुषास्तेषां समादृतता प्रामादिकी प्रकृतार्थस्तु नियोज्यानां विधिनिषेधयोः पालनक्रियायामधिकारिणां पुरुषाणां प्रामादिकी ।

पद्ये । तवेति वर्त्तनशीलस्य सम्बोधनम् । प्रहरेत्यादिकं उदाहरणं । चाद्य-नियोगे ७ं । समादृतादेशाः १ं । एते १ं । (हि) अष्टौ १ं । न १ं ॥ १०० ॥

व्याकरणम् ।

त्वामाऽमादेशो भावितः । अमा सह त्वा मा इत्यादेशश्चिन्तितः । त्वा मा । "पाणिनिः ८ । १ । २२, २०, २१, १७, २४, २५, २३ ।" "द्वितीयाणां के हैं वे स्ते मे वां नौ वस् नसौ वाऽपादयाक्यादावचराङ्कैवादग् इत्यर्थे त्वा मा त्वमा" सुं ॥ ९९ ॥

चाद्यनियोगे समादृतादेशा एते ह्यष्टौ न । चकारादिनिपातानां योगे एते हि अष्टौ समादृतादेशा वसनसादयो न स्युः । ममैव ॥ १०० ॥

तथाहि । सर्व्वदैव वृषमनुगतै र्भवद्भि र्भवितव्यं येन तस्य पालनं स्यात् नतु तमपहाय यथेष्टमाचरितव्यं तस्य हानौ तु बहवोऽनुतापाः युष्माकं ह भविष्यन्ति इति भूयोभूयोहमादिष्टवान् धर्म्मपालनविधौ नियोज्याः पुरुषास्तदादेशान् स्खलन्तोपि न स्खलन्ति तवादेशं दासोऽयं नातिवर्त्तते यतः ॥ १०१ ॥

तवादेशं ब्रह्मन्! यो वेदवाक्यस्य नापादस्य सुखे
दृष्टिपातेपि नरः प्रायश्चित्तार्हो भवतीति ज्ञानं
मम चास्ति ॥ १०२ ॥

परन्तु । सुखार्थिनः प्रवर्त्तन्ते निषिद्धे विहितेऽलसाः ।
उदर्कादर्शिनो लोका मम चाज्ञातिवर्त्तिनः ॥ १०३ ॥

तत् कथं वृषस्य पालनं स्यात् । ब्रह्मा सक्रोधं । यद्येवं तदा तानपि लोकान् संहरिष्ये । मनुः ।

नियोज्यानामनवधानं दर्शयति तथाहीति । वृषमनुगतैः धर्म्मनन्नुगतैः तस्य पालनं धर्म्मस्य पालनं । प्रकृतार्थस्तु । नियोज्या विधिनिषेधयोरधिकारिणः ॥१०१

तवेति । वेद एव वाक्यं यस्य तस्य तव आदेशं आज्ञां योजनो नापात् न रचितवान् तस्य तवाज्ञाया अपालकस्य अन्यत् सुगमं ।

पक्षे । वेदेत्यन्तपूर्व्वभागः दृष्टीत्यादि परभागश्च उदाहरणं । वाक्यस्य ६ । ना १ । पादस्य ६ । सुखे ७ ॥ १०२ ॥

सुखेति । विहिते वेदविहिते कर्म्मणि यागादौ अलसाः । उदर्कादर्शिनः उदर्कः फलमुत्तरं तददर्शिनः ॥ १०३ ॥

व्याकरणम् ।

युष्माकं ह ॥ १०१ ॥

वाक्यस्य ना पादस्य सुखे । एते अष्टौ आदेशाः वाक्यस्य पादस्य च सुखे आदौ न स्युः । तवादेशं मम चास्ति ॥ १०२ ॥ मम च ॥ १०३ ॥

क ! त्वां श्रयति तम: किं तमोविशेष्यान्याद्यामन्त्रान्नो हि ।
पितरिति गुरो सेव्य मे विकशति मनोनयनञ्च धातस्ते ॥१०४॥

(ब्रह्मा) तमोविहीनस्यापि नैमित्तिकं तमो भवत्यपि । यत: ।
चतुष्पदोऽस्य भग्नानि पदानि त्रीणि तत् त्वयि ।
स्थिते पि शेषपाद: पत् भवेदेकपद: परे ॥ १०५ ॥

कत्वामिति । हे क ! हे ब्रह्मन् ! हे तमोविशेष्यान्य तमसा तमोगुणेन विशिष्यते य: स: तमोविशेष्य: रुद्र: तदन्यस्तस्मात् भिन्न: । ब्रह्मणस्तमोगुणविहीनत्वात् । हे तमोगुणविशिष्ट भिन्न ! किं कथं तमोगुणस्त्वां श्रयति आश्रयति । तमोगुण-व्यञ्जकं हेतुमाह । हि यस्मात् पित: इति गुरो सेव्य इति च मे मम आमन्त्रात् मत्कृतात् पितरित्यादि सम्बोधनात् हे धातस्तव मनोनयनञ्च अद्य नो विकशति न प्रकाशते ।

पक्षे । तम इति राहो: सम्बोधनं । पूर्व्वापरभागौ उदाहरणं । अविशेष्या-न्याद्यामन्त्रात् ५ । न १ ॥ १०४ ॥

चतुरिति । चतुष्पद: अस्य धर्म्मस्य त्रीणि पदानि भग्नानि तत् तस्मात् त्वयि पि पालके स्थिते सति एकपदोऽप्यस्य शेषपाद: अवशिष्टपाद: परे अन्तिमकाले पत् पतित: अर्थात् भग्नो भवेत् । पीति पाशब्दस्य ङौ रूपं ।

पिशेषपद: ६ । पत् १ । भवेत् ८ ॥ १०५ ॥

व्याकरणम् ।

अविशेष्यान्याद्यामन्त्रात् न । विशेष्यपूर्व्वकं अनामन्त्रपदपूर्व्वकञ्च आमन्त्रं हित्वा अन्यस्मादामन्त्रादेते न स्यु: । क ! त्वां गुरो ! सेव्य ! मे नयनञ्च धातस्ते । "८ । १ । ७२ । ७३ । पाणिनि:" "नाविशेष्यान्याद्यामन्त्रात् ।" मु ॥ १०४ ॥

पिशेषपाद: पत् भवेत् । पि: शेषे अन्ते यस्य तादृशस्य पाद् शब्दस्य पत् स्यात् । चतुष्पद: । एकपद: । "६ । ४ । १३० ।" पां । "पात् पत् पौ" मु ॥१०५॥

वृथा वाचोदेति नाशं गौरवञ्च विवर्द्धते।
मद्वागतीचस्य युक्तो दण्डः पापनिकृन्तनः॥ १०६॥
तिर्य्यङ् तिरश्च स्थायी न धुरि यः स्यात् स दण्डभाक्।
वागतीचां तिरश्चां नोपायोऽन्योऽस्ति दमाय यत्॥ १०७॥
मनुः। भो लोकेश! क्रुधम्भोधौ भवतोऽवैधिते क्रमात्।
विप्लवोऽकालिको भावी भवन्! वेलायतां धृतिः॥१०८॥

---

वृथेति। वृथा वाचा निरर्थकवाक्येन शं कल्याणं ना उदेति। न जायते गौरवञ्च न वर्द्धते मद्वागतीचः मम वाक्यं अत्यञ्चति अतिक्रामतीति स तथा तस्य ते तव दण्डोयुक्तः किम्भूतः पापनिकृन्तनः पापनाशकः।

पक्षे। वृथावेति वृथारक्षकस्य सम्बोधनं। न वर्द्धते इत्यादिकं उदाहरणं। अवः ६। अत् १। एति ८। नाशं २। गौरवं २। (च १)॥ १०६॥

तिर्य्येति। रथादौ योजितस्तिर्य्यङ् पशुः तिरश्चः तिरोवक्रं चरति गच्छतीति तिरश्चः तादृशः सन् यो धुरि न्यस्तभारे स्थायी न स्यात् स दण्डभाक्। यत् यस्मात् वागतीचां वाक्यातिक्रान्तानां तिरश्चां पशूनां दमाय अन्य उपायो नास्ति। तिरश्च इत्यस्मात् विसर्गस्य स्थे परे लोपः। तिर्य्यङ् १। तिरश्च १॥ १०७॥

भो इति। हे लोकेश! भवतस्तव क्रुधम्भोधौ क्रोधसमुद्रे क्रमात् अवैधिते क्रमेण वर्द्धिते सति अकालिको विप्लवः प्रलयो भावी हे भवन्! तव धृतिः धैर्य्यं वेलायतां वेला प्रवाहवारककूलरूपसीमा जायतां तव धैर्य्यं क्रोधस्य वेगं धारयतु इत्यर्थः। भो १। धौ ७। भवतः ६। वा १॥ १०८॥

व्याकरणम्।

अचोदेति नाशं गौरवञ्च। अचोऽकारो लोपमाप्नोति पूर्व्वस्य गुरुत्वञ्च। मद्वागतीचः। "६। ४। १३८। ६। ३। १३८। पां" "अचोऽल्लोपो गश।" सुं॥ १०६॥

तिर्य्यङ् तिरश्च। तिर्य्य व तिरश्च स्यात् पो परे। तिरश्चां। ६। ४। १३८। ६। ३। १३८" पां। "तिर्य्यगमुमुयगदमुयगुदचां तिरश्चासुसुईचादमुईचो दीचः" सुं॥ १०७॥

भो धौ भवतो वा। भवतो भो वा स्यात् धौ परे। भोः भवन्। "भगवदघवद्भवतां भगोऽघो भो वाधौ" सुं॥ १०८॥

क्ष्मागर्भगो भगवतस्तव विश्वसृजो कृपा।
कः स्याता भगवन् देही किं भगो! नेच्छसे धिया॥ १०९॥

ब्रह्मा तं प्रति।

अघो! अघवतोऽघं हि निदानं निखिलापदाम्।
नेशस्यापि कृपोभीतिरनघस्य निरागसः॥ ११०॥

अतोऽनागसां कुतो मद्भीतिः। अतस्त्वां स्वपदात् भ्रंशयिष्यामि। इन्द्रः। ब्रह्मन्! राजकर्म्मोपजीविनां नियोज्यानां कर्म्मसचिवत्वं न सुखाय नातः पदभ्रंशो दुःखकरः यतः।

अङ्कोऽवसानेपिच रङ्क आप्तभुक्
सुखी स्वतन्त्रो रमते स्वयं प्रभुः।
धिगस्त्वधीनानपि लब्धसम्पदः
प्रभोर्भ्रुकुट्या चकितानहर्निशं॥ १११॥

---

क्ष्मागर्भेति। हे भगवन्! विश्वसृजो भगवतस्तव कृपा क्ष्मागर्भगः पृथिवीमध्यगतः को देही स्याता स्यास्यति अपितु न कोपि हे भगो! इति किं धिया बुद्ध्या नेच्छसे। पक्षे। क्ष्मागर् इतिपृथिव्यास्तवकर्त्तुः सम्बोधनं। गर् इति गृधातोर्व्विच् प्रत्यये सिद्धं। भगो १ं। भगवतः ६ं॥ ९॥

अघोइति। हे अघो! अघयुक्त! अनघस्य हृद्यस्य जनस्य अन्यत् सुगमं।

अघो १ं। अघवतः ६ं॥ १०॥

अङ्कइति। रङ्कोदरिद्रः अङ्कोऽवसानेपि अङ्कोदिवसस्य अवसानेपि आप्तभुक् भिक्षाप्राप्तभोजी सुखी सन् रमते। किम्भूतः स्वतन्त्रः अपराधीनः स्वयं प्रभुः स्वयमेव प्रभुर्य्यस्य स तथा। अन्यत् सुगमं। पक्षे। क इत्यादिकं उदाहरणं। अङ्कः ६ं। अवसाने ७ं। (अपिच) रङ्_१ं॥ १११॥

## व्याकरणम्।

भगो भगवतः। भगो भगवन्॥ १०९॥ अघो अघवतः। अघोः अघवन्!॥११०॥

अङ्कोवसानेपि च रङ्_। अङ्को रङ्_स्यात् विरामे। अपिकारोऽत्र अनुक्तकृसस्य समुच्चयार्थकः। अत्र। "८।२।६६।६८" पां। "सर्व्वेसुम् सजुषश्च रङ्_फेऽत्तः" सं॥ १११॥

तदस्तु त्वामहमेवं ब्रवीमि ।

सहसे च प्रजानामपराधं अहःसु निशासु च ।
तस्मात् सत्पुत्रे रोषो न युज्यते ॥ ११२ ॥

अपिच । नाज्ञः सभूषोपि न शोभते यथाऽ-
ज्ञिमतस्तु मध्ये गुणवत्सुतायुतः ।
न शोभते दिक्रगपि श्रियोज्ज्वल-
न्नाज्ञाचिकीः सद्गुणपुत्रिसंसदि ॥ ११३ ॥

ब्रह्मा । त्रायते पततः पूर्व्वान् यः स स्यात् पापकूर्यदि ।
सन्तोऽसन्तस्य चेच्छन्ति निन्दापीरन्यथाऽन्वयः ॥११४॥

---

सहसेचेति । सुगमं । सः १ । हसे ७ । (च) ॥ ११२ ॥

नाज्ञ इति । अज्ञिमतस्तु मध्ये सभूषोपि भूषणयुक्तोपि नाज्ञः अज्ञिहीनो जनः यथा न शोभते तथा श्रिया शोभया रूम्मदाच उज्ज्वलन् दिक्रगपि दिशोरक्षतीति दिक्रक् दिक्पालः गुणवत्सुतायुतः गुणवता पुत्रेण हीनः सन् आज्ञाचिकीः आज्ञाकारी सद्गुणपुत्रोविद्यते येषां ते आज्ञाचिकीःसद्गुणपुत्रिणः तेषां सभायां न शोभते । चिकीरिति चिकीर्षधातोः क्विपि सिद्धं । पक्षे । न शोभते इत्यादिक उदाहरणं । ना १ । ज्ञः ६ । सभूषः ६ । ( अपि १ । ) ॥ ११३ ॥

त्रायेति । यो जनः पूर्व्वान् पूर्व्वपुरुषान् पततः त्रायते निरयात् त्रायते इत्यर्थः स जनः अर्थात् सपुत्रः यदि पापकुः पापं कुस्यति आश्लिष्यतीति पापकुः पापयुक्तः स्यात् तदा सन्तः पण्डिताः । तस्य च तस्यापि पुत्रस्य असं त्यागं इच्छन्ति अन्यथा अत्यागे अन्वयो वंशः निन्दापीः निन्दां पिसति प्राप्नोति यः सः तथा स्यात् । असँ इति असुइर्क्षेपे इत्यस्य रूपं । पीः इति पिस्रगत्यामित्यस्य रूपं । कुरिति कुस्य आश्लिषि इत्यस्य रूपं । पक्षे । यदित्यन्तपूर्व्वभाग उदाहरणं । इसन्तउसन्तस्य ६ । ( च १ ) इच्छन्ति ८ ॥ ११४ ॥

व्याकरणम् ।

स हसेच । स रङ् हसे परे च । अहः सु ॥ ११२ ॥

नाज्ञः सभूषोपि । सस्य स्थाने जातस्य षस्यापि रङ् स्यात् विरामे नतु त्रान्तस्य । आज्ञाचिकीः । चान्तस्य किं दिक्रक् ॥ ११३ ॥

इसन्तोसन्तस्य चेच्छन्ति । इसन्तस्य उसन्तस्य च रङ् इच्छन्ति । निन्दापीः पापकूः ॥ ११४ ॥

इत्युक्त्वा ब्रह्मा अन्तर्दधे। (मनुरिन्द्रं प्रति) धिगस्तु पराधीनान् कर्म्मसचिवान् यतः ।

एकगिरा यायावरे गीरन्तरेण स्थावरे धवे को गरिमा ।
तद्धितयाचिनोपि धुर्य्या इव वयं स्वाभिमतासिद्धौ
दण्डपात्या मुहुर्व्विषीदामः ॥ ११५ ॥

सुरजेष्ठो यदि मां हिंस्यात् तदाऽनीशोहं किं कुर्य्यां हनिष्या- मीति प्रतिज्ञातञ्च भवति न द्विधा तु प्राचीनस्य कुरोधोवा यदि क्रियेत तेन तदानीशाः किं कुर्य्युः ईशस्य समीहितं किमपि कदा रिर्य्येत ॥ ११६ ॥

---

एकगिरेति। एकगिरा एकेन वाक्येन यायावरे चञ्चले गीरन्तरेण वाक्यान्तरेण स्थावरे स्थितिशीले धवे मनुष्ये को गरिमा किं गौरवं। तथाच एकेन वाक्येनैव राजकर्म्मणि स्थापयितुं दूरीकर्त्तुञ्च शक्ये पुरुषे गौरवं नास्तीत्यर्थः। तद्धितयाचिनोपि तस्य प्रभोः हितमात्रप्रार्थिनोपि स्वस्य अभिलषितासिद्धौ प्रभोः अभिलषितस्यासिद्धौ वयं धुर्य्याः भारवाहः पशवइव दण्डपात्याः दण्डो निपात्यते येषु तादृशाः सन्तः मुहुर्व्विषीदामः पतिशाखिनराधवादृत्यमरः।

पद्ये। स्यादृत्यन्त पूर्व्वभाग उदाहरणं। वरे ७ं। धवेकः ६ं। गरिमा १ं। तद्धितयाचि ७ं। नो १ं ॥ ११५ ॥

सुरेति। सुरज्येष्ठो ब्रह्मा प्राचीनस्य सृष्टेः पूर्व्वकालस्थितस्य अर्थादीश्वरस्य। सर्व्वान् हनिष्यामीति प्रतिज्ञातं द्विधा अन्यथा न भवति। यदि तेन ब्रह्मणा कुरोधः कुः पृथिवी तस्या रोधः नाशो वा क्रियते तदा अनीशाः किं कुर्य्युः। ईशस्य समीहितं वाञ्छितं किमपि कदा रिर्य्ये रिन्नं अभूत् अपितु न। रिर्य्ये इति श्री रीङ्_य चये इत्यस्य यां रूपं। पद्ये। पूर्व्वापरभागौ उदाहरणं। भवति ८ं। न १ं। द्विधातु प्राचीनस्य ६ं। कुरः ६ं ॥ ११६ ॥

व्याकरणम् ।

वरे धवेको गरिमा तद्धितयाचि नो। धातुसम्बन्धीयस्य इकः गुरुत्वं स्यात् वेरे परे नतु तद्धितस्य ये यचि च। गीः, गिरा, धुर्य्याः। "८ं। २ं। ७६, ७८" पां। "र्व्वनच् तयोको धीर्वोऽकुरकुरोऽखेः" सुं ॥ ११५ ॥

भवति न द्विधातु प्राचीनस्य कुरः। द्विरुक्तधातोः पूर्व्वभागस्य कुरस्य दीर्घो न स्यात्। कुर्य्यां, कुर्य्युः, रिर्य्ये ॥ ११६ ॥

अथ मनुः शिवं स्तौतिस्म ।

ओजोऽबलानां विभवोऽवसूनां
मतावुदेसि चणमेव येषाम् ।
तेषां पुरः चुभ्यति चान्तकोऽसौ
यथा विदुष्मत्सदसः पुरोऽज्ञः ॥ ११७ ॥

वार्व्वित्तपौ वासवोव उरगेशोपि नो गुणान् ।
विदन्त्यविदुषां किं नो भवेत् त्वद्विषया मतिः ॥ ११८ ॥

आकाशवाणी आह ।

संश्रूयतां वैधस हे माचवोऽस्तु विधेर्भयम् ।
अस्मिन् मच्छरणे लोके शरणं मामुपेयुषाम् ॥ ११९ ॥

---

ओजइति । अबलानां ओजः बलं त्वमितिशेषः । अवसूनां निर्धनानां विभवः ऐश्वर्य्यं त्वमितिशेषः । येषां मतौ ज्ञाने चणं उदेसि तेषां जनानां पुरोऽग्रे असौ अन्तकश्च यमोपि चुभ्यति यथा विदुष्मत्सदसः विद्यावत्युक्तसभायाः पुरः अज्ञो मूर्खः चुभ्यति । पचे । अबलानां ओजः विभइतिच ईश्वरस्य सम्बोधनं । वः ६ । वसूनां ६ ..., मतौ ७ । उत् १ ॥ ११७ ॥

वारिति । वार् जलं वित्तं धनं तत्पौ तत्पालकौ वरुण कुवेरौ वासवः इन्द्रः उरगेशः अनन्तोपि वोयुष्माकं गुणान् नो विदन्ति अविदुषामस्माकं कथं तद्विषया- मतिः बुद्धिः स्यात् ।

पक्षे । वार्व्वित्त इति वरुणस्य सम्बोधनं । अगेश इत्यादिकं उदाहरणं । पौ ७ । वासवः १ । व १ । उ १ ॥ ११८ ॥

संश्रूयतामिति । हे वैधस ! ब्रह्मणः पुत्र ! श्रूयतां मत्शरणे अहमेव शरणं रक्षिता यस्य तस्मिन् लोके भुवने मां शरणमुपेयुषां प्राप्तानां वोयुष्माकं विधेः ब्रह्मणो भयं मास्तु । सहेमा ३ । ( च १ । ) वः ६ ॥ ११९ ॥

व्याकरणम् ।

वो वसूनां मतावुत् । वसोर्व्वकारस्य उकारः स्यात् मतौ परे । विदुष्मत् । "वसोर्वः सेमपुग्मतुप्योः" सू ॥ ११७ ॥

पौ वासवौ वउः । वसुसम्बन्धिवकारस्य उः स्यात् पौ परे । अविदुषां ॥११८॥

सहेमाच वः । इमासह वसोर्व्वकारस्यापि उः स्यात् पौ परे । उपेयुषां ॥११९॥

सोऽभीर्जज्ञे इतिवच उपधायाऽनशोऽजने: ।

परेऽगुणे चिरलेऽन्त्ये जज्ञीनां यत्र संस्थिति: ॥ १२० ॥

(अथ मनु: इन्द्रं प्रति) अहो निर्भयोस्मि यत: ।

हन: खनो घसश्चापि गम: स्याच्चेत् जिघांसया ।

संमुखे जग्मुषोऽपीश रक्षितात् याति दूरत: ॥ १२१ ॥

अथ शिवस्येच्छया ब्रह्मण: कण्डूतिव्रणा जाता: ये सेव्यमाना वर्द्धमाना: पुमांसमुत्तप्नासुङ् कुर्व्वन्ति पुंसोऽघावकलितस्य कुटुम्बकलहादिव यै: पुमांसोऽवसीदन्ति ॥ १२२ ॥

---

सइति । स मनु: अनशो नाशरहितस्य अजने: जन्मरहितस्य अर्थादीश्वरस्य इतिवच उपधाय स्तुत्वा अभी: निर्भयो जज्ञे यस्मिन् अन्त्ये अन्त्यकालावस्थायिनि चिरले पुरातने अगुणे निर्गुणे परे परमात्मनि जज्ञीनां जन्यवस्तूनां संस्थिति: विश्वाधारत्वात् । पक्षे । पूर्व्वापरभागो उदाहरणं । उपधाया: ६ं । नश: १ं । जने: ६ं । परे ७ं । अगुणे ७ं । अचि ७ं ॥ १२० ॥

हनइति । हनो जिघांसु: खनो विदारक: घसो भक्षक: व्याघ्रादिश्चेत् यदि जिघांसया गम: गतापि स्यात् तदा संमुखे जग्मुषोपि ईश्वररक्षितात् तस्मात् जनात् दूरतो याति । हन: १ं । खन: १ं । घस: १ं । (च) (अपि) गम: १ं । स्यात् ८ं ॥ १२१ ॥

अथेति । ये कण्डूतिव्रणा: सेव्यमाना: सन्तो वर्द्धमाना: पुमांसं उत्तप्नप्राणं अघावकलितस्य अघं व्यसनं पापम्वा अवकलितं सञ्चितं येन तस्य पुंस: कुटुम्बकलहादिव अवयवानामिव पोष्यवर्गकलहस्य जायमानत्वात् यै: कलहै: पुमांस: अवसादं प्राप्नुवन्ति । पक्षे । उत्तप्नइति सम्बोधनं । पुमांसमित्यन्तपूर्व्वभाग: अघकलितस्येत्यादिकञ्च उदाहरणं । असुङ् २ं । कुर्व्वन्ति ८ं । पुंस: ६ं । घौ ७ं ॥ १२२ ॥

व्याकरणम् ।

उपधाया नशो जने: परेऽगुणेऽचि । जनधातो: उपधाया लोप: स्यात् अगुणे अचि परे । जज्ञे, जज्ञीनां । "६ । ४ । ९८" पां । "हनगमजनखनघसा-सुङ् लोपोऽङेऽच्यनो" सु ं ॥ १२० ॥

हन: खनो घसश्चापि गम: स्यात् । एषामपि तथा स्यात् । जग्मुष: ॥ १२१ ॥

असुङ् कुर्व्वन्ति पुंसो घौ । कुर्व्वन्ति प्राचीना इतिशेष: । पुमांसं, पुमांस: । "७ । १ । ८९" पां । "पुंसोऽसुङ् घौ" ॥ १२२ ॥

अथ शिवो विप्ररूपी आगत्य ब्रह्माणं प्रति
तथापि देहे पापपरिणाम: खर्जुरोग: । विभाव्य ।
तव पापं यतस्तव अनधिकारे लोकसंहारे प्रवृ
अपिच ।

मोदयुक्तरसि रौरवमिवापुत्रिणो दुःखसागरं
येन मलुना पुत्रेण सोऽसावनागास्तमपि जिही
धातरद्भुतमेतत् ॥ १२३ ॥

तदपि तव पापमेव । तद्भवतु ।

भवत्यदोऽमात्स्वउरुक्लमोऽनिशम्
कथं नु मुं नापनयस्युपायत: ।

(ब्रह्मा उत्तरयति) समीक्ष्यतेऽमुष्य न किञ्चिदौषधम्
कण्डूयनाभावऋते द्विजोत्तम ! ॥ १

मोदेति । हे धातः ! अपुत्रिणः पुरुषस्य रौरवमिव दुःखसागरं
पुत्रेण मोदयुत् प्रमोदयुक्तः सन् उत्तरसि सोऽसौ मलुः अनेनाः निरप
त्यत्वमिच्छुरसि ।

पक्षे । मोदइति महेशस्य सम्बोधनं । रवमित्यादिकं उदाहरणं ।

अदउत्तरसिः १ । औः १ ॥ १२३ ॥

भवति । अदोऽमात् एतस्मात् अमात् रोगात् अनिशं निरन्तरं स्व
उरुक्लमः अतिशयग्लानिर्भवति अमुं रोगं उपायतः कथं नापनयसि
रोगस्य कण्डूयनाभावं ऋते विना किञ्चिदपि औषधं न दृश्यते ।

पक्षे । उ सम्बोधनं । क्लमेत्यादिकं उदाहरणं । भवति ८ । अदो
स्वः १ । उः १ ॥ १२४ ॥

व्याकरणम् ।

अदउत्तरसिरौः । अदसः परः सिः औः स्यात् । असौ । "७ । १ । १
पां । "अदस: सेरौः" सु ॥ १२३ ॥

भवति अदोमात् स्व उः । अदसो मात् परः ह्रस्व उर्भवति ।
अमुष्य ॥ १२४ ॥

(विप्रः ।) गुरुरुश्चासि जगतां श्रेष्ठोपि यमिनां भवान् ।
औषधञ्चेदकण्डूतिः किन्न बध्नास्यमू करौ ॥१२५॥

अतोऽहं ब्रवीमि ।

ईरेर्व्वेगासहोऽमीषु कण्डूतीम्मेषु मा करम् ।
सहसा खण्डिताङ्गेषु नूनं तन्मानहृद्भये ॥ १२६ ॥

(ब्रह्मा ।) सद्यः क्लेशानमून् वेद्मि व्रणकण्डूयनोत्तरे ।
तथापीषत्सुखार्थी तत् प्रवृत्तिं त्यक्तुमक्षमः ॥१२७॥

द्विजः । एतदेव ।

---

गुरुरिति । जगतां गुरुरसि उश्चापि रक्षकश्चासि अवतीति उः । चेत् यदि अकण्डूतिः कण्डूयनाभाव एव औषधं स्यात् तदा किं कथं अमू करौ न बध्नासि न स्थिरीकरोषि ।

पक्षे । अमीत्यादिकं उदाहरणं । गुरुः १ । ऊः १ (च १ ।) ॥ १२५ ॥

ईरेरिति । वेगासहः कण्डूयनस्य वेगमसहमानः अमीषु कण्डूतीम्मेषु कण्डूव्रणेषु सहसा करं मा ईरेः मा प्रेरय । ननु तेन किं स्यादित्यत आह । नूनं निश्चितं तन्मानहृद्भये कण्डूतिव्रणानां परिमाणहृद्भयर्थं स्यात् । ईरेरिति ईर्क्षि नुदि इत्यस्य रूपं । ईम्मेषु किम्भूतेषु । खण्डिताङ्गेषु । खण्डितानि अङ्गानि येभ्यस्तेषु । अत्र नूनपदं सादृश्यार्थकमपि । तथाहि खण्डिता मानिनी नायिका तस्या अङ्गेषु वेगासहस्य नायकस्य सहसा करप्रेरणं तस्या मानहृद्भये भवति तथेत्यर्थः । पक्षे । गेतिगन्धर्व्वस्य सम्बोधनं । असहेत्यादिकं उदाहरणं । ईः १ । एः १ । व्वे ७ ॥ १२६ ॥

सद्यइति । व्रणकण्डूयमोत्तरे सद्यस्तत्क्षणे अमून् अनुभूयमानान् क्लेशान् वेद्मि अनुभवामि तथापि ईषत् सुखार्थी सन् तत्प्रवृत्तिं कण्डूयनप्रवृत्तिं त्यक्तुं अक्षमः अशक्तोस्मि । पक्षे । पूर्व्वसूत्रस्य उदाहरणं ॥ १२७ ॥

व्याकरणम् ।

गुरुरूश्च । अदसोमात् परो दीर्घः ऊः स्यात् । "अमू । ८ । २ ८० " पां । "मात् स्वर्णावु ऊः" । मु ॥ १२५ ॥

ईरेर्व्वे । अदसो मात्परो बहुवचननिष्पन्न एकारः ईः स्यात् । अमीषु "एत ईद्बहुवचने" पां । "एरीर्व्वे" मु ॥ १२६ ॥ अमून् ॥ १२७ ॥

त्वं सद्योऽनुभवन्नपीत्थमसकृत् कण्डूयनोत्थव्यथाम्
हातुं नार्हसि तत्प्रवृत्तिमसतीमीषत् प्रमोदोत्सुकः।
ये कालान्तरभाविदुःखफलकं कर्म्मातिसौहित्यकृत्
कुर्व्वन्त्येवमदूरदर्शिन उताऽमीभिः किमागः कृतम्॥ १२८॥

एतावदुक्त्वा छद्मद्विजः सद्योऽन्तर्दधे। एतत् श्रुत्वा ब्रह्मणः सद्यो ज्ञानोदय आसीत्।

श्रुतामुना या कपटद्विजेड़ा विधेरनेहः परतश्च सेरा।
अविस्मरासीत् दयितप्रयाणा नेहा यथा प्रोषितभर्तृकायाः॥१२९॥

अथ ब्रह्मा निरामयो भूत्वा व्रणादिकं शिवमायामयं ज्ञात्वा विभाव्य धर्म्मस्य पादहानिं कालस्वभावकृतां मत्वा मनुं प्रति

---

त्वमिति। त्वं ब्रह्मा नान्य इत्यर्थः। इत्थमनेन प्रकारेण कण्डूयनोत्थव्यथां कण्डूयनजनितदुःखं असकृत् वारम्वारं सद्यस्तत्क्षण एव अनुभवन्नपि ईषत्-प्रमोदोत्सुकः सन् असतीं तत्प्रवृत्तिं कण्डूयनप्रवृत्तिं हातुं त्यक्तुं नार्हसि ये जनाः अदूरदर्शिनः कालान्तरभावि दुःखं फलं यस्य तादृशं अतिसौहित्यकृत् अतिशय तृप्तिजनकं कर्म्म एवं कुर्व्वन्ति त्वमिव कुर्व्वन्ति उत भोः अमीभिः अदूरदर्शिभिः किमागः कोऽपराधः कृतं। पक्षे। पूर्व्वसूत्रस्य उदाहरणमात्रं॥ १२८॥

श्रुतेति। अमुना विधात्रा या कपटद्विजेड़ा छद्मद्विजस्य इड़ा वाणी श्रुता सा इरा वाणी अनेहः परतः कालान्तरेऽपि विधेः ब्रह्मणः अविस्मरा अविस्मरणीया आसीत्। कइव। यथा प्रोषितभर्तृकायाः दयितप्रयाणानेहा पत्युः प्रस्थानदिनं। तथाहि तद्दिनं यथा प्रोषितभर्तृकाया अविस्मरणीयं स्यात् तथेत्यर्थः। (भूगो वाचस्त्विड़ा इला इत्यमरः)।

पक्षे। कपटद्विजे इति छद्मदन्तायाः सम्बोधनम्। आः कोपे। ड़ा १। विधेः ६। अनेहः परतः ७। (च) सेः ६॥ १२९॥

व्याकरणम्।

अमीभिः॥ १२८॥

ड़ाविधेरनेहः परतश्च सेः। अनेहसः परत्व विभिचस्य सेर्डा स्यात्। अनेहाः। "ऋदुशनस्पुरुदंशोऽनेहसां च" पा। 'सेर्डोशनस्पुरुदंशोऽनेहसोऽधेः" सु॥१२९॥

कोपं जह्नौ। वेदान्ती (स्मार्त्तादीन् प्रति।) तदेवं जानीत नरकालेऽवश्यम्भावि दुःखमवधारयन्तोऽपि कण्डूतिवेगमिव कामक्रोधलोभादीनां वेगं धारयितुमशक्नुवन्तस्तात्कालिके आपाततः सुखकरे निषिद्धे कर्म्मणि प्रवर्त्तन्ते। यं अशुभ-कण्डूतिवेगं ब्रह्मापि धारयितुं नाशकत्। अथ स्मार्त्तादयो कूटास्थं प्रति।

द्विज! श्रोशनसोऽप्येवं श्रूयते काव्यचातुरी।
उशना कविरित्येवं स्तूयते मानवैः परम्॥ १३०॥

विद्वन्! ततो ब्रह्मा किमकरोत्। (वेदान्ती) ततो ब्रह्मा क्रुद्धो मन्वादीन् धर्म्मशास्त्रप्रयोजकान् प्रति।

कीर्त्त्या जगज्जनेडोऽडन्नसदाधिरनामयः।
वत्स जीव मनोजीवोशन दक्ष यमाङ्गिरः॥ १३१॥

द्विजेति। हे द्विज! उशनसोपि शुक्रस्यापि एवं एतादृशी काव्यचातुरी काव्यस्य कौशलं न श्रूयते उशना शुक्रः कविरित्येवं मानवैः परं केवलं स्तूयते गुणारोपः क्रियते नतु तस्य कवित्वं वास्तवमित्यर्थः।

पक्षे। द्विजन इति द्विजस्य सम्बोधनं। काव्येत्यादिकं उदाहरणं। उशनसः ई। (अपि १) (एवं १।)॥ १३०॥

कीर्त्त्येति। हे वत्स! मनो! हे जीव! बृहस्पते! उशन! दक्ष! अङ्गिरः! जनेडः जनैर्लोकैरीडः स्तूयमानः सन् कीर्त्त्या जगत् अडन् व्याप्नुवन् सन् असदाधिः असन् अवर्त्तमानः आधिः मानसी व्यथा यस्य तादृशः सन् जीव। अडन्निति अड-व्याप्तौ शत्रन्तस्य रूपं।

पक्षे। जगज्जने इति जगति उत्पन्नस्य सम्बोधनं। डः १। डन् १। (असदा) धिः १॥ १३१॥

व्याकरणम्।

उशनसोऽप्येवं श्रूयते। उशनसोपि धिभिन्नविस्याने डा स्यात्। उशना ॥१३०॥

डो डन् असदा धिः। उशनसः परो धि डो डन् स्यात् असदा अनित्यं। उशन। "सेर्डुनौ चोशनसः" सू ॥ १३१॥

उशनन्! जीवदत्ताद्या:! सर्व्वे शृखन्तु मद्वच:।
सर्व्वेषां स्मृतिकाराणां प्राधान्यं लभतां मनु:॥ १३२॥
ततो मन्वाद्या हृष्टा ब्रह्माणं प्रणम्य स्वस्थानं ययु:।

हृदमाख्यानम्। (स्मार्त्तप्रभृतय:।)

सदालापो भवति भिदङ्गतापस्य हृद्भुव:।
भिद्यतेऽद्भिर्यथा तापो दैहिक: स्नानपानत:॥ १३३॥
सन्नहो धङ् मन्यते भौमानां त्वत्सङ्गिनामपि।
पापद्रोरात्मनद्रूवोच्चङ्कं त्वद्ब्रह्मवर्च्चसम्॥ १३४॥

---

उशेति। हे उशनन्! हे जीवदत्ताद्या:! अन्यत् सुगमं।

पक्षे। पूर्व्वसूत्रस्य उदाहरणमात्रं॥ १३२॥

सदेति। अक्रुसम्बोधने। सदालाप: हृद्भुव: अन्तर्जातस्य तापस्य संसार क्लेशरूपस्य भित् भेदको भवति यथा स्नानपानत: अद्भिर्दैहिकस्तापो भिद्यते तथेत्यर्थ:।

पक्षे। सदाल इति सदृपाङ्कस्य सम्बोधनं गतापसेत्यादिकं गतापस्य प्राप्त-जलस्य सम्बोधनं अप: ६। भवति ८ भि ७। दङ् १॥ १३३॥

सन्नेति। अहो सन्! साधो! उच्चकं उद्दीप्तं त्वद्ब्रह्मवर्च्चसं आत्मन इव तव सङ्गिनां तव संसर्गिणामपि भौमानां मर्त्यानां पापद्रो: पापरूपवृक्षस्य धक् दाहकं मन्यते। तव ब्रह्मवर्चसं यथा स्वीयं पापं दहति तथा तव संसर्गिणाम-पीत्यर्थ:।

पक्षे। सन्निति सम्बोधनं। मानां परिमेयाणां। नह: ६। धङ् १। मन्यते ८। भौ ७॥ १३४॥

व्याकरणम्।

उशनन्॥ १३२॥ अपोभवति भि दङ्। अपो दङ् स्यात् भे परे। अद्भि: ("अपो भि" पां। "अपोदङ्" सु॥ १३३॥

नहो धङ् मन्यते भौ। उच्चकं। "नहो ध:" पां। "नहोधङ् भौ" सु॥ १३४॥

वसुधा त्वत्संश्रयात् द्यौर्मन्यतेऽसौ दिवोऽन्तिमम् ।
औत्कृष्ट्यं गुर्व्वधिष्ठानात् यत्तत् द्यां वष्टि को मृतः॥ १३५ ॥
सुधासुधर्म्मागुरुभिः सुखानि द्युषदां द्युषु ।
यदिहस्युस्तथा युष्मत्सङ्गात् किन्नो दिवा तदा ॥ १३६ ॥
(वेदान्ती ।) गुणहीने मयि अलं गुणारोपेण । यतः ।
उरुवर्णेन तुष्यन्ति द्युखा अज्ञाश्च नो बुधाः ।
पद्माचस्त्वमिति प्रोक्ते लुमाचो नहि तुष्यति ॥ १३७ ॥

---

वसुधेति । त्वत्संश्रयात् तवाधिष्ठानात् असौ वसुधा द्यौः स्वर्गो मन्यते । यत् यस्मात् गुर्व्वधिष्ठानात् गुरोः वृहस्पतेः अधिष्ठानात् दिवः स्वर्गस्य अन्तिमं चरमं औत्कृष्टं उत्कर्षः । तत् तस्मात् कोजनः मृतः सन् दिवं स्वर्गं वष्टि इच्छति । जीवतामपि यदि इहैव स्वर्गानुभवः स्यात् तदा मृतः कः स्वर्गमिच्छतीत्यर्थः ।

पद्ये । पूर्व्वापरभागौ उदाहरणं । मन्यते ८' । सौ ७ । दिवः ६' । अन्तिमं १' । औत् १' ॥ १३५ ॥

सुधेति । द्युषु स्वर्गेषु सुधा अमृतं सुधर्म्मा देवसभा गुरुर्वृहस्पतिः तैः द्युषदां देवानां सुखानि भवन्तीतिशेषः । यत् यदि युष्मत्सङ्गात् इहापि तथा सुखानि स्युः तदा नोऽस्माकं दिवा स्वर्गेण किं ?

पद्ये । पूर्व्वापरभागौ उदाहरणं । हसि ७' । उः १' ॥ १३६ ॥

उरुइति । दिवि खोखन्ति गच्छन्ति ये ते द्युखाः देवाः अज्ञा मूर्खाः ते एव उरुवर्णेन उरुः अतिशयो यो वर्णः स्तुतिः तेन तुष्यन्ति नो बुधाः ज्ञानिनः तुष्यन्ति । तथाहि आरोपितगुणकथनं स्तुतिः तेन देवाः मूर्खाश्च तुष्यन्ति नतु बुधाः । हि यस्मात् लुमाचे नेत्रविहीने त्वं पद्माक्ष इतिपदप्रयोगात् स न तुष्यति । ( वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णन्तु वाक्षरे वज्रोरुविपुलमितिचामरः । )

उः १' । उवर्णे ७' ॥ १३७ ॥

व्याकरणम् ।

मन्यते सौ दिवोऽन्तिमं औत् । दिवः अन्तिमभूतस्य वस्य औत् स्यात् सौ परे । द्यौः द्यां । अत्र द्योशब्दस्य अमि द्यामितिसिद्धौ वाभ्यां इति सूत्रकरणं विफलं इतिग्रन्थकृतामाशयः । "दिव औत्" पा । "दिव औक् सौ" मु' ॥ १३५ ॥

हसुः । दिवोऽन्तिमस्य उः स्यात् हसि परे । द्युषदां द्युषु । "दिव उत्" पा । "उहस्यक्" मु' ॥ १३६ ॥

उरुवर्णे । दिवोऽन्तिमस्य उः स्यात् उवर्णे परे । द्युखाः ॥ १३७ ॥

(ते तं प्रति ।) एतद्गिरः शाम्यति रौद्रतापः
परं सुखं स्वग्रहणात् सृजन्त्याः ।
दान्त्याः क्रमान् दुःखमये भवेऽपि
वा च्छलतो नुन्नतमः प्रतापे ॥ १३८ ॥
ईतिस्थिते च दयिते दयिता यथाऽस्तम्
याते क्षणञ्च तव वागमृतप्रवाहे ।
यान्ती विषादशतमुत्सृजती धृतिं तत्
प्रत्यागमे प्रणयिनी श्रुतिचेतसी नः ॥ १३९ ॥

---

एतदिति । एतद्गिरः एतस्मात् तव वाक्यात् रौद्रतापः अत्युग्रतापः संसारक्लेशरूपः शाम्यति । किम्भूताया गिरः भवे दुःखमयेऽपि संसारे सति स्वग्रहणात् स्वस्यात्मनो ग्रहणात् ज्ञानात् ज्ञानमात्रतः परमसुखं सृजन्त्याः । पुनः कीदृश्याः दुःखमयेऽपि संसारे क्रमान् श्रान्तिं दान्त्याः छिन्दन्त्याः । अत्र दृष्टान्तमाह । नुन्नं छिन्नं तमोऽन्धकारो येन इति नुन्नतमाः सूर्यः तस्य प्रतापो यस्मिन् काले तत्र छत्रतो वा छत्रादिव अत्र वाशब्द इवार्थे । यथा तस्मिन् काले छत्रात् रौद्रतापः शाम्यति । यथा छत्रं स्वग्रहणात् परमसुखं सृजति क्रमान् छिनत्ति च तथेत्यर्थः । पक्षे । भवेति सम्बोधनं । अतमः प्रतापे ज्योत्स्नायुक्तरात्रेः सम्बोधनं । ईपि ७ं । वा १ं । आत् ५ं । (शतृ अतः) छत्रतः ५ं । नुन् १ं ॥ १३८ ॥

ईतीति । तव वागमृतप्रवाहे क्षणञ्च क्षणमपि अस्तं गते सति अर्थात् विश्रान्ते सति अस्माकं श्रुतिचेतसी कर्णमनसी तत्प्रत्यागमे तस्य प्रवाहस्य प्रत्याहृतौ प्रणयिनी अनुरागयुक्ते अर्थात् इच्छायुक्ते भवत इतिशेषः । किम्भूते विषादशतं यान्ती प्राप्नुवन्ती धृतिं धैर्य्यं उत्सृजती त्यजन्ती । काइव इत्यत आह । दयिते कान्ते ईतिस्थिते प्रवासस्थे सति यथा दयिता । यथा सा विषादं यान्ती धैर्य्यमुत्सृजती तत्प्रत्यागमे प्रणयिनी भवति तथेत्यर्थः । (ईतिर्डिम्बप्रवासयो रित्यमरः) । ईति ७ं । स्थिते ७ं । (च १ं ।) ॥ १३९ ॥

व्याकरणम् ।

ईपि वाच्छत्रतो नुन् । आत् अवर्णात् परस्य शत्रतः शतृसम्बन्धीयस्य अकारस्य नुन् स्यात् वा ईपि परे । सृजन्त्याः दान्त्याः । "आच्छीनद्योर्नुम्" पां । "आदीपोः" सु ॥ १३८ ॥

ईति स्थिते च । परत्र ईकारे च स्थिते अवर्णात् परस्य शतुरकारस्य नुन् स्यात् वा । यान्ती, उत्सृजती ॥ १३९ ॥

विद्वन्! ज्ञानोपायो योगएव तस्मात् योगोपायं वद।

( वेदान्ती ) योगो दुर्निवहः । यतः ।

नीचानुगानित्यमपोऽयनोद्यमाः

सेतून् दलन्तीरिव रुन्दि के जनाः ।

क्षुद्राक्षिकर्णाद्यनुगानि सुन्दरे

ष्वर्थेषु धावन्ति निरोद्धुमीश्वराः ॥ १४० ॥

तदहं ब्रवीमि ।

द्विरुक्तात् किं भवेच्छौचाचारश्रद्धान्वितः कुरु ।

आदौ कर्म्माणि यानि स्युर्नेनिजन्ति मनोविदे ॥ १४१ ॥

---

नीचेति । के जनाः रुन्दि मनांसि निरोद्धुं ईश्वराः प्रभवो भवन्ति अपितु न केपि । किम्भूतानि क्षुद्राक्षिकर्णाद्यनुगानि । इन्द्रियाणां परमाणुरूपतया क्षुद्रा ये अक्षिकर्णादयः तदनुगानि तत्पश्चाद्गामीनि सन्ति सुन्दरेषु मनोहरेषु वस्तुषु धावन्ति धावमानानि । कादूव इत्याह । नित्यं सदा नीचानुगाः नीचपथगामिनीः नित्यं अयनोद्यमाः गमनोद्यताः सतीः सेतून् दलन्तीः अपइव जलमिव । यथा दृढ्यीः अपः निरोद्धुं लोका न शक्नुवन्ति तथा तादृशानि मनांस्यपि निरोद्धुं नशक्ता भवन्तीत्यर्थः । पक्षे । नीचानुगा इति नदीनां सम्बोधनं । अद्यमा इति अद्यजात शोभानां । सम्बोधनं । नित्यं १ । अपः ५ । यनः ५ ॥ १४० ॥

द्विरुक्तादिति । द्विरुक्तात् वारम्वारं उक्तेः किं फलं भवेत् शौचाचारश्रद्धान्वितः सन् आदौ प्रथमतः कर्म्माणि कुरु यानि कर्म्माणि मनः चित्तं नेनिजन्ति शुद्धिं जनयन्ति सन्ति विदे ज्ञानाय स्युः भवेयुः । तथाहि कर्म्माण्यपि मनःशुद्धि जननद्वारा ज्ञानजनकानि भवन्ति । तदुक्तं । कषाये कर्म्मभिः पक्वे ततो ज्ञानं प्रजायते इति । तथा कर्म्मणैवहि संसिद्धिमास्थिता जनकादयः इति ।

पक्षे । आचारेत्यादिकं उदाहरणं । द्विरुक्तात् ५ । किं १ । भवेत् ८ । शौ ७ ॥ १४१ ॥

व्याकरणम् ।

नित्यमपोयनः । अपो यनश्च नित्यं नुन् स्यात् । दलन्तो । "शप्श्यनो-र्नित्यम्" पां । "अपयनो नित्यं" सं ॥ १४० ॥

द्विरुक्तात् किं भवेत् । द्विरुक्तात् परस्य शतुरकारस्य नुन् स्यात् शौ परे । किं विकल्पेन नेनिजन्ति । "वा नपुंसकस्य" पां । "द्वेः शतुर्नुण् शौ" सं ॥ १४१ ॥

स्मार्त्ताः। विद्वन्! कर्म्माणि बन्धनायेति श्रूयते।
वेदान्ती।

ब्रह्मास्तु त्वयि सर्व्वमर्पितमिति ब्रह्मार्पणं कुर्व्वते
ये स्वं कर्म्मफलाभिसन्धिरहितं तद्बन्धनं लुप् भवेत्।
नोवाधिः परतो भवेत् यदि तु पराङे बन्धवीजे पुन
र्ब्बन्धस्तर्हि पुलाकतोपि न कथं नामाङ्कुरो जायताम् ॥१४२॥

अथ स्मार्त्तादयः। विद्वन्! संशयोऽस्माकं निरस्त आसीत्।
तव विद्या विश्वं वशीकरोति। अतो विद्यैव नृणां सम्पत्।
यतः। च्छिज्जायते व्ययात् लुक्स्याद्यस्य चौरादिभिर्न यत्।

विद्याधनं धनं मन्ये विद्वानाढ्यैर्यदर्च्यते ॥ १ ॥

---

हे ब्रह्म! त्वयि सर्व्वमर्पितं अस्तु इतिकृत्वा यो जनः फलाभिसन्धिरहितं स्वं कर्म्म आत्मीयं कर्म्म ब्रह्मार्पणं ब्रह्मणि अर्प्यते यत् तत् तथा ब्रह्मणि समर्पणं कुर्व्वते तद्बन्धनं तेषां जनानां बन्धनं लुप् अपनीतं भवेत् अर्थात् बन्धनं न जायते। परतोवा परत्वच आधिः मनोव्यथा न भवेत्। ननु वैदिककर्म्मणां फलावश्यम्भावनियमात् निष्कामकृतत्वेपि ब्रह्मण्यर्पिते च कथं न फलमित्यत आह। यदि तु बन्धवीजे भवबन्धनस्य वीजीभूते कर्म्मणि पराङे अपूर्व्वस्याप्रयोजके सति पुनर्ब्बन्धः स्यात् तर्हि पुलाकतोपि तुच्छधान्यादपि कथं न अङ्कुरो जायतां। नाम सम्भावनायां। लुप् १। भवेत् ८। नः ६। वा १। धिः १। परतः ७। भवेत् ८। (यदि) (तु) पराङे ७ ॥ १४२ ॥

## इति हसन्तलिङ्गसंग्रहः।

च्छिदिति। विद्याधनमेव धनं मन्ये। यत् यस्मात् यस्य धनस्य व्ययात् दानादिभिः च्छित् क्षयो न जायते यस्य विद्याधनस्य चौरादिभिरपि लुप् अपनयनं अर्थात् लोपनं न स्यात् तत् तस्मात् विद्वान् जनः आढ्यैः धनिभिः पूज्यते। पक्षे। च्छिदिति क्षीणस्य सम्बोधनं। जायते ८। अव्ययात् ५। लुक् १। स्याद्यस्य ६ ॥ १ ॥

### व्याकरणम्।

लुप् भवेत् नो वाधिः परतो भवेत् यदि तु पराङे। यदि धिः परतः परत्र भवेत् तदा नकारस्य लुप् स्यात् वा पराङे क्लीवे।

हे ब्रह्म! "क्लीवे नो लुब्वाधौ" सू ॥ १४२ ॥

जायतेऽव्ययात् लुक स्याद्यस्य। अव्ययात् स्यादेर्लुक् स्यात्। न तत यत्। "अव्ययादाप् सुपः" पा। "अव्यात्लुक् स्नेः" सू ॥ १ ॥

बकुलत्वावाप्यत उताभ्यासी परसमाहृतेः ।
विद्वान् क्वचित् दुर्लभस्तु कृती काव्यवतंसकृत् ॥ २ ॥

वेदान्ती । अहो ज्ञानेच्छो ! नेदृशीं विद्यां प्रशंस ।

यत् पथ्युदस्थास्तम्भोः सस्पृहोऽवेहि तमाश्रय ।
भवाब्धौ मग्नमाहूतो य उत्थापयतीश्वरः । ३ ।

तज्ज्ञानमेव विद्योच्यते । यतः ।

यात्थिता दहति कर्म्म कृणद्ध्यविद्याम्
विद्यैव सात्मविदुषा मितरात्वविद्या ।
मात्सर्य्य दम्भमदवञ्चकता जिगीषा
नित्यक्रिया च्युतिफला विरसा मुमुक्षोः ॥ ४ ॥

---

बकुलेति । उत भोः परसमाहृतेः परकृतसंग्रहस्य अभ्यासी बकुलत्व अवाप्यते लभ्यते विद्वांस्तु क्वचित् लभ्यतेपि काव्यवतंसकृत् काव्यशास्त्ररूपकर्णभूषणनिर्म्मीता कृती पण्डितो दुर्लभः । (पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे । धीमान् सुरि कृतीतिचामरः ।) बकुल ७ं । (अत्र अपि अतः) अवाप्यतः ६ं । (उत १ं ॥ २॥

यदिति । यत् यदि पथि सत्पथे उदस्थाः उत्थितोऽसि तदा भोः सस्पृह स्पृहायुक्तः सन् तं ईश्वरं अवेहि जानीहि तं आश्रय च । तं कमित्याह । यः ईश्वरः आहूतः सन् भवाब्धौ मग्नं जनं उत्थापयति । उदः ५ं । स्थास्तम्भोः ६ः ॥ सः ६ं ॥ ३ ॥

यात्त्विति । या विद्या उत्थिता जाता सती अशुभं कर्म्म दहति । अविद्यां मायां रुणद्धि । सेव विद्योच्यते । इतरा कावयस्मृतिदर्शनादिविद्या अविद्यैव । तस्या अविद्यात्वे हेतुमाह मात्सर्य्येत्यादि । मुमुक्षोर्व्विरसा विगतो रसोऽनुरागो यस्यां सा तथा । पक्षे पूर्व्वसूत्रस्य उदाहरणमात्रं ॥ ४ ॥

व्याकरणम् ।

बकुलत्वावाप्यत उत । अवाप्योरकारस्य लुक् स्यात् उत विकल्पेन बकुलत्व नतु सर्व्वत्रेत्यर्थः । वतंसकृत् ।

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" पां । "वातोऽवाप्योः" मु ॥ २ ॥

उदस्थास्तम्भोः सः । उदः परयोः स्थास्तम्भोः सकारस्य लुक् स्यात् । उत्थापयति । "उदः स्थास्तम्भोः पूर्व्वस्य" पां । "उदः सः स्थास्तम्भोः" मु ॥ ३ ॥ उत्थापयति ॥ ४ ॥

## इत्यव्ययसंग्रहः ।

अथ नटी प्रभातसमयमुद्दिश्य गायति ।

यासि सखि ! रजनि ! मम प्रियसङ्गकारिणि !
कोकवनितार्त्तिशमनार्थमसि रागिणी ।
यत्तदुपकृतिकृते भवसि त्रियामिनी
अनुपकृतिरिति तन्न इति वेत्ति कामिनी ॥ ५ ॥

इति सर्व्वे निष्क्रान्ताः ॥ ० ॥ इति तृतीयरात्रिविनोदः ॥ ० ॥

यासीति । हे सखि ! रजनि ! मम प्रियसङ्गविधायिनि ! त्वं यासि । तस्यागमनोद्यमवत्त्वकमाह । कोकवनितायाः चक्रवाक्याः अर्त्तिनाशनार्थं विरहदुःखशान्त्यर्थं रागिणी अनुरागयुक्ता असि भवसि । प्रकृतपक्षे । आरक्तवर्णा भवसि । तदुपकृतिकृते कोकवनिताया उपकारनिमित्तं यत् त्रियामिनी त्रियामा भवसि तत् नोऽस्माकं अप्यनुपकृतिः इति कामिनी वेत्ति जानाति । त्रियामिनीति तरुणज्वरीतिवद्विरुद्धं ॥ ७ ॥

इति तृतीयरात्रिविनोदव्याख्या समाप्ता ॥ ० ॥

# अन्तर्व्याकरण-नाट्यपरिशिष्टम्।

अथ ते स्मार्त्तादयः (पुनः क्रमशः प्रविश्य उपविष्टा वेदान्तिनं प्रति) ब्रह्मन्! इदानीं स्त्रीणां धर्म्मं गुणदोषौ शक्तीश्च श्रोतुमिच्छामः।

वेदान्ती (विहस्य आह)—

सदावत स्त्रियां प्रीत्या तिष्ठतामपि वः सताम्।
मेधा तासां नो चरित्रशक्त्यादेर्ग्रहणेऽशकत्॥ १॥
यासां स्मृतेर्दृशो वाचो हसाद्वा मुनयोऽप्यलम्।
मुह्यन्ति वाचा विषयाः केषां तद्गुणशक्तयः॥ २॥

---

सदेति। वत सम्बोधने। स्त्रियां स्त्रीजनस्य समीपे प्रीत्या तिष्ठतामपि सतां ज्ञानवतामपि वो युष्माकं मेधा धारणावती बुद्धिस्तासां स्त्रीणां चरित्रशक्तिगुणादेर्ग्रहणे न अशकत्। पक्षे। सदावत इत्यत "शसान्त खपिवे"ति विसर्गलोपः। प्रीत्येत्यादिकं उदाहरणघटितवाक्यं। (सदा ७।,) आप् १।, अतः ५।, स्त्रियां ७।॥ १॥

यासामिति। यासां स्त्रीणां स्मृतेः स्मरणात् दृशः दर्शनात् वाचः वचनात् हसाद्वा हास्यादपि मुनयोऽपि अलं अत्यर्थं मुह्यन्ति, तासां गुणाः शक्तयश्च केषां वाचाविषया वचनस्य गोचराः स्युरिति शेषः। पक्षे। सूत्रस्य पूर्व्वापरभागौ उदाहरणघटित-वाक्यत्वेन सार्थकौ। हसात् ५।, वा १।, ॥ २॥

व्याकरणम्।

सदावत स्त्रियां। स्त्रीलिङ्गे स्थितात् अतः अकारान्तात् आप् स्यात्। सदेति स्वरूपकथनं। मेधा। "अजाद्यतष्टाप्।" पाणिनिः। "स्त्रियामत आप्।" मुग्धबोधं॥ १॥

हसाद्वा। स्त्रियां हसन्तादाप् स्याद्वा। वाचा वाचः। "हसाद्वा" मुं॥ २॥

ब्रूते मधुरसीमानं सरसेड़ान्मनोहराम् ।
यया निघ्नं जगत् को ना शक्तिसीमामियात् स्त्रियाः ॥ ३ ॥
जायते नो हेतुयोगादपि नुः श्रीर्गृहे सुखम् ।
पत्न्या युतो मुखरयाऽस्थिरया निन्द्यकर्म्मया ॥ ४ ॥
धरेव स्याच्च या स्थैर्य्ये विष्णुप्रेम्णी पतिव्रता ।
सदया कर्म्मदक्षा सा नष्टाञ्चानयति श्रियम् ॥ ५ ॥

एतासां साध्वीनामपि स्वाभाविका दोषाः सन्ति । यथा ।

स्वभेदतः क्वापि नाशीरकेनापि सहस्थितिः ।
शस्तेति प्रार्थ्यते पुम्भिः स्त्रियो भावात् स्वभेदिकाः ॥ ६ ॥

---

ब्रूते इति । मधुराणां सीमानं सरसेड़ां सरसां इड़ां वाचं ब्रूते वक्ति । यया वाचा जगत् निघ्नं वशीभूतं । को ना कः पुरुषः स्त्रियाः शक्तेः सीमां इयात् प्राप्नुयात् । पद्ये । सरस इति अनुरागिण्याः सम्बोधनं । हरामिति शिवभक्तस्य सम्बोधनं । हरं अमते भजते इति हराम् । डाप् १ ।, मनः ५ ।, ॥ ३ ॥

जायत इति । मुखरया अस्थिरया निन्द्यकर्म्मया निन्दनीयकर्म्मकारिण्या पत्न्या युक्तस्य नुः पुरुषस्य हेतुयोगादपि विद्यादिगुणरूपकारणसद्भावेपि श्रीः सम्पत् गृहे सुखञ्च नो जायते । पद्ये । नु पादपूरणे । जायते ८ ।, अनः ५ ।, हे ७ ।, ॥ ४ ॥

धरेति । या पत्नी स्थैर्य्ये धरा इव पृथ्वीव स्यात् । विष्णौ प्रेम भक्तिर्यस्याः सा विष्णुप्रेम्णी । दयायुक्ता कर्म्मकुशलाच सा नष्टामपि श्रियं आनयति । पद्ये । धर इति सम्बोधनं । या स्थैर्य्ये इत्यादिकमुदाहरणवाक्यम् । ईप् १ ।, अस्यात् ५ ।, ( च १ । ) ॥ ५ ॥

व्याकरणम् ।

डाम्नः । स्त्रीलिङ्गे स्थितात् मनन्तात् डाप् स्याद्वा । सीमानं सीमां । "डाबुभाभ्यामन्यतरस्याम् ।" पा । "मनोडाप् ।" मुं ॥ ३ ॥

जायतेऽनोहे । अनन्तात् डाप् स्यात् वा हे । निन्द्यकर्म्मया । "अनो बहुव्रीहेः ।" पा । "हेऽनः ।" मुं । ॥ ४ ॥

ईबऽस्याच्च । अस्यात् असंयोगात् परस्थितात् अनन्तात् हे स्थितात् ईप् च स्याद्वा । विष्णुप्रेम्णी । "अनउपधालोपिनोऽन्यतरस्याम् ।" पा । "ईप् चाम्वस्यात् ।" मुं । ॥ ५ ॥

उक्तं यत्तत् क्षिपमुखस्य न वाह्यं क्वचित् प्रिये!।
सकेतुरुक्तैव भवति सूतिकामेव गर्भिणी ॥ ७ ॥
सूतवृन्दारपुत्रैषा नाम्ना दुहितुरप्यहम्।
सूतिका वेति विद्वेष्टि सपत्नीं या सपुत्रकाम् ॥ ८ ॥

इत्याद्याः स्वाभाविका दोषा नारीणां गर्हिभिर्न ग्राह्याः सातिशयगुणयोगात्। यथा।

याति लोकान्तरं नाथे प्रियैव स्यात् द्वितीयिका।
प्रियोऽन्यः कस्य यस्यात्यध्वन्यस्य स्वस्तिसिद्धये ॥ ९ ॥

---

स्वभेदत इति। स्वाः भ्रात्रादिज्ञातयः तैर्भेदतः तैः सह पार्थक्यात् कापि आशीः हिताभिशंसा अर्थात् भ्रात्रादिभिः पार्थक्यात् किमपि इष्टं भूयात् अकेनापि दुःखिनापि सहस्थितिः सहवासः प्रशस्ता इति पुम्भिः प्रार्थ्यते। स्त्रियस्तु भावात् स्वभावतः स्वभेदिकाः भ्रातृभेदकराः। पक्षे। स्वभेति स्वयंदौत्यस्य सम्बोधनं। इत् १।, अतः ६।, कापि ७।, (न १।) आशीरके ७।, ॥ ६ ॥

उक्तमिति। हे प्रिये। यत् उक्तं अर्थात् त्वयि यन्मया कथितं तत् क्वचिदपि मुखस्य वाह्ये न क्षिप अर्थात् कस्मैचिदपि मा वद। सा प्रिया इति भर्त्रा उक्तैव सती सूतिकामा प्रसवेच्छुः गर्भिणीव भवति। उक्तं १।, यत्तत्क्षिपमुखस्य ६।, (न १।, ) ॥ ७ ॥

सूतेति। एषा सपत्नी सूतवृन्दारपुत्रा प्रसूतो वृन्दारो रूपवान् पुत्रो यया सा तथा। अहं दुहितुरपि अम्बा माता सूतिका वा प्रसवकर्त्री वा नाभवं इति इत्युक्ता सपुत्रकां पुत्रवतीं सपत्नीं विद्वेष्टि। पक्षे। दुहितुरित्यादिकमुदाहरणवाक्यं। सूतवृन्दारपुत्रैषाऽनां ६।।।, वा १।, ॥ ८ ॥

यातीति। नाथे भर्त्तरि लोकान्तरं याति सति प्रियैव भार्य्यैव द्वितीया सहगन्त्री भवति। अन्यः कः प्रियः कस्य अध्वन्यस्य पथिकस्य अर्थात् मरणानन्तरं महापथारूढस्य स्वस्ति-

व्याकरणम्।

इदतः कापि नाशीरके। आशीरर्थकवर्ज्जे कापि परे अकारस्य इत् स्यात्। स्वभेदिका। "७। ३। ४४, ४५,।" पा। "काप्यनाशीरकेऽदिदयत्तत्क्षिपादेः।" मु॥ ६ ॥

उक्तं यत्तत्क्षिपमुखस्य न। यत्तत्क्षिपादेरुक्तं कार्य्यं न स्यात्। सका॥ ७ ॥

सूतवृन्दार पुत्रैषाऽनाम्ना। एषां आनां अकाराणां इत् स्यात् वा कापि। सूतिका, सपुत्रकां ॥ ८ ॥

द्वितीयकैकिका दुःखादुद्धर्त्री सुखनायिका।
विनैकका तां दयिता क्वत्यिका: सुखसम्पदः॥ १०॥
योषिका मुक्तपुंसङ्गा पश्चादिह न मोदते।
इति द्वयोर्हितायैव योषकान्वेति वल्लभम्॥ ११॥
अहो नदाद्या दीव्यन्ति नातार्थ्या: सन्ति केचन।
योषिन्मायानदीं तर्तुमीशोपि नाशकत् पुरा॥ १२॥

---

सिद्धये यस्यति यत्न करोति?। पक्षे। पूर्व्वभाग उदाहरणघटितवाक्यत्वेन सार्थकः। कस्य ६।, यस्य ६।, ( त्य धु अन्यस्य ) त्यध्वन्यस्य ६।, ॥ ९ ॥

द्वितीयेति। एकिका द्वितीयका पत्नी एव दुःखादुद्धर्त्री सुखनायिका च सुखप्रापिका च। एकिकां तां दयितां विना सुखसम्पदः क्वत्यिकाः क्व भवाः स्युरित्यन्वयः। पक्षे। पूर्व्वसूत्रस्य उदाहरणं। १०॥

योषिकेति। योषिका नारी मुक्तपुंसङ्गा मुक्तस्त्यक्तः पुरुषस्य सङ्गो यया तादृशी सती पश्चात् परलोकइहलोके च न मोदते। इति हेतोः द्वयोः आत्मनः पत्युश्च हितार्थमेव योषका नारी पतिं अन्वेति सहमृता भवति। मुक्तपुंसङ्गापः ६।, (च१।) आत् १।, (वा १।) ॥ ११ ॥

अहो इति। नदाद्याः। नदनदीप्रभृतयो दीव्यन्ति दीप्यन्ति अतार्थ्यास्तर्त्तुमशक्या न सन्ति। अहो आश्चर्य्यं ईशोपि शिवोपि योषितो मायानदीं तर्त्तुं न अशकत्। पक्षे। यन्ति गच्छन्ति इत्यादिकमुदाहरणघटितवाक्यं। नदाद्यात् ५।, ईप् १।, ॥१२॥

### व्याकरणम्।

कस्य यस्य त्यध्वनास्य त्यः स्वरूपतज्ज्ञितः धुधातुस्तदन्यस्य कस्य यस्य च अकारस्य इत् वा स्यात् क्वापि। द्वितीयिका। "द्वैषसूतपुत्रवृन्दारस्वश्चाजभस्त्राधुत्यकयोर्वा।" मुं ॥ ९ ॥

द्वितीयका, एकिका, सुखनायिका, एकका, क्वत्यिका ॥ १० ॥

मुक्तपुंसङ्गापश्चाद्वा। मुक्तस्त्यक्तः पुंसङ्गः पुंलिङ्गसम्बन्धो येन स मुक्तपुंसङ्गः तादृशो य आप आबन्तशब्दस्तस्याकारः आत् चकारात् इत् च स्यात् क्वापि। योषिका, योषाका, योषका। "अभाषितपुंस्काच्च। आदाचार्य्याणाम्।" पा। "वाश्चापोऽनुक्तपुंस्कस्य। मुं।" ॥११

नदाद्यादीप् नदी। १२॥

नारीणामन्येऽपि स्वाभाविका दोषाः सन्ति । यथा ।

विदुषप्यपि सती रुष्टाऽनुबन्धान्नो बिभेत्यणु ।
यत् स्पृष्टपादा गुरुणा मानिनी मानमुज्झति ॥ १३ ॥
किमन्यद्वा हृदच्चोपि नेशोऽस्या वेत्ति हृद्गतम् ।
मायाशतीह्यास्तामस्यां नौकास्थस्तद्गतिं यथा ॥ १४ ॥
पतिमत्या व्रतजपावयुक्तौ यौ नाशिनौ भवतः सौभाग्यस्य ।
अहो पतिशिरसि न्यस्तभारा राजमाहिष्यकामा व्रतं सा साधयति ॥१५॥

---

विदुषापीति । सती साध्वी विदुषी अपि ज्ञानवती अपि रुष्टा सती अनुबन्धात् दोषोत्पादात् अणु स्वल्पमपि न बिभेति । यत् यस्मात् सा मानिनी सती गुरुणा महा-गुरुणा अर्थात् भर्त्ता स्पृष्टपादा गृहीतचरणा सती मानं उज्झति त्यजति ( दोषोत्पादेऽ-नुबन्धः स्यादित्यमरः । ) पद्ये । बिभेत्यण्वित्यादिकं उदाहरणवाक्यं । ( ऋ उ ष ट ) रुष्टानुबन्धात् ५।, नः ५।, ॥ १३ ॥

किमन्यदिति । अन्यद्वा किं कथयामीत्यर्थः । हृदच्चोपि वचःस्थलगतोपि ईशः पतिः अस्या स्त्रिया हृद्गतं मनोगतं न वेत्ति ज्ञातुं न शक्नोति । कीदृश्याः मायाशतीह्याः शतसंख्याकमायाधारिण्याः । तामस्यां तमिस्रायां रात्रौ नौकास्थो जनस्तद्गतिं नौकायागतिं न वेत्ति तद्वदित्यर्थः । पद्ये । किमन्यदिति गुरोः प्रश्नः । वाहृच्चदच्चः ५।, ( अपि १। ) ॥१४॥

पतीति । पतिमत्याः सधवायाः व्रतजपौ अयुक्तौ अप्रशस्तौ । अत्र हेतुमाह याविति । यौ व्रतजपौ सौभाग्यस्य नाशिनौ भवतः । अहो इत्यादिकं सुगमं । पद्ये । सौभाग्य-स्येत्यादिकमुदाहरणं । पौ ७।, अयुक्तौ ७।, यौ १॥, नाशिनो १॥, भवतः ८॥, ॥ १५ ॥

व्याकरणम् ।

रुष्टानुबन्धान्नः । ऋकार उकार षकार टकारानुबन्धात् नान्ताच्च ईप् स्यात् स्त्रियां । विदुषी, सती, मानिनी । १३ ॥

वाहृदच्चोपि । वाहृच्चदन्तात् अच्चोपि ईप् स्यात् । मायाशतीह्याः । "ष्टिम्,ह्वाह्-नदादेरीप् ।" मुं । ॥ १४ ॥

पावयुक्तौ यौ नाशिनौ भवतः । इवर्णावर्णौ लोपिनौ भवतः युविभक्तिभिन्ने पौ परे । सौभाग्यस्य, राजमाहिष्य । "यसीति च" पा । "ययोर्लोपोऽयुक्तौ पौ ।" मुं । १५ ॥

स्वागस्तेयी पतिः पत्न्यां पतेत् यदि तु शोणिते।
दृगञ्चले तदीयोऽपि योगस्तस्य विनश्यति॥ १६॥
चत्वरे शौरभेऽनुर्षेऽतिषस्यैणाक्ष्यदः प्रियः।
ह्नितैषस्त्वनुप्रियां ब्रूते कापि नैवं प्रिया प्रियम्॥ १७॥
(नेपथ्ये।) अहो सत्यमुक्तं मयैतज्ज्ञातमासीत्। भार्य्यैव पुंसां शत्रुः।
असम्बन्धेऽपि पुष्यस्य पौषी पौषस्य पूर्णिमा।
तथा शत्रोः प्रियेत्याख्या वामा स्यात् किन्नु दक्षिणा॥ १८॥

---

स्वागइति। पतिः पत्न्यां पत्नीसमीपे स्वागस्तेयी स्वस्य आगसोऽपराधस्य स्तेयी अपह्नवकारीत्यर्थः। यदि तदीये पत्नीसम्बन्धीये लोहिते दृगञ्चलेऽपि चक्षुषः कोणेऽपि पतेत् तदा त्यस्य तस्य पत्युर्योगोऽपि समाधिरपि विनश्यति (तस्येति सयकारत्यदशब्दस्य रूपं।) पद्ये। स्वेति सम्बोधने। आगस्तेयी उदाहरणम्। ईये ७, (अपि १।) यः १।, अगस्त्यस्य ६।, विनश्यति ८।,। १६॥

चत्वरइति। हे ऐणाक्षि! मृगाक्षि! अनुर्षे अशौरभे नास्ति शूरसम्बन्धिनी भा यत्र तादृशे चत्वरे अङ्गने अतिषसि गमिष्यसि। अदः एतद्वाक्यं ह्नितैषी प्रियः प्रियां अनु प्रियां प्रति ब्रूते। कापि प्रिया प्रियं प्रति एवं न ब्रूते। (शूरः सूरोऽपि चादित्य इति-द्विरूपकोषः। अतीष्यसीति अत् सातत्यगते इत्यस्य रूपं।) पद्ये। चत्वरे शौर इति सम्बोधनं। भे ७, (अनु १।,) र्षे ७, तिष्यस्य ६।,। १७॥

असम्बेति। पुष्यस्य असम्बन्धेऽपि योगाभावेऽपि पौषस्य पूर्णिमा पौषीति नाम यथा, तथा शत्रोः अर्थात् भार्य्यायाः प्रियत्वायोगेऽपि प्रियेति आख्या नाम। नु भोः वामा नाम्ना वामा किं कथं दक्षिणा अनुकूला भवेत्? (अपि १।) पुष्यस्य ६।,॥ १८॥

## व्याकरणम्।

ईयेऽपि योगस्त्यस्य विनश्यति। अगस्त्यस्य यो लोपो स्यात् ईये ईपि च। आगस्तेयी। १६॥
भेऽनुर्षे तिष्यस्य। भे नक्षत्रार्थे र्षे अनु पश्चात् सति तिष्यस्य यो लोपो स्यात्। तैषी॥१७
अपि पुष्यस्य। पुष्यस्य यो लोपो स्यात् र्षे। पौषी। १८॥

अथ वेदान्ती । अहो सौरेयवंशजः पुष्पकेतुर्नाम राजा आयाति ।
निःसत्त्वा निर्गुणा अकीर्त्त्योऽदातारश्च नासन् गोत्रे यदीयेपि ।
सूर्य्यस्य यः समो दाने सच्चयेपि द्वितीया सौरी मूर्त्तिरिव ॥१९॥
सोऽदीपि मत्स्यस्य पतिरसीदन् यत्त्विषारयः ।
सदैवोषसञ्चासङ्गात् नदीमत्सीवदुद्धृता ॥ २० ॥
इति शास्ति स चमावनो नच खसाद् भव तीव्रं कदापि हे ।
प्रज एधि दृश्वरीपथामसदवावरी सतां धीवरी च ॥ २१ ॥
देवपुरोधसः सोपि न गौण इति श्रूयते ॥ २२ ॥

---

सौरेयेति । सौरेयवंशजः सूर्य्यवंशजः । निःसत्त्वाः बलहीनाः । सौरीमूर्त्तिः सूर्य्यमूर्त्तिः । अन्यत् सुगमं । पक्षे । यदिति यवस्य सम्बोधनं । ईये ७।, (अपि १।,) सूर्य्यस्य ६।, यः १।, ॥ १९ ॥

सोदीपीति । स मत्स्यादेशस्य पतिः अदीपि । यस्य त्विषा प्रभावेण अरयः शत्रवः सदा असीदन् । अत्र सादृश्यमाह । जलादुद्धृता उषसः सङ्गात् नद्या मत्सीवत् । यथा तादृशी मत्सी सीदति तथेतार्थः । सः १।, अत् १।, ईपि ७।, मत्स्यस्य ६।, ॥ २० ॥

इति शास्तीति । हे प्रजे ! कदापि तीव्रं अतिशयं यथा तथा खसात् खं इन्द्रियं तस्य वशीभूता न एधि न भव । पथां सत्पथानां दृश्वरी दर्शनशीला भव । असतां अवावरी त्यागकर्त्री, सतां धीवरी धारणकर्त्री भव इति स चमावनः पृथ्वीपालः शास्ति । पक्षे सत्तमा इति सम्बोधनं । इति शास्ति सत्त्वं विदधातीतार्थः । वनः ५।, नच खसात् ५।, भवति ८। ईप् १।, रङ् १।, (कदापि)। हे ७।, ॥ २१ ॥

देवेति । देवपुरोधसो वृहस्पतेः सकाशात् स राजा न गौणोपि न्यूनोपि न अर्थात् विद्यादिभिः । पक्षे । देवपुर इति सम्बोधनं । उधसः ५।, सः १।, (अपि), न १।, गौणं ७।, (इति श्रूयते ८।, ॥ २२ ॥

## व्याकरणम् ।

ईयेपि सूर्य्यस्य यः । सूर्य्यस्य यो लोपो स्यात् ईये ईपि च परे । सौरेय, सौरी, ॥ १९ ॥

सोऽदीपि मत्स्यस्य । मत्स्यस्य स यकारः अत् अस्थायी स्यात् ईपि परे । मत्सी ।

सदैवोषसश्च । षस्य यकारोपि अस्थायी स्यात् सदैव ईपि परे । उ सम्बोधने । "सूर्य्यागस्त्ययोः तिष्यपुष्ययोः यामत्स्यस्य येपोर्भेणो ईपि यः ।" मुं ॥२०॥ "६।४।१४९।" पां ।

**तमन्वधावत् प्राक्जन्म विद्यासिद्धा स्वकालतः।**
**वत्सं धेनुरिव प्रातः पीनोध्नी बहुहायणी ॥ २३ ॥**
**अलमस्य गुणान् गदितुं नहि कवयो वाचिनो हायनादपि।**
**संख्यातो वहिरपि पञ्चहायनीभिर्मिथो रहसि गीतान् ॥२४॥**
**धर्मजातेरतः स्त्रीयुङ् नादिमूलादिकं विना।**
**नित्याग्निहोत्रिणा येनैणीदृक् मादनरोचिषा ॥ २५ ॥**

---

तमन्विति। सिद्धा प्राग्जन्मविद्या स्वकाले यं राजानं अनुधावत् प्राप्तेत्यर्थः। अत्र सादृश्यं। वत्सं धेनुरिवेत्यादिकं सुगमं। पद्ये। पूर्व्वसूत्रस्य उदाहरणं ॥ २३ ॥

अलमिति। वाचिनो वक्तारः कवयः हायनादपि वत्सरादपि अस्य नृपस्य गुणान् गदितुं अलं असमर्थाः। कीदृशान् संख्यातोपि वहिः असंख्येयानित्यर्थः। रहसि निर्ज्जने पञ्चवर्षीयाभिः मिथः परस्परं गीतान् अनुकीर्त्तितान्। पद्ये। नहि क इत्यत्र क इति सम्बोधनं। वयोवाचिनः ५।, हायनात् ५।, (अपि १।) संख्यातः ५।, ॥ २४ ॥

धर्म्मेति। स कीदृशः स्त्रीयुङ् सस्त्रीकः सन् धर्म्मजाते धर्म्मसमूहे रतः अनुरक्तः। येन नित्याग्निहोत्रिणा मूलादिकं विना न आदि न भक्षितं। एणीदृशां मृगीदृशां मादनं रोचिर्यस्य स तथा तेन। पद्ये। धर्म्म इति सम्बोधनं। जातेः ५।, अतः ५।, स्त्रीयुङ् नादिमूलादिकं २।, (विना १।) ॥ २५ ॥

व्याकरणम्।

वनो नचखसात् भवतीवृङ्कदापि हे। नकारात् अचात् खसाच्च विहितात् वनः ईप् भवति वनो रङ् च कदापि बहुव्रीहौ। दृश्वरी, अवावरी, धीवरी। "वनोरच ॥" पा ॥ "ण च खसाद्वनो रङीप् वातु हे।" मुं ॥ २१ ॥

उधसः सोपि न गौणे इति श्रूयते। उधस ईप् स्यात् सस्य च नस्यात् गौणे अर्थे। पीनोध्नी ॥ २२ ॥ २३ ॥

वयोवाचिनो हायनादपि संख्यातः। संख्यापूर्व्वकात् वयोऽर्थात् हायनादीप् स्यात्। पञ्चहायनीभिः। "स्त्र्यूधः संख्यादि दामवयोर्थ हायनाद्ङे। मुं।" ॥ २४ ॥

जातेरतः स्त्रीयुङ् नादिमूलादिकं विना। जातिवाचिनोऽकारान्तात् स्त्रियामीप् स्यात् नितान्तस्त्रीलिङ्ग यकारोङ् नादिमूलादिकं वर्ज्जयित्वा। एणी ॥ "४। १। ६३। ६४। पां" "जातेरतोऽस्त्रीयुङ्सत्काण्डप्राक्प्रान्तशतैकादिपुष्पसम्भस्त्राजिनैकशणपिण्डादिफलनादिमूलात्। मुं।" ॥ २५ ॥

अथ प्रविशति पुष्पकेतुः सखीसंवृते तस्य महिषी च।

राजा (परिक्रम्य आह।)

ममेयं सुभगा राज्ञी वैश्यासूतिः कनीयसी।
दिवश्च्युता महोल्केव रूपिण्यमाङ्गलिक्यपि॥ २६॥
ज्यायसी महिषी साध्वी निरस्ता शयनादियम्।
मया दुग्धात् मक्षिकेव प्रेयसी चित्तरञ्जिना॥ २७॥
कनिष्ठैषैकदा स्वाङ्के ज्येष्ठापुत्रमुरःसरम्।
एतं पयः पाययित्वा दिग्धं प्राणैर्व्ययोजयत्॥ २८॥

(इत्युक्त्वा राजा मुमूर्च्छ। अनन्तरमुवाच च ज्येष्ठां प्रति।)

अमूला कुम्भिकेवेयं प्लवते दुःखसागरे।
तस्या एका पिण्डफला सन्ततिः किं हताऽनया॥ २९॥

ममेयमिति। इयं मम वैश्यायाः पुत्री कनीयसी राज्ञी सुभगा च आकाशात् च्युता महोल्का इव रूपिणी अमाङ्गलिकी अपि॥ २६॥

ज्यायसीति। इयं ज्येष्ठा महिषी साध्वी शयनात् शय्याया मया निरस्ता दुग्धात् मक्षिका इव॥ २७॥

कनिष्ठेति। एषा कनिष्ठा महिषी एकदा स्वाङ्के एतं आगतं उरःसरं वक्षसा गमनशीलं ज्येष्ठाया महिष्याः पुत्रं दिग्धं विषाक्तं पयः पाययित्वा प्राणैर्व्ययोजयत्॥ २८॥

अमूलेति। इयं ज्येष्ठा महिषी दुःखसागरे प्लवते अमूला मूलरहिता कुम्भिका इव। (कुम्भिका पाना इति ख्याता।) अस्याः पिण्डफला एका सन्ततिः किं कथं अनया हता॥२९॥

व्याकरणम्।

पुंडः किं वैश्या॥ २६॥

नित्यस्त्रीलिङ्गस्यतु मक्षिका॥ २७॥

जातेः किं ज्येष्ठा, कनिष्ठा॥ २८॥

नादिमूलादिकं विनेति किं। अमूला, पिण्डफला॥ २९॥

( कनिष्ठां प्रति । )

कुलविच्छिज्जातिरेषा प्रतीकैकाऽसतीतरा ।
नित्यसंसर्गभाक् नैकत्रासूर्य्यासं रहोऽनया ॥३०॥

एतदनुस्मरतो मे वेपथुरासीत् ।

नवाकृतिग्रहा यातुजातिः सा सर्व्वलिङ्गभाक् ।
सकृदाख्यानगम्या वा मायामुग्धस्य नासपी ॥ ३१ ॥

अहह धनलोभात् नृशंसयाऽनया विप्रियं कृतं कदाचिदपि साध्वी नारी नेदृगाचरति ।

कुलेति । एषा कनिष्ठा महिषी कुलविच्छिज्जातिः कुलस्य वंशस्य विच्छिदे विच्छेदाय जातिर्जन्म यस्याः सा तथा । एका मुख्या प्रतीका प्रतिकूला असतीतरा अत्यसाध्वी । अनया आसूर्य्या राक्षस्या सह एकत्र नित्यसंसर्गभाक् सन् रहो निर्ज्जने न आसं अपितु आसं । पक्षे । कुलविच्छिदिति सम्बोधनं । जातिः १।, एषा १।, अप्रतीका १।, एका १।, सतीतरा १।, नित्यसंसर्गभाक् १।, नैकत्र ७॥, ॥ ३० ॥

नवेति । यातुजातिः राक्षसीजातिः आकृतिग्रहणा न, आकृतिदर्शनमात्रेण राक्षसत्वेन बोधगम्या न भवति । अत्र हेतुः सा राक्षसजातिः सर्व्वलिङ्गभाक् सर्व्वेषां लिङ्गं रूपं भजते । असपी राक्षसी मायामुग्धस्य जनस्य सकृदाख्यानमात्रेण बोधगम्या न । पक्षे । नवेति सम्बोधनं । आकृतिग्रहणा १।, या १।, (तु) जातिः १।, सा १।, सर्व्वलिङ्गभाक् १।, सकृदाख्यानगम्या १।, ( वा ) ॥ ३१ ॥

व्याकरणम् ।

जातिरेषाऽप्रतीका एका सतीतरा नित्यसंसर्गभाक् नैकत्र । एषा जातिरुच्यते या अप्रतीका निरवयवा एका सतीतरा नित्या अनेकत्र नित्यसंसर्गभाक् । नित्यसंसर्गः समवायः तच्छालिनी अनेकसमवायिनीत्यर्थः ॥ ३० ॥

कल्पान्तरमाह । आकृतिग्रहा यातु जातिः सा सर्व्वलिङ्गभाक् सकृदाख्यानगम्या वा । असपी । "आकृतिग्रहणा जातिर्लिङ्गानाञ्च न सर्व्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैः सह ।" मु ॥ ३१ ॥

प्रमादतोपि नाप्नोति भीरुः साध्वी मुदन्ततः ।
गुणवत्यर्थतो यातु लघ्वी यस्मै कुलस्थितिः ॥ ३२ ॥

मामपि धिक् ।

सत्खनी स्त्रीमणी त्यक्ता मया काचानुरक्तितः ।
नापादितोपि कामोऽस्या भुक्तिर्ज्जाता तदेनसः ॥३३

कुलजां सुव्रतां हित्वा द्विपात् व्याघ्री मया श्रिता ।
विसृज्य त्रिपदीं म्लेच्छीनिष्ठेव सुखसिद्धये ॥ ३४ ॥

प्राणिप्रतीका दीव्यन्ति ज्वराः शाम्यन्ति चेत्यतः ।
नैभ्यस्तथा भीः क्रूरायाः स्मेरमुख्या यथाभयम् ॥ ३५ ॥

प्रमादेति । भीरुः साध्वी गुणवती ततोऽर्थतः तस्मात् धनात् यातु कदाचिदपि प्रमादतोपि अनवधानतोपि मुदं हर्षं नाप्नोति यस्मै अर्थाय कुलस्थितिः कुलमर्य्यादा लघ्वीभवति । उदन्ततः ५।, गुणवत्यर्थतः ५।, ( यातु ७।, ) ॥ ३२ ॥

सत्खनीति । काचानुरक्तितः काचस्य अनुरक्तितः अनुरागाद्धेतोः सत्खनी सती खनिः आकरो यस्याः तादृशी स्त्रीमणी त्यक्ता मया मुक्ता अर्थात् सद्वंशजं स्त्रीरत्नं मया त्यक्तं । तस्याः स्त्रीमण्याः कामोपि अभिलषितमपि न आपादितः न साधितः तदेनसस्तत्पापस्य भुक्तिर्भोगो जाता । क्तितः ५।, ( ना १। ) ( पात् इतः ) पादितः ५।, ( वा १। ) ॥ ३३ ॥

कुलजामिति । कुलजां सद्वंशजां सुव्रतां वशीभूतां । त्रिपदीं गायत्रीं विसृज्य सुखसिद्ध्यर्थं म्लेच्छजातीयनिष्ठा यथा आश्रीयते तथेत्यर्थः ॥ पद्ये । पूर्व्ववत्तस्य उदाहरणं ॥३४॥

प्राणीति । प्राणिप्रतिका प्राणिनां प्रतिकूला ज्वरा रोगा दीव्यन्ति प्रदीप्यन्ति ते शाम्यन्ति च औषधादिभिरितिशेषः । इत्यतः एभ्यो ज्वरेभ्य स्तथा भीतिर्नस्यात्, क्रूरायाः स्मेरमुख्याः सहास्यवदनायाः सकाशात् यथा भयं स्यात् । पद्ये । यन्तीत्यादिकमुदाहरणवाक्यं । यन्ति गच्छन्ति इत्यर्थः । प्राणिप्रतीकात् ५।, ईप् १।, ॥ ३५ ॥

व्याकरणम् ।

उदन्ततो गुणवत्यर्थतो यातु । गुणविशिष्टस्त्रीवाचकादुदन्तात् ईप् स्यात् यातु कदाचित् विकल्पेनेत्यर्थः । भीरुः, साध्वी, लघ्वी ॥ ३२ ॥

क्तितो नापादितोवा । पात्शब्दादिकारान्तात्र ईप् स्याद्वा क्तितोना नतु क्तेरित्यर्थः । सत्खनी, स्त्रीमणी, । क्तेः किं भुक्तिः । "पाच्छीणादिस्वाङ्गतोऽक्तेर्वा ।" सु ॥ ३३ ॥

द्विपात्, त्रिपदी ॥ ३४ ॥

**तस्मादियं त्यज्या। यतः।**

**स्वदेहस्याप्यस्वक् दुष्टं निर्मोच्यं हितमिच्छता।**

**प्राणप्राणभिलापुरच्छा वक्त्राख्याऽशुभसूचिका॥ ३६॥**

**तथा शोणमुखात् भर्त्तुः सा सपत्न्याः प्रशंसनम्।**

**चण्डी श्रुत्वा रुषा शोणी ग्रसन्तीवावदत् पतिम्॥ ३७॥**

**महिषी (सक्रोधं)।**

**राजन्नाहं मणिक्रीती का व्यथा तेऽस्ति मद्वधात्।**

**क्रीतात् नाट्यर्धनक्रीत्या त्वत्तो वा किन्नु मे सुखम्॥ ३८॥**

स्वदेहस्येति। अस्यार्थः सुगमः॥ ३६॥

तथेति। सा चण्डी शोणमुखात् क्रोधेन रक्तीकृतमुखात् भर्त्तुस्तथा उक्तप्रकारेण सपत्न्याः प्रशंसां श्रुत्वा रुषा क्रोधेन शोणी रक्तवर्णा सती पतिं ग्रसन्तीव अवदत् उवाच। (तथा १) शोणमुखात् ५। ॥ ३७॥

राजन्निति। हे राजन्! अहं मणिक्रीती न, मणना क्रीता न; अतो हेतोः मम वधात् ते तव का वाधास्ति अपितु कापि वाधा नास्ति। नु भोः त्वत्तः सकाशात् मे मम किम्वा सुखं भविष्यतीति शेषः। सुखाभावे हेतुमाह। किम्भूतात् त्वत्तः धनक्रीत्या धनेन क्रीतया अर्थात् मम सपत्न्या नाट्यैर्नानाविधविलासलीलादिभिः क्रीतात्। पद्ये। सूत्रस्य पूर्व्वापर-भागौ उदाहरणघटितवाक्यं। मद्वधादित्यत्र मद इति प्रमत्तस्य वायोः सम्बोधनं। धात् ५।, क्रीतात् ५। ॥ ३८॥

৯

## व्याकरणम्।

प्राणिप्रतीकादीप्। प्राण्यङ्गवाचकादीप् स्यात् वा। स्मेरमुखा॥ ३५॥

प्राण्यङ्गात् किं वक्रमुखा शिला॥ ३६॥

तथा शोणमुखात्। शोणादेरपि ईप् स्याद्वा। शोणी, चण्डी,॥ ३७॥

धात् क्रीतात्। करणपूर्व्वात् क्रीतादीप् स्यात् स्त्रियां। मणिक्रीती, धनक्रीती,।

"क्रीतात् करणपूर्व्वात्।" पां। "धात् क्रीतात्।" मु॑। ॥ ३८॥

( इतुरक्ता सा )

आरक्तात् स्वाङ्गतो हेमाभरणान्यपहाय सा ।
शङ्कभिन्नी निरगमत् गेहात् विद्युत् घनादिव ॥ ३८ ॥

( पुनः सा नृपं प्रति )

वत्स्यामि कानने दीना त्वक्छन्ना फलभक्षिती ।
सेवया विप्रजातेर्व्वाच्छादनान्नागमो न किम् ॥ ४० ॥

अथ पत्नया वधायोद्यतं नृपं प्रति राजपुरोहितः ।

जिघांस पाल ! कान्तान्न पुंसः पत्नी भवेत् यदि ।
वाच्या सा भीषणीयैव निरोध्या वा शवर्य्यपि ॥ ४१ ॥

आरक्तेति । सा महिषी आरक्तात् सम्यक् रक्तवर्णात् स्वाङ्गतः स्वावयवात् हेमाभरणानि अपहाय त्यक्त्वा शङ्कभिन्नी सती ललाटास्थिभिन्नी सती गेहात् निरगमत्, घनात् मेघात् विद्युदिव । पचे । आर इति मङ्गलस्य सम्बोधनं । अमाभरणानीत्यादिकं उदाहरण-वाक्यं । अमाभरणानि अपरिमितभूषणानीत्यर्थः । क्तात् ५।, स्वाङ्गतः ५।, ई ७। ॥ ३९ ॥

वत्स्यामीति । अहं दीना दुःखिनी त्वक्छन्ना वल्कलपरिधाना फलभक्षिती सती कानने वत्स्यामि । अथवा विप्रजातिः सेवया आच्छादनान्नागमः अन्नवस्त्रप्राप्तिः किं न भविता । पचे । विप्रेति सम्बोधनं । जातिः ५।, वा १।, आच्छादनात् ५।, न १। ॥ ४० ॥

जिघांसेति । हे पाल ! पृथिवीपाल ! कान्तां भार्य्यां न जिघांस । यदि पुंसः पत्नी वाच्या गर्हणीया भवेत् तदा सा शवरी अपि नीचजातिरपि भीषणीयैव तस्या भय-प्रदर्शनमेव कर्त्तव्यं निरोध्या वा । (वाच्यान्तु गर्हिते हीने इति मेदिनी) । पचे । जिघां-सेति सम्बोधनं । पालकान्तात् ५।, न १।, पुंसः ६।, पत्नी १।, भवेत् ८। ( यदि १ ) वाच्या १। ॥ ४१ ॥

व्याकरणम् ।

क्तात् स्वाङ्गती ई । स्वाङ्गवाचकात् ई स्थितात् क्तादीप् स्यात् स्त्रियां । शङ्कभिन्नी । "बहुव्रीहेश्चान्तोदात्तात् ।" पां । "स्वाङ्गाद्वे ।" मुं । ॥ ३९ ॥

जातेर्व्वाच्छादनान्न । आच्छादनजातिवर्ज्जात् जातिवाचकात् परात् ई स्थितात् क्तादीप् स्यात् वा । फलभक्षिती । आच्छादनात् किं त्वक्छन्ना । "अस्वाङ्गपूर्व्वपदात् वा ।" पां "वाच्छन्नाज्जातेः ।" मुं । ॥ ४० ॥

राजा (पुरोहितं प्रति।) ब्रह्मन्! चमस्वेति।

पत्नीभिर्व्वान्यनारीभिः सखीभिर्य्याभिरेव वा।
आचर्य्यतेऽसदेवन्ता निपात्या नार्य्यएव हि॥ ४२॥

युवत्यो वा पलिक्न्यो वा न विश्वास्या हितैषिणा।
विपत्तौ समशक्त्यः स्युर्यूनीव पलिताऽसिता॥ ४३॥

अथ राजा तां पत्नीं अन्तर्व्वत्नीं ज्ञात्वा तद्दधान्निवृत्तो जातवैराग्य आह।

कुण्डी पात्रं वृषी शय्या अरण्यानी स्थली गृहं।
युज्यते मे न भोगोपि भोगिन्या दूषिते गृहे॥ ४४॥

---

पत्नीति। अन्यनारीभिर्व्वा अथवा सखीभिर्य्याभिरेव एवं एतादृशं असत् असत्कर्म्म आचर्य्यते क्रियते ता नार्य्यः निपात्या एव, अत नार्य्य एव इत्यत्र एवकारस्य निपात्या इत्यनेनान्वयः। (सदा १।) ईवन्ताः १॥, निपात्या १॥, नार्य्यः १॥, (एव १) (हि १)॥ ४२॥

युवत्य इति। युवत्यस्तथा पलिक्नी वृद्धा हितैषिणा जनेन न विश्वास्याः। ननु वृद्धा किं कर्म्मर्हन्ति इत्याह, विपत्तौ अर्थात् विपद्घटने यूनीव पलिता असिताः समशक्त्यः स्युः। तथाहि। विपद्घटने युवती वृद्धा अर्द्धवृद्धा च सर्व्वास्तुल्यसामर्थ्या इत्यर्थः। युवत्यः १॥, वा १।, ॥ ४३॥

कुण्डीति। कुण्डी कमण्डलुः पात्रं, वृषी यत्यासनं शय्या, अरण्यानी महारण्यस्थली गृहं, मे मम सम्बन्धे युज्यते उपयुक्तं भवति। ननु भोगिन्या सर्पा दूषिते गृहे भोगोपि युज्यते॥४४॥

व्याकरणम्।

पालकान्तान्नपुंसः पत्नी भवेत् यदि वाच्या। पुम्वाचकादीप् स्यात् पत्नार्थे, पालकान्तशब्दात् नस्यात्। शवरी। "पुंयोगादाख्यायां।" पा। "पत्नामपालकान्तात्।" मु। ॥४१॥

सदेवन्ता निपात्या नार्य्यएव हि। नारीप्रभृतयः शब्दा ईवन्ता निपात्या एव नित्यं। पत्नी, नारी, सखी,। "४।१।३२।" पा। "नारीसखीत्यादि।" मु।॥ ४२॥

युवत्यो वा। युवत्यादयः शब्दाः निपात्यन्ते वा। युवती, पलिक्नी, असिक्नी,। पक्षे। यूनी, पलिता, असिता, इत्यादि॥ ४३॥

कुण्डी, वृषी, अरण्यानी, स्थली, इत्यादि॥ ४४॥

(ज्येष्ठां महिषीं प्रत्याह ।)

अशिश्वीयं यातु बन्धून् विधवा पतिवत्यपि।
चिरं निर्म्मुक्तकवरी मृद्घटीवाऽनलङ्कृता ॥ ४५ ॥

(कनिष्ठां महिषीं प्रति ।)

अन्तर्व्वत्न्यप्यसौ क्रूरा कामुकी पुत्रघातिनी।
अवध्या यदि निर्व्वास्या हिमानी गिरिकानने ॥ ४६ ॥
तदुचितं हि वृषाकपेः पत्न्यर्थेपैऽङ्गदितस्ततो मुग्धः।
यत्पतिनिन्दाऽसहनाऽत्यजदसून् यत् वृषाकपायी ॥ ४७ ॥

(पुरोहितं प्रति ।)

अशिश्वीति। इयं अशिश्वी शिशुरहिता ज्येष्ठा पत्नी बन्धून् पित्रादीन् यातु गच्छतु। किम्भूता पतिवत्नी अपि विधवा दुर्भगत्वादिति भावः। चिरं निर्म्मुक्तकवरी असंस्कृतकेशा। अनलङ्कृता मृद्घटीव मृत्पात्रमिव ॥ ४५ ॥

अन्तर्व्वत्नीति। इयं पुत्रघातिनी कामुकी क्रूरा अन्तर्व्वत्नी गर्भिणी इति हेतोर्यदि अवध्या तदा हिमानी पर्व्वतकानने निर्व्वास्या वनवासिनी कार्य्या ॥ ४६ ॥

तदुचितमिति। वृषाकपेः शिवस्य तत् उचितमेव। किन्तदाह। स शिवः मुक्तः सन् पत्न्यर्थेपि भार्य्याकृतेपि इतस्ततो यत् ऐङ्गत् बभ्राम। तस्य उचितत्वे हेतुमाह। यत् यस्मात् वृषाकपायी भवानी पतिनिन्दाया असहना सोढुमशक्ता सती असून् प्राणान् अत्यजत्। पक्षे। तदुचितं उ भोः मयोक्तं तत् चितं गृहीतं इति गुरोः प्रश्नः। वृषाकपेः ५।, पत्न्यर्थे ७।, (अपि १) ऐङ् १।, गदितः १। ॥ ४७ ॥

व्याकरणम्।

अशिश्वी, पतिवत्नी, कवरी, घटी, ॥ ४५ ॥

अन्तर्व्वत्नी, कामुकी, हिमानीत्यादि ॥ ४६ ॥

वृषाकपेः पत्न्यर्थेऽपैऽङ् गदितः। वृषाकपिशब्दात् पत्न्यर्थे ऐङ् कथितः। अपिकारादीप् च। वृषाकपायी। "वृषाकप्यग्निकुसितकुसीदानामुदात्तः।" पा। ॥ ४७ ॥

मनुपूतक्रत्वग्निमुखादप्यग्नायी हुतं हविः।
श्राद्धेन देवा नाश्नन्ति दुष्टभार्य्यस्य याजिनः॥ ४८॥

तथा—

मनावीपतिवत् विप्रमुखेऽतिश्रद्धया हुतम्।
कव्यं नाश्नन्ति पितरः पक्कं यत् दुष्टभार्य्यया॥ ४९॥

अस्मात्मम गृहाश्रमे दैवे पित्ते च कर्म्मणि अधिकारो नास्तीति आश्रमान्तरमाश्रयणीयम्।

विप्रानङ् च ब्रह्ममृड़वरुणेन्द्रान्नचार्च्चयम्।
ब्रह्माणीम्वा मृड़ानीम्वा कुभार्य्यासक्तधीः सदा॥ ५०॥

मनुपूतेति। श्राद्धेन श्रद्धान्वितेन ऋत्विजा अग्नायीहुतमपि स्वाहामन्त्रेण हुतमपि दुष्टभार्य्यस्य याजिनो यागकर्त्तुर्हविः पुरोडासादिकं मनुपूतक्रत्वग्निमुखादपि मन्त्रपूतयज्ञाग्निमुखादपि देवा नाश्नन्ति। (अग्नायी स्वाहा च हुतभुक्प्रियेत्यमरः)। मनुपूतक्रत्वग्निमुखात् ५।, (अपि १)॥ ४८॥

मनावीति। मनावीपतिर्म्मनुः मृड़ानीपतिरितिवत्। तत्सदृशविप्रस्य मुखे हुतमपि। अन्यत् सुगमं॥ ४९॥

विप्रेति। अहं सदा कुभार्य्यासक्तधीः सन्। विप्रानङ् विप्रस्यापि अपूजकः। विप्रान् न अञ्चतीति विप्रानङ्। तथा ब्रह्ममृड़वरुणेन्द्रान् ब्रह्माणीं मृड़ानीम्वा नार्च्चयं नार्च्चितवान्। पक्षे। विप्रेति सम्बोधनं। आनङ् १।, (च १) ब्रह्ममृड़वरुणेन्द्रात् ५।,॥ ५०।

व्याकरणम्।

मनुपूतक्रत्वग्निमुखादपि। मनुपूतक्रतु अग्न्यादेरपि ईप् ऐङ् च स्यात् पत्यर्थे। अग्नायी। "वृषाकप्यग्नि-मनुपूतक्रतुकुसितकुसीदादैङ् च।" मु॰।॥ ४८॥

मनावी॥ ४९॥

आनङ् च ब्रह्ममृड़वरुणेन्द्रात्। एभ्यः पत्यर्थे ईप् आनङ् च स्यात्। ब्रह्माणी, मृड़ानी। "इन्द्रवरुणभवशर्व्वरुद्रमृड़हिमारण्ययवयवनमातुलाचार्य्याणामानुक्।" पां।॥ ५०॥

( वनं जिगमिषुः शिवं प्रार्थयन्नाह। )

सर्व्वदर्शिन्! रुद्र! भव! सर्व्वतस्त्वावितासि माम्।
पितेव सह रुद्राण्या गहने गिरिसानुषु ॥ ५१ ॥

( वेदान्ती। )

ततः स्वकुलतिलकसूर्य्याचार्य्योपाध्यायेभ्यः चत्रियार्य्यमातुलेभ्यो वा सूर्य्याणी उपाध्यायी आचार्य्याणी मातुलाभ्यश्च नमस्कृत्य कृताञ्जलिरुवाच सः ॥ ५२ ॥

न संख्यातोऽपराधो मे चन्तव्यो वः कृपावताम्।
विमूढ़ाया वयोवर्षपञ्चायाः सन्ततेरिव ॥ ५३ ॥

सर्व्वेति। हे सर्व्वदर्शिन्! हे रुद्र! हे भव! त्वं रुद्राण्या सह पितेव मां गिरिसानुषु गहने च सर्वतः सर्वस्मात् अवितासि रक्षितासि। पक्षे। सर्व्वदर्शिन्निति सम्बोधनम्। रुद्रभवसर्व्वतः ५ ॥, (च) ॥ ५१ ॥

तत इति। अनन्तरं स राजा स्ववंशमौलिभूतसूर्य्यादिभ्यः नमस्कृत्य चत्रियार्य्यादिभ्यः चत्रियश्रेष्ठादिभ्यः तथा आचार्य्याण्यादिभ्यश्च नमस्कृत्य उवाचेत्यन्वयः मातुलेभ्यो-वेत्यत्र वा शब्दः समुच्चयार्थकः। पक्षे। स्ववंशतिलक इति सम्बोधनम्। सूर्य्याचार्य्योपाध्यायेभ्यः ५ ॥, चत्रियार्य्यमातुलेभ्यः ५ ॥, (वा १।) ॥ ५२ ॥

न संख्यात इति। मे मम असंख्यातोऽपि अपराधः कृपावतां वो युष्माकं चन्तव्यम्। दृष्टान्तमाह। मूढ़ाया वयोवर्षपञ्चायाः सन्ततेरपराध इव इत्यन्वयः। वयो वर्षाणि पञ्च यस्या इति विग्रहे अनन्तात् डाप् प्रत्यये वयोवर्षपञ्चेति सिद्धम्। न १।, संख्यातः ५।, ॥ ५३ ॥

व्याकरणम्।

रुद्रभवसर्व्वतश्च। एभ्योऽपि ईप् आनङ् च स्यात्। रुद्राण्या। "ब्रह्मरुद्रभवसर्व्वमहेन्द्रवरुणादानङ् च।" सु ॥ ५१ ॥

सूर्य्याचार्य्योपाध्यायेभ्यः चत्रियार्य्यमातुलेभ्यो वा। सूर्य्याणी, उपाध्यायी, आचार्य्याणी, मातुलेत्यादि। "मातुलोपाध्यायचत्रियाचार्य्यसूर्य्यार्य्याद्वा।" सु ॥ ५२ ॥

न संख्यातः। संख्यावाचकात् ईप् न स्यात्। वयोवर्षपञ्चायाः ॥ ५३ ॥

न मनः स्वसृमात्रादेः सेवायां स्मानुरज्यते ।
तदागः क्षम्यतां मातः ! सीमाया मेऽल्पमेधसाम् ॥ ५४ ॥
अहो कामदुघाजेभ्यो न मयाजानुरक्तिना ।
आदृता यत् भवत्सेवां हित्वाऽसत्स्वीरतोऽवसम् ॥ ५५ ॥

( वेदान्ती । )

यावतीर्दुहितृर्व्वाला बह्वीभिर्मधुरोक्तिभिः ।
सान्त्वयन् जातवैराग्यो वृद्धाश्रममियेष सः ॥ ५६ ॥
एतदुदन्तात् श्रुतात् चेतनाशून्यमानवजातेरपि भवति
हृत्क्षेत्रे वैराग्यबीजम् असद्वधूमायामुक्तिफलकम् ॥ ५७ ॥

न मम इति । स्वसृमात्रादेः सेवायां मम मनो न अनुरज्यते स्म अनुरक्तं नासीत् हे मातः ! तदागः तदपराधः क्षम्यताम् । कीदृशस्य मे अल्पमेधसाम् अल्पबुद्धीनां सीमाया अवधिभूतस्य । न १।, मनः ५।, स्वसृमात्रादेः ५।, ॥ ५४ ॥

अहो इति । अहो खेदे । अजानुरक्तिना अजा छागी तस्यामनुरक्तिरनुरागो यस्य स तथा । तादृशेन मया कामदुघाजेभ्यः कामदुघा अजागावः इमौ हस्तिनी च न आदृताः । यत् यस्मात् भवत्सेवां भवतीनां सेवां हित्वा असत्स्त्रीरतः सन् अवसम् उषितवान् । अजेभ्यः ५॥, न १।, ॥ ५५ ॥

यावतीति । स राजा उत्पन्नवैराग्यः सन् वृद्धाश्रमं वानप्रस्थाश्रमम् इयेष वाञ्छितवान् ॥ ५६ ॥

व्याकरणम् ।

न मनः स्वसृमात्रादेः मनन्तशब्दात् स्वसृमात्रादेश्च ईप् न स्यात् । सीमायाः, मातः ॥ ५४ ॥

अजेभ्यो न । अजादेरीप् न स्यात् । अजा । "नमन् संख्यास्वसजादेः ।" सु ॥५५॥

नेपीत्युक्तेः यावती, बह्वीभिः ॥ ५६ ॥

( अथ स्मार्त्तादयो वेदान्तिनं प्रति । )

अमृतोपमानात् वामाच्चारोराह्लादस्य जनकात् भवतो भारतीनिकरादास्वादितात् रम्भोरूणामधरसुधायामपि विरागो जायते ॥ ५८ ॥

क्वचित्तनु मुखादहो रसिक ! नारसज्ञान्तिके
इमां रसिकभारतीं रसिकचेतसो मोदिनीम् ।
स्फुटन्नवरसां पदाद्यवयवेन मृद्वीं नवाम्
यतो मृदुतनूर्नवा वसति जाल्महस्तं गता ॥ ५९ ॥

इदानीमेतत्प्रबन्धस्य श्रवणस्य प्रयोजनमाह एतदिति । एतदुदन्तात् उक्तादेतत्प्रबन्धात् श्रुतात् अवधारिताद्वेतोः चेतनाशून्यमानवजातेः विशिष्टज्ञानरहितमानवस्य अर्थात् विवेकरहितस्य हृत्चेते वैराग्यबीजम् उप् उप्तम् आरोपितं भवति । कीदृशमित्याह । असद्भूमायामुक्तिफलकम् असत्स्त्रीमायामुक्तिः फलं यस्य तत् तथा । पद्ये । एतदिति एतदवधारयेति शेषः । उदन्तात् ५।, श्रुतात् ५।, चेतनाशून्यमानवजातेः ५।, उप् १।, ॥ ५७ ॥

अमृतेति आस्वादितात् आस्वादनरूपेण श्रुतात् भवतो भारतीसमूहात् रम्भोरूणाम् अधरसुधायां विरागो जायते । कीदृशात् अमृतमुपमानं यस्य तत् तथा । अमृततुल्यादित्यर्थः । वामात् मनोहरात् । उरोर्विपुलस्य आह्लादस्य जनकात् । वामौ वल्गुप्रतीपौ इति नड्डार्कविपुलमिति चामरः । पद्ये । अमृतेति सम्बोधनम् । उपमानात् ५।, वामात् ५।, (च) उरोः ५।, ॥ ५८ ॥

व्याकरणम् ।

उदन्तात् श्रुतात् चेतनाशून्यमानवजातेरुप् । उदन्तात् शब्दात् चेतनाशून्यमानवजातेरर्थात् अप्राणिजातेर्मानवजातेश्च उप् स्यात् । वधूः ॥ ५७ ॥

उपमानात् वामाच्च परात् उरोः उप् स्यात् । रम्भोरूणाम् ॥ ५८ ॥

( अथ राजा वनं जिगमिषुरमात्यादीन् प्रत्याह । )

नामार्थश्चेन्नापरार्थान्वितः स्यादर्थिनामतः ।
विभक्तिः प्रथमा तस्य विवादायाविवेकिनः ॥ १ ॥

क्वचिदिति । हे रसिक ! इमां रसिकभारतीं रसिककवेर्व्वाक्यम् अरसिक-स्यान्तिके क्वचिदपि सुखादृशिः सुखस्य वाञ्छे न तनु न विसारय । कीदृशीं स्फुटनव-रसां स्फुटन्तो व्यक्तीभवन्तो नवसंख्यकाः शृङ्गारादिरसाः यस्या सा तथा ताम् । पदाद्यवयवेन मृद्वीं पदवाक्यादिरूपावयवेन मृद्वीं कोमलां कोमलपदवाक्यघटिता-मित्यर्थः । अरसिकान्तिके अप्रकाशे हेतुमाह । यतो यस्मात् मृदुतनुः कोमलाङ्गी नवा नव्या कविभारती जाल्महस्तं गता असमौच्यकारिजनस्य हस्तं गता सती चसति । नारीपक्षे । स्फुटन्नवरसामिति व्यक्तीभवत्नूतनानुरागां नवां नवोढां पदाद्यवयवेन कोमलाम् अन्यत् योजनीयम् । क्वचित् ७।, तनुसुखात् ५।, ॥ ५८ ॥

नामेति । नाम सम्भावनायाम् । अर्थिनां धनिनां अर्थो धनं चेत् यदि परार्थान्वितः धर्म्मादिरूपपरमपुरुषार्थानामनुगतो न स्यात् । अतो हेतोः अविवेकिनो जनस्य तस्य धनस्य प्रथमा विभक्तिः प्रथमो भागः विवादाय ज्ञातिकलहाय भवतीत्यर्थः अत्र नाशब्दो निषेधार्थकः । नामार्थः १।, ( चेत् ) ( न १। ) अपरार्थान्वितः १। स्यात् ८।, अर्थिनामतः ५।, विभक्तिः १। प्रथमा १।, ॥ १ ॥

व्याकरणम् ।

क्वचित् तनुसुखात् । तनुप्रभृतिशब्दात् क्वचित् अर्थात् विकल्पेन ऊप् स्यात् । मृदुतनूः । "तन्वादेर्व्वा" सुं ॥ ५८ ॥

इति स्त्रीत्यपादः ॥ ० ॥

---

नामार्थश्चेन्नापरार्थान्वितः स्यादर्थिनामतः विभक्तिः प्रथमा । चेत् यदि नामार्थो लिङ्गार्थोऽपरार्थान्वितो धात्वर्थाद्यन्वितो न स्यात् तदा अर्थिनामतः सार्थकलिङ्गात् प्रथमा विभक्तिः स्यात् । अविवेकिनः ॥ १ ॥

अपरास्तु द्यूतपानपरदारमदाय तत् ।
यत् स्वं सत्पात्रसात्भूतं तदेव स्वं समुच्यते ॥ २ ॥

अतो मम यावन्ति धनानि ब्राह्मणेभ्यो दीयन्ताम् । इति ते तथा चक्रुः मन्त्री आह ।

तथासम्वो धनेशानां कोषस्य स्यात् यथोन्नतिः ।
स कोषोऽद्यार्थिसात्भूतो राजन् ! राज्यस्य का गतिः ॥ ३ ॥

राजा आह । ज्येष्ठामहिषीयं राज्येश्वरी भविष्यति । अथ राजपुरोहितो नृपं प्रति । राजन् ! मित्राणि त्वामनुगच्छन्तु । राजा तं प्रति ।

उक्तार्थकारकं यत् स्यात् तस्मिन् प्रीतिर्ममास्ति न ।
चिन्तितार्थकरं मित्रमीशं मृगयतोऽधना ॥ ४ ॥

अपरेति । अपरा धनस्य विभक्तयो द्यूतपानगर्व्वाय भवति । तस्मात् यत् स्वं यत् धनं सत्पात्रसात्भूतं तदेव स्वम् आत्मीयम् उच्यते । पद्ये । सूत्रस्य उदाहरणम् ॥ २ ॥

तथेति । धनेशानां वो युष्माकं कोषस्य धनागारस्य यथा येनोपायेन उन्नतिः स्यात् तथा तदुपायं कुर्वन् अहम् आसम् । स कोषोऽद्य अर्थिसात्भूतः हे राजन् ! राज्यस्य का गतिर्भवेत् अत्र वः इति आदरे बहुत्वम् । तथा १।, सम्बोधने ७।, ॥ ३ ॥

उक्तेति । यन्मित्रं सुहृत् उक्तार्थकारकम् उक्तस्यैव अर्थस्य प्रयोजनस्य सम्पादकं स्यात् तस्मिन् मित्रे मम प्रीतिर्नास्ति किम्भूतस्य मम । चिन्तितार्थकरं चिन्तितस्य अर्थस्य पुरुषार्थस्य सम्पादकं मित्रम् ईशं मृगयतः अन्वेषणं कुर्वतः । मृगयत इति "मार्गं मार्गं मृगयति मृगाराति रामे विरामे" इतिवत्परस्मैपदम् । पद्ये । ईतिरित्यादिकम् उदाहरणवाक्यम् ईतिः प्रवासः । उक्तार्थकारकम् १।, यत् १।, स्यात् ८।, तस्मिन् ७।, प्री १।, ॥ ४ ॥

व्याकरणम् ।

अपराः ॥ २ ॥

तथा सम्बोधने । सम्बोधनेऽपि प्रथमा स्यात् । राजन् ! ॥ ३ ॥

वनवासिनो भक्ष्यं जलपात्रं रक्षकं किङ्करं यानशय्यादिकं नापेक्षन्ते । यतः ।

द्रुमाणामातिथ्यं सुलभमशनं स्वाञ्जलिरसा-
वमत्रं पानञ्च त्रिजगदवनो मेऽपि शरणम् ।
अदानीयौ प्रेष्यावपि निजकरौ चिन्तितकरौ
पदभ्रंशं यानं स्वयुगनलसं भूश्च शयनी ॥ ५ ॥

( पुरोहितो नृपं प्रति । )

इयं पतिव्रता ज्येष्ठा राज्ञी त्वाऽन्वेतुमिच्छति ।
श्रुतिरप्यस्ति सस्त्रीको धर्मकर्माचरेदिति ॥ ६ ॥

द्रुमाणामिति । द्रुमाणां वृक्षाणाम् आतिथ्यम् अतिथ्युद्देश्यकम् अशनं भक्ष्यं सुलभम् अयत्नलभ्यम् । असौ स्वाञ्जलिः पानम् अमत्रं पीयते अनेनेति पानं पानसाधनं पात्रम् । त्रिजगदवनः त्रिजगत्रक्षकोऽर्थात् महेश्वरो मेऽपि ममापि शरणं रक्षकोऽस्तीति शेषः निजकरौ स्वहस्तौ प्रेष्यौ किङ्करौ अपि स्तः इति शेषः । वेतनभुग्भ्यामेतयोरुत्कर्षमाह अदानीयौ दीयते अर्थात् वेतनं याभ्यस्ते दानीयास्तद्भिन्नौ । कीदृशौ चिन्तितकरौ चिन्तितमात्रनिष्पादकौ । पत् पदद्वन्द्वं यानं वाहनम् अस्तीति शेषः कीदृशम् अभ्रंशं न भ्रश्यते अस्मादिति । अभ्रंशं तथाहि तस्मात् पतनशङ्का नास्तीति तस्य उत्कर्षः । कीदृशं स्वयुक् स्वेनैव युज्यते इति स्वयुक् स्वत एवोत्युक्तम् अनलसम् आलस्यादिरहितं भूः पृथिवी शयनी शय्या । पद्ये । सूत्रस्य उदाहरणम् ॥ ५ ॥

इयमिति । अन्वेतुं सह गन्तुम् । पद्ये । क्वचित् समासेनापि उक्तार्थं प्रथमेति दर्शयितुमाह इयमिति ॥ ६ ॥

व्याकरणम् ।

यथामुक्तार्थकारकाणां क्रमेण उदाहरणानि । सुलभम् अशनं, पानम् अमत्रं, त्रिजगदवनः, अदानीयौ प्रेष्यौ, अभ्रंशं यानं, भूः शयनी ॥ ५ ॥

सस्त्रीकः ॥ ६ ॥

राजा विहस्य तं प्रति । अहह एवमेव ।

या भ्रातृणां सहजसद्भावभेदके कर्म्मणि द्वितीया ।
यतते किमु साहाय्यं चरिता सा परपुरुषे प्रीतौ ॥ ७ ॥

(अपि च) समाधिस्थोऽधिकरणं कर्म्मैव कुरुते न हि ।
परमेशं परं ध्यायेत् हृत्सरोजमधिष्ठितम् ॥ ८ ॥

अतो योगिनां भार्य्यया प्रयोजनं नास्ति । पुरोधास्तं प्रति ।

येति । या द्वितीया पत्नी भ्रातृणां सहजसद्भावभेदके सहजो नैसर्गिकः सद्भावः प्रणयस्तस्य भेदके विच्छेदकारके कर्म्मणि यतते यत्नं करोति । नु वितर्के सा द्वितीया परपुरुषे अर्थात् परमात्मनि मे मम प्रीतौ प्रीतिसिद्धये साहाय्यं चरिता चरिष्यति अपितु न करिष्यतीत्यर्थः । तथाहि या पत्नी स्वभावतो भ्रातृभेदकरा सा परे पुरुषे मम प्रीतिसिद्धौ किं साहाय्यं करिष्यतीत्यर्थः "द्वितीया सहधर्म्मिनी" "चेतज्ञ आत्मा-पुरुष इति चामरः" । पक्षे या इति ज्ञानिनः सम्बोधनं भ्रातृणां सहजसद् इति भ्रातृणां मध्ये स्वाभाविकगतिशीलस्य सम्बोधनम् । भावभेदके ७।, कर्म्मणि ७।, द्वितीया १।, ॥ ७ ॥

समाधीति । समाधिस्थः समाधिना योगेन तिष्ठतीति समाधिस्थो जनः अधिकरणं करणं शरीरमधिकृत्येति अधिकरणं कर्म्म अर्थात् शारीरिकं कर्म्मैव न कुरुते । परं केवलं हृत्पद्मम् अधिष्ठितं परमेशं ध्यायेत् । करणं साधकतमं चेत्रगात्रेन्द्रियेष्वपीत्यमरः । पक्षे । सम इति सम्बोधनम् । अधिस्थः ६।, अधिकरणम् १।, कर्म्म १।, (एव) ॥ ८ ॥

व्याकरणम् ।

भावभेदके कर्म्मणि द्वितीया'। भावो धात्वर्थस्तद्भेदके तद्विशेषणे कर्म्मणि च द्वितीया स्यात् । मत्प्रेम साधयिता ॥ ७ ॥

अधिस्थोऽधिकरणं कर्म्मैव । हृत्सरोजमधिष्ठितम् ॥ ८ ॥

राट्! समाधिशियश्चैवं श्रूयते श्रीपतिः श्रियम्।
हित्वाऽहिमधिशेतेऽब्धौ योगनिद्रां भजन् क्षये॥ ९॥

तस्मात् योगिनामिव भार्य्यापरिहारः सहजतएव सम्भवति। योगाभ्यासिनस्तु स्त्रीयपरिचर्य्यार्थं वनेऽपि सहधर्म्मिणीमपेक्षन्ते। राजा तं प्रति। ब्रह्मन्! यदि वनिनोऽपि गृहिण्या सह वने वसेयुस्तदा तेषां गार्हस्थ्याश्रमिनः को विशेषः। वनेऽपि तेषां दारपोषणमावश्यकम्। तथा सति।

विशस्याभिनियुक्तस्य दाराणां भोगसाधने।
चेतो भृङ्गोऽभिनिविष्टा कदा विष्णोः पदाम्बुजम्॥ १०॥

पुरोधास्तं प्रति। राजन्! तथास्तु इति तु चिन्तयामि।

राडिति। हे राट्! राजन्! समाधिशिय एव समाधिरेव शीः शयनं निद्रा यस्य तादृशस्यैव जनस्य एवं शारीरकर्म्मरहितत्वं श्रूयते एतदेव दर्शयति श्रीपतिः श्रियं स्वभार्य्यां हित्वा क्षये प्रलयसमये योगनिद्रां भजन् सन् अब्धौ अहिम् अधिशेते। समाधिशिय-स्येत्यत्र चकारोऽवधारणे समाधिशिय एवेत्यर्थः। पक्षे समेति सम्बोधनम्। अधिशियः ६।, (च) (एवं १।,) श्रूयते ८।॥ ९॥

विशस्येति। दाराणां भोगसाधने सुखसाधने अभिनियुक्तस्य विशो मनुष्यस्य चेतो-भृङ्गश्चित्तरूपो भ्रमरः विष्णोः पदाम्बुजं कदा कस्मिन् समये अभिनिवेष्टा अभिनिविष्टो भविता तत्राभिनिवेशे अवकाशो नास्तीति भावः। द्वौ विशौ वैश्यमनुजौ इत्यमरः। विशः ६।, (च) अभिनियुक्तस्य ६।,॥ १०॥

व्याकरणम्।

अधिशियश्चैवं श्रूयते। अधिशीङोऽप्येवं विधीयते। अहिम् अधिशेते॥ ९॥

विशस्याभिनियुक्तस्य। अभिनिभ्यां युक्तस्य विशस्याधिकरणं कर्म्म स्यात्। चेतो भृङ्गो विष्णोः पदाम्बुजम् अभिनिवेष्टा॥ १०॥

अध्यासोऽपि सदा यस्य कविभिः सचिवैरपि ।
स भवान् वनमध्यास्य वस्ता किं पशुभिः सह ॥ ११ ॥

राजा तं प्रति । अहो ब्रह्मन् ! दुष्टभार्य्यं मां प्रति एवं कथं न वदसि । यथा ।

उपावसश्च सर्प्पैरपि भवनं त्वमतो वनम् ।
उपवस्तुं क्षमो व्याघ्रै ऋक्षैश्चावस्तुमप्यलम् ॥ १२ ॥

एवमेव मां प्रति वक्तुं युज्यते । अतएव ।

गृहात् प्रशस्यतेऽरण्यं दुष्टभार्य्यस्य तत् गृहम् ।
पुरान्ववसमेतर्हि चाधिवत्स्यामि काननम् ॥ १३ ॥
विज्ञातवान् स्वदेहार्द्धभाजोऽसत्कर्म्मणाधुना ।
वाढं कालदेशभावं वत्स चिन्त्यमतः परम् ॥ १४ ॥

---

अध्यास इति । यस्य तव कविभिः सचिवैश्च सह सदा अध्यासः उपवेशनं स भवान् वनम् अध्यास्य किं कथं पशुभिः सह वस्ता वासं करिष्यति । ( अधि आस ) अध्यासः ६।, (अपि ) ॥ ११ ॥

उपेति । त्वं सर्प्पैरपि भुजङ्गैरपि सह भवनं गृहम् उपावसश्च वसतिं कृतवानपि । अतो हेतोः व्याघ्रैरपि सह वनम् उपावस्तुं क्षमः शक्तः ऋक्षैरपि सार्द्धं वनमावस्तुमपि अलं समर्थोऽसि । ( उप आ वसः च ) उपावसः ६।, (च) ॥ १२ ॥

गृहादिति । दुष्टभार्य्यस्य जनस्य गृहादपि अरण्यं प्रशस्यते । तत् तस्मात् पुरा गृहम् अन्ववसम् एतर्हि अधुना अरण्यं अधिवत्स्यामि ॥ १३ ॥

विज्ञातवानिति । स्वदेहार्द्धभाजः स्वस्यात्मनो देहार्द्धं भजते या तस्या अर्थात्

ध्याकरणम् ।

अध्यासोऽपि । अधेरासोऽपि अधिकरणं कर्म्म स्यात् । वनमध्यास्य वस्ता ॥ ११ ॥

उपावसश्च । उपाभ्यां वसोऽपि तथा । वनं उपवस्तुं क्षमः । वनं आवस्तुं अलम् ॥ १२ ॥

अन्वधिभ्यामपि मन्तव्यम् । गृहं अन्ववसं, काननमधिवत्स्यामि ॥ १३ ॥

परिश्रमकातरोऽपि।

नल्वं क्रोशे च विश्रान्तो द्रुममूले निशां वसन्।
गत्वाऽघनाशं स्नानार्थी स्थास्यामि मुनिसन्निधौ॥ १५॥

इति निष्क्रान्तः॥ ०॥ इति चतुर्थीरात्रिविनोदः॥ ०॥ *॥

अथ पुनः प्रविशति राजा पुष्पकेतुः। समन्तादवलोक्य अहो अयम् अङ्गिरसो मुनेराश्रमः।

अथैनमेतं प्रणतमुटजद्वारमास्थितम्।
प्रतिपूज्य मुनिर्वाग्मी इदमाहाङ्गिराः प्रियम्॥ १६॥

---

भार्य्याया असत्कर्म्मणा वंशनाशरूपकर्म्मणा अधुना कालदेशादीनां भावं स्वभावं वाढ़ं दृढ़ं ज्ञातवानस्मि। अतः परं वर्त्म साधुः पन्थाः चिन्तनीयम्। पद्ये। हे खदेशार्द्ध-भाजः! विज्ञातवानेतत् सूत्रमिति योजनीयम्। असत्कर्म्मणा १।, धुना १।, वा १।, ढं १।, कालदेशभावं १।, वर्त्म १।॥ १४॥

नल्वमिति। नल्वं चतुःशतहस्तपरिमितं पन्थानं क्रोशे च विश्रान्तः सन् द्रुममूले निशां वसंश्च गत्वा अघनाशं पापनाशार्थं स्नानार्थी स्नानमात्रार्थं मुनिसन्निधौ स्थास्यामि। पद्ये। पूर्व्वसूत्रस्य उदाहरणम्॥ १५॥ ०॥ इति श्रीअजितनाथन्यायरत्नकृतौ राजसरणी-व्याख्यायां चतुर्थीरात्रिविनोदः॥ ०॥ *॥

अथैनमिति। एनं राजानम् एतम् आगतम् उटजद्वारं पर्णशालाया द्वारम्। अन्यत् सुगमम्॥ १६॥

व्याकरणम्।

असत्कर्म्मणा धुना वा ढं कालदेशभावं वर्त्म चिन्त्यम्। अकर्म्मकधातुयोगे काल-देशभावं वर्त्म च ढं कर्म्म वा स्यात्॥ १४॥

नल्वं क्रोशे च विश्रान्तः। द्रुममूले निशां वसन्। अघनाशं स्नानार्थी च स्थास्यामि। ०॥ १५॥

उटजद्वारमास्थितम्॥ १६॥

राजन्! तव कुलोचितमेतत्। यत्ते साधुसङ्गे मतिरासीत्।
तथाहि।

सत्कर्म्मकैश्चातिसङ्गात् तथाऽसत्कर्म्मकैरपि।
निर्व्विकल्पं स्मृतिर्भावः कर्म्म पर्य्येति सङ्गिनः॥ १७॥

तदेवं पश्य। जीवनं विबुधैः सङ्गात् तद्वृत्तिश्चानुवर्त्तनात्।
दितिजोऽपि समीरो सावादितेयत्वमाप्तवान्॥ १८॥

असतो नान्वियात् जातु विपदश्च महामतिः।
मुहूर्त्तं दस्युभिः सङ्गात् माण्डव्यः प्राप तद्गतिम्॥ १९॥

सत्कर्म्मकैरिति। सत्कर्म्मशीलैरसत्कर्म्मशीलैश्च अर्थात् साधुभिरसाधुभिर्व्वा अतिसङ्गात् अत्यन्तसंसर्गात् सङ्गिनः संसर्गिणो जनस्य निर्व्विकल्पं यथा स्यात् तथा स्मृतिर्वर्त्म भावः स्वभावः कर्म्म च पर्य्येति विपर्य्ययं प्राप्नोति। सत्कर्म्मकैः ३॥, (च १।) अतिसङ्गात् ५।, (तथा १।) असत्कर्म्मकैः ३॥, (अपि १।) निर्व्विकल्पम् २।, स्मृतिः १।, भावः १।, कर्म्म २।, पर्य्येति ८।, ॥ १७॥

जीवनमिति। जीवनकालमभिव्याप्य विबुधैः सह सङ्गात् संसर्गात् तद्वृत्तिश्च देवानां वृत्तौ चानुवर्त्तनात् अतिवर्त्तनात् असौ समीरो वायुः दितिजोऽपि असुरोऽपि आदितेयत्वं देवत्वम् आप्तवान्॥ १८॥

असतइति। महामतिर्जनः विपदश्च विपदपरिमितमध्वानमपि अभिव्याप्य जातु कदाचिदपि असतोजनान् नान्वियात् नानुगच्छेत्। अर्थान्तरन्यासमाह। माण्डव्यो मुनिः मुहूर्त्तमभिव्याप्य दस्युभिः सङ्गात् तद्गतिं दस्यूनां गतिं प्राप। पद्ये पूर्व्वसूत्रस्य उदाहरणम्॥ १९॥

व्याकरणम्।

सत्कर्म्मकैश्चातिसङ्गात् तथाऽसत्कर्म्मकैरपि निर्व्विकल्पं स्मृतिर्भावः कर्म्म पर्य्येति। सकर्म्मकैरकर्म्मकैश्च धुभिर्योगे अतिषङ्गात् अत्यन्तसंयोगात् नित्यं स्मृतिः पन्थाः भावश्च कर्म्म पर्य्येति कर्म्म संज्ञः स्यात्। "कालाध्वनोरत्यन्तसंयोगे।" पा। "सदाव्यादिभ्यामौ सर्व्वैः सिद्धे तु धं।" सु॥ १७॥

जीवनं विबुधैः सङ्गात्। तद्वृत्तिमनुवर्त्तनात्॥ १८॥

सत्सङ्गे मतिश्च कालमपेक्षते । यतः ।

कालोऽपि स्यादर्थसिद्धौ कारणं ब्रुवते बुधाः ॥ २० ॥

अत्रोदाहरणम् ।

द्वौ व्रीही तुल्यकालोप्तौ समकालाङ्कुरावपि ।

फलति प्रावृषैवैको हेमन्तेन तथापरः ॥ २१ ॥

राजन् ! भवान् सम्भोगं रथादिकं यानञ्च विहाय सत्सङ्गार्थं पदव्रजस्तपोवनमागतस्तत् तव युज्यते । यतः ।

अपि धोरणिचः प्रवृत्तिमान् सततं कर्म्मणि च स्तुते हिते ।

विहितेतिसुखेच्छया सुधीः स्वमपि त्याजयति ह्यसत्सुखम् ॥ २२ ॥

कालोऽपीति । अर्थसिद्धौ प्रयोजनसिद्धौ अर्थात् फलसिद्धौ कालोऽपि कारणं हेतुरिति बुधाः ब्रुवते । पक्षे । कालः १।, (अपि १) स्यात् ८।, अर्थसिद्धौ ७।, कारणं २।, ब्रुवते ८॥, बुधाः १॥, ॥ २० ॥

द्वाविति । द्वावेव व्रीही एककाले उप्तौ वपनप्राप्तौ एकः प्रावृट्काले फलति अपरो व्रीहिः हेमन्तेन फलति । पक्षे । पूर्व्वसूत्रस्य उदाहरणम् ॥ २१ ॥

अपि धोरणीति । धोरणिचोऽपि रथादिकं यानं धोरणिः तया चरति गच्छतीति धोरणिचः तादृशोऽपि सुधीः अतिसुखेच्छया दुःखेनामिश्रितसुखेच्छया अर्थात् स्वर्गादीच्छया स्तुते प्रशंसिते विहिते श्रुतिविहिते कर्म्मणि प्रवृत्तिमान् जनः असत्सुखं त्यजतीत्यर्थः रथहस्त्यश्वदोलादि धोरणं धोरणिः स्त्रियामिति नव्यकोषसंग्रहः । पक्षे । अपि इति

व्याकरणम् ।

त्रिपदं असतो नान्वियात् ॥ १९ ॥

कालोऽपि स्यात् । सकर्म्मकाकर्म्मकैर्योगे अत्यन्तसंयोगे कालोऽपि कर्म्मसंज्ञः स्यात् । मुहूर्त्तं दस्युभिः सङ्गात् ॥ २० ॥

अर्थसिद्धौ कारणं ब्रुवते बुधाः । प्रयोजनसिद्धौ तु कालभावाध्वनः कारणसंज्ञाः स्युः । प्रावृषा फलति । हेमन्तेन फलति । "अपवर्गे तृतीया ।" पा । "सदाव्यादिव्याप्तौ सर्व्वैः सिद्धि तु धं ।" मु ॥ २१ ॥

राजन्! त्वया धर्म्मार्थं पदव्रजेन तपोवनमागतम्। भोगिनो नृपास्तु।

रथेनोपवनं गत्वा वीक्षयन्ते द्रुमान् प्रियाम्।
आवालेभ्यो दापयन्ति आमोदं घ्रापयन्त्यपि ॥ २३ ॥

राजन्! त्वमिह स्वतो नागतवान् किन्तु निजप्राक्तनकर्म्मणैवानीतोसि। तथाहि। यदेव धरणिचो गृह्णाति शृणोति पश्यति गमनाशनाध्ययन ज्ञानवचनाद्यकर्म्मणः कृतिमान् भवति तत् त्वस्य कर्म्मैव सम्पादयति सर्वं हि कर्म्माधीनम् ॥ २४ ॥

---

अपेयस्य सम्बोधने। पीङ् य पाने इत्यस्मात् तत् पदं सिद्धम्। एतत् सूत्रञ्च धातुविशेषमनुपादाय यत् सामान्यतोऽभिहितं तत् वोपदेवेनानुक्तानाम् ईक्ष त्यज दा घ्रादीनां धातूनां संग्रहार्थम्। धीः ६।, अनिचः ६।, प्रवृत्तिमान् १।, ( सततं २ ) कर्म्म १।, णिचः ६।, ॥ २२ ॥

रथेनेति। रथेन उपवनम् आरामं गत्वा प्रियां भार्य्यां द्रुमान् वृक्षान् वीक्षयन्ते दर्शयन्ति। आवाले आलवाले अभ्भो जलं दापयन्ति आमोदं गन्धं घ्रापयन्ति च। पद्ये। पूर्व्वसूत्रस्य उदाहरणम् ॥ २३ ॥

यदेवेति। धरणिचो धरण्यां चरतीति धरणिचो मर्त्त्यः यदेव शृणोति गृह्णाति पश्यति तथा गमनाशनादिकर्म्मणः गमनाशनादिक्रियायाः कृतिमान् तत्क्रियानुकूलव्यापारवान् भवति तदेव तत्सर्व्वं त्वस्य तस्य जनस्य शुभाशुभकर्म्मैव सम्पादयति। हि

व्याकरणम्।

धीरणिचः प्रवृत्तिमान् सततं कर्म्म णिचः। अणिजन्तस्य धीः प्रवृत्तिमान् कर्त्ता णिजन्तस्य धातोः कर्म्मः स्यात्। स्वं सुखं त्याजयति। प्रियां द्रुमान् वीक्षयन्ते। आवालेभ्यो दापयन्ति। आमोदं घ्रापयन्ति। "गतिबुद्धिप्रत्यवसानार्थशब्दकर्म्माकर्म्मकाणामणिकर्त्ता स णौ॥" पा॥ "धो औ ञः शब्दाशनगतिज्ञार्थाढग्रहदृशश्रोरखादनीक्रन्दाय शब्दायह्वादासूतधवह्वाहिंसाभक्षो ह्रक्रमाभिवादिदृशस्तु वा॥" मु॥ २२ ॥ २३ ॥

अणिचो गृह्णातिशृणोतिपश्यतिगमनाशनाध्ययनज्ञानवचनाद्यकर्म्मणः कृतिमान् भवति तत्त्वस्य कर्म्म। अणिचः अणिजन्तस्य ग्रहशृदृशस्तथा गमनाशनादिवाचिनः तथा

सूतप्रयोजकवह्नो यत्नवान् वहते रथम् ।
तथा नरैर्वाहयति कर्म्म स्वं सदसन्मतिम् ॥ २५ ॥
शुभादृष्टमेव लोकानामिहामुत्र सुखसाधनम् ।
तथान्यत् खादयो न स्यात् क्रन्दोऽपि न तदापकः ।
स हि प्राक् सञ्चितो येन नाक्रन्दयति तेन सः ॥ २६ ॥

---

यस्मात् सर्व्वमेव स्वीयकर्म्माधीनम् । तथाहि मर्त्त्यो लोको यत् यत् कर्म्म करोति तत् सर्व्वं स्वीयकर्म्माधीनमित्यर्थः । पक्षे । धरणिच इत्यत्र धर् इति सम्बोधनम् । धृञ्ङ् स्थितौ इत्यस्मात् विच्प्रत्यये धर् इति सिद्धम् । धरणिचः वार्च्चे इतिवत् । चणिचः ६।, शक्लाशिश्रणीतिपश्यतिगमनाश्रमाध्ययनस्नानवचनाद्यकर्म्मणः ६।, कृतिमान् १।, भवति ८।, ततृत्यस्य ६।, कर्म्म १।, ॥ २४ ॥

सूतेति । सूतः सारथिः प्रयोजको नियन्ता यस्य तादृशो वह्नो घोटको यथा यत्नवान् सन् रथं वहते प्रापयति । तथा स्वं स्वकीयं कर्म्मैव सदसन्मतिं सदसत्प्रवृत्तिं वाहयति प्रापयति । सूतप्रयोजकवहः ६।, यत्नवान् १।, ॥ २५ ॥

तथान्यदिति । अन्यदपि तथा जानीहि इति शेषः । अयः शुभादृष्टं खात् आकाशात् न स्यात् अर्थात् वेधक्रियां विना तन्न भवति । क्रन्दोऽपि क्रन्दनमपि न तदापकः शुभादृष्टस्य प्रापकः । हि यस्मात् येन जनेन सः अयः प्राक्सञ्चितः सः अयः तेन जनेन न आक्रन्दयति । अयः शुभावहो विधिरित्यमरः ॥ ( तथा १। ) ( नो अत् ) न्यत्खादयः १।, न १। स्यात् ८।, क्रन्दः १।, ( अपि १ ) ( न १। ) ॥ २६ ॥

व्याकरणम् ।

अकर्म्मणस्य धातोः कृतिमान् कर्त्ता ततृत्यस्य ततप्रत्ययान्तस्य अर्थात् णिजन्तस्य कर्म्म भवति । सर्व्वं कर्म्माधीनं सम्पादयति ॥ २४ ॥

सूतप्रयोजकवह्नो यत्नवान् । सारथिः प्रयोजको यस्य तादृशवहधातोर्यत्नवान् कर्त्ता णिजन्तस्य कर्म्म स्यात् । स्वं कर्म्म नरैः सदसन्मतिं वाहयति ॥ २५ ॥

तथान्यत् खादयो न स्यात् क्रन्दोऽपि न तथा । नो अद खाद अयः क्रन्दोऽपि धातोः न तथा । तेन स नाक्रन्दयति ॥ २६ ॥

राजन् ! स्त्रियश्चरित्रं ज्ञातवानसि । तस्मात् ।

सह तेन माभि वादि करोति हरतेस्तथा ।
प्रयत्नवान् वामदृशो वाचि वाक् मिश्रणञ्च यः ॥ २७ ॥
देहपातं प्रतिश्रुत्याहृतमाशयति प्रियाम् ।
यां तदन्योऽप्रियः कोऽस्ति मूलं सर्व्वापदां हि सा ॥ २८ ॥
गोप्यमात्महितं किञ्चित् यदि तां श्रावयेत् प्रियः ।
तावद्विनिद्रा सा यावत् तन्नाध्यापयतीतरान् ॥ २९ ॥

---

सहेति । यो जनः यत्नवान् सन् रतेरनुरागात् अर्थात् प्रीत्या वामदृशो वाचि स्त्रियो वाक्ये वाक्मिश्रणमपि अर्थात् आलापमपि करोति तेन जनेन सह अभि निर्भयं यथा स्यात् तथा मा वादि आलापोऽपि त्वया न कार्य्यः । हकारः पादपूरणे । पक्षे । सहतेनेति सहनशील तस्कर राजस्य सम्बोधनम् । वाचि वागित्यादिकं शिष्यावधानार्थम् । माभिवादि करोति हरतेः ६।, ( तथा ) प्रयत्नवान् १।, ( वा १ ) मदृशः ६।, ॥ २७ ॥

देहपातमिति । देहपातं शरीरपतनं प्रतिश्रुत्य स्वीकृत्य आहृतं आसादितं वस्तु यां प्रियां भार्य्यां आशयति भोजयति तदन्यः अप्रियः शत्रुः कोऽस्ति । हि यस्मात् सा सर्व्वासां आपदां मूलम् । पक्षे । पूर्व्वसूत्रस्य उदाहरणम् ॥ २८ ॥

गोप्यमिति । गोपनीयम् आत्मनोहितं किञ्चिदपि वाक्यं यदि तां प्रियां प्रियो भर्त्ता श्रावयेत् तदा तावत् कालं सा प्रिया विनिद्रा निद्रारहिता भवति यावत्कालं सा इतरान् लोकान् तत् वाक्यं न अध्यापयति अर्थात् श्रावयति ॥ पक्षे । सूत्रस्य उदाहरणम् ॥ २९ ॥

व्याकरणम् ।

माभिवादिकरोति हरतेस्तथा प्रयत्नवान् वामदृशः । आत्मनेपदि अभिवादिधातोः कृ हृधातोः आत्मनेपदि हशश्च प्रयत्नवान् कर्त्ता कर्म्म वा स्यात् ॥ २७ ॥

प्रियां आहृतं आशयति ॥ २८ ॥

प्रियस्तां श्रावयेत् । इतरान् अध्यापयति ॥ २९ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ॥

अथ यथाकालं राजकर्म्माकृतवतोऽपराधिनो दण्डनीयस्य सुशीलनामभृत्यस्य देवमित्रनामनृपस्य च संवादं शृणु ।

देवमित्रं नृपं कश्चित् ज्ञानवृद्धो भरण्यभुक् ।
अन्यैरश्रुतमाश्चर्य्यमग्राहयदिदं वचः ॥ ३० ॥

( सुशीलो नृपं प्रति । )

राजन् ! यत् भरण्यं मम ददासि तेन मम दिनयापनं न निर्व्वहति । अतोऽर्थसिद्धयेऽन्यदपि कर्म्म करोमीति समये तव कर्म्म नाभूत् ।

( राजा तं प्रति । ) अरे ! मद्दत्तभरण्येन तव पोष्याणां पोषणं कथं न निर्व्वहति । ( स तं प्रति । )

भृत्यैकांशं नाययामि स्वोत्तमर्णैस्तथापरम् ।
भागमेकं वाहयामि स्वाधमर्णैर्व्विशां पते ! ॥ ३१ ॥
भागमेकं भक्षयामि शत्रुणा मित्ररूपिणा ।
भागमेकं स्थापयेऽहमगाधाब्धौ दिने दिने ॥ ३२ ॥

देवमित्रमिति । कश्चित् भरण्यभुक् मासिकवेतनभुक् अर्थात् भृत्यः देवमित्रनामकं नृपं इदं वचः अग्राहयत् ज्ञानवृद्धो ज्ञानी अन्यत् सुगमम् ॥ ३० ॥

भृत्यैकांशमिति । भृतिर्म्मासिक वेतनं तस्यैकांशं स्वस्यात्मनः उत्तमर्णैः ऋणदायिभिः नाययामि । अपरमेकं भागं स्वस्यात्मनः अधमर्णैः ऋणग्राहिभिः वाहयामि प्रापयामि । पत्रे । सूत्रस्य उदाहरणम् ॥ ३१ ॥

भागमेकमिति । सुगमम् ॥ ३२ ॥

व्याकरणम् ।

इदं वचो नृपमग्राहयत् ॥ ३० ॥

स्वोत्तमर्णैरेकांशं नाययामि । अधमर्णैरेकभागं वाहयामि ॥ ३१ ॥

अहिंसार्थभक्षस्य किम् । एकभागं शत्रुणा भक्षयामि ॥ ३२ ॥

( राजा तं प्रति । ) रे दास !

त्वयोक्तमर्थवत् चेत् स्यात्तदेतत् बोधयस्व माम् ॥ ३३ ॥

त्वयोक्तं सर्वमेतत् उन्मत्तगाथेव प्रतिभाति ।

( सुशीलस्तं प्रति । ) राजन् ! अवधीयताम् ।

उत्तमार्णास्तु पित्राद्या अधमर्णाः सुतादयः ।

योषित् श्वशुरगाधोध्विर्जामातृश्यालकन्यकाः ॥ ३४ ॥

अथ राजा हृष्टस्तस्मै बहुधनं दत्त्वा आह ।

रे दासेमं निगूढार्थं यद्यन्यं ज्ञापयिष्यसि ।

तदा त्वां भक्षयिष्यामि कुक्कुरान्नात्र संशयः ॥ ३५ ॥

( अथाङ्गिराः पुष्पकेतुं प्रति । )

ततो नृपाज्ञया सूतो रथेनामुं धनैः सह ।

वाहानवाहयत् गेहं पश्चात् सोऽन्तःपुरं ययौ ॥ ३६ ॥

भार्य्यां पुत्त्रेण चात्मानमदर्शयत सोत्सवः ॥ ३७ ॥

त्वयोक्तमिति । त्वया उक्तं चेत् यदि अर्थवत् अर्थयुक्तं स्यात् । अन्यत् सुगमम् ॥३३॥

उत्तमार्णास्त्विति । सुगमम् ॥ ३४ ॥

रे दासेति । कुक्कुरान् भक्षयिष्यामि । कुक्कुरैर्भक्षयिष्यामीत्यर्थः । अन्यत् सुगमम् ॥३५॥

ततो नृपेति । सूतः सारथिः अमुं सुशीलनामकं भृत्यं रथेन राजदत्तधनैः सह वाहान् घोटकान् गेहम् अवाहयत् घोटकैर्गेहं प्रापयदित्यर्थः ॥ ३६ ॥

भार्य्येति । सोत्सवः उत्सवयुक्तः । अन्यत् सुगमम् । पद्ये । सूत्रस्य उदाहरणम् ॥३७॥

व्याकरणम् ।

एतन्मां बोधयस्व ॥ ३३ ॥ ३४ ॥

निगूढार्थं अन्यं ज्ञापयिष्यसि । हिंसार्थभक्षस्य तु । त्वां कुक्कुरान् भक्षयिष्यामि ॥३५॥

सारथिवहस्य तु । सूतोऽमुं वाहान् गेहम् अवाहयत् ॥ ३६ ॥

मद्दृशस्तु । भार्य्यां पुत्रेण चात्मानमदर्शयत् ॥ ३७ ॥

( अथ राज्ञः प्रसादकारणं पृच्छन्तीं स्वभार्य्यां प्रति सुशीलः । )

असंवृतमुखा नार्य्यो गोप्यवाक्पचनेऽक्षमा ।
तस्मात् वृत्तमिदं कान्ते ! मा मां वादय सर्व्वथा ॥ ३८ ॥

व्यक्ते तस्मिन् निगूढार्थे नृपोऽसून् हारयिष्यति ।
सचिवेनेति स नृपः प्रतिज्ञां मामकारयत् ॥ ३९ ॥

( अङ्गिरा आह । ) अथैवं ज्ञानवृद्धोऽसावनिच्छन्नपि तत् प्रियाम् ।
आवेदयत् स्त्रियो मायां दुस्तरां तर्त्तुमक्षमः ॥ ४० ॥

नैतद्विचित्रं यतः ।

द्वितीया निकषा श्लिष्टे पुंहेमावयवे सकृत् ।
स्यादस्यान्तर्गता व्यक्तिर्निकषं निकषा कथम् ॥ ४१ ॥

असंवृतेति । असंवृतमुखा अनर्गलमुखाः । गोप्यवाक्पचने गोपनीयवाक्यगोपने अशक्ताः । तस्मात् इदं वृत्तं वृत्तान्तं मा मां वादय न वाचय इत्यर्थः ॥ ३८ ॥

व्यक्त इति । तस्मिन् निगूढार्थे अतिगोपनीयार्थे व्यक्ते प्रकाशिते सति नृपः सचिवेन दण्डसहायेन असून् प्राणान् हारयिष्यति प्राणदण्डं करिष्यतीत्यर्थः । असौ राजा इति प्रसिद्धां मां अकारयत् ॥ ३९ ॥

अथैवमिति । असौ दासः अनिच्छन्नपि तत् वृत्तान्तं प्रियां भार्य्यां आवेदयत् ॥४०॥

ननु स्त्रियः असंवृतमुखाः तदर्थप्रकाशे च प्राणदण्डः इति जानन्नपि स ज्ञानवृद्धः कथं तत् प्रकृतवाक्यं प्रकाशितवान् इत्यत आह ।

द्वितीयेति । द्वितीया भार्य्या निकषः कषपाषाणः ( कष्टिनामकप्रस्तरः ) पुंहेमावयवे पुरुषरूपं यत् हेम स्वर्णं तस्यावयवे भार्य्यारूपनिकषेण सकृत् अश्लिष्टे सति अस्य पुरुषरूप-स्वर्णस्य अन्तर्गताऽव्यक्तिः अन्तर्गतस्य अप्रकाशः निकषं निकषा कषपाषाणस्य समीपे कथं स्यात् । तथाहि भार्य्यया आश्लिष्टस्य पुरुषस्य अन्तर्गतस्य अप्रकाशो न सम्भवति इति भावः ।

व्याकरणम् ।

इदं वृत्तं मामां वादय ॥ ३८ ॥

सचिवेन असून् हारयिष्यति । मां प्रतिज्ञां अकारयत् ॥ ३९

प्रियां तत् आवेदयत् ॥ ४० ॥

**अथ देवमित्रेण राज्ञा अनु सभामन्तरा समयान्तरेण प्रतिह्वाविनाधिगत्य नुतेनाभियुक्तेन सदृशा धीसचिवं समयोपविश्य दासोक्तं तत् प्रश्नचतुष्टयार्थं जिज्ञासयाचक्रे ॥ ४२ ॥**

**देवमित्रः मन्त्रिणं प्रत्याह ।**

**जानीहि उभयत ऋते प्रत्यासत्तिभाजि भवति**
**न मनः प्रभोरादेशं प्रति ॥ ४३ ॥**

(श्राणस्तु निकषः कषः, समीपे निकषाव्ययमिति चामरः ।) पचि । पुमित्यादिकमुदाहरणवाक्यम् । तस्य कथञ्चित् एकवाक्यता कार्य्या । द्वितीया १ ।, निकषाश्लिष्टे ७ ।, ॥ ४१ ॥

अथेति । देवमित्रनृपेण अनु पश्चात् समयान्तरेण सभामन्तरा सभामध्ये अधिगत्य आगत्य उपविश्य धीसचिवं मन्त्रिणं समया निकटे जिज्ञासयाचक्रे । कीदृशेन । प्रतिह्वाविना प्रतिनियतं ह्वलशीलेन अग्निहोत्रिणेत्यर्थः । नुतेन वन्दिभिः स्तुतेन । अभियुक्तेन सदृशा अभियुक्तो योगयुक्तो सर्व्वदर्शी योगी तत्सदृशेन । अन्तरा, समया, अन्तरेण-प्रति-ह्वा-विना-धिक्-अति-अनु-तेन-अभि-युक्ते ७ ।, ॥ ४२ ॥

जानीहीति । उ भोः ! परितः सर्व्वतः सर्व्वतोभावेन जानीहि भयतः ऋते भयं विना प्रभोरादेशं प्रति मनश्चित्तं प्रत्यासत्तिभाजि संयोगशालि न भवति । जानीहि ८ । उभयत ऋते प्रत्यासत्तिभाजि ७ ।, भवति ८ ।, ॥ ४३ ॥

व्याकरणम् ।

द्वितीया निकषाश्लिष्टे । निकषा शब्देन योगभाजि द्वितीया स्यात् । निकषं निकषा ॥ ४१ ॥

अन्तरासमयान्तरेणप्रतिह्वाविनाधिगत्यनुतेनाभियुक्ते । एभिर्योगे द्वितीया स्यात् । तं समया । धिक् समया निकषा ह्वान्तरान्तरेणेनाति येन तेनाभ्युभय परिसर्व्वतोविनर्त्तेभिपरिप्रत्यनूपह्वप्रथ्यैधोऽधिभिः ।" मु ॥ ४२ ॥

जानीहि उभयतऋते प्रत्यासत्तिभाजि भवति । एभिरासत्तिशालिनि अर्थे द्वितीया स्यादिति जानीहि । आदेशं प्रति ॥ ४३ ॥

अतो ब्रवीमि । एतत्प्रश्नोत्तरं कार्य्यं सप्ताहान्यन्तरान्यथा ।
प्राणान् वो दण्डयिष्यामीत्युक्त्वा तान् विससर्ज्ज सः ॥ ४४ ॥
ततो मन्त्री तमेवार्थं प्रत्यासक्तः सततमचिन्तयत् ।
सप्ताहमन्तरेणासौ प्रश्नस्योत्तरणे यदा ।
शक्तो नाभवदुद्विग्नो विषसाद तदा भृशम् ॥ ४५ ॥
( मन्त्री आह । ) प्रश्नेऽनुत्तरिते राजा सप्ताहान्युत्तरेण सः ।
कोपाद्धनैरनु प्राणान् सह्सैव हरिष्यति ॥ ४६ ॥
हा मां लोके ख्यातकीर्त्तिं धिङ्मम प्रतिभामपि ।
मूको नतशिराश्चाद्य यन्नृपं समयाऽभवम् ॥ ४७ ॥
अङ्गिरा आह । एतस्मिन् समये सुशीलस्य पत्नी यदृच्छयागत्य सखीभावात् मन्त्रिपत्नीं सस्मितमाह ।
ममैतत् सखि ! ताड़ाङ्कं मन्त्रिणं दर्शयिष्यसि ।
येनैतन्मां त्वाञ्च तेन यत् स निर्म्माय दास्यति ॥ ४८ ॥

---

एतत्प्रश्नेति । सप्ताहान्यन्तरा सप्ताहमध्ये । तान् अमात्यान् ॥ ४४ ॥

सप्ताहेति । सप्ताहमन्तरेण सप्ताहस्य मध्ये । असौ मन्त्री अन्यत् सुगमम् ॥ ४५ ॥

प्रश्ने इति । प्रश्ने अनुत्तरिते सति स राजा सप्ताहानि उत्तरेण सप्ताहात् परं धनैरनु धनैः सह प्राणान् हरिष्यति ॥ ४६ ॥

हा मामिति । लोके ख्यातकीर्त्तिं मां हा धिक् यत् यस्मात् नृपं समया नृपस्य समीपे अद्य मूकः वाक्यरहितो नतशिराश्च अधोमुखश्च अभवम् ॥ ४७ ॥

ममेति । हे सखि ! मम इमं ताड़ाङ्कं कर्णभूषणं मन्त्रिणं दर्शयिष्यसि । यत्

व्याकरणम् ।

सप्ताहानि अन्तरा ॥ ४४ ॥

सप्ताहमन्तरेण ॥ ४५ ॥

सप्ताहानि उत्तरेण ॥ ४६ ॥

मां हा । प्रतिभां धिक् । नृपं समया ॥ ४७ ॥

इति मन्त्रिपत्न्या हस्ते समर्पयति स्म। अथ तयोः प्रश्नोत्तरे।
केनेदं सखि ! निर्म्मितं मम पतिस्तुष्टान्नृपाल्लब्धवान्
तत्तुष्टेः किम् कारणं सखि ! कथैवैका कथा साच का।
षट्कर्णाविषयो नु किं मम तनुर्भिन्ना भवत्यास्तनोः
मैवं तत् कथयावधारय तदित्युक्त्वानुपूर्व्वीं जगौ ॥ ४९ ॥
अथ मन्त्रिपत्नी तत् श्रुत्वा हृष्टा सत्वरं पतिमावेदयत्।
( अथ मन्त्री । ) प्रियाधरमधूत्सिक्तं तद्वचोऽतिरसायनम्।
मृत्युञ्जयं स आस्वाद्योत्तस्थौ चिन्ताज्वरानति॥ ५० ॥

यस्मात् एतत् भूषणं मां येन, मम यादृशं लाभ तेन, तवापि तादृशमेव निर्म्माय स मन्त्री निर्म्माय दास्यति ॥ ४८ ॥

केनेदमिति। हे सखि ! केन इदं भूषणं निर्म्मितम्। इति मन्त्रिपत्न्याः प्रश्नः। मम पतिरिति दासपत्न्या उत्तरम्। तत्तुष्टेः तस्य नृपस्य तुष्टिं प्रति किं कारणम्। इति प्रश्नः। हे सखि! एका कथैव तस्य तुष्टेः कारणमित्युत्तरम्। सा कथा का इति प्रश्नः। षट्कर्णस्य अविषयः अगोचरः इत्युत्तरम्। नु भोः किं मम तनुः भवत्यास्तनोर्भिन्ना इति प्रश्नः। मैवं इति उत्तरम्। तत् तस्मात् कथय। तत् अवधारय इत्युक्त्वा आनुपूर्व्वीं जगौ कथयामास ॥ ४९ ॥

प्रियेति। प्रियाया अधरमधुना उत्सिक्तं मिश्रितं अतएव अतिरसायनं मृत्युञ्जयं मृत्युनिवारकं तद्वचः आस्वाद्य आस्वादनरूपेण श्रुत्वा चिन्ताज्वरान् अतिक्रम्य उत्तस्थौ। अन्योऽपि मधुमिश्रितं रसायनं मृत्युञ्जयमौषधं आस्वाद्य ज्वरमतिक्रामति ॥ ५० ॥

करेति। करामलकवत् करस्थितनिर्म्मलजलवत् विश्वं अधोऽधः अभ्यधि उपरि च

व्याकरणम्।

एतन्मां येन लाभ तेन ॥ ४८ ॥ ४९ ॥

चिन्ताज्वरानति ॥ ५० ॥

अथ मन्त्री तमेवार्थं नृपमभि अकथयत्। (राजा मन्त्रिणं प्रति।) अहो प्रश्नस्योत्तरमभूत्। किन्तु।

करामलकवत् विश्वमधोऽधोऽध्यधि चोपरि।
यद्धीश्चरति जानाति स प्रश्नानिति कीर्त्तितम् ॥ ५१ ॥
अधुनैतत् किमु मनस्युदियाय दुरासदम्।
विनोपदेशं तज्ज्ञाने उपदेष्टास्ति तेऽपरः ॥ ५२ ॥

अतो मम संमुखं परि सशपथं सत्यं ब्रूहि। केनोपदिष्टमिदम्। (मन्त्री।) सुशीलस्य पत्न्या। (राजा तं प्रति।) धिक् त्वां।

परेषां दन्तदलितमदन्तोऽश्नाति निर्घृणः।
सघृणो न तदश्नाति अमृतस्वाद्वपि क्वचित् ॥ ५३ ॥
अथानीतां दासपत्नीं क्षितीश इदमब्रवीत्।
साध्वीदं दुर्व्वचं वाक्यं त्वत्कर्णं कोऽनयद्रहः ॥ ५४ ॥

यद्धीर्यस्य बुद्धिश्चरति स एव एतान् प्रश्नान् जानाति इति कीर्त्तितं त्वया पूर्व्वं कथितम्। अधुना विना उपदेशं दुरासदं दुष्प्रापं तत् किमु कथं मनसि उदियाय। तत् तस्मात् अपरोजनस्ते तव उपदेष्टा अस्ति इति जानामि ॥ ५१ ॥ ५२ ॥

परेषामिति। निर्घृणो दन्तहीनो जनः परेषां दन्तदलितं चर्व्वितं अश्नाति। अमृतवत् स्वादु अपि सघृणो जनः तन्नाश्नाति ॥ ५३ ॥

अथेति। दासपत्नीं सुशीलनामकदासस्य पत्नीम्। रहो निर्ज्जने इदं वाक्यं तव कर्णं कः अनयत् ॥ ५४ ॥

व्याकरणम्।

नृपमभि। विश्वमधोधोऽध्यधि च उपरि ॥ ५१ ॥

उपदेशं विना ॥ ५२ ॥

मम संमुखं परि ॥ ५३ ॥ * ॥

इदानीं विकर्म्मकान् धातूनाह। दासपत्नीमिदमब्रवीत्। वाक्यं त्वत्कर्णं कोऽनयत् ॥ ५४ ॥

(सा नृपं प्रति।) मम भर्त्तेति। (ततो राजा आनीतं तद्भर्त्तारं सुशीलनामकं दासं प्रति।)

हरिष्ये त्वां यमपुरीमिदं कर्णान्तरं यदि।
वह्नेरिति निषिद्धोऽपि किमवोचः प्रियामिदम् ॥ ५५ ॥

तस्मात् त्वां प्राणान् दण्डयामि। (सुशीलः नृपं प्रति।) राजन्नस्यै मया नोक्तमिति। राजा पुनस्तत्पत्नीमिदं पप्रच्छ।

अवाचिनोरिमां वाचं कं गुरुं साध्वि! कथ्यताम्।
(सा तं प्रति।) पतिरेव गुरुः स्त्रीणामुपदेष्टास्ति नापरः ॥ ५६ ॥

(राजा सुशीलं प्रति।) अरे जाल्म! श्रुतं न वा त्वमेव तद्वाक्यस्योपदेष्टेति वदति तव पत्नी। (दासो नृपं प्रति।) राजन्! पत्न्या उचितमेतत्। यतः।

ब्रूयादेवेति मां पत्नी सर्व्वनाशे उपस्थिते।
शत्रुर्हि समयं प्राप्य शात्रवान्न निवर्त्तते ॥ ५७ ॥

---

हरिष्ये इति। इदं वाक्यं यदि कर्णान्तरं वह्नेः प्रापयेः तदा त्वां यमपुरीं हरिष्ये इति निषिद्धोऽपि किं कथं इदं प्रियां अवोचः ॥ ५५ ॥

अवाचीति। हे साध्वि! इमां वाचं कं गुरुं कस्य गुरोः सकाशात् अवाचिनीः गृहीतवती इति कथ्यताम् ॥ ५६ ॥

ब्रूयादिति। मम सर्व्वनाशे उपस्थिते सति पत्नी मां इति इदं ब्रूयादेव अवश्यं वदेत्। अन्यत् सुगमम् ॥ ५७ ॥

व्याकरणम्।

हरिष्ये त्वां यमपुरीम्। कर्णान्तरमिदं वह्नेः। प्रियामिदमवोचः त्वां प्राणान् दण्डयामि। तत्पत्नीमिदं पप्रच्छ ॥ ५५ ॥

इमां वाचं कम् अवाचिनोः ॥ ५६ ॥

पत्नी मां इति ब्रूयात् ॥ ५७ ॥

पत्नेव पुरुषस्य शत्रुरिति पूर्वमेव मयोदितं तदिदानीं समक्षं परीक्षितमासीत् भवताम्। ततः सुशीलस्तुष्टं नृपं बहु धनं जग्राह।

इत्थं सोऽवगतां तां गां मुनेः कामदुघां सतीम्।
दुदोह राजा ह्रत्पात्रे वैराग्यं पय उत्तमम् ॥ ५८ ॥

पुष्पकेतुः अङ्गिरसं प्रति।

एष प्रबन्धोऽवधृतः सद्यः श्रोतॄन् जनान् मुने!।
योषिन्मायां रुणद्ध्येव वैराग्यं जनयत्यपि ॥ ५९ ॥

मुने! एतदपि ज्ञातुमिच्छामि।

जीवानन्नगतप्राणानाकर्षति बलं बलात्।
अन्नचिन्ता महाघोरा क्षुधा मुष्णाति सेमुषीम् ॥ ६० ॥
मुने! शास्त्राम्बुधिं ज्ञानामृतं मथितवानसि।
तत् याचे त्वामिति ज्ञानं वनिनां कोपजीविका ॥ ६१ ॥

इत्थमिति। स राजा इत्थं अनेन प्रकारेण अवगतां अवधृतां तां सतीं साध्वीं कामदुघां मुनेर्गां वाणीं वैराग्यं पयः स्त्रीषु वैराग्यरूपं पयः ह्रत्पात्रे दुदोह। अङ्गिरसो मुनेर्व्वाणीं श्रुत्वा नृपस्य पुष्पकेतोः स्त्रीषु वैराग्यमभूदिति भावः ॥ ५८ ॥

एष इति। एष प्रबन्ध इति सुगमम् ॥ ५९ ॥

जीवानिति। महाघोरा अन्नचिन्ता बलात् अन्नगतप्राणान् जीवान् बलं आकर्षति। क्षुधा च सेमुषीं बुद्धिं मुष्णाति अपहरति ॥ ६० ॥

मुने इति। सुगमम् ॥ ६१ ॥

व्याकरणम्।

तुष्टं नृपं धनं जग्राह। कामदुघां पयो दुदोह ॥ ५८ ॥

श्रोतॄन् जनान् योषिन्मायां रुणद्धि ॥ ५९ ॥

जीवान् बलमाकर्षति अन्नचिन्ता ॥ ६० ॥

शास्त्राम्बुधिं ज्ञानामृतं मथितवान् ॥ ६१ ॥

( मुनिस्तं प्रति । )

क्षौणीपालकमुख्यगौणकभिदाकर्म्मद्वयीशालिनोऽ
याचाद्याः कतिधा तव स्थिरहृदो दृग्गोचरास्तापसाः ।
तेभ्यः किं कशिपू न यच्छति वनेवासी तरुर्न्नद्यपः-
शय्यां भूः कथमर्थयन्त इतरेऽप्यैश्वर्य्यमत्तान् धनम् ॥ ६२ ॥
वन्याद्याश्च तथा सन्ति परे नीवारभोजिनः ॥ ६३ ॥

राजा आह । मुने ! उपदिश किं कर्म्म मया कर्त्तव्यम् ।

( मुनिस्तं प्रति । )

क्षौणीति । हे क्षौणीपालक ! कतिधा बहुप्रकारास्तापसास्तपस्विनस्तव दृग्गोचरा अभवन् इति शेषः । कीदृशाः मुख्यगौणकभिदा मुख्यकल्पानुकल्पभेदेन कर्म्मद्वयीशालिनः नित्यकाम्यकर्म्मद्वययुक्ताः । अयाचाद्याः अयाचितं अद्यं भक्ष्यं येषां ते तथा अयाचित-भोजिन इत्यर्थः । स्थिरहृदः स्थिरचित्ताः । वनेवासी तरुस्तेभ्यस्तापसेभ्यः कशिपू अन्ना-च्छादनं किं न यच्छति अपि तु यच्छत्येव । नदी अपः जलं, भूः शय्यां किं न यच्छ-तीति पूर्व्वेणान्वयः । इतरे अन्ये ऐश्वर्य्यमत्तान् कथं धनं अर्थयन्ते याचन्ते । (कशिपू-भक्ताच्छादनयोरेकोक्त्येति मेदिनी । ) ॥ ६२ ॥

वन्येति । वन्याद्याः वन्यं वनभवं फलमूलादिकं अद्यं भक्ष्यं येषां ते तथा । पक्षे । व इति वरुणस्य सम्बोधनम् ॥ ६३ ॥

व्याकरणम् ।

मुख्यगौणभिदा कर्म्मद्वयीशालिनो याचाद्याः कति धातवः । मुख्यगौण भेदेन द्विकर्म्मकाः याचादयः कतिपये धातवः सन्ति ॥ ६२ ॥

न्याद्याश्च तथा सन्ति परे । तथा परे न्याद्याधातवः सन्ति । ते च । नी, वह, हृ, दण्ड, ग्रह, कृष, मन्थ, मुष, पचः ॥ ६३ ॥

मुक्तीच्छुश्चेदक्षमालां दीव्येत् स्वेनैव सर्व्वदा ।
दिवो वा साधनं कर्म्म कुर्य्याच्चेत् स्वर्गमिच्छति ॥ ६४ ॥
तत्करणे तृतीयावस्था उपयुज्यते कर्त्तुः ॥ ६५ ॥

मोक्षादिजनककर्म्मसाधनमाश्रमान्तरमपेक्षते । आश्रमान्तरञ्च विना वैराग्यं न सम्भवति ।

साघे च तत्करणेऽज्ञाने वैराग्येण न भूयते ॥ ६६ ॥

इदमपि जानीहि ।

शुभहेतुविशेषसाधनं करणं भेदकमप्यमत्तनोः ।
वपुषा तेन यदीह सत्क्रियां न विदध्यात् करणं वृथैव तत् ॥६७॥

मुक्तीति । स्वेनैव आत्मना सहैव अक्षमालां वर्णमालया दीव्येत् अर्थात् समाधिं कुर्य्यात् यदि मुक्तीच्छुः स्यात् । चेत् यदि स्वर्गमिच्छति तदा दिवः स्वर्गस्य अर्थात् दुःखेनामिश्रितसुखस्य साधनं यागादिरूपं कर्म्म वा कुर्य्यात् । पक्षे । मुक्तीच्छुरित्यादिकं उदाहरणवाक्यम् । दिवः ६।, वा १।, साधनं १।, कर्म्म १। ॥ ६४ ॥

तत्करेति । तत्करणे उक्तमोक्षादिसाधनकर्म्मकरणे कर्त्तुस्तृतीयावस्था उपयुज्यते । बाल्ययौवनावस्थयोस्तदसम्भवात् । करणे ७।, तृतीया १।, ॥ ६५ ॥

साघेचेति । अघं विपत्भंशात्मकं व्यसनं तद्युक्ते । व्यसनेष्वघमित्यमरः । सा १।, घे ७।, ( च १। ) ॥ ६६ ॥

शुभेति । शुभं शुभादृष्टं तस्य हेतुविशेषाः शुभसम्पादकवैधकर्म्मविशेषाः तत्साधनं तस्य सम्पादकं करणं शरीरम् । तत् कीदृशं अमत्तनोः पश्वादिशरीरात् भेदकं भिन्नं सत्कर्म्मसाधने योग्यमिति भावः यदि इह लोके तेन वपुषा सत्क्रियां न विदध्यात् तदा

व्याकरणम् ।

दिवो वा साधनं कर्म्म । दिवः प्रयोगे साधनं करणं कर्म्म वा स्यात् । अक्षमालां दीव्येत् । एवम् अक्षमालया च । "दिवः कर्म्म च ।" पाणिनिः । "दिवोऽर्थे वा" मु ॥ ६४ ॥ ६५ ॥

सा घेच । घेच कर्त्तरिच सा तृतीया स्यात् । वैराग्येण भूयते ॥ ६६ ॥

अतो भवान् तृतीये वयसि यत् वृद्धाश्रममाश्रितवान् तत् युज्यत एव ।

यतः । नाबाधं नाम करणं कर्त्ताऽघञ्च भवत्यपि ।
अतस्तद्वपुषा धर्म्मान् पूर्व एवार्ज्जयेत् सुधीः ॥ ९८ ॥
दीव्येत् डवित्थं रजसा च शैशवे
विद्यार्थभोगान् खलु यौवनेऽर्ज्जयेत् ।
ततोनु वृद्धाश्रममाश्रयेत् सुधी-
र्व्विपर्य्यये यात्युपहास्यतां पुमान् ॥ ९९ ॥

तत्करणं शरीरं वृथैव । पक्षे । शुभेति शुभवतः सम्बोधनम् । हेतुविशेष साधनं १।, करणं १।, भेदकं १।, ( अपि ) ॥ ९७ ॥

नाबाधमिति । नाम सम्भावनायाम् । करणं शरीरं अबाधं बाधारहितं न भवति । कर्त्ता च कचित् समये अघं व्यसनं विपत्भंशात्मकं भवति प्राप्नोति । अतो हेतोः तेन शरीरेण धर्म्मान् पूर्व्वस्मिन् काले एव अर्जयेत् । करणं साधकतमं चैवगात्रेन्द्रियेष्वपीत्यमरः । पक्षे । नाता इति नवीनानां सम्बोधनम् अन्यदुदाहरणम् । धं १ ।, नाम १।, करणं १ ।, कर्त्ता १ ।, घं १ ।, ( च ) भवति ८ । ॥ ९८ ॥

दीव्येदिति । डवित्थं काष्ठमयोमृगः तेन दीव्येत् । वृद्धाश्रमं वानप्रस्थं सन्न्यासञ्च आश्रयेत् । पक्षे । पूर्व्वसूत्रस्य उदाहरणम् ॥ ९९ ॥

व्याकरणम् ।

हेतुविशेषसाधनं करणं भेदकमपि । हेतुप्रभृतयः करणसंज्ञाः स्युः । अत्र विशेषो विशेषणम् । "कर्त्तृकरणयोस्तृतीया ।" पाम् । "साधनहेतुविशेषणभेदकं धं कर्त्ता घश्चौ ।" मुं ॥ ९७ ॥

धं नाम करणम् । कर्त्ता घश्च भवति । करणं धसंज्ञं कर्त्ता धसंज्ञः स्यात् । परभाग उदाहरणम् ॥ ९८ ॥

शैशवे रजसा दीव्येत् ॥ ९९ ॥

ययातिर्नृपो वयोविपर्य्ययकर्म्मकरणात् कागेनापि उप-हसितोऽभूत्।

( राजा मुनिं प्रति। ) मुने ! तत् श्रोतुमिच्छामि। मुनिराह।

नाम्ना ययातिर्जात्या च राजा सर्व्वगुणैरभूत्।
योऽर्थैरीजेऽश्वमेधेन यत्राद्राक्षीच्चत सोऽमरान्॥ ७० ॥
बलेन स ह वारणसमो नार्थैर्दीनानां तोषकृत्॥ ७१ ॥
इष्टभाविना पृथगर्थवचनैर्नानाद्यैश्च सुधोपमैः
सह मानेन विप्रादयो येन तोषिताः॥ ७२ ॥

---

नाम्नेति। नाम्ना नामभेदेन ययातिः जात्या जातिभेदेन राजा क्षत्रियः सर्व्वगुणैः सकलगुणविशेषितः। यः अर्थैर्हेतुभूतैर्धनैः अश्वमेधेन ईजे अश्वमेधाभिन्नं यागं कृतवान्। यस्मिन् यज्ञे स ययातिः अमरान् देवान् अद्राक्षीत् ऐक्षत। अश्वमेधेन ईजे अत्र अभेदे तृतीया॥ ७० ॥

बलेनेति। स ना स पुरुषो ययातिः बलेन वारणसमः वारणोहस्ती तत्समः। हकारोऽवधारणे। अर्थैर्धनैः दीनानां दरिद्राणां तोषकृत्। पक्षे। बलेन इति सेनायाः प्रभोः सम्बोधनम्। दीनानां तोषकृदिति च सम्बोधनम्। सहवारण-समोनार्थैः ३।।।, ॥ ७१ ॥

इष्टेति। इष्टभाविना अभीष्टं देवत्वं भावयितुं शीलमस्येति। तादृशेन येन सुधोपमैर्व्वचनैर्नानाद्यैश्च नानाविधभक्षणीयैश्च पृथक् विप्रादयस्तोषिताः। पक्षे। इष्टभा इति इष्टदीप्तिः सम्बोधनं अन्यदुदाहरणवाक्यम्। विनापृथगर्थवचनैः ३।।।, नानाद्यैः ३।।।, ( च ) ॥ ७२ ॥

व्याकरणम्।

नाम्ना ययातिः। जात्या च राजा। सर्व्वगुणैरभूत्। अर्थैः ईजे। अश्वमेधेन ईजे। अद्राक्षीत् ऐक्षत॥ ७० ॥

सहवारण समोनार्थैः। एभिर्योगे चीस्यात्॥ ७१ ॥

विनापृथगर्थवचनैर्नानाद्यैश्च। विनार्थपृथगर्थप्रयोजनार्थैः नानाद्यैश्च योगे वी स्यात्।

सहमानेन। "सहवारण समोनार्थार्थविना पृथङ्नानाद्यैः।" मुं॥ ७२ ॥

**अलमतिविस्तरेण।**

**भार्य्यास्य भार्गवी नाम्ना देवयानी श्रिया समा।**
**दोषेण रहिता साध्वी यस्या अर्थः शिवार्चया॥ ७३॥**
**सौभाग्येन विनैवासीत् पृथग्भूता धवेन सा।**
**नानेव सर्पिः पयसा स्नेहोऽसारोऽप्यभूत् स यत्॥ ७४॥**

**अथ देवयानी स्वीयदासीं वृषपर्व्वसुतां प्रति पत्युर्व्वीप्सायामवगम्यमानायां वाढेन मन्युना च पतिं शतेन धिक्कारं कृत्वा वक्षसि शतं शतं आहत्य च सखीं प्रत्याह॥ ७५॥**

**स नानुरागभाक् सन्दानप्रयोगे धर्म्ये सम्प्रदाने। नित्यं यत् केवलं दास्येष्टं संयच्छते सहधर्म्मिण्यै मह्यं न संयच्छति॥ ७६॥**

भार्य्येति। अस्य ययातेः। भार्गवी शुक्रस्य पुत्री॥ ७३॥

सौभाग्येनेति। सौभाग्येन विनासीत् दुर्भगेत्यर्थः। धवेन भर्त्रा पृथक्भूता। अत्र सादृश्यमाह। पयसा नानादुग्धेन पृथक्सर्पिरिव। यतः स राजा असारो निःस्नेहश्च अभूत्॥ ७४॥

अथेति। पत्युर्व्वीप्सायां विशेषेण प्राप्तुमिच्छायां अवगतायां ज्ञातायां सत्यां वाढ़ेन मन्युना सातिशयेन क्रोधेन। अन्यत् सुगमम्। वीप्सायां ७।, अवगम्यमानायां ७।, मानात् ५।, वा १।, ढ़े ७।,॥ ७५॥

सनेति। स राजा धर्म्म्ये सम्प्रदाने सन्दानप्रयोगे विधिबोधितदानकरणे न अनुरागभाक् अनुरागी न नित्यं यत् केवलं दास्या इष्टं संयच्छते ददाति। अन्यत् सुगमम्। पद्ये। स नानुरागभागिति नित्यानुरागिनः सम्बोधनम्। सन्दानप्रयोगे ७।, अधर्म्म्ये ७।, सम्प्रदाने ७।, नित्यं १।,॥ ७६॥

व्याकरणम्।

अलं विस्तरेण श्रिया समा। दोषेण रहिता। शिवार्च्चया अर्थः॥ ७३॥

सौभाग्येन विना। धवेन पृथक्। सर्पिः पयसा नाना॥ ७४॥

वीप्सायां गम्यमानायां मानाद्वाढ़े। शतेन धिक्कारं कृत्वा। शतं शतमाहत्य। "मानाद्वीप्सायां ढे।" सू॥ ७५॥

तस्मै यद्दीयते तस्य या चतुर्थी विभक्तिका।
सा सम्प्रदाने धर्म्मेऽपि मयि भर्त्रा न चार्प्यते॥ ७७॥

(सखी देवयानीं प्रति) सखि! वृथा विलपसि। यस्य यं प्रति प्रीतिश्श्रद्धा स्नेहादयो वर्त्तन्ते स एव तस्मै ददाति।

भवेद्यस्मै रुट्ध्रुगीर्षासूयाऽदित्साऽस्पृहाऽरुचिः।
सम्प्रदानं तदुद्देश्यं न सम्भवति कर्हिचित्॥ ७८॥
भर्त्ता तुभ्यं कुप्यति च द्रुह्यतीर्षत्यसूयति।
किन्ते दित्सेत् स यस्मै न स्पृहयत्यपि रोचते॥ ७९॥

तस्मै इति। तस्मै दास्यै यद्दीयते तस्य या चतुर्थी विभक्तिः चतुर्थभागः सा धर्म्मेऽपि सम्प्रदाने मयि भर्त्रा न अर्प्यते न दीयते इत्यर्थः। या १।, चतुर्थी १।, विभक्तिका १।, सा १।, सम्प्रदाने ७।, ॥ ७७॥

भवेदिति। यस्मै जनाय अर्थात् यं जनं प्रति रुट् कोपो ध्रुक् द्रोहः एवं ईर्षा असूया अदित्सा अस्पृहा अरुचिश्च भवति तदुद्देशे सम्प्रदानं सम्यक् दानमेव न सम्भवति। यस्मै ४।, रुट् १।, ध्रुक् १।, ईर्षा १।, असूया १।, दित्सा १।, स्पृहा १।, रुचि १।, सम्प्रदानं १।, तत् १।, उद्देश्यं १।, ॥ ७८॥

भर्त्तेति। भर्त्ता पतिः तुभ्यं कुप्यति कोपयुक्तो भवति, द्रुह्यति अनिष्टमाचरति। ईर्षति न क्षमते, असूयति गुणेषु दोषारोपणं करोति। स राजा किं कथं ते तुभ्यं दित्सेत् दातुमिच्छेत्। यस्मै तुभ्यं न स्पृहयति न वा रोचते॥ ७९॥

व्याकरणम्।

सन्दानप्रयोगेऽधर्म्मे सम्प्रदाने नित्यं। दास्या इष्टं संयच्छते। स्वधर्म्मिण्यै मद्यं न संयच्छति। "संदानो भेधर्म्मे नित्यम्।" मु॥ ७६॥

या चतुर्थी विभक्तिका सा सम्प्रदाने। तस्मै यद्दीयते॥ ७७॥

यस्मै रुट्ध्रुक् ईर्षाऽसूयादित्सास्पृहारुचिः सम्प्रदानं तदुद्देश्यं। "चतुर्थी सम्प्रदाने" पा। "यस्मै दित्सासूयाक्रोधेर्षारुचिद्रोहस्थाक्रुश्लावस्पृहिप्रधारीचाप्रतिश्रुप्रत्यनुगृधार्थार्थाभ्यो तादर्थ्ये च।" मु॥ ७८॥

भर्त्ता तुभ्यं कुप्यति। द्रुह्यति। ईर्षति। असूयति। दित्सेत्। स्पृहयति। रोचते॥७९॥

देवयानी । सखि ! एवमेव । तेनैव मम ।

हासोऽगादुपहासतो निरगमन्मानोपमानाद्‌ भिया
हेला हेलनतो रतिर्व्विरतिभागाशा तथाशाभवत् ।
भूतौ भूतिरवापतत् सखि ! निजं कर्म्मैव मे द्रुह्यति
हान्यस्यै किमु दुर्भगाहमहह क्रोत्स्यामि वक्ष्यामि वा ॥८०॥

सखि ! इदमपि भवत्या दृष्टमासीत् । मम भर्त्ता यथा दास्यां प्रत्यनुरक्तः ।

तादर्थ्ये चीयते पुष्पं तत्प्रीत्यै सृज्यते स्रजा ।
तत्पित्रा या मम प्रीत्यै दासी दत्ता हितैषिणा ॥ ८१ ॥
तस्यै दास्यै सुखं सोढुमशक्तार्थसुखेन च ।
हितेन वञ्चिता तातमुपैमि हितमात्मने ॥ ८२ ॥

हास इति । उपहासात् मम हासोऽगात् मयि हसत्यां भर्त्ताऽपहसतीति भावः । अपमानात् भिया मानोऽपि निरगमत् । हेला स्त्रीणां शृङ्गारभावजा क्रिया विलासादि-रपि हेलनतः अनादरात् निरगमदित्यर्थः रतिरनुरागोऽपि विरतिं प्राप्ता । आशापि आकाशोऽभवत् । भूतौ ऐश्वर्य्ये भूतिर्भस्म अपतत् । हे सखि ! निजं कर्म्मैव मे मह्यं द्रुह्यति । अन्यस्मै किं क्रुध्यामि वक्ष्यामि वा ॥ ८० ॥

तादर्थ इति । तादर्थ्ये तस्या मम दास्या निमित्तं पुष्पं चीयते भर्त्रेति शेषः । या तत्पित्रा वृषपर्व्वासुरेण मम प्रीत्यै दासी दत्ता । पचे । इयते प्राप्यते इत्यर्थः । तादर्थ्ये ७ ।, ची १ ।, ॥ ८१ ॥

तस्यै इति । अर्थेन धनेन सुखेन हितेन च वञ्चिताहं आत्मने हितं तातं पितरं उपैमि गच्छामि । अशक्तार्थसुखेन ३ ।, हितेन ३ । ( च ) ॥ ८२ ॥

व्याकरणम् ।

यदुद्देशेन धात्वर्थस्तस्मादपि चीति विध्यनुसारेण उदाहरति । अन्यस्मै किं वक्ष्यामि ॥८०॥

तादर्थ्ये ची । तत्प्रीत्यै सृज्यते स्रजा । मम प्रीत्यै दासी दत्ता ॥ ८१ ॥

अशक्तार्थसुखेन च हितेन । एभिर्योगे चतुर्थी स्यात् । दास्यै सुखं सोढुं । हित-मात्मने ॥ ८२ ॥

पित्रे नमोऽस्तु मे यष्ट्रे स्वाहास्वस्तिवषट्स्वधा ।
नमः शब्दैश्च योगीतो योऽलं सृष्ट्यै लयाय च ॥ ८३ ॥

अथ सा पितुः समीपं गत्वा तं ननाम ।

ततो मुनीन्द्रः कृतिमान् सुताशिषि
वाढ़ेन च स्नेहमयेन चार्द्रहृत् ।
सौभाग्यसम्पत्सुयशांसि पुत्रि ! ते
भूयासुराहेति शुभाशिषं भृगुः ॥ ८४ ॥

( ततस्तन्माता प्रणतां क्रन्दन्तीं स्वसुतामङ्के न्यस्य तां प्रति । )

कच्चिदास्ते सुखी पुत्रि ! जामाता किन्नु तेन मे ।
पित्रे भ्रातुश्च शं भूयात् लप्सेऽहं कशिपू तयोः ॥ ८५ ॥

पित्रे इति । पित्रे मम ताताय नमोऽस्तु कीदृशाय स्वाहास्वस्तिवषट्स्वधानमः-शब्दैर्यष्ट्रे यागकर्त्रे । यो मम पिता योगीतो समाधिं प्राप्तः सन् सृष्ट्यै लयाय च अलं समर्थः । स्वाहास्वस्तिवषट्स्वधानमःशब्दैः ३॥, ( च ) योगे ७ ।, ॥ ८३ ॥

तत इति । मुनीन्द्रः शुक्रः सुताया आशिषि हिताशंसने कृतिभृत् प्रशस्तिमान् सन् । वाढेन दृढेन स्नेहरसेन आर्द्रहृत् च सन् हे पुत्रि ! सौभाग्यसम्पत्यशांसि ते तुभ्यं भूयासुः इति शुभाशिषं आह । आशिषि ७ ।, वा १ । ढेन ३ ।, ॥ ८४ ॥

कच्चिदिति । कच्चित्शब्दः कुशलादिप्रश्ने । हे पुत्रि ! जामाता सुखी आस्ते ? । इति प्रश्नः । अथ देवयानी उत्तरयति । नु भोः तेन तव जामाता मे मम किं किं प्रयोजनमित्यर्थः । कशिपू अन्नाच्छादनम् ॥ ८५ ॥

## व्याकरणम् ।

स्वाहास्वस्तिवषट्स्वधानमःशब्दैश्च योगे । एभिर्योगे च चो स्यात् । पित्रे नमः । सृष्ट्यै लयाय च अलम् ॥ ८३ ॥

आशिषि वा ढेन । सौभाग्यादीनि ते भूयासुः । "चतुर्थी चाशिष्यायुष्यमद्रभद्र-कुशलसुखार्थहितैः ।" पां । "ढेनाशिषि" वा । मुं ।" ॥ ८४ ॥

पित्रे भ्रातुश्च शं भूयात् ॥ ८५ ॥

( तन्माता तस्यै नीतिमाह । )

रोषाविशदनयने ! या न वाचि कर्म्मणि चेष्टार्थे पत्युः ।
तिष्ठति सरसा सा किं पतिलोकाय गच्छति नारी ॥८६॥

( सा मातरं प्रति ) तव जामाता एवम् ।

चेष्याश्रेष्ये स मत्वा मामन्यावज्ञेयकर्म्मणि ।
नियोजयति पर्य्यङ्के दासीं यां मन्यते प्रियाम् ॥ ८७ ॥
न जायते सा का काद्यावज्ञेयकर्म्मणीरिता ।
दीनायां मन्यते काकीं पतिः किं सा तमन्वियात् ॥८८॥

रोषेति । हे रोषाविशदनयने ! रोषेण अविशदं आविलं अप्रसन्नं वा नयनं यस्याः सा तथा । या नारी पत्युर्व्वाचि वचने इष्टार्थे कर्म्मणि च सरसा सानुरागा सती न तिष्ठति सा नारी किं कथं पतिलोकाय गच्छति । पक्षे । रोषाविशदिति रोषेण पर्व्वतगन्तुः सम्बोधनम् । अनयने ७ ।, यानवाचि ७ ।, कर्म्मणि ७ ।, चेष्टार्थे ७ ।, ॥ ८६ ॥

चेष्येति । स मम पतिः मां चेष्याश्रेष्ये दास्या अपि दास्ये मत्वा अन्यावज्ञेय-कर्म्मणि अन्यस्मिन् निन्दिते कर्म्मणि नियोजयति । पर्य्यङ्के दासीं नियोजयति । यां दासीं प्रियां मन्यते । मन्यावज्ञेयकर्म्मणि ७ ।, ॥ ८७ ॥

न जायत इति । अद्य का का नारी अवज्ञेयकर्म्मणि ईरिता नियोजिता सती दीना दुःखिनी न जायते अपितु सर्व्वा एव । पतिर्यां नारीं काकीं मन्यते सा नारी किं कथं तं पतिं अन्वियात् अनुगता भवेत् । न १ ।, जायते ८ ।, सा १ ।, काकाद्याव-ज्ञेयकर्म्मणि ७ ।, ईरिता १ ।, ॥ ८८ ॥

व्याकरणम् ।

अनयने यानवाचि कर्म्मणि चेष्टार्थे । अयनं मार्गस्तद्भिन्ने गतिवाचिधातोः कर्म्मणि चेष्टायां चौ स्यात् । पतिलोकाय गच्छति ॥ ८६ ॥

मन्यावज्ञेयकर्म्मणि । मनधातोरवज्ञेयकर्म्मणि चौ स्यात् । चेष्याश्रेष्ये मां मत्वा । अवज्ञेयेति किं ? यां प्रियां मन्यते ॥ ८७ ॥

न याति तव जामाता दृक्पथं मम जात्वपि ।
नैति स्वप्नेऽपि मत्शय्यां दानवीमानशङ्कया ॥ ८९ ॥

( भृगुपत्नी तां प्रति )

न चलति धर्म्मात् पुरुषो यदि भूतेर्ज्जिरजमपादानं स्यात् ।
अत्रपश्च मीनकेतोर्व्वंशमसदपत्यमिदं विधोर्भवं नातः ॥९०॥

यतः । भूभीनिवर्त्तनं यस्मात् भवेत्तज्जन्तुसत्तमः ।
सतो जातोऽघान्निवृत्तः पाताद्भीतः करोति तत् ॥ ९१ ॥

---

न यातीति । दानवी दानवदुहिता शर्म्मिष्ठा तस्या मानाशङ्कया । अन्यत् सुगमम् ॥ ८९ ॥

न चलतीति । पुरुषो धर्म्मान्न चलति । यदि भूतेर्जन्मनोपादानं सत् साधु स्यात् । अर्थात् यदि सद्वंशजातः स्यात् । अतः कारणात् अत्रपं निर्लज्जं मीनकेतोः कन्दर्पस्य वशं असत् अपत्यमेतत् विधोश्चन्द्रात् भवमुत्पन्नं न । अर्थात् चन्द्रवंशादुत्पन्नं न । पञ्चे । न चलतीत्यादिकमुदाहरणम् । जं १ ।, अपादानं १ ।, स्यात् ८ ।, अत्र ७ ।, पञ्चमी १ ।, ॥ ९० ॥

भूभीति । भूरुत्पत्तिः पुनर्जन्म तद्भीतेर्निवर्त्तनं यस्मात् कर्म्मणो भवेत् सतोजातः साधोर्जातो जन्तुसत्तमः जन्तुः शरीरी तेषां सत्तमो जनः पातात् नरकपातात् भीतः अघात् पापान्निवृत्तः सन् तदेव कर्म्म करोति । भूभीनिवर्त्तनं १ ।, यस्मात् ५ ।, भवेत् ८ ।, तत् १ ।, जं १ ।, ॥ ९१ ॥

व्याकरणम् ।

न जायते सा काकाद्यावज्ञेयकर्म्मणीरिता । काकादौ अवज्ञेयकर्म्मणि सा उक्ता चतुर्थी न जायते । यां काकीं मन्यते । "मन्यकर्म्मण्यनादरे विभाषाऽप्राणिषु ।" पां । "गत्यर्थमन्यढे चेष्टावज्ञेऽमध्वाकाकशूकश्रगालनावन्नेवा ।" मु ॥ ८८ ॥

अध्वादौ तु । दृक्पथं न याति । चेष्टायां किं ? स्वप्ने शय्यां नैति ॥ ८९ ॥

जमपादानं स्यात् अत्र पञ्चमी । अपादानं जसंज्ञं स्यात् अत्र पञ्चमी स्यात् । विधोर्भवम् ॥ ९० ॥

निन्दादानापायपराजयादि च यतो भवेत् ।
तज्जन्तुनाचर्य्यते नो आत्तविद्येन सद्गुरोः ॥ ९२ ॥

अतु राजा ।

पापाज्जुगुप्सितो धर्म्मात् भ्रष्टो वैधात् प्रमाद्यति ।
दास्याः क्रोधात् पराभूतस्तस्याः स्वं त्रायते सदा ॥९३॥
श्रुतं यतो वारणं तज्जन्तुनाचर्य्यते नहि ।
गुरुणाहो वारितोऽपि दासीस्पर्शात् स तद्रतः ॥ ९४ ॥

अङ्गिरा आह ।

---

निन्देति । निन्दायाः आदानं ग्रहणं तथा अपायपराजयादि च यतः कर्म्मणो भवेत् । सतो गुरोः सकाशात् आत्तविद्येन जन्तुना शरीरिणा तत् कर्म्म नाचर्य्यते । निन्दादानापायपराजयादि १ ।, (च) यतः ५ ।, भवेत् ८ ।, तत् १ ।, जं १ ।, ॥ ९२ ॥

पापादिति । तस्या दास्याः क्रोधात् स्वं आत्मानं त्रायते अन्यत् सुगमम् ॥ ९३ ॥

श्रुतमिति । यतो यस्मात् कर्म्मणो वारणं श्रुतं स्यात् जन्तुना शरीरिणा तत् कर्म्म न आचर्य्यते । अहो आश्चर्य्यं गुरुणा शुक्रेण दासीस्पर्शात् वारितोऽपि स राजा तद्रतः तस्यां दास्यामनुरक्तः आस्ते इतिशेषः । श्रुतं १ ।, यतः ५ ।, वारणं १ ।, तत् १ ।, जं १ ।, ॥ ९४ ॥

व्याकरणम् ।

भूभीनिवर्त्तनं यस्मात् भवेत् तज्जम् । भूरुत्पत्तिः, भीर्भयं, तज्जं तत् जसंज्ञं स्यात् । सतो जातः, अघात् निवर्त्तते, पातात् भीतः ॥ ९१ ॥

निन्दादिकं यतः स्यात् तदपि जम् ॥ ९२ ॥

पापात् जुगुप्सितः, धर्म्मात् भ्रष्टः, वैधात् प्रमाद्यति, दास्याः क्रोधात् पराभूतः, तस्याः क्रोधात् आत्मानं त्रायते ॥ ९३ ॥

श्रुतं यतो वारणं तज्जम् । दासीस्पर्शात् वारितः । "अपादाने पञ्चमी ।" पां । "यतोऽपायभीजुगुप्सापराजयप्रमादादानभूत्राणविरामान्तर्द्धिवारणं जं पौ ।" मुं ॥ ९४ ॥

तत: पत्नीमुखात् तच्च श्रुत्वा दैत्यगुरु: क्रुधा ।
स्वाहोद्रिक्तोऽनल इव हुङ्कारमकरोत्तदा ॥ ९५ ॥
आविश्वाद्भूर्नभोऽपूरि तेन स्थानमपाङ्ककुभ् ।
शब्देन प्रतिशब्देन योगीशोऽप्यत्रसद्यत: ॥ ९६ ॥

अथ शुक्र: क्रोधात् शशाप ।

इत: प्रभृत्यन्यवाचि संसर्गेऽप्यन्ययोषित: ।
विरक्ति: स्याद्यथा सद्भ्यो भिन्नस्यास्य तथास्त्वशम् ॥ ९७

ऐश्वर्य्यमत्तस्य उचितोऽयं दण्ड: ।

तथाऽयपोऽर्थेपीहा न यथा धर्म्मादिषु त्रिषु ।
यतोऽजितेन्द्रियो भोगी धनान्माद्यति मुह्यति ॥ ९८ ॥

तत इति । अस्यार्थ: सुगम: ॥ ९५ ॥

आविश्वादिति । तेन शब्देन तत्प्रतिशब्देन च आविश्वं विश्वमभिव्याप्य भुर्नभ: ककुभ् दिक् अपां स्थानं समुद्रादिकं अपूरि व्याप्तं । यत: शब्दात् योगीशोऽपि योगीन्द्रोऽपि अत्रसत् । ( अप आङ् ) अपाङ्ककुभ् शब्देन ३।, प्रतिशब्देन ३।, योगे ७।, ॥ ९६ ॥

इत इति । इत: प्रभृति एतत्कालमारभ्य सद्भ्यो भिन्नस्य साधुभिन्नस्य अर्थात् ययाते: यथा येन अशुभेन अन्यवाचि अन्यासां योषितां वाचि वाक्ये अन्ययोषित: संसर्गेऽपि विरक्तिर्वैराग्यं स्यात् अस्य राज्ञो ययाते: तथा अशं अकल्याणं अस्तु । प्रभृत्यन्यवाचिसंसर्गे ७।, पी १।, ॥ ९७ ॥

तथेति । अयपो जनस्य अय: शुभावहो विधिस्तं पाति पालयतीति अयपास्तस्य जनस्य अर्थेऽपि धनेऽपि तथा ईहा स्पृहा न भवति यथा धर्म्मादिषु त्रिषु धर्म्मकाम-

व्याकरणम् ।

अपाङ्ककुभ्शब्देन प्रतिशब्देन योगे । अप, आङ्, ककुभ्, शब्देन प्रतिशब्देन च योगे पी स्यात् । आ विश्वात् । यत: अत्रसत् । "अन्यारभ्यार्थारात् वहिर्विनर्त्ते प्रतिपर्य्यपाङ् दिक्शब्दैर्हेतुयवर्थे च ।" सु ॥ ९६ ॥

प्रभृत्यन्यवाचिसंसर्गे पी । आरभ्यार्थशब्देन अन्यार्थशब्देन च योगे पी स्यात् । इत: प्रभृति । सद्भ्यो भिन्नस्य ॥ ९७ ॥

अथ ययातिरकस्मात् जराग्रस्तोऽभूत् । स इदमचिन्तयत् ।

जीर्णोऽस्म्यकस्मात् किमिदं स्वप्नोऽसौ विभ्रमोऽथवा ।
अहं वा नाहमेवेति स पर्य्यङ्कादचिन्तयत् ॥ ९९ ॥

( अथ ययातिः सैरिन्ध्रीं पृच्छति । ) सुशीले ! न दृश्यते युष्माकमीश्वरी । ( सा तं प्रति । ) सा देवी एकैव पुरात् प्रस्थिता । अथ राजा ससम्भ्रमम् ।

स्थिता गेहोपरि वह्निर्विना योगेन यालिभिः ।
न जातु निरगात् भीरुः सैकागात् किं पुराद्बहिः ॥ १०० ॥

शय्यान्तावधि विप्रकर्षमभजत् येयं पुरा मानिनी
यातु स्वाञ्चलसंस्तरेऽपि बहुधा व्यालोचयत् धैर्य्यभाक् ।

मोचेषु । यतो यस्मात् अजितेन्द्रियो भोगी जनः धनात् धनं प्राप्य माद्यति मुह्यति च । ( तथा ) यपः ६।, अर्थे ७।, पी १।, ॥ ९८ ॥

जीर्ण इति । जीर्णो जरयान्वितः । पर्य्यङ्कात् पर्य्यङ्के उपविश्य अचिन्तयदित्यर्थः अन्यत् सुगमम् ॥ ९९ ॥

स्थितेति । या देवयानी गेहोपरि अट्टालिकायां स्थिता आलिभिः सखीभिर्योगेन विना जातु कदाचिदपि वह्निर्न निरगमत् । सा भीरुः एका किं कथं पुराद्बहिरगात् । परिवह्निर्व्विना योगे ७।, ॥ १०० ॥

शय्येति । या इयं महिषी पुरा पूर्व्वकाले मानिनी सती शय्यान्तावधि मम शय्यायाः सीमापर्य्यन्तं विप्रकर्षं अभजत् । स्वीय अञ्चलसंस्तरे अञ्चलशय्यायामपि यातु

व्याकरणम् ।

तथा यपोऽर्थे पी । धनान्माद्यति धनं प्राप्य माद्यतीत्यर्थः ॥ ९८ ॥

पर्य्यङ्कादचिन्तयत् पर्य्यङ्के उपविश्य अचिन्तयदित्यर्थः ॥ ९९ ॥

परिवह्निर्व्विना योगे । एभिर्योगेऽपि पी स्यात् । पुराद्बहिः ॥ १०० ॥

या मानं प्रणिपाततोऽपि बहुशोऽमुञ्चन्न या मौनभाक्
सा पुर्य्याः किमु पर्य्यगात् किमुतवाऽमुञ्चत् स्वमानं स्वतः ॥१०१॥

( सैरिन्ध्री तं प्रति । )

हेतौ पौने ह कार्य्यं स्यात् कुतः चीणं यतः स्त्रियाः ।
पुंदोषात् जायते मानः प्रवृत्तिः स्यान्न तन्मिता ॥ १०२ ॥

( राजा आह । ) सा ऋते योगतोऽन्यस्या भीरुर्नार्हति सर्पितुम् ।
तत्क्रुत्सखीसहायाऽगात् यत् स्थितिर्नो ऋते क्रुधः ॥ १०३ ॥

(अथ ययातिर्नारदमुखात् स्वजरायाः कारणं श्रुत्वा आत्मगतम् ।) अहह आत्मजाया हितार्थमहितमाचरितं दैत्यगुरुणा ।

धैर्य्यान्विता सती बहुधा व्यालोचयत् । या च बहुधा प्रणिपाततोऽपि मौनान्विता सती मानं नामुञ्चत् न तत्याज । सा किं कथं पुर्य्याः परि पुरीं परित्यज्य अगात् कथं वा स्वस्य मानं स्वतोऽमुञ्चत् ॥ १०१ ॥

हेतौ इति । हेतौ कारणे पौने स्थूले सति कार्य्यं कुतः कस्मात् चीणं स्यात् । पुंदोषात् पुरुषस्य दोषादेव स्त्रिया मानः स्यात् प्रवृत्तिरपि तन्मिता मानपरिमिता स्यात् । पचे । नेहेत्यादिकमुदाहरणवाक्यं । हेतौ ७, पौ १, ॥ १०२ ॥

सा ऋत इति । सा भीरुः अन्यस्या योगतः ऋते योगं विना सर्पितुं गन्तुं नार्हति । तत् तस्मात् क्रुत्रूपा या सखी तत्सहाया सती अगात् । क्रुधो विना क्रोधात् विना यत् स्थितिर्यस्या देवयान्या स्थितिर्न भवतीत्यर्थः । पचे । अन्यस्या इत्यादिकमुदाहरणवाक्यं । सा ११, ऋते योगतः ७, ॥ १०३ ॥

व्याकरणम् ।

पुर्य्याः पर्य्यगात् पुरीं त्यक्त्वा अगादित्यर्थः ॥ १०१ ॥

हेतौ पौ । पौ पञ्चमी । पुं दोषात् मानः ॥ १०२ ॥

सा ऋतेयोगतः । ऋतेशब्दस्य योगेऽपि सा पञ्चमी स्यात् । यस्याः ऋते ॥ १०३ ॥

यतो मामृते सा विफला। अथ ययातिर्भार्गवस्याश्रमं जगाम।
अथ भार्गवी पतिं जराग्रस्तं दृष्ट्वा शोकात् सखीं प्रति।

दूरात् दूरं लसितमगमत् हन्त मानोऽनु यातु
वारादर्थैः फलमपि न मे यत् फलासादनार्थम्।
उच्चैर्वृन्तं मयि नमयितुं प्रोद्यतायामुपायै-
र्मूले भग्नः स इति मनसः सा फलाशा गतारात्॥ १०४॥

शोचन्ती साऽभ्यगान्मातुरन्तिके सा च तन्मुखात्।
ज्ञात्वा वृत्तं विषीदन्ती स्वभर्त्रे तन्न्यवेदयत्॥ १०५॥

तच्च श्रुतवतो दैत्यगुरोरनुमतेर्नृपः।
गत्वा तस्य समीपे तं नत्वा तुष्टाव साञ्जलिः॥ १०६॥

नमस्तुभ्यं दुष्टानां दमन! गुरो! तव शापो वरायते मय्या-

---

दूरादिति। लसितं वाञ्छितं दूरादपि दूरं अगमत्। तेन अनु लसितेन सह मानोऽपि वा आरात् दूरं यातु अर्थैः धनैरपि मे मम फलं नास्ति। यत् यस्मात् उपायैः फलस्य आसादनार्थं उच्चैर्वृन्तं नमयितुं प्रोद्यतायां मयि सत्यां स वृक्षो मूले भग्नः अभूदिति शेषः। इति हेतोः सा फलाशा मनसोऽपि आरात् दूरे गता। पक्षे। सूत्रस्य पूर्व्वापरभागौ उदाहरणं। वा १।, वारादर्थैः ३॥, ॥ १०४॥

शोचन्तीति सुगमं॥ १०५॥

तच्चेति। अनुमतेः अनुमत्याः नृपो ययातिः तस्य शुक्रस्य। अन्यत् सुगमं॥ १०६॥

नम इति। हे दुष्टानां दमन! हे गुरो! तुभ्यं नमः। मयि तव शापोऽपि

व्याकरणम्।

वारादर्थैः। दूरान्तिकार्थैर्योगेऽपि पञ्चमी स्यात्। दूरात् दूरम्। मनस आरात् अगमत्। "दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्।" पा॥ "वारादर्थैः।" मु॥ १०४॥

मातुरन्तिके॥ १०५॥

तस्य समीपे॥ १०६॥

गसां कर्त्तरि कृत्यनभिहितकर्मकर्त्तरि च षष्ठीदेवतासि दिनाधिप-
देवतानामिति तव असिरागसां छिदे भवति ॥ १०७ ॥

अतिवज्रा वाक् तव तु प्रयोगे स्यान्न साऽफला ।
कौटे प्रयुक्तवान् यत्तां तत एव दुनोम्यहम् ॥ १०८ ॥
अवुदानप्रयुक्तेनामोघेनास्त्रेण मन्यते ।
स्वसाफल्यमपात्रेऽस्तं त्रपते स्वं विगर्हयत् ॥ १०९ ॥

---

वरायते वरतुल्यो भवति । मयि कौदृशे आगसां अपराधानां कर्त्तरि । कृतिभिः शास्त्रकारकैर्मुनिभिरनभिहितं अविहितं यत् कर्म्म तस्य कर्त्तरि च । त्वं दिनाधिपदेवतानां मध्ये षष्ठी देवतासि । इति हेतोः तव असिः शापः आगसां अपराधानां छिदे छेदाय भवति । पचे मम इत्यादिकं उदाहरणवाक्यं । कृत्यनभिहितकर्म्मकर्त्तरि ७।, षष्ठी १।, ॥ १०७ ॥

अतिवज्रेति । तव वाक् वाणी तु अतिवज्रा वज्रमप्यतिक्रान्ता वज्रतुल्येत्यर्थः । प्रयोगे विक्षेपे सा वाणी अफला निष्फला न स्यात् । तां वज्रतुल्यवाणीं कौटे प्रयुक्तवान् अर्थात् अयोग्ये मयि प्रयुक्तवान् तत एव दुनोमि दुःखी भवामि । पचे । अतिवज्रा इति सम्बोधनं वाकारः इवार्थे । क्तवतुप्रयोगे ७।, स्यात् ८।, न १।, सा १।, ॥१०८॥

अवुदानेति । अवुदाने अवूणामिव छेदने प्रयुक्तेन त्यक्तेन अमोघास्त्रेण स्वसाफल्यं स्वस्य आत्मनः साफल्यं मन्यते । तदत्र अपात्रे अस्तं चिप्तं सत् स्वं आत्मानं गर्हयत् सत् त्रपते लज्जामाप्नोति । अवुदाने इति दोय छेदे इत्यस्य रूपम् । ( अट उत् आन ) अवुदानप्रयुक्ते ७।, न १।, ॥ १०९ ॥

व्याकरणम् ।

कृत्यनभिहितकर्म्मकर्त्तरि षष्ठी । कृतिप्रयुज्यमाने अनभिहिते अनुक्ते कर्म्मणि कर्त्तरि च षष्ठी स्यात् । दुष्टानां दमन । तव असिः । आगसां छिदे । "कर्तृकर्म्मणोः कृति ।" पा ॥ १०७ ॥

अवुदानप्रयुक्ते न । अट उदन्त आनप्रत्यये प्रयुक्ते सति षष्ठी न स्यात् । स्वं विगर्हयत् ॥ १०९ ॥

अतोऽयोग्ये मयि नैतदुपयुज्यते । यतः

भूदेवकोपानलदाहचिह्नमद्यापि चक्र्यप्युरसा दधिस्तत् ।
ब्रह्मंस्तदग्नौ नृषु ते प्रयोज्ये नो केऽपि कौ तंप्रतिघातुकाः स्युः॥११०॥

अथ भार्गवः कोपात् तमुपालभते स्म । शृणु ।

काम्ये कर्म्मणि नित्ये च विहिते भविष्यदर्थे सा न भवति रतिर्या तात्कालिकप्रीतिफलकेऽशुभे कर्म्मणि इति कथमेतेऽशुभं न भोजिनः ॥ १११ ॥

श्रौः अयेहीच्य सद्वृत्तं दुर्वृत्तं दृश्यते यदा ।
वसुप्रयुक्तं व्यक्तञ्च तदा सा न प्रसक्तिभाक् ॥ ११२ ॥

भूदेवेति । चक्री विष्णुरपि उरसा वक्षसा अद्यापि भूदेवकोपानलदाहचिह्नं भूदेवो ब्राह्मणो भृगुस्तस्य कोपानलेन दाहस्य चिह्नं अर्थात् भृगुपदचिह्नरूपम् । उरसा दधिः धृतवानित्यर्थः । हे ब्रह्मन् ! नृषु मनुष्येषु तदग्नौ ते तव प्रयोज्ये त्यागयोग्ये सति कौ पृथिव्यां केऽपि नो तं प्रतिघातुकाः निवारकाः स्युः । दधिरिति धाधातोः किप्रत्ययेन सिद्धम् । प्रयोज्ये ७, (न १) उके ७, (अपि) कौ ७, ॥ ११० ॥

काम्य इति । भविष्यदर्थे कालान्तरभाविफलके विहिते श्रुतिविहिते काम्ये नित्ये च कर्म्मणि सा रतिरनुरागो न भवति । या रतिः श्रद्धा तात्कालिकफलके अशुभे कर्म्मणि भवति । इति हेतोः एते मनुष्या किं कथं न अशुभं भोजिनः अशुभं दुःखं न भोक्ष्यन्ते अपि तु भोक्ष्यन्त एव । पक्षे । काम्यकर्म्मेति काम्यकर्म्मवतः कस्यचित् क्लीवस्य सम्बोधनम् । णिनि ७, त्ये ७, (च) विहिते ७, भविष्यदर्थे ७, सा १, (न) भवति ८, ॥ १११ ॥

व्याकरणम् ।

प्रयोज्ये नो केऽपि कौ । उकप्रत्यये किप्रत्ययेऽपि प्रयोज्ये न षष्ठी । चिह्नं दधिः । तं प्रतिघातुकाः ॥ ११० ॥

णिनित्ये च विहिते भविष्यदर्थे सा न भवति । भविष्यदर्थे णिनिप्रत्यये विहिते सा षष्ठी न । अशुभं भोजिनः ॥ १११ ॥

सति शौले वर्त्तिंढणि न तं ह्रष्टास्ति कश्चन ।
मिथो विरोधिनोऽप्येते सुधांशोर्नारयो ग्रहाः ॥ ११३ ॥
पुंसां न कार्य्योऽसत्सङ्गो यैः प्रार्थ्यं हितमात्मनः ।
जायते वा तुल्यभावनिष्ठा संसर्गतो यतः ॥ ११४ ॥

श्रीरिति । श्रीः सम्पत् सद्वृत्तं सच्चरित्रं वीक्ष्य श्रयेत् आत्मानमाश्रयेत् । वसुप्रयुक्तं धनप्रयुक्तं दुर्वृत्तं असच्चरित्रं व्यक्तं यदा दृश्यते तदा सा श्रीर्न प्रसक्तिभाक् न तत्र प्रसक्ता भवतीत्यर्थः । पक्षे । श्रीरित्यादिकं उदाहरणम् । दृश्यते ८।, यदा ७।, वसु १।, प्रयुक्तं १।, व्यक्तं १।, (च) तदा ७।, सा १।, न १।, प्रसक्तिभाक् १।, ॥११२॥

सतीति । सति साधुनि शौले स्वभावे वर्त्तिंढणि वर्त्तमाने सति अर्थात् सद्वृत्तौ सत्यां तं तद्वन्तं जनं ह्रष्टा न कोऽपि । एतदेव दर्शयति मिथ इति । एते ग्रहा रव्या-दयः मिथः परस्परं विरोधिनोऽपि केऽपि सुधांशोश्चन्द्रस्य नारयः । अत्र चन्द्रं प्रति ग्रहाणां विद्वेषाभावे तस्य सुधांशुत्वं हेतुः । पक्षे । तमित्यादिकं उदाहरणम् । सति ७।, शौले ७।, वर्त्तिंढणि ७।, (न १।) ॥ ११३ ॥

पुंसामिति । असत्सङ्गो न पुंसां कर्त्तव्यः । यैः पुम्भिर्हितं प्रार्थ्यम् । यतो यस्मात् संसर्गतः तुल्यभावनिष्ठा भावः स्वभावः निष्ठा श्रद्धा जायते । भावनिष्ठा इति मौनकूर्म्मकील इतिवत् समासः । पक्षे । पूर्व्वभाग उदाहरणम् । जायते ८।, ( वा १।, ) ( तु १। ) ल्यभावनिष्ठासंसर्गतः ५।, ॥ ११४ ॥

व्याकरणम् ।

दृश्यते यदा वसु प्रयुक्तं व्यक्तञ्च तदा सा न प्रसक्तिभाक् । यदा वसु अव्यय क्तप्रत्ययश्च प्रयुक्तं दृश्यते तदा सा षष्ठी प्रसक्तिभाक् न भवति । सद्वृत्तं वीक्ष्य । "ढवि क्तत्यव्यक्तुक्तक्तवतुखलतीक्ष्णानवसुशीलार्थढन् भव्यर्थार्थे णिनि" सू ॥ ११२ ॥

सति शौले वर्त्तिंढणि न । शीलार्थे वर्त्तिनि ढणि प्रयोज्यमाने सति न षष्ठी । तं द्रष्टा ॥ ११३ ॥

जायते वा तु ल्यभावनिष्ठासंसर्गतः । ल्यसंज्ञकक्तात प्रयुज्यमाने भावक्तयोगे च

खलस्यार्थप्रयोगे न स्वशरीरव्ययेन च।
संसिध्यति यतोऽभीष्टं सुजीवं तेन मानवैः॥ ११५॥
आपातदृप्त्यर्थकसाधने वा चमोऽनुतदुर्ज्जरपक्त्यशक्तः।
भोगी चिरं सीदति चोद्गिरंस्तत् तथापि पथ्यस्य न तृप्तिमेति॥११६॥
जीवद्विपाणकेऽसत्कर्म्मकृतिस्त्यनुवर्त्तिनि।
साधे श्रियो न कस्यापि: कुवास्तौ गेहिना यथा॥ ११७॥

---

खलेति। खलस्य क्रूरजनस्य अर्थप्रयोगे धनव्यये स्वशरीरव्ययेन च यतो यस्मादभीष्टं न संसिध्यति तेनैव हेतुना मानवैः सुजीवं सुखेन जीव्यते। तथा च यदि खलस्याभीष्टं सिध्येत् तदा केनापि न जीव्यते इत्यर्थः। पचे। स्वशरीरेत्यादिकं च। खलस्य ६।, अर्थप्रयोगे ७।, (न १)॥ ११५॥

आपातेति। आपातदृप्त्यर्थकसाधने वा आपातं तत्क्षणमेव तृप्तिरर्थः फलं यस्य कर्म्मणः तादृशनिन्दितकर्म्मणः साधने चमो भोगी जनः अनु पश्चात् तत् दुर्ज्जरपक्त्यशक्तः तस्य दुर्ज्जरस्य दुष्पचस्य कर्म्मणः पक्तौ पचने अशक्तः सन् तदुद्गिरन् अर्थात् रोगशोकादिरूपेण परिणतं तदेव कर्म्म भोगेन चययन् चिरं सीदति। तथापि पथ्यस्य अर्थात् पथ्येन विहितकर्म्मणा न तृप्तिं एति प्राप्नोतीत्यर्थः। तथाहि यथा भोगीजनः मांसादिकं अतिभुक्त्वा तदतिदुष्पचस्य पचने अशक्तः सन् तदेव उद्गिरन् सीदति तथापि न पथ्याशी भवति। तथा भोगी संसारी अपि इत्यर्थः। पचे। आपात इति पतितस्य सम्बोधनम्। तृप्त्यर्थकसाधने ७।, वा १।,॥ ११६॥

जीवदिति। असत्कर्म्मकृति अवैधकर्म्मकर्त्तरि स्त्यनुवर्त्तिनि स्त्रीवशीभूते अतएव

व्याकरणम्।

षष्ठी स्यात् वा। पुंसां कार्य्यं यैः प्राप्यम्। "कृत्यानां कर्त्तरि वा।" पा। "त्यभावज्ञात्स्यषकसढे घे वा।" मु॥ ११४॥

खलस्यार्थप्रयोगे न। खलार्थप्रत्ययोगे षष्ठी न स्यात्। मानवैः सुजीवम्॥ ११५॥

तृप्त्यर्थकसाधने वा। तृप्त्यर्थकधातोः साधने षष्ठी स्याद्वा। पथ्यस्य तृप्तिमेति। "तृप्त्यर्थानां वा॥" मु॥ ११६॥

अपके सत्कर्म्मकृति स्त्यनुवर्त्तिनि सा वे। अपकवर्ज्जिते स्त्राधिकारानुवर्त्तिनि

अथ भृगुः भार्य्यां प्रति। प्रिये ! तवैतद् विदितमभूत्।

न सद्वाक्साऽसद्वाचि निष्ठयासौ सतां गतम्।
वर्त्म ज्ञातं न यन्नक्तं पिशाच्या मोहितात्मनः॥ ११८ ॥
कामुकेन हि संसर्गे दास्याप्यतिकुरूपया।
रज्यतेऽप्युत्तमाया न पत्न्या भवति कामुकः॥ ११९ ॥

---

जीवद्‌विप्राणके जीवन्मृतप्राये साधे सपापे जने श्रियो लक्ष्म्याः कस्य सुखस्य नाप्तिः न प्राप्तिः। अर्थात् ईदृशपुरुषे श्रिया सुखं न प्राप्यते। अत्र दृष्टान्तयति यथा गेहिना कुवासौ सुखस्य नाप्तिस्तथेत्यर्थः। पक्षे। जीवद्‌विप्र इति सम्बोधनम्। प्राणके ७, सत्कर्मकक्षति ७।, स्म्यनुवर्त्तिनि ७।, सा १।, घे ७।, ॥ ११७।

नसदिति। असतां वाचि वाक्ये निष्ठया असौ राजा न सद्‌वाक्साट् सतां वाचं सहते यः सः सद्‌वाक्साट् तादृशो न भवतीत्यर्थः। यत् यस्मात् नक्तं रात्रौ पिशाच्या मोहितो आत्मा यस्य तादृशस्य जनस्य सतां मतं वर्त्म न ज्ञातं न ज्ञायते इत्यर्थः। गतमिति अधिकरणे क्तः ज्ञातमिति वर्त्तमाने क्तः। पक्षे। सा सद्‌वाक् न इति कश्चन जनं कथयति। असद्‌वाचिनिष्ठया ३।, असौ १।, ॥ ११८ ॥

कामुकेनेति। कामुकेन जनेन अतिकुरूपयापि दास्या सह संसर्गे रज्यते अनुरक्तेन भूयते उत्तमाया अपि गुणरूपजात्यादिभिरुत्तमाया अपि पत्न्याः कामुकोऽभिलाषी न भवति। पक्षे। दास्येत्यादिकं उदाहरणवाक्यम्। कामुकेन ३।, (हि) संसर्गे ७।, ॥ ११९ ॥

व्याकरणम्।

सकर्मककक्षति प्रयुज्यमाने घे कर्त्तरि सा षष्ठी स्याद्वा। श्रियः कस्य आप्तिर्न। गेहिना कस्याप्तिर्न ॥ ११७ ॥

असद्वाचिनिष्ठयासौ। असमधिकरणं सत् वर्त्तमानकालः तद्वाचिक्तप्रत्यययोगे कर्त्तरि नित्यं असौ षष्ठी। सतां गतं वर्त्म मोहितात्मनो न ज्ञातं न ज्ञायते इत्यर्थः। "क्तस्य च वर्त्तमाने। अधिकरणवाचिनश्च"। पां ॥ ११८ ॥

कामुकेन हि संसर्गे। कामुकशब्देन च योगे षष्ठी स्यात्। पत्न्याः कामुकः। "कामुकसङ्डार्थकेन।" मु ॥ ११९ ॥

अन्यच्च । रतिः कुकर्म्मसंसर्गे या नृणां शिष्टसम्मते ।
कर्म्मण्यपि च संसर्गे सा चेत् तत् कः शुचां भजेत् ॥ १२० ॥
मम वाक्प्रपञ्चोऽपि विफलः । यतः ।
नृणां मूढ़े नीतिशिक्षा तस्याक्रोशाय केवलम् ।
भवेद् यथाऽश्वे निर्धारे षष्ठीतिः स्यात् कषाहतेः ॥ १२१ ॥
परव्यथार्त्तो जगतां हितैषी आर्य्यः सुखासक्तत एति निद्राम् ।
खलः परेषां सुखतः सदार्त्तो निद्रां भजेत् किं जगतोऽहितैषी ॥ १२२ ॥

---

रतिरिति । नृणां मनुष्याणां कुकर्म्मसंसर्गे कुकर्म्मणि कुसंसर्गे च या रतिः यादृशोऽनुरागो भवति शिष्टसम्मते साधुसम्मते कर्म्मणि संसर्गे च चेत् यदि सा रतिः तादृक् रतिः स्यात् तत् तदा को जनः शुचां शोकानां भजेत् शुचो दुःखानि भजेदित्यर्थः । पद्ये । पूर्व्वापरभागौ उदाहरणम् । शिष्टसम्मते ७, कर्म्मणि ७, (अपि च) संसर्गे ७, सा १ । ॥ १२० ॥

नृणामिति । नृणां मूढ़े नराधमे नीतिशिक्षा तस्य नराधमस्य आक्रोशाय प्रकोपाय भवेत् । यथा निर्धारे निनर्ऽस्ति धारा आस्कन्दितादि पञ्चविधगतिर्यस्य तादृशे अश्वे घोटके कषाहतेः कषाघातात् षष्ठी इतिः पञ्चविधगत्यतिरिक्ता दुष्टगतिरिति यावत् स्यात् भवेत् । गतयोमूः पञ्च धारा इत्यमरः । निर्धारे ७, षष्ठी १ । ॥ १२१ ॥

परेति । परपीड़ाया दुःखितः जगतां हितेच्छुः आर्य्यः श्रेष्ठो जनः सुखासक्ततः सुखसम्पर्केणैव निद्रां एति प्राप्नोति । परेषां सुखतः सदार्त्तः सदा दुःखितः जगतः

व्याकरणम् ।

शिष्टसम्मते कर्म्मण्यपि च संसर्गे सा । शिष्टप्रयुक्ते कर्म्मणि सम्बन्धे च सा षष्ठी स्यात् न तु सर्व्वत्रेत्यर्थः । नृणां रतिः । शुचां भजेत् ॥ १२० ॥

निर्धारे षष्ठी । नृणां मूढ़े ॥ १२१ ॥

आर्य्यः सुखासक्ततः । आ रि अस् प्रत्ययस्य सुखशब्दस्य च योगे षष्ठी स्यात् । परेषां सुखतः । "समार्थैनार्य्यस्तसाद्गितसुखे निर्द्धारे सम्बन्धे ठ च षी ।" मु । ॥ १२२ ॥

अथ ययातिः ( भार्गवं प्रति । )

यासीच्च मे सुदमृतस्य समैरसौघैः
प्राक्‌च्वेड़तुल्यवचनेन हितेन साऽभूत् ।
ब्रह्मन् ! यथामयवयः समयं भवेद् यत्
वैद्यप्रयुक्तविषमप्यमृतस्य तुल्यम् ॥ १२३ ॥

( भार्गवस्तं प्रति । )

सम्पदा मत्ततात्तेन सा सम्बिल्लङ्घिता त्वया ।
आसुरीयं न भोग्येति पुरस्तात् मम या कृता ॥ १२४ ॥

---

अहितेच्छुः खलः किं कथं निद्रां भजेत् । पद्ये । सूत्रस्य पूर्व्वभागः सम्बन्धे षष्ठ्या उदाहरणम् । ( आ रि अस् )आर्य्यः सुखासक्तः ७।, ॥ १२२ ॥

यासीदिति । प्राक् पूर्व्वकाले अमृतस्य समैस्तुल्यैः रसौघैः रससमूहैः मे मम या सुत् प्रीतिर्नासीत् । हे ब्रह्मन् ! हितेन च्वेड़तुल्यवचनेन विषतुल्यत्वद्वाक्येन सा प्रीतिरभूत् । यत् यस्मात् आमयो रोगः वयो बाल्यादि समयो ग्रीष्मादिः तदनतिक्रम्य वैद्यप्रयुक्तं विषमपि अमृतस्य तुल्यं भवेत् । पद्ये । प्राक्‌च्वेड़ इति पूर्व्वं सिंहनाद-युक्तस्य सम्बोधनम् । सूत्रस्य पूर्व्वापरभागौ उदाहरणवाक्ये । तुल्यवचनेन ३।, हितेन ३।, सा १।, अभूत् ८।, ॥ १२३ ॥

सम्पदेति । सम्पदा ऐश्वर्य्येण मत्तता आत्ता गृहीता येन स त्वया अर्थात् ऐश्वर्य्य-मत्तेन त्वया सा सम्बित् प्रतिज्ञा लङ्घिता इयं आसुरी असुरस्य दुहिता मया न भोग्या इति या प्रतिज्ञा मम पुरस्तात् अग्रे कृता । पद्ये । सम्पदामत्त इति सम्बोधनम् । अन्यदुदाहरणम् । तात्तेन ३।, सा १।, ॥ १२४ ॥

व्याकरणम् ।

तुल्यवचनेन हितेन साभूत् । तुल्यार्थवाचिशब्देन हितशब्देन च योगे सा षष्ठी अभूत् भवतीत्यर्थः । भाविनि भूतवदुपचारात् । अमृतस्य समैः । अमृतस्य तुल्यम् ॥ १२३ ॥

तात्तेन सा । तात् तद्धितान्तेन योगे सा षष्ठी स्यात् । मम पुरस्तात् ॥ १२४ ॥

तदेनः परिणामोऽसौ जरा ते विद्धि यत् पुमान् ।
कुरुते तत् फलत्येव कियतोऽनेहसोऽप्यधः ॥ १२५ ॥

मम सुताया यद्दुःखं तदपि तस्याः पापस्येव परिणामः । यतः ।

कुले राजति या भेजे प्रेम्णा त्वामुत्तरा च सा ।
अनादरे गम्यमाने निरगात् पश्यतस्तव ॥ १२६ ॥

( ययातिस्तं प्रति । ) गुरो ! सत्यं मया पापं कृतं किन्तु सर्व्वं भवतः संसर्गजपुण्येन तस्य क्षयोऽभूत् यतः ।

यज्ञे त्रय्याश्च यः साधुः पुण्यं ज्ञानं स विन्दति ।
साधुना सह योगेन भवेत्तदुभयं मुने ! ॥ १२७ ॥

---

तदेन इति । ते तव असौ जरा तदेनःपरिणामः तत्पापस्य पाक इति विद्धि जानीहि । पुमान् पुरुषः यत् कर्म्म कुरुते कियतोऽनेहसः कियत्कालस्य अधः परतः तत् कर्म्मफलत्येव इत्यन्वयः । पद्ये । पूर्व्वसूत्रस्य उदाहरणम् ॥ १२५ ॥

कुल इति । या देवयानी कुले राजति दीप्यमानं कुलमनादृत्य प्रेम्णा त्वां भेजे । उत्तरा च उत्तरकाले च सा अनादरे गम्यमाने ज्ञायमाने सति पश्यतस्तव पश्यन्तं त्वामनादृत्य निरगात् तव पुरात् निरगमत् । पद्ये । कुले इत्यादिकं उदाहरणम् । उत्तरा १।, (च १।), सा १।, अनादरे ७।, गम्यमाने ७।, ॥ १२६ ॥

यज्ञ इति । यो जनः यज्ञे साधुः यश्च त्रय्या वेदत्रयस्य साधुः स जनः पुण्यं ज्ञानञ्च विन्दति प्राप्नोति । हे मुने ! साधुना सहयोगेन साधुसङ्गेन तदुभयं भवेदित्यन्वयः । साधुना ३।, सह १।, योगेन ३।, भवेत् ८।, तत् १।, उभयं १।, ॥ १२७ ॥

व्याकरणम् ।

अनेहसोऽधः ॥ १२५ ॥

उत्तरा च सा अनादरे गम्यमाने । अनादरे गम्यमाने सा षष्ठी स्यात् उत्तरा च सप्तमी स्यात् । कुले राजति त्वां भेजे । पश्यतस्तव निरगात् ॥ १२६ ॥

साधुना सहयोगेन भवेत् तदुभयं । साधुशब्दयोगे तदुभयं षष्ठी सप्तम्यौ स्यातां । यज्ञे त्रय्याश्च साधुः ॥ १२७ ॥

पापायुक्तप्रसूतेनासक्ताच्च न सुखी पिता।
तथापि हित-आयुक्तो नाहितस्यास्य स क्वचित् ॥ १२८ ॥

गुरो ! अपराधः क्षन्तव्यः। ( भृगुस्तं प्रति। ) किमिच्छसीति।
ययातिराह। तव सुताया हितमिच्छामि। यतः।

कुशलस्वामिनाऽयोगे भवेत्तज्जीवनं वृथा।
अभीष्टसाधने स्त्रीणां कुशलः पतिरेव यत् ॥ १२९ ॥
तरुण्या अक्ततार्थाया: स्वामी चेत् कुशलोऽवने।
भवेद्वज्राहतोऽकस्मात् तद्दुःखमनुयाति ताम् ॥ १३० ॥

---

पापेति। पापायुक्तः पापासक्तस्तादृशेन प्रसूतेन सन्तानेन आसक्तात् पिता न सुखी। तथापि स पिता अस्य सन्तानस्य हिते आयुक्तः आसक्तः क्वचिदपि समये अहितस्य आयुक्तो न। पक्षे। पापेति सम्बोधनम्। आयुक्तप्रसूतेन ३।, आसक्तात् ५।, (अ१।) ॥ १२८ ॥

कुशलेति। कुशलस्वामिना पोषणाभीष्टसाधनादिकर्म्मशक्तेन स्वामिना अयोगे विच्छेदे तज्जीवनं तासां स्त्रीणां जीवनं विफलम्। अन्यत् सुगमम्। कुशलस्वामिना ३।, योगे ७।, भवेत् ८।, तत् १।, ॥ १२९ ॥

तरुण्या इति। अक्ततार्थायास्तरुण्या युवत्याः अवने पालनादौ कुशली दक्षः स्वामी चेत् यदि अकस्मात् वज्राहतः स्यात् तदा तत् दुःखं तां तरुणीं अनुयाति सह गच्छति। पक्षे। पूर्व्वसूत्रस्य उदाहरणम् ॥ १३० ॥

व्याकरणम्।

आयुक्तप्रसूतेनासक्ताच्च। आयुक्तप्रसूताभ्यां योगे च तदुभयं स्यात्। हिते आयुक्तः। अहितस्यायुक्तो न ॥ १२८ ॥

कुशलस्वामिना योगे भवेत् तत्। कुशलस्वामिभ्यां योगे तदुभयं स्यात्। अभीष्टसाधने कुशलः पतिरेव ॥ १२९ ॥

तरुण्याः स्वामी। अवने कुशलः ॥ १३० ॥

तस्मान्मम जरामपनेतुमर्हसि। भृगुस्तं प्रति।

ईश्वरेणापि सक्तश्चेत् तदा तन्नान्यथा भवेत्।
स विश्वेषामीश्वरोऽपि पापशान्तौ न नेश्वरः॥ १३१॥

यत इयं जरा तव पापस्य परिणामस्तस्य हि भोगेनैव क्षयः।
(ययातिस्तं प्रति) गुरो यदि तत् पापमवश्यं भोक्तव्यं तर्हि।
ममैकेन धर्म्मनिपुणेन दायादेन युक्तेन च तत् पापं भोक्ष्यते।
यतो वेदे तन्त्रस्य च निपुणेन मया अशक्तस्य प्रतिनिधिः श्रूयते।
तथा पुत्रकृतं स्वकृतमेव भवतीति श्रूयते च॥ १३२॥

भार्गव आह। न्याय्यमेतत् परापराधेन निरागसो दण्डः। यथा।

यत् साक्षिप्रतिभूभ्याञ्च लभ्यते दण्डबन्धनम्।
नाधमर्णस्तदाप्नोति साक्ष्यत्र प्रतिभूस्तव॥ १३३॥

---

ईश्वरेणेति। चेत् यदि ईश्वरेणापि सक्तो भवेत् तवेति शेषः। तदा तत् पापं अन्यथा न भवेत्। स विश्वेषामीश्वरोऽपि पापमुक्तौ न ईश्वरः प्रभुर्न। ईश्वरेण ३।, (अपि) सक्तः १।, (चेत्) तदा ७।, तत् १।, ॥ १३१॥

ममैकेनेति। दायादेन पुत्रेण। युक्तेन योग्येन कर्म्मणेति यावत्। पक्षे। ममैकेन धर्म्म इति सम्बोधनम्। निपुणदायादेन ३।, युक्तेन ३।, (च)॥ १३२॥

यदिति। साक्षिप्रतिभूभ्यां यद्दण्डबन्धनं लभ्यते अधमर्णस्तत् नाप्नोति अत्र साक्षी प्रमाणं तव प्रतिभूः तव पुत्रः। प्रतिभवतीति प्रतिभूर्जन्य इत्यर्थः। स्युर्लग्नकाः प्रतिभुव इत्यमरः। जामिन् इति लोकोक्तिः। साक्षिप्रतिभूभ्यां ३॥, (च)॥ १३३॥

व्याकरणम्।

ईश्वरेणापि सक्तश्चेत् तदा तन्नान्यथा भवेत्। ईश्वरशब्दयोगे च तदुभयं स्यात्। नान्यथा भवेदिति स्वरूपाख्यानं। विश्वेषामीश्वरः। पापशान्तौ ईश्वरो न॥ १३१॥

निपुणदायादेन युक्तेन च। निपुणदायादाभ्यां योगे च तदुभयं स्यात्। वेदे तन्त्रस्य च निपुणेन॥ १३२॥

साक्षिप्रतिभूभ्याच। आभ्यां योगे तदुभयं स्यात्। अत्र साक्षी प्रतिभूस्तव॥ १३३॥

अथ भृगुः क्षणं विभाव्य तथास्त्वित्यब्रवीत् ।

अथ ग्रहाधिपतिना यो गतश्च नृपं प्रति ।
क्रोधस्तमत्यजत् सोऽसौ भयञ्चाधिपतिर्नृषु ॥ १२४ ॥

ततो ययाति भार्य्यया सह पुरमागत्य पुत्रान् आहूय चाह ।

जरायाः प्रति तारुण्यं देहि पुत्र ! ममेप्सितम् ।
चन्द्रवंशे हि दायादाः परार्थे स्वतनूर्ददुः ॥ १२५ ॥

ययातिः पारिपार्श्विकं प्रति ।

अथाद्भुतं पश्यतु मद्वचःसु च
स्फुटाभिधेयेष्ववधारितेष्वपि ।
अक्तो निशि द्विस्त्रिरुदीरितेषु न
प्रत्यूचुरेते त्रय आत्मजा रुषा ॥ १२६ ॥

---

अथेति । ग्रहाधिपतिना शुक्रेण नृपं प्रति यः क्रोधो गतः प्राप्तः तं क्रोधं स शुक्रः अत्यजत् असौ नृषु अधिपतिर्नराधिपोऽपि भयं अत्यजत् । पक्षे । ग्रह इति ग्रहण-शीलस्य सम्बोधनम् । अधिपतिना ३।, योगतः ३।, (च) ॥ १२४ ॥

जरेति । जरायाः प्रति जरायाः परिवर्त्तनेन तारुण्यं यौवनं देहि । हि यस्मात् चन्द्रवंशे दायादाश्चन्द्रवंशोद्भवा ज्ञातयः परार्थे स्वतनूः निजशरीराणि ददुः ॥ १२५ ॥

अथेति । अथ प्रश्ने अरे अद्भुतं पश्यतु तत् किमित्यत आह स्फुटेति स्फुटाभि-धेयेष्वपि स्फुटो व्यक्तोऽभिधेयोऽर्थो येषां तादृशेष्वपि मद्वचःसु अवधारितेष्वपि श्रुतेष्वपि ।

व्याकरणम् ।

अधिपतिना योगतश्च । अधिपतिशब्दयोगे तदुभयं स्यात् । नृषु अधिपतिः ॥१२४॥

चन्द्रवंशे दायादाः । "स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतकुशलायुक्तनिपुण-साधुसुजयैर्नादरैश्च च ।" सु । ॥ १२५ ॥

सुपः स्फुटाभिधेयेष्ववधारितेष्वपि । सुप प्रत्ययस्य व्यक्तार्थेषु श्रुतेष्वपि तदुभयं स्यात् । अक्तो निशि द्विस्त्रिरुदीरितेष्वपि ॥ १२६ ॥

एङानि भावादिमानि वाच्यानि त्रीणि अपत्यानि ॥ १३७ ॥

पुनराह। वत्साः शृणुत गुणानामाधारश्चत्वारः प्रसिद्धाः।

उपकण्ठविषयाश्लेषाऽत्यन्तसंयोगतो वर्द्धितस्नेहाः ॥ १३८ ॥

अतः प्रत्युत्तरं युज्यते। अथ यदुप्रभृतयस्तस्य त्रयः पुत्राः तं प्रति।

अह्नो दिवसस्य निशि रात्रौ त्रिविवारं उदीरितेष्वपि कथितेष्वपि एते त्रय आत्मजाः क्षा क्रोधेन न प्रत्यूचुः न प्रत्युत्तरं कृतवन्तः। पक्षे। अद्भुतं महत्त्वः पश्यतु। सुब्स्फुटाभिधेयेषु इत्यत्र विसर्गस्य लोपः। "क्रामन् दिशो दशरथ स्फुटवीरलक्ष्मीरितिवत्।" सुब् ६।, स्फुटाभिधेयेषु ७॥, अवधारितेषु ७॥, (अपि १) ॥ १३६ ॥

एङानीति। इमानि त्रीणि अपत्यानि वाच्यानि गर्ह्हितानि भावात् स्वभावतः एडानि वधिराणि। स्यादेडे वधिर इत्यमरः। पक्षे। ए इति सम्बोधनार्थमव्ययम्। अपत्यानीत्यपि सम्बोधनम्। ङानि १॥, भावादिमानि १॥, वाच्यानि १॥, त्रीणि १॥, ॥ १३७ ॥

वत्सा इति। हे वत्साः! शृणुत। कीदृशाः गुणानामाधाराः आश्रयाः प्रसिद्धाः लोके विख्याताः। उपकण्ठविषये कण्ठसमीपदेशे य आश्लेष आलिङ्गनं तद्रूपात्यन्तसंयोगात् वर्द्धितः स्नेहो येषु ते तथा। देशविषयौ तूपवर्त्तनमित्यमरः। पक्षे। गुणानां अर्थात् सूत्रकारस्य गुणानां कथां शृणुत इति तु शिष्यावधानार्थम्। वर्द्धितस्नेहा इति सम्बोधनम्। आधाराः १॥, चत्वारः १॥, प्रसिद्धाः १॥, उपकण्ठविषयाश्लेषात्यन्तसंयोगतः ३॥, ॥ १३८ ॥

व्याकरणम्।

ङानि भावादिमानि वाच्यानि त्रीणि। भावादिमानि भावप्रभृतीनि वाच्यानि वक्ष्यमाणानि त्रीणि भावकालाधिकरणानि ङानि ङसंज्ञकानि स्युः॥ १३७ ॥

आधाराश्चत्वारः प्रसिद्धाः उपकण्ठविषयाश्लेषात्यन्तसंयोगतः। उपकण्ठादिभेदादाधाराश्चत्वारः प्रसिद्धा भवन्ति। उपकण्ठः सामीप्यं अत्यन्तसंयोगो व्याप्तिः॥ १३८ ॥

जाताऽधुनायुष इयं चरमा विभक्ति-
र्भावे तथाधिकरणे समयेऽत्र तस्मात् ।
चित्तं प्रवर्त्तयतु तात ! किमीहसेऽन्यत् ।
स्यादिन्द्रियेषु विवशेषु किमिन्द्रियार्थैः ॥ १३९ ॥

अथ तस्य प्रियः पुत्रः पुरुनामासुरीसुतः ।
जरायाः प्रति तारुण्यं ददौ पित्रे स्वसंसदि ॥ १४० ॥

अथ राजा प्रीतस्तस्मै वरं ददौ सत्स्वपि ज्येष्ठेषु सिंहासनं तवैवेति ॥
(अङ्गिरा आह ।)

लब्धे स्वात्मजयौवने निशि दिवा रेमे समं भार्य्यया
भोगिन्या सह मुक्तकञ्चुकमहाभोगी यथा विज्वरः ।
आरामे मधुपालिचुम्बितविशिन्यामोदिपद्माकरे
रात्रह्नोर्गहणेऽभ्रमोऽपि न तयोर्निद्रा दरिद्रः स राट् ॥ १४१ ॥

---

जाताधुनेति । हे तात ! अधुना आयुष इयं चरमा विभक्तिः चरमो भागो जाता तस्मात् अत्र समये अधिकरणे भावे करणं शरीरमधिकृत्य स्वभावे अर्थात् शरीरानुरूप-स्वभावे चेष्टायां वा चित्तं प्रवर्त्तयतु । किं कथं अन्यत् ईहसे इच्छसि इन्द्रियेषु विवशेषु इन्द्रियार्थै-र्वा किं स्यात् किं फलं स्यादित्यर्थः । पद्ये । जाताधुनायुष इति सम्बोधनम् । इयं १।, चरमा १।, विभक्तिः १।, भावे ७।, (तथा १) अधिकरणे ७।, समये ७।, ॥१३९॥

अथेति । आसुरीसुतः असुरस्य दुहिता शर्म्मिष्ठा तस्याः पुत्रः जरायाः प्रति प्रतिदानं तारुण्यं यौवनम् । स्वसंसदि ज्ञातिसभैकदेशे ॥ १४० ॥

लब्ध इति । स राट् ययातिः स्वात्मजस्य यौवने लब्धे सति दिवानिशि भार्य्यया

व्याकरणम् ।

इयं चरमा विभक्तिर्भावे तथाधिकरणे समये । चरमा विभक्तिः सप्तमी समये काले । अत्र चित्तं प्रवर्त्तयतु । इन्द्रियेषु विवशेषु ॥ १३९ ॥

स्वसंसदि ज्ञातिसभाया एकदेशे इत्यर्थः ॥ १४० ॥

(राजोवाच ।) अहो मुने ! नहुषात्मजः कथमेवमाचरितवान् ।
(मुनिराह ।)

अतिरिक्ताधिपत्यार्थोपाधिभ्यामविवेकिनः ।
माद्यन्त्येव ततोऽमीषां ह्रदन्त्युपपद्यते गुणाः ॥ १४२ ॥

(राजोवाच ।) हे मुने ! कर्णपीयूषमिदं शृण्वन् न तृप्यामि अतः कथ्यतां राजा ततः किमकरोदिति । (मुनिराह ।)

अथैकदात्वजः कश्चिदधितातं भयात् द्रुतः ।
शरणं तं नृपं भेजे रक्ष राजन्निति ब्रुवन् ॥ १४३ ॥

---

सह रेमे । यथा विज्वरी विगतज्वरो मुक्तकञ्चुकमहाभोगी ज्वरानन्तरं भोगिन्या सर्प्या सह रमते तथेत्यर्थः । कुत्र रेमे इत्याह । आरामे उपवनैकदेशे । मधुपस्य आल्या श्रेण्या चुम्बिता या बिम्बिनी पद्मिनी तस्या आमोदशालिनी पद्माकरे सरोवरे । तस्य समीपे इत्यर्थः । राजा कीदृशः रात्र्यह्नोरक्षणे श्वाने अधमः । तयोः रात्र्यह्नोर्निद्रादरिद्रः निद्राशून्यः । पद्ये । पूर्व्वसूत्रस्य उदाहरणम् ॥ १४१ ॥

अतीति । अतिरिक्तौ च तौ आधिपत्यार्थौ प्रभुत्वधने चेति तौ तथा तद्रूपाभ्यामुपाधिभ्यां अर्थात् अतिशयप्रभुत्वधनरूपोपाधिभ्यां अविवेकिनो जना माद्यन्त्येव अतः कारणात् अमीषामविवेकिनां उपपद्यते गुणाः शतादप्यधिका गुणाः ह्रदन्ति अर्थात् धनादिमत्तानां असंख्याता अपि गुणाः वृथा भवन्ति । पद्ये । अविवेकिन इत्यादिकमुदाहरणवाक्यम् । अतिरिक्ताधिपत्यार्थोपाधिभ्यां ३॥, ॥ १४२ ॥

अथेति । अजश्छागः अधितातं ताते पितरि अधि ताताधीन इत्यर्थः । भयात् द्रुतः सन् हे राजन् ! रक्ष इति ब्रुवन् सन् तं नृपं ययातिं शरणं भेजे ॥ १४३ ॥

व्याकरणम् ।

लब्धे स्वात्मजयौवने । निशि दिवा रेमे । आरामे पद्माकरे । रात्र्यह्नोर्निद्रादरिद्रः ॥ १४१ ॥

अतिरिक्ताधिपत्यार्थोपाधिभ्यां । अतिरिक्तार्थकेनोपेन आधिपत्यार्थकेनाधिना च योगे सप्तमी स्यात् । उपपद्यते गुणाः । "यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ।" पा । "अधिकेशार्थोपाधिभ्याम् ।" मु ॥ १४२ ॥

अगादन्योऽपि तं धावन्नमुष्कोऽजोऽप्यजेष्वधि ।
मुञ्च छागाधमं राजन्निमं हन्मीति च ब्रुवन् ॥ १४४ ॥

(वृद्धश्छागो राजानं प्रति ।) राजन् ! अयं मम पुत्रश्छागानामपि छागः पालनायोग्यः । एनं हन्मि । (नृपस्तं प्रति ।) अरे वृद्ध ! मैवं । सद्‌विगर्हिते कर्म्मणि न प्रवर्त्तितव्यम् । तदुक्तम् ।

शास्त्रे श्रुतौ प्रवर्त्तेत स्वनाशेऽप्युक्तकर्म्मणि ।
निष्णातोऽविहितेनैवं स्याच्चेल्लक्ष्मी निधावपि ॥ १४५ ॥

अतो हिंसा न युज्यते । तस्मान्निवर्त्तितव्यम् ।
(छाग आह ।) सत्यमेतत् किन्तु ।

अगादिति । तं छागं धावन् सन् अन्योऽपि छागः अगात् । कीदृशः मुष्करहितः अजेष्वधि छागानामधिपतिः । किं कुर्व्वन् । हे राजन् ! इमं छागं मुञ्च एनं हन्मि इति ब्रुवन् ॥ १४४ ॥

शास्त्र इति । शास्त्रे श्रुतौ शास्त्रविषयकश्रवणशीलो जनः निष्णातः श्रद्धया स्वनाशेऽपि स्वस्यात्मनो नाशो मृत्युर्यस्मात् तादृशेऽपि उक्तकर्म्मणि विहितकर्म्मणि प्रवर्त्तते एवं एवंप्रकारे अविहिते कर्म्मणि न प्रवर्त्तते । चेत् यदि निधौ अपि लक्ष्मी स्यात् निधिलाभविशिष्टः स्यात् । पचे । उक्त इति सम्बोधनम् । अन्यत् उदाहरणवाक्यम् । कर्म्मणि ७।, निष्णातः ५।, विहितेना ३।, एवं १।, ॥ १४५ ॥

व्याकरणम् ।

अधितात ॥ १४३ ॥

अजेष्वधि ॥ १४४ ॥

कर्म्मणि निष्णातो विहितेनैवम् । क्तादिविहितेन इना योगे कर्म्मणि एवं अर्थात् सप्तमी स्यात् । शास्त्रे श्रुतौ । निधौ लक्ष्मी । “क्ते नाद्रे ।” सुं ॥ १४५ ॥

जन्तुर्यमर्थमुद्दिश्य यत् क्रियायां प्रवर्त्तते।
स चेत् तत्कर्म्मयोगी स्यात् तदर्थात् सा प्रशस्यते॥ १४६॥

तस्मात् वृथा हिंसायां प्रवृत्तिरेव विगर्हिता। दुष्प्रवृत्तितोऽपि यद्यात्मनो महोपकारः स्यात् तदा सापि प्रशस्यते। अत्रोदाहरणं भवानेव। तत् श्रुत्वा नृपः किञ्चिदुन्मनाः छागं प्रति। आत्मजहननेन तव को महोपकारः। (छाग आह। शृणु।)

छागोभिः सह भुक्तवानहमिमान् भोगानथो केनचित्
निर्व्वीजोऽस्मि कृतस्तपःसु कृतिना भूयः प्रसन्नोऽवदत्।

---

जन्तुरिति। जन्तुः शरीरी यं अर्थं यत् फलं उद्दिश्य यत् क्रियायां यस्यां विहितायामविहितायां वा क्रियायां प्रवर्त्तते चेत् यदि सोऽर्थः तत्कर्म्मयोगी स्यात् तस्य जन्तोः कर्म्मोपयुक्तः स्यात् अर्थात् तत् फलं यदि तस्यातिशयप्रीतिकारि स्यात् तत् तदा तदर्थात् तस्मात् फलादेव सा क्रिया प्रशस्यते प्रशस्ता भवति। तथाहि। फलस्य उपादेयत्वात् क्रियायाः प्राशस्त्यं न तु तस्याविहितत्वाविहितत्वनियमः इति भावः। पक्षे। जन्तुरिति कर्त्तुरुपलक्षणं यमर्थं यन्निमित्तं उद्दिश्य यत् हननादि यत्किञ्चित् क्रियायां कर्त्ता प्रवर्त्तते स चेत् सोऽर्थश्चेत् तत्कर्म्मयोगी तस्याः क्रियायाः कर्म्मणि सम्बन्धः स्यात् तत् तदा तदर्थात् तन्निमित्तवाचकात् सा सप्तमी प्रशस्यते। जन्तुः १।, यं २।, अर्थं २।, उद्दिश्य ८।, यत् क्रियायां ७।, प्रवर्त्तते ८।, स १।, (चेत्) तत्कर्म्मयोगी १।, स्यात् ८।, तदर्थात् ५।, सा १।, प्रशस्यते ८।, ॥ १४६॥

व्याकरणम्।

जन्तुर्यमर्थमुद्दिश्य यत् क्रियायां प्रवर्त्तते। स चेत् तत्कर्म्मयोगी स्यात् तदर्थात् सा प्रशस्यते॥ जन्तुरिति कर्त्तुरुपलक्षणम्। यमर्थं यत् प्रयोजनमुद्दिश्य यत् क्रियायां हननादि यत्किञ्चित् क्रियायां कर्त्ता प्रवर्त्तते स सोऽर्थश्चेत् तत् कर्म्मयोगी तस्याः क्रियायाः कर्म्मणि सम्बन्धः स्यात् तत् तदा तदर्थात् तन्निमित्तवाचकात् सा सप्तमी प्रशस्यते। चर्म्मणि द्वीपिनं हन्तीत्यादौ लक्षणं समुन्नेयम्। "टेनार्थात्।" मु॥ १४६॥

भूयास्त्वं परवीजभागिति सुतस्तन्मेऽर्थिने नाप्यदात्
तन्मेष्ये बलतोऽप्यतस्तदसतो हिंसोपकाराय मे ॥ १४७ ॥

(राजा सक्रोधम् ।) रे पाप ! स्त्रीसम्भोगार्थं मुष्के पुत्रस्य हननमिच्छसि इति वक्तुमपि न त्रपसे नवा धर्म्मात् बिभेषि । (छागः सस्मितं नृपं प्रति ।)

त्वञ्चेन्न त्रपसे स्वमात्मजमहो प्रायेण निघ्नन् नवे
तारुण्ये रतिभोगसाधनकृते वेदादिशास्त्रार्थवित् ।
छागो वेदवहिष्कृतः सहजतोऽव्रीड़स्तथा कामुको
हन्याच्चेद् वृषणे सुतं रतिकृते तत्तस्य का भीस्त्रपा ॥ १४८ ॥

(अङ्गिरा आह ।) श्रुते निर्धारितेऽर्थे च पीवाजवचसि क्षणात् ।
विवेकी जातवैराग्यो बभूवासौ नृपूत्तमः ॥ १४९ ॥

---

छागीति । अहं छागीभिः सह इमान् भोगान् भवता यानि सुखानि भुज्यन्ते तानि सुखानि भुक्तवान् । अथानन्तरं तपःसु कृतिना तपस्विना केनचित् अहं निर्व्वीजः मुष्करहितः कृतोऽस्मि । भूयः पुनरपि प्रसन्नः सन् त्वं परवीजभाक् परमुष्कवान् भूयाः इति अवदत् । सुतः मम पुत्रः अर्थिने याचकाय मे मह्यं तत् वीजं न हि अदात् । अतः कारणात् बलादपि तत् वीजं मुष्कं नेष्ये तत् तस्मात् असतो हिंसापि ममोपकाराय भवति ॥ १४७ ॥

त्वञ्चेदिति । अहो आश्चर्य्यं वेदादिशास्त्रार्थविदपि त्वं रतिभोगसाधनार्थं स्वमात्मजं स्वीयपुत्रं नवे तारुण्ये नूतनयौवननिमित्तं निघ्नन् घातयन् चेत् यदि न त्रपसे तदा छागः रतिकृते रत्यर्थं वृषणे वृषणनिमित्तं चेत् यदि सुतं हन्यात् तदा तस्य छागस्य का भीः का धर्म्मभीतिः लज्जा च का । पद्ये । पूर्व्वसूत्रस्य उदाहरणम् ॥१४८॥

श्रुत इति । असौ नृपूत्तमः मनुष्येषूत्तमः नृपः पीवाजवचसि स्थूलस्य छागस्य वचसि

व्याकरणम् ।

॥ १४७ ॥ ० ॥ नवे तारुण्ये आत्मजं निघ्नन् । वृषणे सुतं हन्यात् ॥ १४८ ॥

(राजा आत्मगतम्।)

धर्म्मेऽविवेकिनं धिङ्मां काणेनापि तिरस्कृतम्।
योऽहं नृपेभ्यस्तेजस्वी अद्यासं भूभुजां लघुः॥ १५०॥

किञ्च काणोऽपि मां यदवजानाति तदुचितमेव। यतः

पीवाऽधिकेन पललेन धनेन वा नो
पीवा धियैव हि यतो मणियोगिनोऽपि।
स्थौल्येऽधिकस्य करिणः परिपीड्य पद्भ्यां
नीचोऽपि रोहति शिरो दमयन्नुपायैः॥ १५१॥

अथ राजा तौ काणौ धर्म्मज्ञौ ज्ञात्वा सपुरस्कारं विससर्ज्ज।

---

शुते निर्द्धारितेऽर्थे च सति चणात् विवेकी जातवैराग्यश्च बभूव। पचे। अजेत्यादिक-मुदाहरणवाक्यम्। शुते ७।, निर्द्धारिते ७।, अर्थे ७।, (च) पौ १।, वा १।॥ १४९॥

धर्म्म इति। नृपेभ्यस्तेजस्वी नृपाणां मध्ये तेजस्वी। भूभुजां लघुः नृपाणां मध्ये लघुः खर्व्वोऽभवमित्यर्थः॥ १५०॥

पीवेति। अधिकेन पललेन मांसेन धनेन वा पीवा स्थूलो महान् न भवति। धियैव बुद्ध्यैव पीवा महान् स्यात्। एतदेव दर्शयति। यतो यस्मात् मणियोगिनोऽपि मुक्ताशालिनोऽपि स्थौल्येऽधिकस्यापि करिणो हस्तिनः उपायैर्दमयन् सन् नीचोऽपि क्षुद्रोऽपि पद्भ्यां निपीड्य शिर आरोहति। पचे। पललेत्यादिकं उदाहरणवाक्यम्। पौ १।, वा १।, अधिकेन ३।,॥ १५१॥

व्याकरणम्।

शुते निर्द्धारितेऽर्थे च पौ वा। निर्द्धारविषयीभूतार्थे श्रूयमाणे तस्मिन् पञ्चमी सप्तमी च स्यात्। नृषूत्तमः॥ १४९॥

नृपेभ्यस्तेजस्वी। भूभुजां लघुः॥ १५०॥

पौ वाऽधिकेन। अधिकशब्दयोगे पौ वा स्यात्। स्थौल्येऽधिकस्य॥ १५१॥

ज्ञानिभ्यः प्रवरः सोऽथ पुत्रमाहूय दुःखितम्।
आदाय स्वां जरां तस्मात् तस्मै तद्यौवनं ददौ॥ १५२

अथ ययातिः पुत्रानाहूय नीतिं शिक्षयन्नाह—

अर्थार्थेन समानक्ति प्रकृत्या स्त्री मुखाहृतेः।
लाघवं तद् यतेतार्थे नार्थेनातन्द्रितः पुमान्॥ १५३॥

को विद्ययार्थः क्षितिपामिति भ्रमो
यत् तीक्ष्णवंशोद्भवमप्यतीक्ष्णकम्।
अन्यत् सुतीक्ष्णं त्रुटति स्वधारया
भीताः समस्ता विहितास्तथासितः॥ १५४॥

---

ज्ञानीति। अस्यार्थः सुगमः॥ १५२॥

अर्थेति। स्त्री नारी अर्थार्थेन धनार्थं प्रकृत्या स्वभावतो मुखाहृतेः स्वाभाविकं यत् मुखस्य वस्त्रेणावरणं तस्य लाघवं लघुतां समानक्ति व्यक्तीकरोति। अर्थस्य एतादृक् सामर्थ्यम्। तत् तस्मात् पुमान् अतन्द्रितोऽनलसः सन् अर्थेनार्थेन धनार्थं यतेत। पद्ये। व्रतेरित्यादिकमुदाहरणवाक्यम्। अर्थार्थेन ३।, समानक्तिप्रकृत्याः ५।, स्त्रीमुखाः १॥,॥ १५३॥

को विद्येति। क्षितिपां राज्ञां विद्यया कोऽर्थः किं प्रयोजनम् इति तु भ्रम एव। यत् यस्मात् तीक्ष्णवंशोद्भवमपि अतीक्ष्णं धारारहितं यत् लौहं तत् अन्यत् सुतीक्ष्णं सुधारं लौहं स्वस्य धारया त्रुटति छिनत्ति। तथा असितः धारातः समस्ता जन्तवः भीता विहिताः कृताः। लौहोऽस्त्री शस्त्रकं तीक्ष्णम्। स्त्रियः पाल्यसिकौटय इति चामरः। पद्ये।

व्याकरणम्।

ज्ञानिभ्यः प्रवरः॥ १५२॥

अर्थार्थेन समानक्तिप्रकृत्यास्त्रीमुखाः। अर्थेन निमित्तवाचकेन समानविभक्तिकायाः प्रकृतेः स्त्रीमुखाः तृतीयाद्या विभक्तयः स्युः। अर्थेनार्थेन यतेत॥ १५३॥

समस्ता विहितास्तथा सितः। तथा सितः अर्थात् निमित्तवाचकेन समानविभक्ति-

शृखतोऽदो भवति कं कारकं बुध उत्तरे ।
कर्म्मादीनां लक्षणानि वक्तव्यानि विशेषत: ॥ १५५ ॥
करणव्यापृतेर्योगाद् यत् क्रियासिद्धिरीष्यते ।
तदेव कर्म्म जानीयादकिञ्चित्करमार्थिकम् ॥ १५६ ॥

---

की विद्ययेत्यादिकं उदाहरणम् । समस्ता: १॥, विहिता: १॥, (तथा १) सित: ५।, ॥ १५४ ॥

शृखत इति । बुध: ज्ञानस्य कारकं अद: एतन्मयोक्तं शृखतो जनस्य कं सुखं भवति । उत्तरे परत: कर्म्मादीनां पुंसां कर्त्तव्यकर्म्मादिलक्षणानि वक्ष्यामि । पचे । अतोऽनन्तरं अद: एतत् शृणु इति शिष्यस्यावधानाय । बुध इति सम्बोधनम् । कारकं १।, कं १।, भवति ८।, ॥ १५५ ॥

करणेति । करणं शरीरं मनश्च तयोर्व्यापृतेर्व्यापारस्य योगात् सम्बन्धात् यत् क्रियासिद्धि: स्यात् तदेव कर्म्म कर्त्तव्यम् । आर्थिकं अर्थसाध्यं कर्म्म अकिञ्चित्करम् । तथाहि शारीरिकं मानसिकञ्च यत् वैधं कर्म तदेव सत्कर्म्मेत्यर्थ: । करणं साधकतमं चेत्रगात्रेन्द्रियेष्वपीत्यमर: । करणव्यापते: ६।, योगात् ५।, यत् १।, क्रियासिद्धि: १।, ईष्यते ८।, तत् २।, (एव) कर्म्म २।, जानीयात् ८।, अकिञ्चित्करं १।, आर्थिकं १।, ॥ १५६ ॥

व्याकरणम् ।

अत् सर्व्वनाम्न: सर्व्वा विभक्तयो विहिता: । विद्यया कोऽर्थ: । "व्रादयोऽर्थार्थकके: तेसु सर्व्वा: ।" मुं ॥ १५४ ॥

कारकं कं भवति । कारकं कसंज्ञं स्यात् । उत्तरे कर्म्मादीनां लक्षणानि विशेषतो वक्तव्यानि ॥ १५५ ॥

करणव्यापृतेर्योगात् यत् क्रियासिद्धिरीष्यते । तदेव कर्म्म जानीयात् अकिञ्चित्करमार्थिकम् । यदित्यव्ययं यत् यस्मिन् वस्तुनि चन्द्रादौ करणस्य व्यापारवत्कारणस्य चक्षुरादेर्व्यापारस्य संयोगादिरूपस्य योगात् सम्बन्धात् क्रियाया दर्शनादिरूपाया: सिद्धि: स्यात् तदेव चन्द्रादिकं वस्तु कर्म्म जानीयात् । आर्थिकं योगार्थसिद्धं यत् क्रियते तत् कर्म्मेति रूपं लक्षणम् अकिञ्चित्करम् ॥ १५६ ॥

पुरुषार्थस्य सिद्धिर्यद् व्यापारसहकारतः ।
तदेव करणं सार्थं विद्ध्यन्यद् दुःखसाधनम् ॥ १५७ ॥
प्रपञ्चगोचरं यत्नं यो धत्त उपधायकम् ।
स एव कर्त्ता कार्य्याणां व्यापार्य्यन्यः प्रयोजितः ॥ १५८ ॥
विद्ध्येकं सम्प्रदानं तं स्वमुद्दिश्य स्वमर्पितम् ।
यः स्वीकरोति प्रीत्यैव स्वत्वं नावर्त्तते यतः ॥ १५९ ॥

पुरुषेति । यस्य शरीरस्य व्यापारसहकारेण पुरुषार्थस्य धर्म्मार्थकाममोक्षरूप-पुरुषार्थस्य सिद्धिः स्यात् तदेव करणं सार्थकं विद्धि जानीहि । अन्यत् पुरुषार्थस्यासाधकं शरीरं दुःखमात्रसाधनम् ॥ १५७ ॥

प्रपञ्चेति । प्रपञ्चो जगत् तद्गोचरं तद्विषयकम् उपधायकं क्रियानिष्पादकं यत्नं कृतिं यो धत्ते अर्थात् ईश्वरः स एव कार्य्याणां कार्य्यमात्रस्यैव कर्त्ता । अन्यो मनुष्यादिः तेन ईश्वरेण प्रयोजितः सन् क्रियासु व्यापारवान् भवति । रथादिवत् । पञ्चे । पुरुषेति सम्बोधनम् ॥ १५८ ॥

विद्धीति स्वं आत्मानं अर्थात् ईश्वरं उद्दिश्य अर्पितं मदर्पितं स्वं आत्मानं सेवकं य ईश्वरः प्रीत्या स्वीकरोति अस्वं स्वं करोति स्वस्वरूपं करोति । ईश्वरे अर्पित आत्मा

व्याकरणम् ।

अर्थस्य सिद्धिर्यद्व्यापारसहकारतस्तदेव करणं सार्थं विद्धि । यद्व्यापारसह-कारतः यस्य चक्षुरादेः दृश्ये चन्द्रादौ संयोगादिरूपव्यापारसहकारेण अर्थस्य कार्य्यस्य दर्शनादेः सिद्धिः स्यात् तदेव करणं जानीहि । अन्यत् करणलक्षणं दुःखकरम् ॥१५७॥

प्रपञ्चगोचरं यत्नं यो धत्ते उपधायकम् । स एव कर्त्ता कार्य्याणां व्यापार्य्यन्यः प्रयोजितः ॥ प्रपञ्चः कार्य्यं तद्विषयकमुपधायकं फलजनकं यत्नं यो धत्ते स एव कार्य्याणां क्रियाणां कर्त्ता । अन्योऽचेतनो रथादिकः प्रयोजितः सन् व्यापारी व्यापारिरूपकर्त्ता उच्यते ॥ १५८ ॥

विद्ध्येकं सम्प्रदानं तं स्वमुद्दिश्य स्वमर्पितम् । यः स्वीकरोति प्रीत्यैव स्वत्वं नाव-र्त्तते यतः ॥ स्वमात्मानमुद्दिश्य अर्पितं दत्तं स्वं धनं यः प्रीत्या स्वीकरोति गृह्णाति

**अपायः स्याद् यत्क्रियातस्तत्क्रियारहितो यदि ।**
**स्यादपायास्पदं तर्हि अपादानञ्च तद्‌वृषान् ॥ १६० ॥**
**वृत्तिसम्पादनद्वारा यो धर्म्मी परसत्क्रियाम् ।**
**निष्पादयति तं विद्धि आधारं पुण्यकर्म्मणः ॥ १६१ ॥**

---

ईश्वरो भवतीति श्रुतेः । अतः स्वीकरणात् स्वत्वं प्राणी न आवर्त्तते पुनः संसारे न आयाति ॥ १५८ ॥

अपाय इति । यत्क्रियातः यत्क्रियाकरणात् अपायो भ्रंशो भवेत् तत् क्रिया-रहितोऽपि पुमान् यदि अपायास्पदं भ्रंशस्याश्रयः स्यात् तत् तदा वृषान् धर्म्मान् अपादान् पादहीनान् अद्य जानीहि अर्थात् तदा धर्म्मो नास्तीति जानीहि । तथाहि निन्दित-कर्म्मरहितो न पततीति भावः । पचे । वृषान् इति धर्म्मेण जीविनः सम्बोधनम् ॥१६०॥

वृत्तीति । वृत्तिर्जीवनोपायः । तत्सम्पादनद्वारा यो धर्म्मी धार्म्मिकः परेषां सत्क्रियां निष्पादयति तं जनं पुण्यकर्म्मणः आधारं आश्रयं विद्धि । तथाहि धनं दत्वा यो जनः परेषां नित्यनैमित्तिकक्रियां निष्पादयति स पुण्यवान् । पचे । पुण्यकर्म्मण इति हे कर्म्मणः पुण्य ! इति कर्म्मद्वारा पुण्यवतः सम्बोधनम् ॥ १६१ ॥

व्याकरणम् ।

यतः यस्मात् स्वीकारात् स्वत्वं दत्तद्रव्यगतं स्वत्वं नावर्त्तते दातृगतं न भवति तं उद्देश्य-विषयीभूतं जनं मुख्यं सम्प्रदानं विद्धि जानीहि ॥ १५८ ॥

अपायः स्याद यत्क्रियातस्तत्क्रियारहितो यदि । स्यादपायास्पदं तर्हि अपादानञ्च तद्‌वृषान् ॥ विभागजनकीभूतयत्स्पन्दनादिक्रियातोऽपायो विभागः स्यात् तत्क्रिया-रहितो वृक्षादिर्यदि अपायाश्रयः स्यात् तदा तत् तादृशं विभागजनकस्पन्दनादिक्रिया-रहितम् अपायाश्रयो वृक्षादिकं वस्तु अपादानं स्यात् ॥ १६० ॥

वृत्तिसम्पादनद्वारा यो धर्म्मी परसत्क्रियां निष्पादयति तं विद्धि आधारं पुण्यकर्म्मणः ॥ यो धर्म्मी कर्त्तृकर्म्मान्यतररूपाधेयवान् गृहादिदेशो वृत्तिसम्पादनद्वारा तयोराश्रयता-सम्पादनद्वारा परसमवेतक्रियां पाकादिरूपां निष्पादयति तं गृहादिदेशम् आधारं विद्धि ॥ १६१ ॥

मयोक्तानि षड़ेतानि कारकाणि बुधः सताम् ।
ज्ञेयसाराणि यज्ज्ञानमज्ञानां ज्ञानदीपकम् ॥ १६२ ॥ * ॥
इति नाट्यपरिशिष्टे पञ्चमीरात्रौविनोदः ॥ ० ॥ * ॥

---

मयेति । एतानि षट् पद्यानि मया उक्तानि सतां साधूनां बुधः ज्ञानस्य कारकाणि तत्त्वज्ञानजनकानि इत्यर्थः । ज्ञेयानां मध्ये साराणि । यज्ज्ञानं अज्ञानजनानां बुद्धिदीपकम् ॥ १६२ ॥

व्याकरणम् ।

मयोक्तानि षड़ेतानि कारकाणि बुधः सताम् । ज्ञेयसाराणि यज्ज्ञानमज्ञानां ज्ञानदीपकम् ॥ मयोक्तानि एतानि कर्म्मादीनि षट् कारकाणि कारकसंज्ञानि भवन्तीत्यर्थः । बुध इति ज्ञानवतां सम्बोधनम् ॥ १६२ ॥

* ॥ इति कारकसंग्रहः ॥ ० ॥ ० ॥ ॥

---

अथ प्रविश्य नटी परिक्रम्य । अहो अद्य मया मालाकार-पत्नया सह नृपस्य ययातेरन्तःपुरं प्रविष्टं दृष्टञ्चैतत् ।

वेदार्थतत्त्वविदप्यतितुच्छमैन्द्रियकं सुखं द्विपदबहुपदानां सामान्यं यत्तदेव साधु मन्यमानः सोऽन्वये सत्युत्पत्तिभाक् सह दास्या शर्म्मिष्ठया एकशय्यामध्यास्ते । वकावस्थामितोऽपीति महदाश्चर्य्यम् ॥ १ ॥

यच्चन्द्रवंशीयस्य वेदविदुषो नैतादृक् दुर्व्वृत्तं सम्भवति ।

(सूत्र:) नैतच्चित्रं यतः ।

निपुणैः प्रवचस्यार्थे समासः साधुभिर्न यैः ।
अतः श्रुतिस्मृती तेषां नाङ्कुशौ कामहस्तिनः ॥ २ ॥

वेदार्थेति । स ययातिः । सति अन्वये साधुवंशे उत्पत्तिभाक् वेदार्थतत्त्वविदपि द्विपदानां पतगादीनां बहुपदानां गवादीनां सामान्यं साधारणं यदतितुच्छं ऐन्द्रियकं इन्द्रियसाधनं सुखं तदेव साधु मन्यमानः सन् दास्या सह एकशय्यामध्यास्ते । मत्ता-द्युक्तवकावस्थां प्राप्तोऽपि । पचे । वेदार्थेत्यादिकं उदाहरणम् । द्विपदबहुपदानां ६॥, सामान्यं १।, यत् १।, तत् १।, (एव) साधुमन्यमानः १।, सः १।, अन्वये ७।, सति ७।, उत्पत्तिभाक् १।, सः १।, (ह) ॥ १ ॥

निपुणैरिति । अत्र प्रवच्शब्दः प्रपूर्व्वकवच्धातुना क्विप्प्रत्ययान्तेन निष्पन्नः प्रवचनशब्दसमानार्थकः प्रवचनो वेदः । तथाहि प्रवचो वेदस्य अर्थैः निपुणैश्च निपुणै-

व्याकरणम् ।

द्विपदबहुपदानां सामान्यं यत् तदेव साधु मन्यमानः सोऽन्वये सति उत्पत्तिभाक् स ह । द्विपदबहुपदानां सामान्यमैक्यं यत् तदेव सः समासः साधुना मन्यमानः । स ह स तु अन्वये सति उत्पत्तिशाली । वेदार्थतत्त्ववित् । अतितुच्छम् एकशय्याम् । "समर्थः पदविधिः ।" पां । "दैक्यं सोऽन्वये ।" मु ॥ १ ॥

प्रवचस्यार्थे समासः । प्रार्थो भेदः तदर्थे समासः अवंशः स्यात् । ची बन्दः । श्रुतिस्मृती ॥ २ ॥

प्रिये ! भवत्या दृष्टं अस्माभिरप्येतत् श्रुतमस्ति। यथा
सद्भिर्व्वर्णितः स तत्पुरुषो द्वितीयादित्यवन्नाम यस्य
मुखे नियतं स्फुरति स्म शिवशिव विश्वेश्वरेति ॥ ३ ॥
य एवं सत्कर्म्मधारयः स मानार्थं यदीयपदयुगं
धत्ते स मासः सदृक् दासीजनस्तं सर्व्वदा तिरस्करोति ॥४॥

---

रपि यैर्ज्जनैः साधुभिः समासः सहवासो न कृतः तेषां जनानां श्रुतिसृती कामकलिनी-ऽङ्कुशौ न भवतः । पक्षे । निपुणैः प्रव इति निपुणैः सह प्रवणः सम्बोधनम् । स: १।, षार्थे ७।, समासः १।, ॥ २ ॥

सद्भिरिति । द्वितीयादित्यवत् द्वितीयसूर्य्य इव तत्पुरुषः प्रसिद्धः पुरुषः स ययातिः सद्भिः पण्डितैर्वर्णित आसीत् । यस्य मुखे शिवशिव विश्वेश्वरेतिनाम सर्व्वदा स्फुरति स्म । तत्पुरुष इत्यत्र तत् शब्दः प्रसिद्धार्थकः । पक्षे । स्मेति पादपूरणं शिवशिवेत्यादिक-मुदाहरणवाक्यम् । सद्भिः ३॥, वर्णितः १।, सः १।, तत्पुरुषः १।, द्वितीयादित्यवन्नाम १।, यस्य ६।, मुखे ७।, (नियतं) स्फुरति ८।, ॥ ३ ॥

य एवमिति । यो जनः ययातिः एवं सत्कर्म्मधारयः एतादृशसत्कर्म्मणां धारण-शीलः । धारय इति धारिधातुना अप्रत्ययेन सिद्धम् । स जनः मानार्थं मानस्य निवृत्त्यर्थं यदीयपदयुगं यस्या दास्याः पदद्वयं धत्ते स मासश्चन्द्रस्य सदृक् सदृशो दासी-जनः तं ययातिं सर्व्वदा तिरस्करोति । मासशब्दश्चन्द्रपर्य्यायः । पक्षे । सदिति साधुकुलस्य सम्बोधनम् । य एवं यः समास एवमित्यर्थः । दृग्दासीत्युदाहरणम् । कर्म्मधारयः १।, समानार्थं २।, यदीयपदयुगं २।, धत्ते ८।, समासः १।, सः १।, ॥ ४ ॥

व्याकरणम् ।

सद्भिर्वर्णितः स तत्पुरुषो द्वितीयादित्यवन्नाम यस्य मुखे नियतं स्फुरति । द्विती-यादित्यवत् द्वितीयादिकप्रत्ययवत् अर्थात् द्वितीयादिविभक्त्यन्तं नाम शब्दः यस्य समासस्य मुखे आदौ स्फुरति स समासस्तत्पुरुषः पण्डितैर्वर्णितः । विश्वेश्वरेति ॥ ३ ॥

कर्म्मधारयः समानार्थं यदीयपदयुगं धत्ते समासः सः । यत्समाससम्बन्धि पदद्वन्द्वं समानार्थम् एकार्थं धत्ते अभिधत्ते स समासः कर्म्मधारयः । दृग्दासीजनः ॥ ४ ॥

(नटी तं प्रति।) मारिष! यदि कोऽपि भारतादावश्रुतं विवेकवैराग्यजनकमाश्चर्य्यमितिहासं तस्मै कथयेत् तदा तत् शृण्वतोऽस्य भट्टारकस्य ययातेरवश्यमेव दासीजनसंसर्गे वैराग्यं भवेदिति मन्ये। यतो मम मातामहस्यैवमेव दृष्टमासीदस्माभिः।

(सूत्रः।)

व्यासवाक्यादश्रुतस्य भवेद्बोधः सतो यतः।
स नाम्नाह्वो भृगुर्ज्ञानचक्षुस्तद्वक्तुमर्हति ॥ ५ ॥

नान्य एवं वक्तुमर्हति। (नेपथ्याभिमुखमवलोक्य।)

वेदसंख्या यस्य मुखे नियतं स्फूर्त्तिमेति सः।
गोब्रह्महितजन्मेति भृगुस्त्रिभुवनार्च्चितः ॥ ६ ॥

व्यासेति। व्यासवाक्यात् भारतादितः अश्रुतस्य इतिहासादेर्बोधो यतो यस्मात् सतः साधोः पण्डिताच्च भवेत् स नाम्ना भृगुः ज्ञानमेव योगजनितज्ञानमेव चक्षुर्यस्य स तथा सर्व्वज्ञ इत्यर्थः। स तत् वक्तुमर्हति। पक्षे। भृगुरित्यादिकमुदाहरणवाक्यम्। व्यासवाक्यात् ५।, अश्रुतस्य ६।, भवेत् ८।, बोधः १।, सतः ५।, यतः ५।, सः १।, नाम्ना ३।, ह्वः १।, ॥ ५ ॥

वेदेति। वेदसंख्या वेदस्य संख्या चर्चा विचारश्च नियतं यथा स्यात् तथा स्फूर्त्तिमेति सः गोब्राह्मणहिताय जन्म यस्य सः भृगुः आयाति। पक्षे। वेद इति ज्ञानिनः सम्बोधनम्। ब्रह्मेत्यादिकमुदाहरणवाक्यम्। संख्या १।, यस्य ६।, मुखे ७।, नियतं २।, स्फूर्त्तिं २।, एति ८।, सः १।, गः १।, ॥ ६ ॥

व्याकरणम्।

व्यासवाक्यादश्रुतस्य भवेद्बोधः सतो यतः स नाम्ना ह्वः। व्यासवाक्यात् समासयोग्यवाक्यस्थपदात् अश्रुतार्थस्य यतः सतः यस्मात् समासात् बोधो भवति स समासो नाम्ना ह्वः। ह्वो बहुव्रीहिः। ज्ञानचक्षुः ॥ ५ ॥

संख्या यस्य मुखे नियतं स्फूर्त्तिमेति स गः। यस्य समासस्य मुखे आदिभागे संख्यावाचकशब्दः नियतं प्रकाशते स समासः गः। गो द्विगुः। त्रिभुवनार्च्चितः ॥६॥

इति निष्क्रान्तौ। अथ भृगुः। अरे! राजा क्वास्ते। अथ ययातिः प्रविश्य तं नमति। भृगुः राजानमाशिषत्।

सोऽव्याद्वो वो जठरकुहरेऽवर्द्धयत् पानभक्तै:
यो जातानामुपकृतिकृतेऽसूचयत् पूर्व्वमेव।
स्तन्यं पेयामृतमनुदिनं यो यथाकालमिष्ट-
मन्नं यच्छत्यभिमुखमजो देहिनां निश्चलानाम्॥ ७ ॥

(राजा भृगुं प्रति।) मुने!

तवोपपदसमासः सद्भिरिष्यते सप्तमो
ऽनिर्व्वचनीयो लोको दुःखनिवारकः प्राप्यते यतः॥ ८ ॥

---

सोऽव्यादिति। सः अव्यात् पायात् योऽजः जठरकुहरे अर्थात् मातृगर्भकुहरे पेयभक्तैः पेयभोज्यैः वो युष्मान् अवर्द्धयत्। यश्च जातानां प्रसूतानां जीवानां उपकृतिकृते उपकारार्थं पेयामृतं पेयेषु अमृततुल्यं स्तन्यं दुग्धं पूर्व्वमेव पूर्व्वकाले एव असूचयत्। यः निश्चलानां देहिनां अभिमुखं सम्मुखे अनुदिनं प्रतिदिनं यथाकालं समयमनतिक्रम्य इति यथाकालम् इष्टमभिलषितमन्नं भक्ष्यं यच्छति। पद्ये। जठरेत्यादिकं उं ॥ सः १।, व्याद्यः १।, वः १।, ॥ ७ ॥

तवेति। तव उपपदसमासः पदस्य चरणस्य उपसमीपमिति उपपदं तस्मिन् समासोऽवस्थितिरिति उपपदसमासः तव चरणस्य समीपेऽवस्थितिरित्यर्थः। स सद्भिरिष्यते। यतो यस्मात् तवोपपदसमासात् अनिर्व्वचनीयः सप्तमो लोकः अर्थात् सत्यलोकः प्राप्यते। पद्ये। तव इति स्थितिमतः सम्बोधनम्। उपपदसमासः १।, सद्भिः ३॥, इष्यते ८।, सप्तमः १।, निर्व्वचनीयः १।, ॥ ८ ॥

व्याकरणम्।

सोऽव्याद्यो वः। व्यं अव्ययं तदाद्यः सः समासः वसंज्ञः स्यात्। वोऽव्ययीभावः। यथाकालम्। अभिमुखम्॥ ७ ॥

उपपदसमासः सद्भिरिष्यते सप्तमो निर्व्वचनीयः। उपपदसमासः सप्तमः स निरूपणीयः। स निरूपितो जगदीशेन यथा। सपूर्व्वकप्रकृतिकक्कदन्तं नाम यद्भवेत्।

लुक् स्याद्यस्य प्रत्यये च स्मरणात्मक एनसाम् ।
तस्य तेऽद्य पदाम्भोजमासीन्मे दृष्टिगोचरम् ॥ ९ ॥

( मुनिः । ) शृणु व्यासवाक्यं स्वेच्छा च परेच्छा च इति स्वेच्छा-परेच्छे मिलिते उभे अपि न हेतुराश्रमान्तरं प्रति। किन्तु विवेक वैराग्यमेवेति तदुत्पत्तौ यतितव्यम्। तथा न तर्पिता देवाश्च ऋषयश्च पितरश्चेति देवर्षिपितरः समस्ताः कथमेते तुष्यन्ति।

अहो राजन्! सर्वनाम! "स्त्री पुम्वच्च प्रभवति यदा तर्हि गेहं विनष्टमिति" प्राचीनैरुक्तं स्मरसि न वा पूर्वपश्चिमदक्षिणोत्तरासु दिक्षु च तत् पश्यसि न वा ॥ १० ॥

लुगिति। यस्य तव स्मरणात्मके स्तुत्यात्मकेऽपि प्रत्यये ज्ञाने सति एनसां पापानां लुक् विनाशो भवति। अद्य तस्य ते तव पदाम्भोजं मम दृष्टिगोचरमभूदित्यन्वयः। पक्षे। स्मरणात्मकेत्यादिकमुदाहरणम्। लुक् १।, स्याद्यस्य ६।, प्रत्यये ७।, (च) ॥९॥

सर्व्वनामेति। सर्व्वं शिवं नमतीति स सर्व्वनामः। ढात् षश्निति षणप्रत्ययेन नमधातोः सिद्धः। अन्यत् सुगमम् ॥ १० ॥

व्याकरणम्।

तादृङ्नामैवोपपदसमासः सप्तमो मतः। कर्म्मकर्त्राद्युपपदभेदाद्बहुविधोऽप्यसौ। यथोत्तानशयः कुम्भकारः पार्श्वशयस्तथा। वीजजो भूशयश्चेति कारकोपपदस्य दिक्। मन्दगामी स्तोकनम्रः तथा निर्भरचुम्बितः। मितम्पचो ब्रह्मभूयमित्याद्या बहुधैव ते ॥ ८ ॥

लुक् स्याद्यस्य प्रत्यये च। समासस्यास्य स्याद्यस्य सिप्रभृतिविभक्तीनां लुक् स्यात् प्रत्यये च परे। स्मरणात्मक इत्यादि। "सुपोधातुप्रातिपदिकयोः।" पां। "क्लेर्लुक् त्ये च।" मुं ॥ ९ ॥

शृणु व्यासवाक्यं स्वेच्छा च परेच्छा चेति स्वेच्छापरेच्छे मिलिते। विवेकवैराग्यम्। शृणु व्यासवाक्यं देवाश्च ऋषयश्च पितरश्चेति देवर्षिपितरः समस्ताः। सर्व्वनाम स्त्री पुंवच्च प्रभवति। समासस्थित सर्व्वनामसंज्ञकः स्त्रीलिङ्गशब्दः। पुंवत् स्यात्। प्रत्यये

शृणु मातापितृभ्यां रहितो नप्तापुत्रान्वितः पुरुषो यदा जरापीड़ाकृतो भवति तत् पुत्रे सविद्ये सगोत्रे चेह दारादीन् होतोद्गात्रादिषु च अग्निं समर्प्य वनमाविशेदितिश्रुतिः श्रुतिगोचरो वर्त्तते न वा ॥ ११ ॥

भजन्नप्यधुना क्लैव्यं समाहारे वसे स्त्रियाः ।
गतं त्रिकालमद्यापि स्रगन्धं किमु वाञ्छसि ॥ १२ ॥

शृण्विति । जरापीड़ाकृतः जरया जनिता पीड़ा दुःखं तया कृतः आर्त्तो भवति । तत् तदा सविद्ये पुत्रे विद्यादिगुणसम्पन्ने सुते दारादीन् पत्न्यादीन् होतोद्गात्रादिषु च अग्निं समर्प्य वनं आविशेत् । तथा च पुत्रेषु दारान् निक्षिप्य वनं गच्छेत् सहैव वा । निक्षिप्याग्निं स्वदारेषु परिकल्प्यार्त्तिजं तदा प्रवसेत् कार्य्यवान् विप्रो न वृथैव चिरं वसेदिति भावः । पक्षे । सूत्रस्य पूर्व्वापरभागौ उदाहरणवाक्ये । ङा १।, कृतः ५।, भवति ८।, तत्पुत्रे ७।, सगोत्रे ७।, सविद्ये ७।, चे ७।, ॥ ११ ॥

भजन्निति । अधुना जरावस्थायां क्लैव्यं भजन्नपि स्त्रियाः समाहारे एकत्र मिलने वसेः वससीत्यर्थः । अन्यत् सुगमम् । पक्षे । भजन्नप्यधुनेति सखी भजनशीलस्य सम्बोधनम् । अन्यदुदाहरणम् । वसे इत्यत्र विसर्गस्य लोपः । क्लैव्यं १।, समाहारे ७।, वसे ७।, ॥ १२ ॥

व्याकरणम् ।

च परे । पूर्व्वपश्चिमदक्षिणोत्तरासु । "सर्व्वनाम्नो वृत्तिमात्रे पुंवद्भावः ।" इति भाष्यकारः । "पुंवत् से: ।" सु ॥ १० ॥

ङा कृतो भवति तत्पुत्रे सगोत्रे सविद्ये चे । द्वन्द्वसमासस्थित कृदन्तशब्दात् ङा स्यात् कृदन्ते पुत्रे च परे सगोत्रे समानविद्ये चार्थे । मातापितृभ्यां नप्तापुत्रान्वितः । होतोद्गात्रादिषु । "आनङ् कृते द्वन्द्वे ।" पा । "कृतो ङा तत्पुत्रे सगोत्रविद्ये चे ।" सु ॥११॥

क्लैव्यं समाहारे वसे । समाहारद्वन्द्वे समाहारद्विगौ च वसे अव्ययीभावसमासे च क्लीबत्वं स्यात् । त्रिकालं स्रग्गन्धम् । "चयैकवत् क्लीबम् ।" सु ॥ १२ ॥

सापत्नीकसमाहारे द्वन्द्वे चोरःस्खलत्पटे ।
प्रवृत्ते पश्यतस्ते किं श्रौसजं न विषायते ॥ १३ ॥
इति न व्यषदोऽह्नो वा कालोऽगात् पशुचर्य्यया ।
पीठच्छत्रोपानहं ते नानुगन्ता मरिष्यतः ॥ १४ ॥
इतरेतरयोगे च द्वन्द्व एकः प्रदृश्यते ।
समाहारे तथैवैकः सपत्नीनां गृहव्रजे ॥ १५ ॥

सापत्नीकेति । सपत्नीनां सम्बन्धीयः समाहारो यत्र तस्मिन् गृहादौ द्वन्द्वे कलहे प्रवृत्ते सति पश्यतस्ते तव स्रग्गन्धं किं कथं न विषायते विषवत् भवति । द्वन्द्वे किम्भूते उरसः वक्षःस्थलात् स्खलत् पटो वस्त्रं यस्मात् स तादृशे । पक्षे । सापत्नीक इति सम्बोधनम् । समाहारे ७।, द्वन्द्वे ७।, चोः ५।, षः १।, ॥ १३ ॥

इतीति । पशुचर्य्यया कालोऽगात् । मरिष्यतस्ते तव पीठच्छत्रोपानहं नानुगन्ता न पश्चात् गमिष्यति । अह्नो इति व्यषदः नवा विषादं अकार्षीः । पक्षे । नव्येति सम्बोधनम् अन्यत् उं । षदः ५।, अः १।, हः ५।, वा १।, ॥ १४ ॥

इतरेति । इतरैर्नीचैः सह इतरस्य नीचस्य योगे मिलने एको द्वन्द्वो दृश्यते । गृहे व्रजे पथि च सपत्नीनां समाहारे मिलने एको द्वन्द्वो दृश्यते । इतरेतरयोगे ७।, (च) द्वन्द्वः १।, एकः १।, प्रदृश्यते ८।, समाहारे ७।, (तथा एव) एकः १।, ॥ १५ ॥

व्याकरणम् ।

समाहारद्वन्द्वे चोरः । समाहारद्वन्द्वे स्थितात् चवर्गान्तात् अः स्यात् । श्रौसजम् । "चैक्याद्युदषह्नोः ।" मुं ॥ १३ ॥

षदोऽह्नो वा । षान्तदान्तहकारान्ताच्च अः स्यात् समाहारद्वन्द्वे । वाशब्दः समुच्चयार्थकः । पीठच्छत्रोपानहम् । "द्वन्द्वाच्चुदषहान्तात्समाहारे ।" पां । "चैक्या-द्युदषह्नोः ।" मुं ॥ १४ ॥

इतरेतरयोगे च द्वन्द्व एकः प्रदृश्यते समाहारे तथैवैकः । गृहव्रजे । "इतरेतर-योगे च समाहारे च चो द्विधा ।" मुं ॥ १५ ॥

असह्रथाः कटुवाक्लिषं पुरा यदतिमानभृतां स्वयोषिताम् ।
तदनुरागितया स्मरोन्मदस्तदिह ते विरतस्य विषं भवेत् ॥ १६ ॥

स्त्रीपुंसाभ्यां युवाभ्याञ्चाहोरात्रो नीयते रहः ।
ऊर्वष्ठीवं समाहृत्य मिथः कोऽन्यो भवादृशः ॥ १७ ॥

(ययातिः) मुने ! एतत् सर्वं सत्यम् । तथाहि ।

न ऋक्सामे, वाङ्मनसे धावतो मम जात्वपि ।
अच्छिभ्रुवस्य चेपोऽपि न धेन्वनडुहौ प्रति ॥ १८ ॥

पदष्ठीवं श्लथीभूतं कृत्यञ्च समयोचितम् ।
तथापि योषित्सङ्गेच्छा नाहो ते शिथिलायते ॥१९॥०॥*॥

असहेति । स्मरोन्मदः कामोन्मत्तः सन् अतिमानभृतां स्वीययोषितां कटुवाक्-लिषं वाक्यं तेजश्च यत् असहथाः तत् तदनुरागितया तासु स्वयोषित्सु सानुरागतया । इह समये विरतस्य रतिशक्तिहीनस्य ते तव तत् कटु वाक्लिषं विषं विषवत् भवेत् । पक्षे । पूर्वसूत्रस्य उदाहरणमात्रम् ॥ १६ ॥

स्त्रीपुमिति । युवाभ्यां स्त्रीपुंसाभ्यां मिथः परस्परम् ऊर्वष्ठीवम् ऊरुजानुनी समाहृत्य समाक्रम्य रहो निर्ज्जने अहोरात्रो नीयते याप्यते । पक्षे । निपातनस्योदाहरणम् ॥१७॥

न ऋगिति । मम वाङ्मनसे जात्वपि कदाचिदपि ऋक्सामे वेदौ प्रति न धावतः ॥ १८ ॥

पदेति । पदष्ठीवं तथा समयोचितं कृत्यञ्च श्लथीभूतम् । अन्यत् सुगमम् ॥ १९ ॥

व्याकरणम् ।

वाक्लिषम् ॥ १६ ॥

स्त्रीपुंसाभ्याम् । अहोरात्रः । ऊर्वष्ठीवम् ॥ १७ ॥

ऋक्सामे । वाङ्मनसे । अच्छिभ्रुवस्य । धेन्वनडुहौ ॥ १८ ॥

पदष्ठीवम् ॥ १९ ॥ *॥ इति च समासः ॥ ० ॥*

(भृगुः ।) शृणु राजन् ! । पद्मवल्लोचनमस्यास्तीति पद्मलोचनः स उच्यते। लुप्ताचे तत्पदप्रयोगस्तु तस्योपहासार्थेति। त्वयि उपेक्षितराजनीतौ राजपदप्रयोगोऽनुपयुक्तः । शृणु ।

दुःखाभावार्थनस्याह सेवा वृद्धाश्रमेयुषाम् ।
हितेत्यज्ञानतमसः शान्तिर्ज्ञानञ्च यद्भवेत् ॥ १ ॥
अचिन्वन् भिषजं राजन्ननश्नन् भेषजं कथम् ।
मुक्तो भवेरपथ्याशी सेव्यमानाच्चिरज्वरात् ॥ २ ॥
कर्मबन्धो ज्वरो नॄणां तपस्तद्भेषजं कटु ।
आपातमधुरोऽपथ्यमिन्द्रियार्थोऽत्यनर्थकृत् ॥ ३ ॥
ज्ञानोपदेष्टा यो वृद्धः स गुरुर्वैद्य उच्यते ॥ ४ ॥

दुःखेति । दुःखाभावं आत्यन्तिकदुःखध्वंसं अर्थात् मोक्षं अर्थयते याचते यः स दुःखाभावार्थनः मुक्त्याकाङ्क्षुरित्यर्थः । दुःखध्वंसस्यैव मुक्तिपदार्थत्वात् । तस्य जनस्य वृद्धाश्रमेयुषां वानप्रस्थाश्रमिणां सेवैव हिता इत्याह योगशास्त्रमिति शेषः । अज्ञानतमसः शान्तिः ज्ञानञ्च यतः सेवातः भवेदित्यर्थः । पक्षे । दुःख इति सम्बोधनम् । अन्यदुदाहरणम् । अभावार्थनस्य ६।, अः १।, ङसे ७।, वा १।, ॥ १ ॥

अचीति । भिषजं वैद्यं अचिन्वन् अन्वेषणमकुर्व्वन् भेषजं औषधं अनश्नन् अपथ्याशी सन् कथं चिरज्वरात् मुक्तो भवेः । पक्षे । भिषजमित्यादिकमुदाहरणवाक्यम् । अचि ७।, (नु !) अन् १।, ॥ २ ॥

कर्म्मेति । आपाततो मधुरो य इन्द्रियार्थः इन्द्रियविषयः स अनर्थकृत् अपथ्यम् ॥३॥

ज्ञानेति सुगमम् ॥ ४ ॥

व्याकरणम् ।

अभावार्थनस्याङसे वा । अभावार्थकस्य नकारस्य अः स्यात् वा ङसे समासे । दुःखाभावार्थनस्याः इत्यत्र विसर्गस्य लोपो जातः । अज्ञान । "नञोपो नञः ।" पां ॥ १ ॥

अचिन्वन् । अभावार्थकनकारस्य अचि परे अन् स्यात् वा । (नु सम्बोधने) अनश्नन् । अपथ्याशी । "तस्मान्नुडचि ।" पां । "नञोऽनौ वाज्भसोः ।" मु ॥ २ ॥ ३ ॥४॥

राजन्! सुमतिर्नाम राजा धन्यो मादृशां दृष्टिगोचर आसीत्। योऽतिकामुकोऽपि विवेकासिना योषिन्मायारज्जुमच्छिनत्। (ययातिः।) मुने! कोऽसौ सुमतिः?। (भृगुः।) श्रूयताम्।

गौरोज्ज्वलवपुः सूरो नाहितोऽनन्तपुण्यभाक्।
राजासीत् सुमतिर्नाम यो देवानामुपाकरोत्॥ ५॥
परोपकृतये यस्य महेच्छस्य तनुर्धनम्।
राज्यं प्राणा हि महतस्तयैकार्थं इहेष्यते॥ ६॥

याऽसद्वाचोऽभिश्रयत् कामतोऽन्यपुम्वाचि स्त्री पुम्वदेव स्त्रियाश्च।
यो वाऽन्यो नाऽपातयत् वक्रदृष्टिं तौ स्वाद्राष्ट्रात् काननेऽवासयद् यः॥७

गौरेति। गौरमुज्ज्वलं वपुर्यस्य स तथा। नाहितः नास्ति अहितः शत्रुर्यस्य स तथा असुरं निहत्य यो देवानां उपकारमकरोत्। पद्ये। सूत्रस्य उदाहरणम्॥ ५॥

परेति। यस्य महेच्छस्य महाशयस्य परेषां उपकारायेव तनुः धनं राज्यं प्राणाश्च। हि यस्मात् महतो जनस्य तया परोपकृत्यैव अर्थः प्रयोजनं इह संसारे ईष्यते। महेच्छस्तु महाशय इत्यमरः। पद्ये। पूर्व्वापरभागौ उदाहरणम्। महतः ६।, तः १।, आ १।, एकार्थे ७।, इह ७।, ईष्यते ८।, ॥ ६॥

यासदिति। या स्त्री पुंवत् पुमानिव कामतः कामात् अन्यपुवाचि परपुरुषस्य वाक्ये असत् वचोऽभिश्रयत् अर्थात् आलापं चकार। यो वा अन्यो ना परपुरुषः

व्याकरणम्।

गौरोज्ज्वलवपुः। नाहितः। अनन्तपुण्यभाक्॥ ५॥

महतस्त आ एकार्थे इहेष्यते। महत् शब्दस्य तः आ स्यात् एकार्थे शब्दे परे इह शास्त्रे ईष्यते। महतस्त इत्यस्मात् विसर्गस्य यकारः। महेच्छस्य। "आन् महतः समानाधिकरणजातीययोः।" पां। "महत्येकार्थे जातीयवासकरविशिष्टे तु तो च।" सुं॥ ६॥

पुंवाचिस्त्री पुंवदेव स्त्रियाश्च। एकार्थेन पुंवाची स्त्रिलिङ्गशब्दः पुंवदेव स्यात् एकार्थे-

यं स्वर्गगणिकोवाश सुदती गुणवत्तरा ।
अपि स्थिते रूप्यतरादित्ये शक्रादिकेऽन्तिके ॥ ८ ॥

अथैकदा देवकार्य्यसिषाधयिषया आगतं नारदं यथान्यायं पुरस्कृत्य तं प्रति सुमतिनृप आह ।

ज्ञानां सम्यङ्घे च तत्वप्रत्ययेऽप्युदिते परे ।
यन्मुक्ता, निस्पृहोऽटन्ति पवित्रत्वाय तद्भुवः ॥ ९ ॥

स्त्रियाश्च अर्थात् परभार्य्यायां वक्रदृष्टिं अपातयत् तौ स्त्रीपुंसौ यो राजा स्वात् स्वकीयात् राष्ट्रात् कानने अवासयत्। पद्ये। याऽसदवाच इत्यादिकमुदाहरणवाक्यम्। पुंवाचि- स्त्री १।, पुंवत् १।, (एव) स्त्रियां ७।, (च) ॥ ७ ॥

यमिति। रूप्यतरादित्ये अयमनयोरतिशयेन रूप्यः प्रशस्तरूपवान् इति रूप्यतरः स चासौ आदित्यो देवश्चेति स तथा तादृशे शक्रादिके इन्द्रादौ अन्तिके निकटे स्थितेऽपि स्वर्गगणिका यं राजानं उवाश कामयते स्म। कीदृशी इयमनयोरतिशयेन गुणवतीति गुणवत्तरा। रूप्यं प्रशस्तरूपेऽपीत्यमरः। पद्ये। यमित्यादिकमुदाहरणघटितवाक्यम्। (अपि १) स्थिते ७।, अरूप्यतरादित्ये ७।, ॥ ८ ॥

ज्ञानामिति। हे ज्ञानां सम्यङ्! ज्ञानिनां श्रेष्ठ! तत्वप्रत्यये तत्त्वज्ञाने उदितेऽपि जातेऽपि ये च जनाः परे तत्वज्ञानानन्तरकाले मुक्ताः जीवन्मुक्ताः निस्पृहः निस्पृहाः सन्तः अटन्ति इतस्ततो गच्छन्ति तत् केवलं भुवः पृथिव्याः पवित्रत्वाय पवित्रीकरणाय। पद्ये।

व्याकरणम्।

विशेष्यस्त्रीलिङ्गशब्दे परे। असद्वाचः। वक्रदृष्टिम्। "पुंवत् स्वकपुंस्काः स्त्रियाङ्मानिनितत्वशसन्ततरादौ चारूप्ये।" मुं ॥ ७ ॥

अपि स्थितेऽरूप्यतरादित्ये। रूप्यभिन्ने तरादिप्रत्यये परे च पुंवत् स्यात्। गुणवत्तरा ॥ ८ ॥

ङ्ये च तत्वप्रत्यये प्युदिते परे। ङ्ये तथा तत्वप्रत्ययेऽपि परत्र स उत्पन्नं पुंवत् स्यात्। पवित्रत्वाय भुवः ॥ ९ ॥

( नारदः । ) रामे राजनि भूः सुस्थमानिन्यासीत् यथा पुरा ।
राजन्नास्तेऽद्य सा राज्ञि तथा भवति मानिनि ॥ १० ॥
राजन् ! तव प्रियकाम्यया आगतोऽस्मि तत् श्रूयताम् ।
सुमनश्चित्तउप्ताककोपधो न तथापरः ।
धूम्राक्षनामा दैत्येन्द्र आस्ते कोप्यतनूतनुः ॥ ११ ॥
त्रासीवेपथुततयः प्रणता धरणितो विमोहिता ये च ।
तदन्तको न यदसौ जीवन्ति हि सौरभुवस्तेन ॥ १२ ॥

---

ज्ञानां सम्य इति सम्बोधनम् । ङ्यं ७।, (च १) तलप्रत्यये ७।, (अपि १) उदिते ७।, परे ७।, ॥ ९ ॥

राम इति । पुरा पूर्वकाले रामे राजनि सति भूः पृथ्वी यथा सुस्थमानिनी आसीत् आत्मानं सुस्थां मन्यते या सा सुस्थमानिनी । हे राजन् ! मानिनि मानशीले भवति त्वयि च राज्ञि सति अद्य सा पृथ्वी तथा आस्ते । पक्षे । राम इत्यादिकं उदाहरणवाक्यम् । तथा १।, भवति ८।, मानिनि ७।, ॥ १० ॥

सुमन इति । धूम्राक्षनामा कोऽपि दैत्येन्द्रः आस्ते । अतनूर्महती तनुः शरीरं यस्येति अतनूतनुः । तथा अपरो नासीति शेषः । कीदृशः सुमनसां देवानां चित्ते मनसि उप्तं आरोपितं अकं दुःखं येन इति सुमनश्चित्तउप्ताकः । कोपं दधातीति कोपधः । ततो द्वयोः पदयोः कर्मधारयः । पक्षे । सुमनश्चित्ते, तथापर इत्यादिकमुदाहरणघटितवाक्यम् । उप्ताककोपधः १।, न १।, ॥ ११ ॥

त्रासीति । ये सौरभुवो देवाः त्रासीवेपथुततयः त्रासात् जायते या सा त्रासी

## व्याकरणम् ।

तथा भवति मानिनि । मानिन् प्रत्ययेऽपि तथा अर्थात् पुंवत् भवति । सुस्थमानिनी ॥ १० ॥

उप्ताककोपधो न । उपन्तस्तथा तद्धितस्य अकस्य वा ककारोपधः उक्तपुंस्कः स्त्रीलिङ्गशब्दः पुंवन्न स्यात् । अतनूतनुः ॥ ११ ॥

णितो विमोहिता ये च तदन्तको न । ये णितः णकारानुबन्धास्तास्तद्धिता अविमः

**हैमभूषेऽत्र काषायोष्णिहि वीक्ष्येऽक्षिणी सुराः ।**
**वाच्ये रक्ते विकारेते तत्तान्ता न भवन्ति च ॥ १३ ॥**
**तथापूरणतान्तास्ते नाम चास्तं दिवो भयात् ।**
**द्वितीयावल्लभा देवा स्तेषामेवं दशाभवत् ॥ १४ ॥**

तादृशी वेपथुततिः कम्पविस्तारो येषां ते तथा । ये घरणितः धरण्यां प्रणताः विमोहिताश्च असौ असुरः यत् यस्मात् तदन्तकस्तेषां विनाशको न तेन हेतुना सौरभुवो जीवन्ति । स्वः स्वर्गे जायते इति सौरी तादृशी भूरुत्पत्तिर्येषां ते सौरभुवः । पद्ये । वासीत्यादिकमुदाहरणम् । णितः १॥, अविमः १॥, (द्वि) ताः १॥, ये १॥, (च) तदन्तको १।, (न १।) ॥ १२ ॥

हैमेति । सुराः देवाः अत्र असुरे अक्षिणी चक्षुर्द्वयं वीक्ष्य तत्तान्ताः तस्मात् तान्ताः खिन्ना न भवन्ति अपि तु भवन्त्येव । असुरे कीदृशे हैमी भूषा यस्य स तथा तस्मिन् । कषायेण रक्ता काषायी उष्णिक् यस्य स तथा तस्मिन् । अक्षिणी कीदृशे वाच्ये गर्हणीये । रक्तवर्णे विकारेते विकारप्राप्ते विकृते इत्यर्थः । पद्ये । हैमेत्यादिकमुदाहरणम् । वाच्ये ७।, अरक्ते ७।, अविकारे ७।, ते १॥, तत्तान्ताः १॥, ( च ) भवन्ति ८।, (न १) ॥ १३ ॥

तथेति । देवाः रणतान्ताः रणात् तान्ताः खिन्नाः सन्तः भयात् द्वितीयावल्लभा द्वितीया दयिता वल्लभाः सहायाः येषां तथा सन्तः दिवः स्वर्गात् अस्तं पलायनं आपुः प्राप्तवन्तः । नाम सम्भावनायाम् । तेषां देवानां ईदृक् दशा अभवत् । पद्ये । अस्त-

व्याकरणम् ।

णम् इम् निमित्तभिन्नास्तदन्तकस्तादृशतद्धितान्तः शब्दः पुंवन्न स्यात् । वासीवेपथुततयः । सौरभुवः ॥ १२ ॥

वाच्येऽरक्तेऽविकारे ते तत्तान्ताश्च भवन्ति न । अरक्ते वाच्ये अर्थे अविकारे वाच्ये च तत्तान्ताः णितृतद्धितान्तास्ते उक्तपुंस्काः स्त्रीलिङ्गशब्दाः पुंवन्न भवन्तीत्यर्थः । हैमभूषे । काषायोष्णिहि ॥ १३ ॥

तथा पूरणतान्तास्ते नाम च । पूरणार्थकतद्धितान्तास्ते तादृशाः शब्दा नाम च संज्ञाशब्दाश्च तथा अर्थात् पुंवन्न स्युः । द्वितीयावल्लभाः ॥ १४ ॥

शतासुरीवल्लभस्य तस्य नाम्ना सुलोचना ।
स्वाङ्गजातीव मानिन्युदेति सुस्तनमानिनी ॥ १५ ॥
सुभगातनया बाला मनोज्ञा चपलासमा ।
स्वाप्रियाऽवामना कान्ता वामासु क्वापि नो तथा ॥ १६ ॥
धरदुहितृभक्तिसचिवा कल्याणी पूरणी दुर्भगासु च ।
दीनासु च प्रपन्नासु तत्कामानां शिवे दृढ़ाभक्तिः ॥ १७ ॥

---

मित्यादिकं उदाहरणवाक्यम् । (तथा १।) पूरणतान्ताः १॥, ते १॥, नाम १।, (च) ॥ १४ ॥

शतेति । शतासुरीवल्लभस्य शतसंख्यका आसुरी असुरजातीया स्त्री वल्लभा यस्य स तथा तस्य सुलोचना नाम्ना स्वाङ्गजा पुत्री अतीव मानिनी उदेति प्रकाशते । सुस्तनमानिनी आत्मानं सुस्तनीं मन्यते या सा तथा । पद्ये । शतासुरीत्यादिकमुदाहरणम् । स्वाङ्गजातीप् १।, अमानिनि ७।, ॥ १५ ॥

सुभगेति । सुभगायाः तनया कन्या । बाला युवती । चपलायाः विद्युतः समा तुल्या । स्वासां आत्मीयस्त्रीणां प्रिया । अवामना श्रेष्ठा । कान्ता मनोहरा वामासु स्त्रीषु मध्ये तथा तादृशी क्वापि नास्तीत्यर्थः । सुभगातनयाबालामनोज्ञाचपलासमा स्वाप्रियावामनाकान्तावामासु ७॥, क्व ७', (अपि) नो १।, तथा १।, ॥ १६ ॥

धरेति । धरः पर्व्वतस्तस्य दुहिता भवानी तस्यां या भक्तिः सैव सचिवा सहाया यस्याः । दुर्भगासु दीनासु च प्रपन्नासु शरणागतासु सतीषु तत्कामानां अभिलषितानां

व्याकरणम् ।

स्वाङ्गजातीप् अमानिनि । स्वाङ्गजातिविहितेवन्तम् मानिन् शब्दवर्ज्जः पुंवन्न स्यात् । शतासुरीवल्लभस्य । सुस्तनमानिनी । "नीप्ताककोङ् पूरण्याख्यायुमक्तविकारार्थणित्तं जातिस्वाङ्गेप् त्वमानिनि ।" मु ॥ १५ ॥

सुभगा तनया बाला मनोज्ञा चपला समा स्वाप्रिया वामना कान्ता वामासु क्वापि नो तथा । सुभगादिशब्देषु परेषु क्वापि नो तथा न पुंवद्भावः ॥ १६ ॥

दुहितृभक्तिसचिवाकल्याणीपूरणीदुर्भगासु च । एतेषु च परेषु पुंवन्न स्यात् ।

चेत् स्यास्तत्सुस्तनीभार्य्यो यौवनं सफलं भवेत् ।
जायते सुसुखीभार्य्यस्तपोभिर्बहुभिर्नृप ! ॥ १८ ॥
स्याश्चेत् तद्रसिकाभार्य्यस्तदा ते रूपयौवनम् ।
राज्यं कोषो यशो वीर्य्यं प्रतापः सफलं भवेत् ॥ १९ ॥
सुकेशमानिनी सा तु नृप ! त्वय्येव शोभते ।
सत्सभायां यथा गोष्ठीपतावर्हणचन्दनम् ॥ २० ॥
जेत्रा सौवश्वसेनेन तत्पित्रैवं पणः कृतः ।
यो मां जेष्यति संग्रामे सद्युद्वोढा सुलोचनाम् ॥ २१ ॥

---

पूरणी । पचे । धरेति सम्बोधनम् । दुहितृभक्तिसचिवाकल्याणीपूरणीदुर्भगासु ७॥, (च १) ॥ १७ ॥

चेदिति । चेत् यदि तत्सुस्तनीभार्य्यः स्याः भवेः तदा तव रूपं सफलं भवेत् । पुमान् बहुभिस्तपोभिः सुसुखीभार्य्यो भवति । पचे । पूर्वसूत्रस्य उदाहरणम् ॥ १८ ॥

स्याश्चेदिति । चेत् यदि तद्रसिकाभार्य्यः स्याः भवेः । सा रसिका भार्य्या यस्येति स तथा । अन्यत् सुगमम् ॥ १९ ॥

सुकेशीति । आत्मानं सुकेशीं मन्यते या सा सुकेशमानिनी सा सुलोचना तु त्वय्येव शोभते । अन्यत् सुगमम् ॥ २० ॥

जेत्रेति । जेत्रा जयशीलेन तत्पित्रा सुलोचनायाः पित्रा एवं पणः कृतः । सौवश्व-

व्याकरणम् ।

दृढ़ाभक्तिः । "पूरणीप्रियामनोज्ञा-सुभगा-दुर्भगा-चान्ता कान्ता-वामना-वामा-चपला बाला-समा-सचिवा-तनया-दुहितृ-स्वा-कल्याणी-भक्तौ ।" मु ॥ १७ ॥

स्वाङ्गेपः किं सुस्तनीभार्य्यः, सुसुखीभार्य्यः ॥ १८ ॥

ताककोङः किं रसिकाभार्य्यः ॥ १९ ॥

सुकेशमानिनी ॥ २० ॥

सौवश्वसेनेन ॥ २१ ॥

जिताः सुमनसः सर्व्वे तेन क्रूरेण संयुगे ।
वैयाकरणविद्याः सन्नैयायिकविदा यथा ॥ २२ ॥
एवं भवत्यमौख्यार्थे गोरन्तेवासिनो गुरुः ।
लघुर्व्विहायास्तमगात् ध्वस्तगुः शुक्रनिर्ज्जितः ॥ २३ ॥
(भृगुः ।) एवं भूपायर्षिणा ध्वस्तमायेनावाद्यस्यापीय सोऽनाप्तधैर्य्यः ।
वाङ्माध्वीकं मदनावेशमुग्धो राट् तच्चिन्तोऽभूत् बहुप्रेयसी च ॥२४॥

---

सैनेन शोभनोऽश्वः स्वश्वः तेन युध्यते या सा सौवश्वी तादृशी सेना यस्य स तथा तेन । अन्यत् सुगमम् । पच्चे । पूर्वसूत्रस्य उदाहरणम् ॥ २१ ॥

जिता इति । तेन क्रूरेण संयुगे युद्धे सर्वे सुमनसो देवा जिताः । नैयायिकी न्यायशास्त्रभवा वित् विद्या यस्य स नैयायिकवित् तेन वैयाकरणी व्याकरणसम्भवा विद्या येषां ते वैयाकरणविद्याः ते यथा जिता भवन्ति तथेत्यर्थः । पच्चे । सूत्रस्य उदाहरणम् ॥ २२ ॥

एवमिति । गोः स्वर्गस्य एवमनेन प्रकारेण अमौख्यार्थे दुःखेनामिश्रितसुखरूपमुख्यप्रयोजनराहित्ये भवति सति गुरुः सुराचार्य्यः शुक्रनिर्ज्जितः ध्वस्तगुर्भवन् लघुः सन् अन्तेवासिनः शिष्यान् विहाय अस्तमगात् । पच्चे । एवमिति एवं जानीहीत्यर्थः । भवति ८।, अमौख्यार्थे ७।, गोः ६।, अन्ते ७।, वासिनः ६।, गुरुः १।, लघुः १।, ॥ २३ ॥

एवं भूपेति । ध्वस्तमायेन ऋषिणा एवं उक्तरूपं भूपाय अवादि उक्तम् । स राट् राजा अस्य ऋषेः वाङ्माध्वीकं आपीय श्रुत्वा मदनस्य आवेशेन मुग्धः अप्राप्तधैर्य्यः सन्

व्याकरणम् ।

वैयाकरणविद्याः । सन्नैयायिकविदा ॥ २२ ॥

भवत्यमौख्यार्थे गोरन्ते वासिनो गुरुर्लघुः । अन्तेवासिनोऽन्ते स्थितस्य गोशब्दस्य गुरुर्वर्णः लघुः स्यात् अमुख्यार्थे अप्राधान्ये । ध्वस्तगुः ॥ २३ ॥

आवाद्यस्यापीयसी न । अन्ते स्तिस्य आवादेरपि लघुत्वं स्यात् ईयसुप्रत्ययान्तस्य न स्यात् । ध्वस्तमायेन, बहुप्रेयसी । "गवावादेः स्वोऽन्ते गौणेऽनीयसः ।" सु ॥ २४ ॥

(नारदः।) कमलादशमाः सिद्धविद्या या भक्तवत्सलाः।
त्वत्कामपूरणेऽर्थे ता दोहे सन्त्विव सुव्रताः ॥ २५ ॥
(अथ तं राजानं धनुरादाय सहसा गमनोद्यतं वीक्ष्य तं प्रति नारदः।)
समाहृतः को भवेन्न दैवैश्च तपसैव यः।
भवेत् प्रसन्नहेरम्बमातृकः शिवपातृकः ॥ २६ ॥

तस्मात् दुःसाध्यसाधनं कालात्मा आराधनमपेक्षते। अथ राजा तत् श्रुत्वा नारदं नमस्कृत्य तपसे जगाम।

---

बहुप्रेयसी अपि बहुभार्य्योऽपि तच्चिन्तोऽभूत्। पक्षे। एवमित्यादिकमुदाहरणघटित-वाक्यम्। आबाद्यस्य ६।, (अपि) ईयसः ६।, न १।, ॥ २४ ॥

कमलेति। याः सिद्धविद्याः कमला दशमाः लक्ष्मीः दशमी यासां तास्तथा। ताः सिद्धविद्याः तव कामपूरणे अभीष्टसाधने सन्तु। दोहे दोहने सुव्रताः सुखसन्दोह्या गाव इव। पक्षे। कमलेत्यादिकं उदाहरणम्। पूरणे ७।, अर्थे ७।, तात् ५।, अः १।, हे ७।, ॥ २५ ॥

समेति। को जनः दैवैरपि समाहृतो न भवेत्। यो जनः तपसैव प्रसन्नहेरम्ब-मातृकः भवेत् स शिवपातृकश्च भवेत्। प्रसन्ना हेरम्बमाता दुर्गा यस्य स तथा। शिवः पाता यस्य स तथा। पक्षे। समात् इति समभोजिनः सम्बोधनम्। ऋतः ५।, कः १।, भवेत् ८।, ॥ २६ ॥

व्याकरणम्।

पूरणेऽर्थे तादोहे। पूरणार्थे तद्धितप्रत्ययान्तात् अः स्यात् हे। कमलादशमाः। अत्र मुख्यपूरणी ग्राह्या। "अप्पूरणीप्रमाण्योः।" पां। "हे पूरणीप्रमाणीभ्यामः।" सु ॥ २५ ॥

ऋतः कः भवेत्। ऋदन्तात् कः स्यात् हे। प्रसन्नहेरम्बमातृकः। शिवपातृकः ॥ २६ ॥

देवनद्याः क आप्लुत्याकण्ठं सोऽथाचरत्तपः।
अन्त्यपञ्चदशीवैकपञ्चं कालीमनुं जपन्॥ २७॥
इत्थं तपः क्लेशसहस्य वासोहेयस्य हेमन्तकृतावमुष्य।
उपेत्य काली सदयं जगाद सिद्धोऽसि वत्साथ वरं वृणीहि॥२८॥
(नारदः।) एषोऽक्ष्णोर्विषयीकृत्य भगवत्याः पदाम्बुजम्।
नत्वा स्तुत्वाऽनुपूर्णाक्ष इदमाह कृताञ्जलिः॥ २९॥

---

देवेति। अथानन्तरं स राजा देवनद्याः गङ्गायाः के जले आकण्ठं आप्लुत्य निमज्य कालीमनुं कालीमन्त्रं जपन् सन् अन्त्यपञ्चदशीकैकं एकपञ्चं व्याप्य तपः अचरत्। अन्त्या पञ्चदशी यस्य एकपञ्चस्य तत् अन्त्यपञ्चदशीकैकपञ्चम्। पक्षे। देव इति सम्बोधनम्। नद्याः ५।, कः १।,॥ २७॥

इत्थमिति। इत्थं उक्तरूपेण तपःक्लेशसहस्य अमुष्य नृपस्य हेमन्तकृतौ वासोहेयस्य वासो वस्त्रं हेयं यस्य स तथा तस्य। अमुष्य उप समीपे एत्य काली सदयं यथा स्यात् तथा जगाद अन्यत् सुगमम्। पक्षे। तपःक्लेश इति सम्बोधनम्। सहस्य ६।, वा १।, सः १।, हे ७।,॥ २८॥

एष इति। एष राजा सुमतिः भगवत्याः पदाम्बुजं अक्ष्णोश्चक्षुषो विषयीकृत्य अर्थात् दृष्ट्वा। अन्यत् सुगमम्। पक्षे। ए इति सम्बोधने। षः १।, अक्ष्णः ५।,॥ २९॥

व्याकरणम्।

नद्याः कः। अन्त्यपञ्चदशीकैकपञ्चम्। कमलादशमा इत्यत्र दशमी पूरणी समासवाच्या चेति पूर्वत्र मुख्यत्वम्। इह तु पञ्चदशीपूरणी अपि न समासवाच्या इति तस्मिन् पूर्वस्य पुंवद्भावः कप्रत्ययश्चेति ध्येयम्॥ २७॥

सहस्य वा सो हे। सहस्य सः स्याद्वा हे। सदयम्। "वोपसर्जनस्य।" पा। "सहः सोवा।" मु॥ २८॥

षोऽक्ष्णः। अक्ष्णः षः स्यात् हे। (वानुवृत्तेरनिष्टत्वात् नित्यत्वम्।) अनुपूर्णाक्षः॥२९॥

मन्येऽदः प्राणिनां सक्थ्नो बाह्वोर्वा न बलं बलम् ।
महासक्थो महाबाहुः स यस्य भवतो बलम् ॥ ३० ॥

( अथ राजा विवेचयति । )

हानिर्नो याचितेऽभीष्टे तुच्छे स्वौलभनात्मके ।
भवे यत् फलमात्मीयं भवेयं तेन वञ्चितः ॥ ३१ ॥

( इति स विविच्य आह । )

उरोस्तथातिक्षुद्रस्य मानवस्य त्वमेव भूः ।
अनर्थिनोऽपि स्यात् सर्व्वाभीष्टसिद्धिस्त्वदीक्षणात् ॥ ३२ ॥

मन्य इति । प्राणिनां सक्थ्नोर्बलं बाह्वोर्वा बलं न बलम् । किन्तु भवतो एव यस्य जनस्य बलं स एव जनः महासक्थः महाबाहुः अद इदं मन्ये । पचे । बाह्वोर्वा बलमित्यादिकस्य उदाहरणघटितवाक्यत्वेन सार्थकम् । मन्ये ८, अदः १।, प्राणिनां ६॥, सक्थ्नः ५।, ॥ ३० ॥

हानिरिति । स्वौलभनात्मके स्वौलाभस्वरूपे तुच्छे अभीष्टे याचिते सति नोऽस्माकं हानिः स्यात् । अत्र हेतुमाह । भवे इह संसारे यत् फलं आत्मीयं आत्मने हितं स्यात् तेन फलेन वञ्चितो भवेयं भविष्यामीत्यर्थः । हानिः १।, नः ६।, याऽचि ७।, ते ७।, ॥ ३१ ॥

उरोरिति । उरोर्महतः तथा अतिक्षुद्रस्य च मानवस्य त्वमेव भूः आश्रयः । अनर्थिनोऽपि अयाचकस्यापि जनस्य सर्व्वाभीष्टस्य सिद्धिः त्वदीक्षणात् तव दर्शनमात्रतः स्यात् । उः १।, भोः १।, (तथा ७।,) ॥ ३२ ॥

व्याकरणम् ।

मन्येऽदः प्राणिनां सक्थ्नः । प्राण्यङ्गीभूतात् सक्थ्नः अट एतद्विधानम् । अर्थात् षः स्यात् हे । महासक्थः । "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ।" पां । "सक्थ्यक्ष्णः षः स्वाङ्गे ।" मु ॥ ३० ॥

हानिर्नो याचिते । नकारस्य हानिर्लोपः स्यात् ते तद्धिते यकारे अचि च परे । आत्मीयम् ॥ ३१ ॥

( देवी तं प्रति । )

पृथ्वीपालात्मज ! तव सेत्स्यति मनोरथः ।
एवमूर्द्धतो द्विविसंख्यातः समातः ॥ २३ ॥

( सुमतिः । ) मातः ! फलसिद्धौ कथमेतावान् विलम्बः ।

( देवी तं प्रति ) शृणु स दैत्य एवम् ।

त्रिमूर्द्धं शूलमादाय शिवो रक्षति तत्पुरीम् ।
विना तदाज्ञां प्रविशन् भस्मीभवति तत्क्षणात् ॥ २४ ॥
स दैतेयवनव्याड़ो नाभेर्नाम्नि श्रुते क्रुधा ।
हविःसिक्ताग्निवद्भाति पद्मनाभाभिधाऽसहः ॥ २५ ॥

पृथ्वीति । हे पृथ्वीपालात्मज ! द्विविसंख्यातः द्वौ च त्रयश्चेति द्वयोः समाहारे द्विवि तदेव संख्या यस्याः सा तथा । तत्संख्यकायाः समातः वत्सरात् ऊर्द्धतः उत्तरकाले तव मनोरथः तवेष्टं सेत्स्यति । पक्षे । पृथ्वीपालात्मजेति सम्बोधनम् । मूर्द्धतः ५।, द्विविसंख्यातः ५।, ॥ २३ ॥

सदैतेयेति । सः असुरः दैतेयरूपवनस्य व्याड़ो व्याघ्रः नाभेः क्षत्रियस्य नाम्नि श्रुते सति क्रुधा कोपेन हविःसिक्ताग्निरिव भाति । पद्मनाभस्य विष्णोः अभिधाया नाम्नः

व्याकरणम् ।

उरोस्तथा । उवर्णः ओः स्यात् तथा तद्धितसम्बन्धिनि अचि ये च । मानवस्य । "त्वोर्णोवौ तौ तेऽच्ये ।" मुं ॥ २२ ॥

मूर्द्धतः द्विविसंख्यातः । द्विविसंख्याशब्दात् मूर्ध्नः षः स्यात् हे । "द्विवेर्मूर्द्ध्नः ।" मुं ॥ २३ ॥

त्रिमूर्द्धम् ॥ २४ ॥

ङी नाभेर्नाम्नि श्रुते । नाभेर्ङः स्यात् नाम्नि संज्ञायां श्रुते । पद्मनाभः । "नाभ-र्नाम्नि ।" मुं ॥ २५ ॥

यावत् शिवस्तिष्ठति तस्य पुर्थ्यां शिवात्तशूलं स बिभर्त्ति यावत् ।
तावत् स जेयो नहि चक्रिणापि एवंवरो भाति स पद्मनाभे ! ॥३६॥
नु ! तथा बहुसंख्यात इष्टितस्तोषयन्नसौ ।
मूर्त्त्यष्टं नित्यमासन्नं सिद्धिमाप महासुरः ॥ ३७ ॥
दितिस्तु सुप्रजास्तस्मात् दुःस्वभावप्रवर्त्तनात् ।
प्रजाया यस्तु नाथोऽसौ कश्यपस्तेन दुष्प्रजाः ॥ ३८ ॥

असहः असहिष्णुः । पचे । सदैते इति सर्वदा आगतायाः तथा यवनद्याः इति वेगवतीनां नद्यानां सम्बोधनम् । ङः १।, नाभिः ५।, नाम्नि ७।, श्रुते ७।, ॥ ३५ ॥

यावदिति । शिवात्तशूलं शिवात् आत्तं गृहीतं शूलं यावत्कालं सोऽसुरो बिभर्त्ति धारयति । एवं ईदृक् वरो यस्य स एवंवरः । पद्मनाभे इति सम्बोधनम् ॥ ३६ ॥

नुतथेति । नुभोः तथा असौ असुरः बहुसंख्यातः इष्टितः यागात् मूर्त्त्यष्टं मूर्त्तयोऽष्टौ यस्य स तथा तं शिवं तोषयन् सन् सिद्धिं प्राप । कीदृशं सर्वदा आसन्नं समीपवर्त्तिनम् । पचे । नु इति सम्बोधने । तथा १।, अबहुसंख्यातः ५।, ॥ ३७ ॥

दितिरिति । दुःस्वभावप्रवर्त्तनात् दुष्टस्वभावे प्रवर्त्तते यः स तथा तस्मात् असुरात् धूम्राक्षात् दितिः असुरमाता सुप्रजाः सत्पुत्रा । यस्तु प्रजायानाथः प्रजापतिः असौ कश्यपः तेन असुरेण दुष्प्रजाः कुपुत्रवान् । पचे । दितिरित्यादिकमुदाहरणवाक्यम् । (दुर् सु अभाव प्रवर्त्त न) दुःस्वभावप्रवर्त्तनात् ५।, प्रजायाः ५।, अस् १।, ॥ ३८ ॥

व्याकरणम् ।

नाम्नि किं पद्मनाभे ॥ ३६ ॥

तथाऽबहुसंख्यातः । बहुवर्ज्जायाः संख्याया डः स्यात् ह्रे । मूर्त्त्यष्टम् । "बहुव्रीहौ संख्येये डज बहुगणात् ।" पां । "संख्याया डीऽबहोः ।" मु ॥ ३७ ॥

दुःस्वभावप्रवर्त्तनात् प्रजाया अस् । अभावेऽर्थे प्रवर्त्तते यः सः अभावप्रवर्त्तः अभावार्थक इत्यर्थः । स चासौ नश्चेति अभावप्रवर्त्तनः । दुर् च सुश्च अभावप्रवर्त्तनश्च तत् तस्मात् प्रजायाः अस् स्यात् । सूत्रे प्रजायाः इत्यत्र विसर्गस्य यकारः । अप्रजाः । दुष्प्रजाः ॥ ३८ ॥

(सुमतिः देवीं प्रति ।)

उमे ! धायाश्चेशनामौजसोऽजेयाः सुरैरपि ।

यं पाति शूली तं जेष्यामीत्यमेधाः क इच्छति ॥ ३८ ॥

मातः ! तस्य जयोऽसम्भव एव (देवी तं प्रति ।)

शिवो यदा त्यच्यति तत्पुरं तथा त्यक्तत्रिशूलो भविता यदाऽसुरः ।

भग्नाशिषं सर्पमिवासिनामुना दुर्मेधसं तं प्रधने हनिष्यसि ॥४०॥

इत्येवमुक्त्वा तस्मै खड्गं दत्त्वा काली अन्तर्दधे । (अथ ययातिः)

मुने ! असौ राजा मूढः यतः ।

तारातो वरनेतुरस्थिरमतेस्तस्य श्रमोऽभूद्वृथा

यन्मूढः परमामृतं करतले प्राप्यापि न श्रद्दधे ।

आसुर्य्या मृगनेत्रया चणदयासङ्गं पिपासुर्व्विषं

यत्नात् रत्नखनीमवाप्य कुरुते काचे स्पृहां कोऽबुधः ॥ ४१ ॥

उमे इति । हे उमे ! दुर्गे ! ईशनौजसः ईशस्य शिवस्य नामरूपस्य ओजसो बलस्य धाया अपि धारणशीला अपि जनाः सुरैरपि अजेया जेतुमशक्याः । यं असुरं शूली शिवः पाति रक्षति तमपि जेष्यामि इति कोऽमेधाः अबोध इच्छति । अपि तु कोऽपि न । पचे । उ सम्बोधने । मेधायाः ५।, (च १) ॥ ३८ ॥

शूलीति । शूली शिवः यदा तस्य पुरं त्यच्यति तदा सोऽसुरः त्यक्तशूलो भविता । तदा तं प्रधने युद्धे असुना मद्दत्तेन असिना भग्नाशिषं भग्ना आशीस्तालुगतदन्तो यस्य तादृशं सर्पमिव हनिष्यसि सर्पस्य तालगतदन्ते आशीः आशी च ॥ ४० ॥

तारेति । तारातः भगवत्याः सकाशात् वरनेतुः वरप्राप्तस्यापि तस्य अस्थिरमतेर्नृपस्य

व्याकरणम् ।

मेधायाश्च । नञ् दुः सुभ्यः मेधायाश्च अः स्यात् हे । अमेधाः ॥ ३८ ॥

दुर्मेधसम् ॥ ४० ॥

एवं मन्दाल्पाभ्यामपि ज्ञेयम् । मन्दमेधाः ॥ ताराताेऽवरनेतुरः । तारावाचकशब्दात् अवरनेतुः पश्चाद्दर्त्ति नेतृशब्दात् अः स्यात् । आसुर्य्या मृगनेत्रया चणदया ॥ ४१ ॥

(भृगुः।) ततो राजा मृगनेत्रामतीत्य पुरमागत्य मन्त्रिभ्यो वृत्तान्तं सकलमावेदयत्। (मन्त्री नृपं प्रति।) राजन्! अस्मिन्नर्थे यतितव्यं तथाहि।

स्वधर्म्माज्जायतेऽन्त्यश्चेत् सुधर्म्मा सुलभास्ति तत्।
युद्धधर्म्मा यशो गेयात् सिद्धश्चेत् स्वान्मनोरथः॥ ४२॥

राजन्निदमपि पश्यामि।

जपात् स्वव्ययतः पादस्यार्च्चनात् गुरुविप्रयोः।
सुपादिव भवान् भाति स्वाभीष्टमपि सेत्स्यति॥ ४३॥

---

अमी ह्यथाऽभूत्। यत् यस्मात् स मूढ़ः मृगलोचनया चण्डया उत्सवदायिन्या आसुर्य्या असुरकन्यया सह सङ्गं सङ्गरूपं विषं पिपासुः सन् परमामृतं परमभीष्टं करतले प्राप्यापि न श्रद्दधे तत्र श्रद्धां रुचिं न कृतवान्। अत्र अर्थान्तरन्यासमाह। यत्नात् रत्नखनौं रत्नस्य आकरं प्राप्य कोऽबुधः अज्ञानः काचे स्पृहां कुरुते अपि तु कोऽपि न। पक्षे। स्थिर-मतेरित्यादिकमुदाहरणघटितवाक्यत्वेन सार्थकम्॥ ताराऽतः ५।, अवरनेतुः ५।, अः १।, ॥ ४१॥

स्वधर्म्मादिति। चेत् यदि स्वधर्म्मात् क्षत्रियधर्म्मात् युद्धात् अन्त्यो मृत्युर्जायते भवति तत् तदा सुधर्म्मा देवसभा सुलभा अस्ति। चेत् यदि मनोरथः सिद्धः स्यात्। तदा युद्धमेव धर्म्मो यस्य स युद्धधर्म्मा क्षत्रियो यशो गेयात्। अत्र अन्त्य इति अन्तशब्दात् स्वार्थे ष्यञ्ः। पक्षे। स्व इति आत्मीयस्य सम्बोधनम्। धर्म्मात् ५।, जायते ८।, अन्त्यः १।, ॥ ४२॥

जपादिति। जपात् स्वाध्यायात् अर्थात् नित्यवेदपाठात् स्वव्ययतः धनव्ययात् गुरुविप्रयोः पादस्यार्च्चनाच्च भवान् सुपादिव सूर्य्य इव भाति। शोभनाः पादा रश्मयो

व्याकरणम्।

स्वधर्म्माज्जायते अन् त्यः। यत्किञ्चित् शब्दपूर्व्वकात् धर्म्मशब्दात् अन् प्रत्ययः स्यात्। सुधर्म्मा। युद्धधर्म्मा। "धर्म्मादन्।" सुं॥ ४२॥

पात् स्वव्ययतः पादस्य। सु अव्ययात् पादस्य पात् स्यात्। सुपात्॥ ४३॥

अहो कालस्य वैपरीत्यं तदेवं पश्य ।

संख्योपमानाच्च वहिः पापं यस्य स वर्द्धते ॥

त्रिपादुपासका ये ते सीदन्ति व्याघ्रपान्मुखाः ॥ ४४ ॥

व्याघ्रपादादयो मुनयोऽपि तेनासुरेण निष्पीड़िताः सीदन्ति तेषां ब्रह्मवर्च्चसस्य बलं गायत्र्याश्च बलं नास्तीति मन्ये। तदस्तु। राजन् ! सामदानभेदैस्त्रिभिरुपायैर्न स वशतामियात्।

बलात्कारे रुचिः स्याच्चेत् व्यतीहारः प्रसज्यते।

तस्मिन् गुरुर्लघुरपि पूर्व्वएव विचिन्त्यताम् ॥ ४५ ॥

---

यस्य स तथा। पक्षे। न इति जनार्द्दनस्य सम्बोधनम्। पात् १।, (सु अव्यय) सख्यतः ५।, पादस्य ६।, ॥ ४३ ॥

संख्येति। यस्य जनस्य पापं संख्याया वहिः अर्थात् यस्य जनस्य पापानां संख्या नास्ति उपमानमपि नास्ति स जनो वर्द्धते। ये जनाः त्रिपादी गायत्र्या उपासकास्ते व्याघ्रपान्मुखाः व्याघ्रपान्नामकमुनिप्रभृतयोऽवसीदन्ति। पक्षे। वहिरित्यादिकं उं। संख्योपमानात् ५।, (च १) ॥ ४४ ॥

बलादिति। चेत् यदि बलात्कारे रुचिः इच्छा स्यात् तदा व्यतीहारः प्रसज्यते परस्परमेकजातीयक्रियाकरणं प्रसक्तं भविष्यति। तस्मिन् विषये गुरुलघुरपि को गुरुः को लघुरिति पूर्व्वं चिन्त्यताम्। पक्षे। अरे ! बलात्क ! अरु निःशब्दं यथा तथा एतत् सूत्रं चिन्त्यताम्। चिः १।, स्यात् ८।, (चेत् १) व्यतीहारः १।, प्रसज्यते ८।, तस्मिन् ७।, लघुः १।, गुरुः १।, (इति) पूर्व्वे ७।, (एव) विचिन्त्यताम् ८। ॥ ४५ ॥

### व्याकरणम्।

संख्योपमानाच्च। त्रिपात्। व्याघ्रपात्। "संख्यासूपमानात् पात् पादोऽहस्त्यादेः।" मुं। "पादस्य लोपोऽऽस्त्यादिभ्यः।" पां ॥ ४४ ॥

चिः स्याच्चेद्व्यतीहारः प्रसज्यते तस्मिन् लघुगुरुरिति पूर्व्व एव विचिन्त्यताम्। व्यतीहारप्रसक्तौ चिः स्यात् हि तस्मिंश्च पूर्व्वएव लघुगुरुः स्यादिति चिन्त्यताम् ॥ ४५ ॥

नाचित्वा वा बलं योग्यं प्रवर्त्तेरन् महाबलैः ।
हस्ताहस्ती नीतिविदो बलं योग्यञ्च नेच्यते ॥ ४६ ॥
मुष्टामुष्टिः केवलं न बाहाबाहविरप्युत ।
बाणाबाणिरस्यासिश्च आक्रन्दः प्रतिपत्स्यते ॥ ४७ ॥
एवं तेऽहं संविभाव्य प्रोक्तवान् ज्ञानिनां वर ! ।
समाहितेन मनसा विधेयं तत्र चिन्त्यताम् ॥ ४८ ॥

नाचीति । नीतिविदः क्षत्रियाः योग्यं समर्थं बलं सेनां अचित्वा सञ्चयमकृत्वा महाबलैः सह हस्ताहस्ती अर्थात् युद्धे न प्रवर्त्तेरन् योग्यं बलञ्च नेच्यते मयेति शेषः । पक्षे । बलमित्यादिकं ज्ञं । नाचि ७।, (तु १।) आ १।, वा १।, ॥ ४६ ॥

मुष्टेति । केवलं मुष्टामुष्टिर्न मुष्टिभिः मुष्टिभिः प्रहृत्य युद्धं न । उत अपि बाहाबाहविरपि न । बाणाबाणिः असिरसिश्च आक्रन्दः दारुणं युद्धं प्रतिपत्स्यते ॥ ४७ ॥

व्याकरणम् ।

नाचि त्वावा । अनचि परे आः स्यात्हा । हस्ताहस्ती ॥ ४६ ॥

मुष्टामुष्टिः, बाहाबाहविः । एवं मुष्टीमुष्टिः, बाहूबाहविः, बाणाबाणिः । अचि तु । असखिः । "व्यतीहारे चिः पूर्व्वोर्घोऽनच्या वा ॥" सु ॥ ४७ ॥

एवं ते हं सं विभाव्य प्रोक्तवान् विधेयं तत्र चिन्त्यताम् । हं बहुव्रीहिम् ॥ ४८ ॥

*॥ इति बहुव्रीहिसंग्रहः ॥ ० ॥ ● ॥*

अथ राजा मन्त्रिणं प्रत्याह । अहो मन्त्रिन् ! अधुना किं कर्त्तव्यम् । (मन्त्री तं प्रति) राजन् ! श्रोतव्यम् । यद्यपि ।

क्षत्रा राजकनीतिज्ञा नते वयसि साहसे ।
निरस्ताः पौरुषे ये ये भजन्ते तेऽपि पौरुषम् ।
द्वितीयदशया युक्ता इव प्राप्ते रणोत्सवे ॥ १ ॥

एवमेव क्षत्रियाणां धर्म्मः । क्षत्रिया युद्धमेव स्पृहयन्ति यतः ।

राजा युद्धे जयी राज्यं लभते निहतो दिवम् । इत्युक्तम् । तथा
राजनामजातितोऽन्ये प्रवर्त्तन्ते च पौरुषे ।
ते परेतत्वेन गण्या राज्ञां युधशास्त्रवेदिनाम् ॥ २ ॥

क्षत्रा इति । राजकनीतिज्ञाः राजसम्बन्धिनीतिविदः ये ये क्षत्राः क्षत्रियाः परिणते वयसि साहसे सहो बलं तत्साध्यकर्म्मणि पौरुषे शौर्य्ये च निरस्ता आसन् तेऽपि क्षत्रियाः रणोत्सवे युद्धोत्सवे प्राप्ते उपस्थिते सति द्वितीयदशया द्वितीयावस्थया युक्ता इव अर्थात् यौवनयुक्ता इव पौरुषं भजन्ते आश्रयन्ति । पक्षे । राजकनीतिज्ञा इत्यादिकमुदाहरणम् । इसे ७।, निरस्ताः १॥, पौरुषे ७।, ये १॥, ये ७।, भजन्ते ८।॥, ते १॥, (अपि) पौरुषम् २।, ॥ १ ॥

राजेति । राजनामजातितः राजा क्षत्रियः तन्नाम्नी या जातिः अर्थात् क्षत्रियजातिः तदन्ये तद्भिन्नाः अर्थात् दैत्यराक्षसादयः पौरुषे शौर्य्ये प्रवर्त्तन्ते च प्रवृत्ता भवन्ति च ते दैत्यादयः युद्धशास्त्रवेदिनां राज्ञां क्षत्रियाणां परेतत्वेन मृतत्वेन गण्याः अर्थात् दैत्यादयः

व्याकरणम् ।

इसे निरस्ताः पौरुषे ये ये भजन्ते तेऽपि पौरुषम् । ये शब्दाः इसे बहुव्रीहिसमासे पौरुषे पुम्भावे निरस्ताः अर्थात् कोङाद्याः तेऽपि शब्दाः ये कर्म्मधारये पौरुषं पुम्भावं भजन्ते । राजकनीतिज्ञाः । द्वितीयदशया । कोङादि पुवत् यजातीय देशीये तत्वे त्वजात्याख्यः । मुं ॥ १ ॥

नाम जातितोऽन्ये प्रवर्त्तन्ते च पौरुषे ते परे तत्वे । संज्ञा जातिभ्यां भिन्नाः शब्दा पौरुषे पुंभावे प्रवर्त्तन्ते तत्वे तद्धिते परे । गायकत्वं, नर्त्तकत्वे, रूपवत्त्वे महत्तराः ॥ २ ॥

क्षत्रिया एव युद्धशास्त्रवेदिनो वीराश्च नान्ये। तथापि तस्मिन् महासुरे साहसो न युज्यते। तस्मादुपायेनैव कार्य्यं साधनीयम्। तस्मात् सम्प्रति।

गायकत्वे नर्त्तकत्वे रूपवत्त्वे महत्तमाः।
काश्मीरगणिका जात्या यवनीः कियतीर्नृप।
आनयस्वाचिरादिष्टं ताभिरेव हि सेत्स्यति॥ ३॥
यासां रूपवचस्तौर्य्यत्रिकचातुर्य्यविस्मिताः।
काश्मीरयवनीत्वं ता वाञ्छन्त्यप्सरसो भुवि॥ ४॥

अधुना तु ताः गणिकाः प्राज्ञेन शिवनाट्यं शिक्षय। अनन्तरं विधेयं वक्ष्यामि। (राजा मन्त्रिणं प्रति) अहो किमेतेन बह्वायासेन। बाहुबलेनैव तत् कार्य्यं साधयिष्ये।

मृत्युतुल्या मन्यन्ते। पक्षे। राजेति सम्बोधनम्। नामजातितः ५॥, अन्ये १॥, प्रवर्त्तन्ते ८॥, (च) पौरुषे ७।, ते १॥, परे ७।, तले ७।, ॥ २॥

गायकेति। गायिकाया भावः गायकत्वं नर्त्तक्याः भावः नर्त्तकत्वम्। इयमासामतिशयेन महतीति महत्तमाः। अन्यत् सुगमम्॥ ३॥

यासामिति। यासां काश्मीरगणिकानाम्। तौर्य्यत्रिकं नृत्यगीतवाद्यम्। ताः प्रसिद्धाः अप्सरसः॥ ४॥

त्रिदशेति। त्रिदशाद्याः अर्थात् इन्द्राद्याः दिक्पा दिगीशाः अष्टौ अष्टाधिका वा चेत् यदि परे भवन्तः स्युः तथापि मम भीर्भीतिर्नस्यात्। ते कीदृशाः अष्टादशाक्षौहिणीभिः सह वर्त्तमानाः अष्टा इति अष्टौ शब्दस्य औकारस्य आवि वकारस्य लोपे अष्टा इति। त्रिदशाद्याः ५॥, परे ७।, स्युः ८॥, (चेत्) अष्टाः १॥, अष्टाधिकाः १॥, ॥ ५॥

व्याकरणम्।

गायकत्वे। नर्त्तकत्वे। रूपवत्त्वे। महत्तमाः॥ ३॥

जातिः किम्। यवनीत्वम्॥ ४॥

त्रिदशाद्याः परे स्युश्चेदष्टा अष्टाधिकाः। अष्टाधिकशब्दाः अष्टा भवन्ति यदि दशादि

त्रिदशाद्याः परे स्युस्तेदष्टा अष्टाधिका अपि।
दिक्पाः साष्टादशाक्षौहिणिका नो भौस्तथापि मे ॥ ५ ॥
सैकत्रयोदशौकःसु त्राणमारण ईश्वराः।
त्रयश्च त्रिदशाद्येषु त्र्यधिको दृश्यते ननु ॥ ६ ॥
रक्षोऽसुरौ हि बलिनौ द्वा एवं द्व्यधिको ननु।
नाशौ तौ परतोऽबाधो ममासिर्द्वादशार्ककृक् ॥ ७ ॥

(मन्त्री। श्रुतं मया।)

सैकेति। त्रिदशादिषु मध्ये त्रय एव अर्थात् ब्रह्मविष्णुशिवाः सैकत्रयोदशौकःसु एकेन सह वर्त्तमानेषु ओकःसु भुवनेषु अर्थात् चतुर्द्दशभुवनेषु त्राणे मारणे च ईश्वराः समर्थाः। त्र्यधिको नास्ति। पक्षे। सैकेत्यादिकमुदाहरणम्। त्रयः १।, (च) त्रिदशाद्येषु ७॥, त्र्यधिकः १।, दृश्यते ८।, ॥ ६ ॥

रक्ष इति। रक्षोऽसुरौ हि राक्षसदैत्यौ एव द्वौ बलिनौ नु भोः द्व्यधिको न दृश्यते। द्वादशार्ककृक् परतः अन्येभ्यः अबाधः बाधारहितश्च मम असिः तौ रक्षोऽसुरौ नाशौ नाशको भविष्यति। नाशौति भविष्यदर्थे णिन्। पक्षे। रक्ष इत्यादिकमुदाहरणवाक्यम्। द्वाः १।, (एवं १) द्व्यधिकः १।, न १।, अशीतौ ७।, परतः ७।, वा १।, ॥७॥

व्याकरणम्।

त्रिकशब्दाः परे स्युः। व्यक्त्यभिप्रायेण बहुवचनम्। अष्टादशाक्षौहिणिकाः। "द्वित्र्यष्टाधिका द्वात्रयोऽष्टास्त्रिदशाद्येऽन्यषट्के त्वनशीतौ वा।" सुं ॥ ५ ॥

त्रयश्च त्रिदशाद्येषु त्र्यधिको दृश्यते। त्रिदशाद्येषु परेषु त्र्यधिकशब्दः त्रयस् स्यात् इति दृश्यते। सैकत्रयोदशौकःसु ॥ ६ ॥

द्वा एवं द्व्यधिकः नाशीतौ परतो वा। दशादित्रिके द्व्यधिको द्वा स्यात् परतः परषट्के वा। अशीतौ न। द्वादशार्ककृक् ॥ ७ ॥

वेतालाश्च द्विपञ्चाशत् द्वाषष्टिर्ब्रह्मराक्षसाः ।
द्वशीति भैरवास्तस्य पुरपाः शिवपार्श्वदाः ॥ ८ ॥

तस्मादुपायेनैव तत् साधनीयम् । भृगुः ।

तथाकरोत् मद्रराजः स मन्त्रिवचसा तुषः ।
प्रत्ययोऽस्ति तत्पुरुषगेये राज्ञः सदैव हि ॥ ९ ॥
मते क्रतौ मन्त्रिसखा सख्युरह्नश्चयात्यये ।
नार्थ्यो सुशिक्षितास्ताश्च ज्ञात्वाह स्वसखं नृपः ॥ १० ॥

वेताला इति । तस्य पुरपाः तस्य असुरस्य पुरपालकाः । अन्यत् सुगमम् । पक्षे । सूत्रस्य उदाहरणम् ॥ ८ ॥

तथेति । मन्त्रिणो वचसा तुष्यतीति मन्त्रिवचसा तुषः स मद्रदेशीयो राजा तथा मन्त्रिणोक्तं अकरोत् । हि यस्मात् तत्पुरुषगेये तत्पुरुषस्य मन्त्रिणोगेये वचसि राज्ञः सर्व्वदैव प्रत्ययोऽस्ति । पक्षे । तथाकरोन्मद्रराज इति उदाहरणम् । षः १।, प्रत्ययः १।, अस्ति ८।, तत्पुरुषगे ७।, ये ७।, राज्ञः ५।, (सदा एव) ॥ ९ ॥

मत इति । मन्त्रिसखा नृपः सख्युर्मन्त्रिणः मते क्रतौ मतकारी अह्नश्चयात्यये दिवससमूहस्य अत्यये गते ताः गणिकाः नार्थ्यो सुशिक्षिताः ज्ञात्वा स्वसखं स्वस्य सखायं मन्त्रिणं आह । पक्षे । मतेक्रतीत्यादिकमुदाहरणघटितवाक्यम् । सख्युः ५।, अह्नः ५। (च १) ॥ १० ॥

व्याकरणम् ।

द्विपञ्चाशत् द्वाषष्टिः द्व्यशीतिः ॥ ८ ॥

षः प्रत्ययोऽस्ति तत्पुरुषगे ये राज्ञः सदैव । राज्ञः षः प्रत्ययः स्यात् तत्पुरुषे ये गे च । मद्रराजः ॥ ९ ॥

सख्युरह्नश्च । स्वसखम् । बहुव्रीहौ तु मन्त्रिसखा । "राजाहःसखिभ्यष्टच् ।" पा । "सख्यह्नोराज्ञः षः षगे च ।" मु ॥ १० ॥

अह्नः पूर्व्वाद्येकदेशादह्नो भागः परः परः ।
वर्द्धते यातिकृच्छ्रेणापराह्णो नैव शर्व्वरी ॥ ११ ॥
षण्मासमंख्या संख्यातादह्नोऽह्नो द्वितयं गतम् ।
कृच्छ्रात् तन्न सहे कालं द्व्यह्नो वर्षायितः स मे ॥ १२ ॥
अथैवमत्यधीरं नृपमागत्य पुरोहित आह ।
सर्व्वतोऽव्याच्च सर्व्वाह्णे सायाह्नव्यह्नयोरपि ।
जले स्थले खे काली त्वां त्वन्मनोरथसाधिनी ॥ १३ ॥

अह्न इति । अह्नो दिवसस्य पूर्व्वाद्येकदेशात् पूर्व्वप्रहरादिरूपैकभागात् परः परः अह्नोभागः दिवसस्य भागो वर्द्धते । अपराह्णः कृच्छ्रेण कष्टेन याति शर्व्वरी रात्रिनैव याति । अत्यधीरस्य कालान्तराऽसहिष्णुत्वात् । पक्षे । भाग इत्यादिकमुदाहरणघटितवाक्यम् । पूर्व्वाद्येकदेशात् ५।, अह्नः ६।, अह्नः १।, ॥ ११ ॥

षण्मासेति । षण्मासमंख्यया संख्यातादह्नोऽतिरिक्तं अह्नोदिवसस्य द्वितयं कृच्छ्रेण कष्टेन गतम् । तत् तस्मात् कालं न सहे । स द्व्यह्नः मे मम सम्बन्धे वर्षायितः वत्सरसमोऽभूत् । पक्षे । षण्मास इति कस्य च सम्बोधनम् । संख्यासंख्यातात् ५।, अह्नः ६।, अह्नः १।, ॥ १२ ॥

सर्व्वत इति । काली तव मनोरथसाधिनी सती त्वां सर्व्वतः सर्व्वत्र सर्व्वाह्णादौ जलादौ च अव्यात् रक्षतु । पक्षे । सर्व्वाह्ण इत्यादिकमुदाहरणम् । सर्व्वतः ५।, व्यात् ५।, (च) ॥ १३ ॥

व्याकरणम् ।

अह्नः पूर्वाद्येकदेशादह्नः । पूर्वाद्येकदेशादहन्शब्दस्य अह्नः स्यात् । अपराह्णः ॥ ११ ॥
संख्या संख्यातादह्नोऽह्नः । आभ्यामपि अहन्शब्दस्य अह्नः स्यात् । द्व्यह्नः । "सर्व्वैकदेशसंख्यातसंख्याव्ययात् पुण्यकादेकोऽह्नोऽह्नः ।" मुं ॥ १२ ॥
सर्वतो व्याच्च । सर्वशब्दादव्ययाच्च अह्नोऽह्नः स्यात् । सर्व्वाह्णे, सायाह्नव्यह्नयोः ॥ १३ ॥

संख्याताङ्कान् कथमपि गमयानाट्यसिद्धितः।
सङ्कल्पलीलारभसैर्दिनं प्रौढ़बधूरिव ॥ १४ ॥
सत्सामग्र्यसमाहारे एकतोऽपि न जायते।
कार्य्यसिद्धिर्नचैकाहादतः कालः प्रतीच्यताम् ॥ १५ ॥

इत्युक्त्वा स गतः।

एवं गते बह्वह्नेऽथागत्य भूयोऽस्य ऋत्विजः।
मन्त्रिणश्च तमाशीर्भिः संयोज्योचुरिदं वचः ॥ १६ ॥
गच्छेः स्वगणमूर्द्धण्यः प्राग्वाह्नोऽतश्च नो नृप !
श्राम्येः प्राह्णे प्लवैर्मध्ये सदालापैः परं नयैः ॥ १७ ॥

संख्यातेति। आनाट्यसिद्धितः नाट्यसिद्धिपर्य्यन्तं कथमपि कष्टेन संख्याताङ्कान् संख्यातदिवसानि गमय यापय। सङ्कल्पलीलारभसैः मनोगतलीलाहर्षैः प्रौढ़बधूर्यथा दिनं यापयति तथा दिनानि यापय। पद्ये। उदाहरणमात्रम् ॥ १४ ॥

सदिति। सत्या सामग्र्याः असमाहारे असंग्रहे कार्य्यसिद्धिर्न स्यात्। एकतः एकस्मात् कारणात् एकजनाद्वा तथा एकाहाद्वा कार्य्यसिद्धिर्न जायते। अतः कालः प्रतीच्यताम्। पद्ये। सत्सामग्र्य इति सत्प्रशस्तं सामग्र्यं सकलं यस्य तादृशस्य सम्बोधनम्। समाहारे ७।, एकतः ५', (अपि) न १', जायते ८।, ॥ १५ ॥

एवमिति सुगमम् ॥ १६ ॥

गच्छेरिति। स्वकीयगणस्य मूर्द्धण्यः अग्रगण्यः सन् अह्नः प्रागेव अर्थात् पूर्व्वाह्णे एव गच्छेः अतः परं न गच्छेः। प्राह्णे पूर्व्वाह्णे एव श्राम्येः परिश्रमं कुर्य्याः। मध्याह्ने

व्याकरणम्।

संख्याताङ्कान् ॥ १४ ॥

समाहारे एकतोऽपि न जायते। समाहारे तथा एकशब्दाच्च अह्नोऽह्नो न स्यात्। एकाहात् ॥ १५ ॥

बह्वहे ॥ १६ ॥

मूर्द्धण्यः प्राग्वाऽह्नोऽतस्तु नः। प्राग्वा पूर्व्ववत् अकारात् अह्नो नकारो मूर्द्धण्यः स्यात्। प्राह्णे ॥ १७ ॥

अथ स राजा ताः नर्त्तकयवनीः संगृह्य ताभिः सह प्रतस्थे।

स्ववीर्य्यवृद्धान्महत उक्ष्णः प्रति यथा द्रुतः।
महोक्षो याति दुर्द्धर्षो नृपोऽगादसुरं प्रति॥ १८॥
सृतौ च सर्व्वतो रात्रेः प्रथमप्रहरान्तरे।
कृत्वावश्यं नाटकेन सर्व्वरात्रं निनाय सः॥ १९॥
भारताख्यदीर्घपुण्यवर्षैकदेशतोऽपि सः।
वर्षारात्रानतिक्रम्य पुण्यरात्रेऽब्धिमाप्तवान्॥ २०

त्वैः स्नानं कुर्य्याः। शिष्टालापैः परं कालं नयेः यापयेः। पद्ये। स्वगयेति सम्बोधनम्। अन्यदुदाहरणवाक्यम्। मूर्द्धण्यः १।, प्राग्वा १।, अङ्गः ६।, अतः ५।, (तु) नः १।, ॥ १७॥

स्ववीर्य्येति। महोक्षो महावृषः स्ववीर्य्यवृद्धान् निजबलप्रभावेन प्रवृद्धान् महतः अत्युच्चान् उक्ष्णः वृषभान् प्रति द्रुतः धावित सन् यथा याति तथा दुर्द्धर्षो नृपः सुमतिः असुरं धूम्राक्षं प्रति अगात् इत्यन्वयः। पद्ये। स्ववीर्य्येति सम्बोधनम्। वृद्धात् ५।, महतः ५।, उक्ष्णः ५।, ॥ १८॥

सृताविति। सृतौ पथि सर्वतः सर्वत्र रात्रेः प्रथमप्रहरमध्ये आवश्यकं कर्म्म कृत्वा स राजा नाटकेन सर्वरात्रं निनाय। पन्थानः पदवी सृतिरित्यमरः। पद्ये। सृताविल्यादिकमुदाहरणघटितवाक्यम्। सर्व्वतः ५।, रात्रेः ५।, ॥ १९॥

भारतेति। भारतनामकं यत् दीर्घं पुण्यञ्च वर्षं तस्यैकदेशे अर्थात् भारतवर्षस्यैकदेशे वर्षारात्रान् अतिक्रम्य पुण्यरात्रे समुद्रं प्राप्तवान्। पद्ये। भारताख्येति सम्बोधनम्। दीर्घपुण्यवर्षैकदेशतः ५।, (अपि १)॥ २०॥

व्याकरणम्।

वृद्धान्महत उक्ष्णः। आभ्यां उक्ष्णः षः स्यात्। महोक्षः॥ १८॥

सर्वतो रात्रेः। सर्वरात्रम्॥ १९॥

दीर्घपुण्यवर्षैकदेशतोऽपि। एभ्योऽपि रात्रेः षः स्यात्। एकदेशः रात्रेरेकैकदेशे वर्त्तमानः पूर्वादिः। वर्षारात्रान्, पुण्यरात्रे॥ २०॥

नियुक् सदा तद्धितार्थे गोः पुरोधा ऋचोऽपठत् ।
दैत्याचार्य्यत्विषा ध्वस्तस्वगवो रहसि स्थितः ॥ २१ ॥

---

अथ राजा समुद्रमुत्तीर्य्य तस्यासुरस्य नगरं ददर्श ।

यदधस्तादूर्द्धगामि अव्ययं क्रतुभुक् पुरम् ।
हसतीन्द्रारिनगरं मध्येरत्नाकरं स्थितम् ॥ १ ॥

नियुगिति । गोः स्वर्गस्य पुरोधाः बृहस्पतिः नियुक् नियुक्तः सन् तद्धितार्थे तस्य राज्ञो हितार्थे रहसि स्थितः सन् ऋचोवेदान् अपठत् । कीदृशः दैत्याचार्य्यस्य शुक्रस्य त्विषा तेजसा ध्वस्तः स्वगवः स्वीयकिरणो यस्य स तथा । पक्षे । नियुगिति सम्बोधनम् । अतद्धितार्थे ७, गोः ५।, ॥ २१ ॥

---

यदधस्तादिति । यत् इन्द्रारिनगरं असुरस्य पुरं अधस्तादपि नीचस्थमपि ऊर्द्ध-गामि अपि अव्ययं अविनाशि यत् क्रतुभुक् पुरं क्रतुभुजां देवानां नगरं तत् उपहसति । कीदृशं दैत्यपुरं रत्नाकरस्य मध्ये स्थितम् । अत्र स्वर्गस्य उपहसनीयत्वे अव्ययपदं व्यङ्ग्य दानरहितत्वं हेतुः । तथा क्रतुभुक् पुरमित्यनेन देवानां परगृहे यज्ञान्नभोजि-त्वोक्त्या निःस्वत्वं व्यज्यते तदपि उपहसनीयत्वे हेतुः । मध्ये रत्नाकरं स्थितमित्यनेन दैत्यपुरस्य रत्नवत्त्वं सूचितम् । पक्षे । क्रतुभुगित्यादिकमुदाहरणघटितवाक्यम् । यत् १।, अधस्तात् १।, ऊर्द्धगामि १।, अव्ययम् १।, ॥ १ ॥

व्याकरणम् ।

अतद्धितार्थे गोः । गोशब्दात् षः स्यात् ये चे गो तद्धितार्थेद्विगौ न । स्वगवः ॥२१॥

* ॥ ० ॥ इति यः ॥ ० ॥—

अतिनाकं शिवत्रातं सुरवैरिहितं महत् ।
रत्नाकरोत्थितमिव श्रीनिवासः पुरोत्तमम् ॥ २ ॥
क्ष्माभुक् ततोऽव्ययाद्रात्रेरस्थिरोदय आगते ।
अतिरात्रे सुसमये शाखानगरमुत्तमम् ॥ ३ ॥
अथैवं लोकसंख्यातस्तथा नाट्येन रञ्जयन् ।
पौरान् त्रिरात्रमवसत् स तत्रातिपुरस्कृतः ॥ ४ ॥

अतिनाकमिति । नाकं स्वर्गमतिक्रान्तम् । शिवेन त्रातम् । सुरवैरिभ्यो हितम् । रत्नाकरात् उत्थितमिव । श्रिया निवासः । पुरेषु उत्तमम् । पद्ये । उदाहरणम् ॥ २ ॥

क्ष्माभुगिति । ततस्तदनन्तरं क्ष्माभुक् राजा रात्रे अस्थिरोदये अस्थिरे लग्ने अर्थात् चरलग्ने अतिरात्रे रात्रिमतिक्रान्ते सुसमये उत्तमं शाखानगरं अव्ययात् गतवान् । पद्ये । क्ष्माभुगिति सम्बोधनम् । अव्ययात् ५।, रात्रेः ५।, अः १।, ॥ ३ ॥

अथैवमिति । अथानन्तरं लोकेषु संख्यातः सम्यक्-ख्यातो राजा तथा नाट्येन पौरान् रञ्जयन् सन् तत्र शाखानगरे अतिपुरस्कृतः सन् त्रिरात्रमवसत् । पद्ये । लोकेति सम्बोधनम् । संख्यातः ५।, (तथा १।,) ॥ ४ ॥

व्याकरणम् ।

यदधस्तादूर्द्धगामि अव्ययम् । यदव्ययं स्वभावतोऽधस्तात् परत्र स्थायि तदूर्द्धगामि पूर्वगामि स्यात् । मध्ये रत्नाकरम् ॥ १ ॥

अतिनाकं, शिवत्रातं, सुरवैरिहितं, रत्नाकरादुत्थितं,श्रीनिवासः, पुरोत्तमम् । एतानि षड्धा तत्पुरुषोदाहरणानि ॥ २ ॥

अव्ययात् रात्रेरः । ये घे अतद्धितार्थेगे इत्यनुवर्त्तते । अतिरात्रे ॥ ३ ॥

संख्यातस्तथा । त्रिरात्रम् । "तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ।" पा । "संख्याव्यादेश्चाङ्गुलिभ्यामः ।" मु ॥ ४ ॥

*॥ इति तत्पुरुषसमासः ॥ ० ॥ ० ॥—

तद्धिताऽर्थोत्तरपदसमाहारेऽभवन्नर: ।
त्रिविधोऽद्विगुरस्ति स्म त्रिकालं तद्वचो विना ॥ १ ॥
त्रिदिनं व्रतमास्थाय शैवं लिङ्गं प्रपूजयन् ।
नत्वा स्तुत्वा त्रिसन्ध्यं स इदमाह महीपति: ॥ २ ॥

यद्भयात्तव परिजन: सहस्रगवभूषणप्रमुखसुरगणो दिवोऽन्तर्दधे द्विजगोहितार्थोऽपि अपत्यार्थतल्पादिकं विहाय अजाद्य तद्धितार्थे वाच्ये तस्य विषयोऽपि च भवन् दृश्यते सुकृतिभिर्द्विविध एव भवान् सदयो निर्दयश्च सदैव तस्य द्वारि वसति च पञ्चगुर्निर्योज्य इव । तव समीहितं को वेद ॥ ३ ॥

ताद्धितेति । तद्धितार्थाय तस्य राज्ञो हितार्थं उत्तरपदसमाहारे उत्तरं उत्तमं यत् पदं यत् वस्तु तस्य समाहारे आसादने त्रिविधो नर: अभवत् आसीत् । त्रिकालं तद्वचो विना तस्य राज्ञो वाक्यं विना अद्विगु: अस्ति स्म न स्तो द्वौ गावौ वाक्ये यस्य स तथा द्विवाक्यरहित इत्यर्थ: । उत्तरन्तूत्तमे त्रिषु । पदं व्यवसिते त्राणस्थानलक्ष्माङ्घ्रि वस्तुषु इति अमर: । तद्धितार्थोत्तरपदसमाहारे ७।, भवन् १।, नर: । १॥, त्रिविध: १।, द्विगु: १।, अस्ति ८।, ॥ १ ॥

त्रिदिनमिति । त्रिदिनसाध्यं व्रतं आस्थाय गृहीत्वा अन्यत् सुगमम् ॥ २ ॥

यद्भयादिति । यद्भयात् यस्य असुरस्य भयात् तव परिजन: सहस्रं गावश्चक्षूंषि भूषणं यस्य स सहस्रगवभूषण इन्द्रस्तत् प्रभृतिसुरगण: द्विजगोहितमेव अर्थ: प्रयोजनं यस्य तादृशोऽपि दिव: स्वर्गात् अन्तर्दधे पलायित: । किं कृत्वा अपत्यानि अर्थतल्पादिकं धनसमूहादिकञ्च विहाय । हे अज ! शिव ! अद्य तद्धितार्थे तस्यासुरस्य वाच्ये गर्हणीये

व्याकरणम् ।

तद्धितार्थोत्तरपदसमाहारे भवन्नर: त्रिविधो द्विगुरस्ति । नर इति पुंसां सम्बोधनम् । त्रिकालम् । त्रिदिनं त्रिसन्ध्यम् ॥ २ ॥

देवसेनापतेः षाण्मातुरस्याप्यवसीदतः ।
षड़ानन्यां परिम्लानिं त्रिलोचन ! न पश्यसि ॥ ४ ॥

तत् प्रसीदेश यथा कार्य्याणि साधये ।
(भृगुराह ।) इत्थं विराव स वसन् लोकान् नाम्नेन रञ्जयन् ।
लेभे बहु-धनं राजा तज्जल्पोऽभूच्च सर्व्वतः ॥ ५ ॥

अथ सखीगणः सुलोचनां प्रत्याह । सखि ! शाखानगरे प्रतिनिशं शिवनाथं पुरवासिनः पश्यन्तीति सर्व्वे जना वदन्ति वयमपि तत् द्रष्टुमिच्छामः । सुलोचना आह । मन्त्रिणो मुखात् श्रुतश्चैतत् मम प्रत्ययो जायते । ( सखीगणस्तां प्रति । )

तस्य विषये पुरीरूपदेशे हे भव ! सुकृतिभिर्जनैर्दृश्यते भवान् न सदयो निर्दयश्चेति द्विविधः । सदैव तस्य द्वारि तस्यासुरस्य द्वारे पञ्चगुर्नियोज्य इव पञ्चभिर्गोभिः क्रीतः किङ्कर इव सर्व्वदा वसति च भवान् । तव समीहितं को जनो वेद को जानाति ॥३॥

देवसेनेति । अवसीदतः देवसेनापतेः षाण्मातुरस्य कार्त्तिकेयस्य षड़ानन्यां षणां आननानां सम्बन्धिनीं म्लानीं न पश्यसि ॥ ४ ॥

तदिति सुगमम् ॥ ५ ॥

व्याकरणम् ।

गोहितार्थोऽपि अपत्यार्थतस्यादिकं विहाय अजाद्यतद्धितार्थे वाच्ये तस्य विषयेऽपि च भवन् दृश्यते सुकृतिभिर्द्विविध एव । तार्थोऽपि तद्धितार्थोऽपि गोर्हि द्विगुस्तु अपत्यार्थकतद्धितप्रत्ययादिकं विहाय त्यक्त्वा अजादितद्धितार्थे वाच्ये तस्य अजादेर्हसादेर्वा तद्धितस्य विषयेऽपि च भवन् द्विविध एव सुकृतिभिः पण्डितैर्दृश्यते । पञ्चभिः गोभिः क्रीत इति पञ्चगुः ॥ ३ ॥

अपत्यार्थे इति किं षाण्मातुरस्य । अजादेरिति किं षड़ानन्यां म्लानिम् ॥ ४ ॥

विरावम् । बहुधनम् ॥ ५ ॥

दशपुरुषीवागैक्ये भवती यतो पात्रसुखात् श्रुतिं विना।
प्रत्येति न त्रिभुवने न तवाप्तोऽस्ति पात्रादन्यः॥ ६॥
त्रिलोकीजनकाम्यं तत् शिवनाथ्यं महाद्भुतम्।
त्वद्द्वारि पौराः पश्यन्ति न दृष्टं न श्रुतं त्वया॥ ७॥
एतत् श्रुत्वासुरी ताभिर्लङ्घयित्वा चतुष्पथम्।
अर्घत्रिपात्रमादाय ययौ सा शिवसन्निधिम्॥ ८॥
त्रियुगेशमथाभ्यर्च्य गललग्नीकृताञ्चला।
नत्वा स्तुत्वा परिक्रम्य तस्थावग्रे कृताञ्जलिः॥ ९॥

दशेति। दशपुरुषीवागैक्ये दशानां पुरुषाणां वाक्यस्यैक्येऽपि सति यतः खिट्टे-त्वभी भवती पात्रसुखात् श्रुतिं श्रवणं विना न प्रत्येति प्रत्ययं न करोषि। पात्रात् मन्त्रिणोऽन्यः कोऽपि जनः त्रिभुवने तव आप्तः प्रत्ययितो नास्ति। पक्षे। त्रिपुरुषी-त्युदाहरणम्। वाकारोऽवधारणे पादपूरणे वा। गैक्ये ७।, भवति ८।, ईप् १।, अतः ५।, अपात्रसुखात् ५।, ॥ ६॥

त्रिलोकीति। सुगमम्॥ ७॥

एतत्श्रुत्वेति। सा आसुरी असुरस्य कन्या ताभिः सखीभिः चतुष्पथं लङ्घयित्वा अर्घस्य त्रिपात्रं आदाय शिवस्य सन्निधिं ययौ॥ ८॥

त्रियुगेशमिति। त्रियुगेशं शिवम्। अन्यत् सुगमम्॥ ९॥

व्याकरणम्।

गैक्ये भवतीप् अतोऽपात्रसुखात्। गैक्यादकारान्तात् ईप् स्यात् न तु पात्रादेः। दशपुरुषी। पात्रादेः किं त्रिभुवने। "द्विगोः।" पा। "गैक्याददतोऽपात्रादेरीप्।" सु॥ ६॥

त्रिलोकी॥ ७॥

चतुष्पथम्। त्रिरात्रम्॥ ८॥

त्रियुगेशम्॥ ९॥

अथ शिवः सुलोचनां प्रति । किमर्थयसे ? सा तं प्रति ।

अनापो वाऽस्ति कोऽर्थो मे यदभीष्टप्रदो भवान् ।
पुरपालीकृतः पित्रा शतजन्मीतपः फलैः ॥ १० ॥
शिवनाट्यं बहुनिशं जायते मत्पुराद्वहिः ।
शतकर्म्म प्रोज्झ्य पौरैस्तत्क्षणैर्नीयते निशा ॥ ११ ॥
शतयोषी द्रष्टुकामा मामुपास्ते त्वहं शिव ! ।
आनये पुरमध्ये तदनुजानाति चेद्भवान् ॥ १२ ॥

(भृगुराह ।) सदा सतस्तद्धितार्थे मितवाचिन ईशितुः ।
तां प्रत्यासीत् सम्मवर्णी पितुर्म्मत्यानयेति वाक् ॥१३॥

अनापो वेति । को वा अर्थः कः पुरुषार्थो वा मे मम अनवापोऽनवाप्योऽस्ति अपि तु न कोऽपि अर्थोऽप्राप्यो नास्ति । यत् यस्मात् मम पित्रा शतजन्मीकृततपसः फलैः भवान् पुरपालीकृतः । कीदृशो भवान् अभीष्टप्रदः । पद्ये । कोऽर्थो मे इत्यादिक-मुदाहरणघटितवाक्यम् । (अन् आपः) अनापः ५१, वा ११, अस्ति ११, ॥ १० ॥

शिवनाट्यमिति । तत्क्षणैस्तन्महोत्सवैः निशा रात्रिर्नीयते । अन्यत् सुगमम् ॥११॥

शतयोषीति । हे शिव ! तत् द्रष्टुकामा शतयोषी शतसंख्यका नारी त्वहं मां उपास्ते मनोपासनां करोति । चेत् यदि भवान् अनुजानाति अनुज्ञां करोति तदा तत् नाट्यं पुरमध्ये आनये । पद्ये । उदाहरणम् ॥ १२ ॥

सदासत इति । तद्धितार्थे तस्याः सुलोचनाया हितार्थे सदा सतो वर्त्तमानस्य मितवाचिनः परिमितवाचिनः ईशितुः शिवस्य पितुर्म्मत्या तव पितुरनुमत्या आनय इति

व्याकरणम् ।

अनापो वास्ति । अनन्तादाबन्ताच्च ईपस्यात् । चकारार्थकवाशब्देन पूर्व्वानुकृष्टः अश्च स्यात् वा । शतजन्मी । "वानापः ।" सुं ॥ १० ॥

बहुनिशं शतकर्म्मम् ॥ ११ ॥

शतयोषी, त्वाहम् ॥ १२ ॥

( सुलोचना शिवं प्रति। )

शैवे क्षेत्रेऽकाण्डतोभीर्नास्ति यत् त्वत् स्मृतेः शिवम्।
स्यादतोऽशीतिकाण्डेयं क्षेत्रभूर्नाशिवा क्वचित्॥ १४॥
पुरुषाद्वा स्त्रिया वापि न बिभेति पिता मम।
त्वदर्पितां द्विपुरुषीं शूलयष्टिं बिभर्त्ति यः॥ १५॥
तनुस्त्रिपुरुषी यस्य विक्रमस्त्वतिपूरुषः।
पुरपालो भवान् यस्य तस्य किं नर्त्तकाद्भयम्॥ १६॥

सप्तवर्णी सप्तवर्णेन परिमिता वाक् वाणी तां सुलोचनां प्रति आविरासीत्। पक्षे। सदासन इत्यादिकमुदाहरणघटितवाक्यत्वेन सार्थकम्। तद्धितार्थे ७।, मितवाचिनः ५।, ॥ १३॥

शैव इति। अस्मिन् शैवे क्षेत्रे अकाण्डतः अमङ्गलतः भीर्भयं नास्ति यत् यस्मात् त्वत् स्मृतेः शिवस्य तव स्मरणात् शिवं मङ्गलं स्यात्। अतो हेतोः इयं अशीतिकाण्ड-परिमिता क्षेत्रभूमिः क्वचिदपि न अशिवा अमङ्गलास्पदम्। पक्षे। शैवे इति सम्बोधनम्। शैविशब्दात् निष्पन्नम्। अक्षेत्रे ७।, काण्डतः ५।, ॥ १४॥

पुरुषादिति। त्वदर्पितां त्वया दत्तां द्विपुरुषीं द्विपुरुषपरिमितां शूलयष्टिं यो धारयति। अन्यत् सुगमम्। पक्षे। स्त्रिया इत्यादिकमुदाहरणघटितवाक्यम्। पुरुषात् ५।, वा १।, ॥ १५॥

व्याकरणम्।

तद्धितार्थे मितवाचिनः। परिमाणवाचकाट्टीप् स्यात् तद्धितार्थद्विगौ। सप्तवर्णी॥१३

अक्षेत्रे काण्डतः। परिमाणवाचकात् काण्डाट्टीप् स्यात् क्षेत्रभिन्नार्थे। अशीति-काण्डा भूः। "काण्डान्तात् क्षेत्रे।" पां। "तार्थे मानात् काण्डात्वक्षेत्रे।" मुं॥१४॥

पुरुषाद्वा। परिमाणवाचकात् पुरुषाट्टीप् स्यात् वा। द्विपुरुषी। "पुरुषात् प्रमाणेऽन्यतरस्याम्।" पां। "पुरुषाद्वा।" मुं॥ १५॥

सुमनोऽञ्जलितो द्वितस्त्रितः क्वचिदो! द्व्यञ्जलवारिणार्चितः।
असि यैः शिव! चिन्त्यसे हृदा विपदः क्वापि च तान् स्पृशन्ति न ॥१७॥
इति स्तुत्वा द्व्यञ्जलिना पुष्पेनाभ्यार्च्य तं पुनः।
पितरं प्राप्य तं नत्वा-नार्चद्व्यञ्जलवारिजैः ॥ १८ ॥
( अथ धूम्राक्षः सुलोचनां प्रति। )

तनुरिति। यस्य मम पितुः तनुस्त्रिपुरुषी पुरुषत्रयपरिमिता विक्रमश्च अतिपूरुषः पुरुषमतिक्रान्तः। अन्यत् सुगमम्। पद्ये। उदाहरणम् ॥ १६ ॥

सुमन इति। द्वितो द्वाभ्यां त्रितः त्रिभिः सुमनोञ्जलितः पुष्पाञ्जलिना यैः क्वचिदपि हे श्री! हे शिव! द्व्यञ्जलवारिणापि अर्चितोऽसि यैरपि हे शिव! हृदा चिन्त्यसे तान् जनान् विपदोऽपि न स्पृशन्ति। पद्ये। सुमन इति सम्बोधनम्। अन्यदुदाहरणम्। अञ्जलितः ५।, द्वितः ५।, त्रितः ५।, क्वचित् ७।, अः १।, ॥ १७ ॥

इति स्तुत्वेति। पितरं प्राप्य तं नत्वा द्व्यञ्जलवारिजैः द्व्यञ्जलिपरिमितपद्मकुसुमैः तं आनर्च पूजयामास सुलोचनेति शेषः। पद्ये। सुबस्य उदाहरणम् ॥ १८ ॥

व्याकरणम्।

त्रिपुरुषी ॥ १६ ॥

अञ्जलितो द्वितस्त्रितः क्वचिदः। द्वित्रिभ्यामञ्जलेरः स्यात् तार्थे मे। द्व्यञ्जलवारिणा ॥ १७ ॥

द्व्यञ्जलिना। द्व्यञ्जलवारिजैः। "द्वित्रिभ्यामञ्जलिः।" पां। "द्वित्रिभ्यामञ्जलेरः।" सुं ॥ १८ ॥

* ॥ इति गः ॥ ० ॥ ० ॥

संदृश्यतेऽव्ययीभावो बहुलार्थेष्वनेकधा।
मयि वस्तत् सुता ब्रूत करिष्ये वो यथोदितम्॥ १॥

कन्या तं प्रति। )

नर्त्त वादनतो लुक् स्याद्यस्याग्रे निखिलापदाम्।
नृत्यैर्गीतैश्चाधिशक्तीशं तं तोषयितुं लषे॥ २॥
अत स्तुमः प्यानमनोरथास्त्वामुपशङ्करात्।
आगतास्तदनुज्ञातास्तत् कुरुष्व यथोचितम्॥ ३॥

संदृश्यत इति। बहुलार्थेषु अनेककार्य्येषु अनेकधा अनेकप्रकारेण वो युष्माकं मयि अव्ययी व्ययरहितो भावो भक्तिः संदृश्यते मयेति शेषः। तत् तस्मात् हे सुताः ब्रूत वो युष्माकं यथोदितं यथोदितमनतिक्रम्य करिष्ये। पक्षे। मयीत्यादिकमुदाहरणघटितवाक्यम्। संदृश्यते ८।, अव्ययीभावः १।, बहुलार्थेषु ७॥, अनेकधा १।, ॥ १॥

नर्त्तेति। यस्य शिवस्य अग्रे नर्त्त वादनतः नृत्यवाद्याभ्यां निखिलानामापदां लुक् नाशः स्यात्। नृत्यैर्गीतैश्च अधिशक्ति यथाशक्ति तं ईशं तोषयितुं लषे इच्छामि। पक्षे। नर्त्तेति सम्बोधनम्। वात् ५।, अनतः ५।, स्याद्यस्य ६।, लुक् १।, ॥ २॥

अतस्तुम इति। अतः कारणात् प्यानमनोरथाः पीनमनोरथाः वयं त्वां स्तुमः। उपशङ्करात् शिवस्य समीपात् तदनुज्ञाताः सत्यः आगताः। तत् कार्य्यं यथोचितं कुरुष्व। पक्षे। मनोरथा इति सम्बोधनं अन्यदुदाहरणम्। अतः ५।, (तु १) मः १।, प्याः ५।, न १।, ॥ ३॥

व्याकरणम्।

संदृश्यतेऽव्ययीभावो बहुलार्थेष्वनेकधा। यथोदितम्॥ १॥

वादनतो लुक् स्याद्यस्य। वात् अव्ययीभावसमासात् अनतोऽकारान्तभिन्नात् परस्य स्यादेर्लुक् स्यात्। अधिशक्ति॥ २॥

अतस्तुमः प्यान। अकारान्तात् वात् स्यादेर्मः स्यात् न तु प्याः पञ्चम्याः। यथोचितम्। उपशङ्करात्॥ ३॥

( असुरस्तां प्रति । )

वत्सा अनुमतावाप्त्यास्त्र्यालोकनपदाञ्जतः ।
तथा कुरुत किं कार्य्यमुपतातमुपेतरैः ॥ ४ ॥
तत् श्रुत्वा ताः पितुरुपपदं नत्वा गृहं गताः ।
प्रेष्यञ्च प्रेषयामासुरुपनाटक कारके ॥ ५ ॥
त्यक्ता समद्रं यवास्ते प्रतीच्याहः शुचं सहः ।
सोऽकाले यत्र फलवत् भवेत् सक्रषिपौरुषम् ॥ ६ ॥

वत्सा इति । हे वत्साः त्र्यालोकनपदाञ्जतः त्रीणि आलोकनानि नेत्राणि यस्य तस्य शिवस्य पदाञ्जात् अनुमतावाप्त्याः अनुमतेरवाप्त्याः प्राप्तेर्हेतोः तथा कुरुत उपतातं तातस्य सामीप्येन उपेतरैः इतरस्य सामीप्यैः किं कार्य्यं किं प्रयोजनमस्ति । पद्ये । वत्साः अनुमताः इति च सम्बोधनम् । वा १।, प्त्याः ६।, त्र्याः ६।, ॥ ४ ॥

तत् श्रुत्वेति । ताः कन्यकाः । पितुरुपपदं पितुः पदस्य समीपे । उपनाटककारके नाव्यकारस्य समीपे । पद्ये । सूत्रस्योदाहरणम् ॥ ५ ॥

त्यक्तेति । स नाव्यकारकः आहः दिनं प्रतीच्य शुचो दुःखस्य सहः सहिष्णुः सन् समद्रं मद्रनामकदेशस्य समृद्धिं त्यक्ता यवास्ते । यत् यस्मात् सक्रषि कृषिकर्मणः सदृशं पौरुषं पुरुषसाध्यं कर्म्म अकालेफलवत् न भवेत्। पद्ये । त्यक्तेत्यादिकमुदाहरणघटितवाक्यम् । सहः ६।, सः १।, अकाले ७।, ॥ ६ ॥

व्याकरणम् ।

वाप्त्यास्त्र्याः । अकारान्तात् वात् त्र्याः सप्तम्याः त्र्याः तृतीयायाश्च मः स्यात्। उपतातम् । उपेतरैः । "तृतीयासप्तम्यो बहुलम् ।" पा । "त्रीप्त्योर्वा ।" मु ॥ ४ ॥

पितुरुपपदम् । उपनाटककारके ॥ ५ ॥

सहः सोऽकाले । सहस्य सः स्यात् न तु काले । समद्रम् । सक्रषि । "अव्ययीभावे चाकाले ।" पा । सहः सोऽकाले । मु ॥ ६ ॥

अथ राजा प्रेष्यमुखात् कन्योक्तं सरसं मुदा ।
श्रुत्वा पुलकिताङ्गोऽभूत् स्वार्थसिद्धिममन्यत ॥ ७ ॥
अथ कालीपदाम्भोजं स्मृत्वाऽसौ निर्ययौ नृपः ।
प्रतिदैत्यपुरं जग्मुर्नर्त्तक्योऽनुनृपं तदा ॥ ८ ॥
तत्रागत्य प्रतिपदं पुरशोभां समीक्ष्य सः ।
मेने सिन्धुगतं स्वर्गबिम्बं तत्पुरमद्भुतम् ॥ ९ ॥
तत्राधिशङ्करं नाट्यमधिशक्ति च गीतकम् ।
समारेभे स यत् दृष्ट्वा मुग्धासीदासुरी सभा ॥ १० ॥
नर्त्तक्यस्ता अनुदिनं अनुगौरि सभैरवि ।
गायन्त्यः प्रतिगानञ्च धन्यवादं प्रपेदिरे ॥ ११ ॥

अथेति । अस्यार्थः सुगमः ॥ ७ ॥

अथेति । स्पष्टम् ॥ ८ ॥

तत्रेति । सिन्धुगतं समुद्रगतं स्वर्गप्रतिबिम्बं मेने । अन्यत् सुगमम् ॥ ९ ॥

तत्राधीति । स राजा तत्र पुरे शङ्करमधिकृत्येति अधिशङ्करं नाट्यं शक्तिं कालीमधिकृत्य इति अधिशक्ति गीतं समारेभे ॥ १० ॥

नर्त्तक्य इति । ताः नर्त्तक्यः अनुदिनं प्रतिदिनं अनुगौरि गौरीं रागिणीमुपक्रम्य सभैरवि भैरवीपर्य्यन्तं गायन्त्यः सत्यः प्रतिगानं गानं गानं प्रति धन्यवादं प्रपेदिरे ॥ ११ ॥

व्याकरणम् ।

सरसम् ॥ ७ ॥

दैत्यपुरमुद्दिश्येति प्रतिदैत्यपुरम् । नृपस्य पश्चादिति अनुनृपम् ॥ ८ ॥

पदं पदं प्रतीति प्रतिपदम् ॥ ९ ॥

शङ्करमधिकृत्य नाट्यमिति अधिशङ्करम् । शक्तिमधिकृत्य इति अधिशक्ति गीतम् ॥ १० ॥

अनुदिनं, अनुगौरि, सभैरवि, प्रतिगानम् ॥ ११ ॥

सस्वलीलं नाटकं तदनुस्वेचणमीश्वरः ।
सन्निधाय प्रतिनिशं शृणोति स्म ददर्श च ॥ १२ ॥
काल्याः सलीलं तन्नाट्यं गीतानि मधुराणि च ।
पश्यतः शृन्वतोऽजस्य भावेनासीदचेतनम् ॥ १३ ॥
रञ्जयन् रसविच्चेतश्चतुरो दिति भूपुरे ।
सोऽवसन्नित्यमीशञ्च आरराध यथाविदम् ॥ १४ ॥
दिवो दिशश्चापदिशादेत्य देवोपदेवताः ।
खस्था अलचिता नित्यं ददृशुर्नाट्यमद्भुतम् ॥ १५ ॥

सस्वलीलमिति । ईश्वरः शिवः प्रतिनिशं सन्निधाय तत् नाटकं शृणोति स्म ददर्श च । कीदृशं सस्वलीलं स्वीयलीलायाः सदृशम् । अनुस्वेचणं स्वस्य ईचणयोग्यम् ॥ १२ ॥

काल्या इति । काल्याः सलीलं लीलायाः सदृशं तन्नाट्यं तस्याः काल्यागीतानि च पश्यतः शृखतोऽजस्य शिवस्य भावेन भक्त्या अचेतनं चेतनाया अभावः आसीत् ॥ १३ ॥

रञ्जयन्निति । चतुरः पटुः स राजा रसविदां चेतो रञ्जयन् सन् दितिभूपुरे दितिसुतस्य पुरे अवसत् । ईशञ्च नित्यं यथाविदं यथाज्ञानं आरराध । पचे । रञ्जयन् ! हे लोकरञ्जनकारिन् ! एतत् सूत्ररसं रस आस्वादय । इति भूपरे इत्यादिकमुदाहरणघटितवाक्यम् । विच्चेतश्चतुरः ५।, अत् १। ॥ २४ ॥

दिव इति । दिवः स्वर्गात् दिशः अपदिशात् दिशोर्मध्यात् देवा उपदेवताश्च एत्य खस्था आकाशस्था नाट्यं ददृशुः । पचे । अपदिशादिति ङ । दिवः ५। दिशः ५। (अ१।) ॥ १५ ॥

व्याकरणम् ।

सस्वलीलं, अनुस्वेचणं प्रतिनिशम् ॥ १२ ॥

काल्याः सलीलम् । चेतनस्याभावः अचेतनम् ॥ १३ ॥

विच्चेतश्चतुरोऽत् । एभ्यः अत् स्यात् वे । यथाविदम् ॥ १४ ॥

दिवो दिशश्च । आभ्यामपि अत् स्यात् वे । अपदिशात् ॥ १५ ॥

शृण्वतो विस्मयं यत्तत् हिमवद्विट्मनोऽयसः ।
चाकर्षमण्या गीत्यैशं दधावानुतदं मनः ॥ १६ ॥

अथ शिवः प्रीतो नटं प्रत्याह । वत्स ! वरं वृणु । नटलिङ्गी आह । देवदेव ! समयान्तरे त्वां प्रार्थयिष्ये । इदानीं मम गीतिभङ्गो माभूत् । अथ समयान्तरे सुमतिर्नृपः शिवस्य सन्निधिं जगाम ।

अथानुतोऽक्ष्णो विषयीकृतोहरः प्रोचेऽमुनैवं शिव ! किन्तपोऽसुरैः ।
कृतं न वेद्मीति समाध्यगोचरोऽन्वक्षं सदैषां वसतीह यद्भवान् ॥१७॥

शृण्वत इति । अतःपरं यत् विस्मयं अद्भुतं तत् शृणु । गीत्या गानेन ऐशं शिवसम्बन्धीयं मनः अनुतदं तां गीतिं अनु पश्चात् दधाव । तां प्रति इत्यर्थे अनुतदम् । गीत्या कीदृश्या । हिमवत्विट् हिमालयसुता तस्या मनोरूपं यदयो लौहं तस्य आकर्षमण्या आकर्षमणिस्वरूपया । वाङ्मनोकृतानतुङ्गः शरदोऽन्ते च शारदोत्सवं गीतम् । श्रुतवतः समजनि तुष्टिरनुशरदमाह वत्स ते प्रीतोऽस्मीति । पुस्तकान्तरे इत्यधिकमस्ति । पद्ये । अतःपरं विस्मयकरं सूत्रं शृणु । आकर्षमण्या इत्यादिकमुदाहरणघटितवाक्यम् । यद् तद् हिमवत् विश् मनस् अयसः ५।, (च१) ॥ १६ ॥

अथेति । अथानन्तरं अक्ष्णो विषयीकृतः अर्थात् दृष्टः आनुतः सम्यक् स्तुतश्च हरः शिवः अमुना नटलिङ्गिना राज्ञा एवं वक्ष्यमाणं प्रोचे उक्तम् । किमुक्तमित्याह । हे शिव ! असुरैः किं तपः कृतं इति न वेद्मि जानामि । यत् यस्मात् समाधेरगोचरोऽपि भवान् इह असुरपुरे सदा एषां असुराणां अन्वक्षं प्रत्यक्षं वसति । पद्ये । अथेति मङ्गलार्थकम् । विषयीकृत इत्यादिकमुदाहरणघटितवाक्यम् । अनुतः ५।, अक्ष्णः ५।, ॥१७॥

व्याकरणम् ।

यत्तत् हिमवत् विश्मनोऽयसश्च । एभ्योऽपि अत् स्यात् वे । अनुतदम् । "अव्ययीभावे शरत् प्रभृतिभ्यः ।" पां । शरद् विपाड़यश्चेतो मनोविड़ुपानड्हिमवद्दिड्दिवनडुद्दिक्चतुर्यत्तदोऽः ।" मुं ॥ १६ ॥

अनुतोऽक्ष्णः । अनुशब्दादक्ष्णः अत् स्यात् वे । अन्वक्षं ॥ १७ ॥

शिव ! सम्प्रति परतो वा न शोचति तवाङ्घ्रिमाश्रयते यो हि।
किमु तन्निजपरिवारा दिवो भ्रष्टाः शोचन्ति समक्षन्ते ॥ १८ ॥
अनन्तादपि दुःखान्नाऽन्वात्मं शोचन्ति निर्ज्जराः।
वसन्तमुपपाप्मं त्वां विष्णुद्विड्भिर्वृतं यथा ॥ १९ ॥
भवांश्चिरं चक्षुरगोचरोऽतिदूरे वसति इति तु देवा न शोचन्ति।
यतः।
नद्या गिरेः परे वोपगिरं वोपनदं वसन्।
अपि हृद्यो न दूरोऽसौ सन्निकृष्टतया हृदः ॥ २० ॥

शिवेति। हे शिव! यो जनः तवाङ्घ्रिं आश्रयते स सम्प्रति इदानीं अर्थात् इहकाले परतो वा परकालेऽपि न शोचति। उ भो तत् तर्हि निजपरिवारा दिवः स्वर्गात् भ्रष्टाः ते तव समक्षं किं कथं शोचन्ति। पक्षे। शिव इति सम्बोधनम्। न शोचतीत्यादिकं उं सं प्रति परतः ५।, (वा१) ॥ १८ ॥

अनन्तादपीति। निर्ज्जरा देवाः अनन्तादपि दुःखात् अन्वात्मं आत्मानं प्रति तथा न शोचन्ति यथा त्वामुद्दिश्य शोचन्ति। किम्भूतं त्वां उपपाप्मं पाप्मनः पापिनः समीपे विष्णुद्विड्भिर्व्वृतम्। पक्षे। दुःखादित्यादिकं उं। अनन्तात् ५।, ( अपि१ ) ॥ १९ ॥

नद्या इति। हृद्यो हृदिस्थो जनः नद्याः गिरेर्व्वा परे उत्तरे उपगिरं पर्व्वतसमीपे उपनदं वा नदीसमीपे वा वसन्नपि असौ हृद्यो हृदः सन्निकृष्टतया न दूरः न दूरस्थः। पक्षे। उपगिरमित्यादिकमुदाहरणम्। नद्याः ५।, गिरेः ५।, वा १। ॥ २० ॥

व्याकरणम्।

सं प्रतिपरतो वा। एभ्योऽपि परादथ्याः अत् स्यात् वे। समक्षं। एवं प्रत्यक्षं, परोक्षं। ( परशब्दात् निपातनादसकृते परम् इति सिद्धं ) "सम्परः प्रत्यनुभ्योऽक्ष्णः।" सुं ॥ १८ ॥

अनन्तादपि। अनन्तादपि अत् स्यात् वे। अन्वात्मम्। उपपाप्मं। "अनश्च" पां। "अनः। सुं।" ॥ १९ ॥

नद्यागिरेः परे वा। आभ्यां परे अत् स्यात् वा। उपनदं एवं उपनदि। उपगिरं एवं उपगिरि ॥ २० ॥

किन्तु। समुज्झ पश्चात्तापाय पयःपोषं हि चक्रिणाम्।
दैत्येऽयुक्तं सद्युषदं वासश्चोपासतं तव ॥ २१ ॥

---

( अथ शिवो नृपं प्रति । )
तावत् समासे पुरपो दितिसूनुपुरे नृप ! ।
यावन्न यवनीसङ्गी सुरापो वा भवत्यसौ ॥ १ ॥

समुज्झेति । पश्चात्तापाय चक्रिणां सर्पाणां पयःपोषं पयसा दुग्धेन पोषणं समुज्झ त्यज । दैत्ये सद्युषदं द्युषदां देवानां सम्रुद्धिरयुक्तं एवं तव उपासतं वासः असतां समीपे वासश्च अयुक्तम् । पक्षे । समुदिति मोदयुक्तस्य सम्बोधनम् । झपः ५।, (च) अत् १।, ॥ २१ ॥

---

तावदिति । हे नृप ! दितिसूनुपुरे पुरपः पुरपालकः सन् तावत्कालं समासे उपविशामि । यावत् यावता कालेन असौ दैत्यो यवनीसङ्गी सुरापश्च न भवति । पक्षे । इति सूनुपुरे इति उदाहरणम् । तावत्समासे ७।, (पुर् अपः) पुरपः ५। अत् १।, ॥ १ ॥

व्याकरणम् ।

झपश्चात् । झपोऽपि अत् स्यात् वे । द्युषदां सम्रुद्धिरिति सद्युषदं एवं सद्युषत् । असतां समीपे इति उपासतं एवं उपासत् । "झप्नदीपौर्णमास्याग्रहायणीगिरेर्वा ।" सुं ॥ २१ ॥

इति अव्ययीभावः । * ॥ ० ॥

तावत्समासे पुरपोऽत् । पुरश्च अपश्च अत् स्यात् सर्वसमासे । सूनुपुरे ॥ १ ॥

पथश्च विरतो भूयात् अयिताऽसत्पथं यदा ।
तदा त्यक्ष्याम्यमुमिति प्रतिज्ञातं पुरा मया ॥ २ ॥

अथ नटलिङ्गी शिवं प्रति । देव ! अत्र पुरे भवान् वसतु न वा वसतु इमं खड्गं वेत्सि न वा इत्युक्त्वा शिवस्य हस्ते खड्गमर्पयति स्म । अथ शिवस्तं खड्गमुरसि निधाय नृपं प्रति आह । अहो असौ ममैव । नटलिङ्गी । देव ! यथैवास्य खड्गस्य सार्थक्यं सम्पद्यते तथैव विधेयं भवता । शिवस्तं प्रति । तदुपायः प्रायेण मयोपदिष्टः । नटलिङ्गी आह । देव ! ज्ञातं मया ।

वस तावत् समीपेऽस्य यावन्नार्यं नटीः प्रति ।
रागितो भवतीरापो नातः परमिमं स्मरेः ॥ ३ ॥

पथश्चेति । असौ दैत्यः यदा असत्पथं अयिता आश्रयिष्यति पथश्च अर्थात् सत्पथादपि विरतो भूयात् हे वत्स ! तदा अमुं दैत्यं त्यक्ष्यामि पूर्वकाले एवं प्रतिश्रुतं प्रतिज्ञातं मयेति शेषः । पक्षे । विरतो भूयादित्यादिकमुदाहरणघटितवाक्यम् । पथः ५।, (ष१) ॥ २ ॥

वसेति । अस्य दैत्यस्य समीपे तावत्कालं वस अयं दैत्यो यावत्कालेन नटीः प्रति यवनीः प्रति रागितः अनुरागवान् इरापः सुरापश्च न भवति अतः परं इमं दैत्यं न स्मरेः रागोऽनुरागोऽस्य जातः इत्यर्थे रागितः । इरा भूवाक् सुराप्सु स्यादित्यमरः । पक्षे । वसेत्यादिकमुदाहरणघटितवाक्यम् । गितः ५।, भवति ८।, ईः १। अ १।, अपः ६। न १।, अतः ५।, परे ७।, इमं २।, स्मरेः ८।, ॥ ३ ॥

व्याकरणम् ।

पथश्च । पथोऽप्यत् स्यात् सर्वसमासे । असत्पथम् । "ऋक्पूरब्धूः पथामानक्षे ।" पां । "पथ्यप्पुरः से ।" मुं ॥ २ ॥

गितो भवतीरापो नातः पर इमं स्मरेः । उपसर्गात् परस्य अपोऽकार ईः स्यात् । अकारात् परे इमं आदेशं न स्मरेः । समीपे ॥ ३ ॥

अप्यन्तर्हृत्स्फुरत इति मे वासने वीर्य्यशुल्को-
द्वाहो भूयो दिवि सुमनसां स्थापनं निर्विपक्षम्।
उद्दिश्यैवं परमतपसा लब्धकालीप्रसादो
नाट्यव्याजात् बहुतिथमिह द्वीप आसेऽन्तरीपे ॥ ४ ॥

( शिवस्तं प्रति ) भवानुत्सुकोऽर्थविशेषे समापानूपं निपात्यमेनञ्च जानीहि अस्मिन्ननूपे तवैव ॥ ५ ॥

अथ सुमतिर्नृपः स्वावासमागत्य यवनीर्नटीः प्रति। अहो चतुराः अस्य दैत्यस्य मनसो विकाराय यत्नः कार्य्यो भवतीभिः। तास्तं प्रति। राजन्! यदादिशति।

(भृगुः।) प्रतीपे च पुरे तस्मिन् नटयन्त्यो वराङ्गनाः
दैत्यस्य चेतश्चतुराश्चातुर्य्येश्चक्षुः क्रमात् ॥ ६ ॥

---

अप्येति। वीर्य्यशुल्कायाः दैत्यकन्याया उद्वाहः एवं सुमनसां देवानां दिवि स्वर्गे भूयः पुनरपि निर्विपक्षं विपक्षरहितं यथा तथा स्थापनं इति द्वे अपि वासने मे मम अन्तः अन्तःकरणे स्फुरतः। एवं वासनाद्वयं उद्दिश्य सङ्कल्प्य परमतपसा लब्धकालीप्रसादः सन् नाट्यच्छलात् बहुतिथं बहुकालं इह अन्तरीपे द्वीपे आसे वसामि। ( अपि १। ) अन्तर्हृः ५।, ॥ ४ ॥

भवानिति। अर्थविशेषे कार्य्यविशेषे उत्सुकः सन् अनूपं जलप्रायदेशं समाप प्राप्तवान्। एनं दैत्यं तव निपात्यं जानीहि। पक्षे। भवानित्यादिकमुदाहरणघटित-वाक्यम्। अर्थविशेषे ७।, समापानूपं १।, निपात्यं १।, ॥ ५ ॥

प्रतीप इति। प्रतिदिशं आपो यस्य पुरस्य तत् तथा तस्मिन् अन्यत् सुगमम् ॥६ ॥

व्याकरणम्।

अप्यन्तर्हृः। आभ्यामपि तथा स्यात्। द्वीपे, अन्तरीपे। "द्व्यन्तरुपसर्गेभ्योऽप ईत्।" पां। "द्व्यन्तर्गेभ्योऽपीनात्।" मु ॥ ४ ॥

अर्थविशेषे समापानूपं निपात्यं। अनूपे ॥ ५ ॥

प्रतीपे ॥ ६ ॥

आसीन्मिथः सरूपाणां तासां नाट्ये ऽस्तमानसः ।
वयोवचनरूपे वा स-मानस्यास्त्रविद्धवत् ॥ ७ ॥

( दैत्यः नटीः प्रति । )

अयि पञ्चास्यजातीयोदर्य्य ! स्थाने च कुत्रचित् ।
वसथ ब्रूत सुन्दर्य्यः सस्थाने पृथगेव वा ॥ ८ ॥
नामगोत्रे वर्णधर्म्मे ज्ञाते च परतः स्त्रियाः ।
सहासनं सजातीयः कुर्य्यात् तत् ज्ञातुमुत्सहे ॥ ६ ॥

---

आसीदिति । मिथः परस्परं सरूपाणां समानरूपाणां तासां नटीनां नाट्ये तथा तासां वयोरूपवचने च स दैत्यः अस्तमानसः च्छिन्नचित्तः सन् मानसस्य च मनसिजस्य अस्त्रेण विद्धवत् आसीत् । पक्षे । आसीदित्यादिकमुदाहरणघटितवाक्यम् । सः १।, वयोवचनरूपे ७।, ( वा १ ) ॥ ७ ॥

अयीति । अयि सम्बोधने । हे पञ्चास्यजातीयोदर्य्यः ! सिंहसमानोदर्य्यः कुत्रचित् स्थाने वसथ हे सुन्दर्य्यः ! सस्थाने एकस्थाने पृथक्स्थाने वा वसथ तत् ब्रुत । पक्षे । अयि पञ्चास्येति सम्बोधनं । जातीयोदर्य्य स्थाने ७, ( च१ ) कुत्रचित् ७, ॥८॥

नामेति । स्त्रियाः नार्य्या नामगोत्रे वर्णधर्म्मे च ज्ञाते सति समानजातीयो जनः सहासनं सहोपवेशं कुर्य्यात् तस्मात् तत् ज्ञातुं उत्सहे । पक्षे । स्त्रिया इत्यादिकमुदाहरणघटितवाक्यम् । नामगोत्रे ७।, वर्णधर्म्मे ७।, ज्ञाते ७।, ( च ) परतः ७।, ॥६॥

व्याकरणम् ।

स वयोवचनरूपे वा समानस्य । समानशब्दस्य सः स्यात् वयोवचनरूपे वा । सरूपाणाम् ॥ ७ ॥

जातीयोदर्य्यस्थाने च कुत्रचित् । कुत्रचित् न तु सर्वत्र विकल्पेनेत्यर्थः । सस्थाने ॥८॥

नामगोत्रे वर्णधर्म्मे ज्ञाते च परत । परतः परत्र नामगोत्रवर्णधर्म्मशब्दे ज्ञाते च अर्थात् नामादिशब्देषु परेषु च समानस्य सः स्यात् । सजातीयः । "रूपनामगोत्रस्थान वर्णवयो वचनधर्म्मजातीयोदर्य्ये वा ।" मुं ॥ ६ ॥

( अथ नर्त्तक्य. सचातुर्य्यं दैत्यं प्रति । )

राजन् ! वयं सधर्म्माणः सजातीयाः सवर्णकाः ।
सर्व्वेषां धनिनां पुंसां गुणिनां प्रियवादिनाम् ॥ १० ॥
सर्व्वा वयं सनामाः स्मः प्रियेति प्रेयसीति च ।
सगोत्रा अपि सर्व्वेषां सहवासात् परे नृप ! ॥ ११ ॥
बन्धुपिण्डे सदा विद्यात् दारकर्म्मणि पूर्वतः ।
सिद्धदारेषु दैत्येन्द्र ! का सापिण्डविवेचना ॥ १२ ॥

अदितिसपत्नीसूनो ! सनाभिब्रह्मचारितीर्थपत्नीषु अन्तरापि न वयं तव सपिण्डानामपि ॥ १३ ॥

राजन्निति । हे राजन् ! वयं सर्वेषां धनिनां गुणिनां पुंसां सधर्म्माणः, सजातीयाः सवर्णाश्च ॥ १० ॥

सर्वेति । हे नृप ! वयं सर्वा एव प्रियेति प्रेयसीति समानाः स्म एकनामानः स्मः । सहवासात् परे सर्वेषां पुंसां सगोत्रा अपि ॥ ११ ॥

बन्धुपिण्डे इति । पूर्वतः प्रथमतः दारकर्म्मणि विवाहे सदा बन्धुपिण्डे विद्यात् अर्थात् के बन्धवः के वा सपिण्डाः इत्येवं विवेचनां कुर्य्यात् । किन्तु सिद्धदारेषु अस्मासु सापिण्डविवेचना का ? । पद्ये । दारकर्म्मणीत्यादिकमुदाहरणघटितवाक्यम् । बन्धुपिण्डे ७॥, सदा १।, विद्यात् ८ ॥ १२ ॥

अदितीति । हे अदितिसपत्नीसूनो ! हे दैत्यराज ! । तव सनाभिः ज्ञातिः तीर्थं

व्याकरणम् ।

सधर्म्माणः, सजातीयाः, सवर्णकाः ॥ १० ॥

सनामाः, सगोत्राः ॥ ११ ॥

बन्धुपिण्डे सदा विद्यात् । बन्धुपिण्डे परे समानस्य सः स्यात् नित्यं । सापिण्डं ॥१२॥

नाभिब्रह्मचारितीर्थपत्नीषु । एषु च परेषु समानस्य सः स्यात् नित्यम् । सनाभि सतीर्थानाम् ॥ १२ ॥

सूर्य्यज्योतिषि रात्रौ वा यस्यार्थे परिकर्म्म नः ।
सज्योतिः पतिरस्माकं स एव स्यात् परो नहि ॥ १४ ॥

( दैत्य आह । ) पक्षे तथा विपक्षे वा प्रसूता योषितोऽस्य वा
यूयं भवत किन्त्वद्य सपक्षा मेऽर्त्तिनाशने ॥ १५ ॥

( नव्यास्तं प्रति । )
अवश्यसेव्यः स पुमान् धर्म्माचारैर्भवेद् यदि ।
तुल्यः परत्र चावश्य तदानन्तं भवेत् सुखम् ॥ १६ ॥

आचार्य्यः एतेषां पत्नीषु अन्तरा मध्येऽपि वयं न । सपिण्डानां मध्येऽपि वयं न । पक्षे । अदितिसपत्नीसूनी इति उदाहरणम् । नाभिब्रह्मचारितीर्थपत्नीषु ७॥, ॥१३॥

सूर्य्येति । सूर्य्यस्य ज्योतिर्यस्मिन् काले तत्काले अर्थात दिवसे रात्रौ वा यस्यार्थे यस्य निमित्तं नोऽस्माकं परिकर्म्म अङ्गसंस्कारादिकर्म्म स एव जनः अस्माकं सज्योतिः सज्ज्योतिःपर्य्यन्तं पतिः स्यात् नापरः । पक्षे । सूर्य्य इति सम्बोधनम् । ज्योतिषि ७।, रात्रौ ७।, ( वा १ ) ॥ १४ ॥

पक्ष इति । अत्र प्रसूतशब्दस्य योगे पक्षे विपक्षे इति सप्तमी । यूयं पक्षस्य विपक्षस्य वा प्रसूताः कन्यकाः तस्य योषितो वा भवत । किन्तु अद्य मम अर्त्तिनाशने पीड़ानाशने यूयं सपक्षाः । पक्षे । विपक्षे इत्यादिकमुदाहरणघटितवाक्यं । पक्षे ७।, ( तथा १। ) ॥ १५ ॥

अवश्येति । स पुमान् अवश्यसेव्यः चेत् यदि स पुमान् धर्म्माचारैस्तुल्यो भवेत् । तदा परत्र उत्तरकाले अवश्यं अनन्तं सुखं भवेत् । पक्षे । अवश्यसेव्य इति उ' ।

व्याकरणम् ।

ज्योतिषि रात्रौ वा । अत्र वाशब्दः समुच्चयार्थकः । सज्योति ॥ १४ ॥

पक्षं तथा । पक्षं च परं समानस्य सः स्यात् सपक्षाः । "ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु" इति सूत्रमनुसृत्य "ज्योतिर्जनपदरात्रिनाभि
बन्धुगन्धपिण्डलोहितकुक्षिवेणीब्रह्मचारितीर्थपत्नीपक्षे समानः सः ।" सु' ॥ १५ ॥

अतः स्वधर्म्मान् विहाय अस्मद्धर्म्माचारा आश्रयणीयाः। तत् श्रुत्वा काचिन्नटी सस्मितमाह।

उदिते मनसि च कामे सन्तु मुनिधर्म्माः पलायितुकामाः।
सहजत एव सुकेश्यः! स हि देवः सेवितो हन्ति धर्म्मान् ॥१७॥

( अथ अन्या नटी तां प्रति। )

सततं को न मुग्धः स्यात् नृत्यन्त्या लीलया त्वया।
कटाक्षवाणे भ्रूचापे सन्तते संहिते सदा ॥ १८ ॥

भवेत् ८।, ( यदि तु १। ) ल्यः १।, परव ७।, ( च१ ) अवश्यम् १।, तदा ७।, अनन्तम् १।, भवेत् ८।, ॥ १६ ॥

उदित इति। हे सुकेश्यः! कामे कन्दर्पे मनसि उदिते सति मुनिधर्म्माः सहजत एव पलायितुकामाः सन्तु भवन्तु। हि यस्मात् स देवः सेवितः सन् धर्म्मान् हन्ति। पक्षे। उ निधर्म्मा इत्यादिकमुदाहरणघटितवाक्यं। उ इति सं। उदिते ७।, मनसि ७।, (च१) कामे ७।, सम् १। तुम् १। ॥ १७ ॥

सततमिति। लीलया नृत्यन्त्या त्वया सन्तते विस्तृते भ्रूचापे कटाक्षवाणे सदा संहिते नियोजिते सति को जनः ततं विस्तृतं यथा स्यात्तथा मुग्धो न स्यादपि तु सर्व्व एव मुग्धः स्यात्। पक्षे। सततमिति उं। अन्यदुदाहरणघटितवाक्यम्। सम् १।, तते ७, सम् १।, हिते ७।, ( असदा ७।, ) ॥ १८ ॥

व्याकरणम् ।

भवेद् यदितु ल्यः परव चावश्यं तदाऽनन्तं भवेत्। यदि ल्यस्तव्यादिः परव भवेत् तदा अवश्यं अवश्यमिति शब्दः अनन्त अन्त्यवर्णरहितो भवेत्। अवश्यसेव्यः ॥ १६ ॥

उदिते मनसि च कामे सन्तुम्। सम् तथा तुम् अन्तरहितं स्यात् मनसि कामे च उदिते। पलायितुकामाः ॥ १७ ॥

सन्तते संहितेऽसदा। सं इति तते परे सं इति हिते परे अन्तरहितं स्यात्।

( भृगुः । ) अथो स यवनीर्भेजे तासां वचनमोहितः ।
सन्ततं सहितस्ताभिरपिबन्मधु माधवीः ॥ १९ ॥
ईशानर्च्चा दितिसुतो नित्यर्च्चारहितोऽभवत् ।
न्यायाचर्च्चश्च यवनीसङ्गाद्धीनः स्ववर्च्चसा ॥ २० ॥
ब्रह्मराज्ञो वर्च्चसश्च स्यात् क्षतिः कर्म्मणो यतः ।
अब्रह्मवर्च्चसात् तस्मात् काश्यपः पतितोऽभवत् ॥ २१ ॥
तमसोऽन्धसमो यर्हि सोऽभवत् शङ्करस्तदा ।
अन्तर्दधे पुरात् कुर्व्वन्निव सन्तमसं नृप ! ॥ २२ ॥

अथो इति । मधु मद्यं माधवी मदिराविशेषः । अन्यत् सुगमम् ॥ १९ ॥

ईशेति । अदितिसुतः ईशानर्च्चः ईशस्य शिवस्य अनर्च्चोऽपूजको बभूव नित्यर्च्चरहितः नित्यया ऋचा वेदेन च रहितश्चाभवत् । यवनीसङ्गात् स्ववर्च्चसा स्वतेजसा हीनः सन् न्यायाचर्च्चः न्याये न्यायपथे अचर्च्चः अर्च्चारहितोऽभवत् । पक्षे । इशान इति सं । ऋचः ५। अत् १। ॥ २० ॥

ब्रह्मेति । यतो यस्मात् कर्म्मणः ब्रह्मणो ब्राह्मणस्य राज्ञः क्षत्रियस्य च वर्च्चसस्तेजसः क्षतिः स्यात् तस्मात् अब्रह्मवर्च्चसात् नास्ति ब्रह्मवर्च्चसं यस्मात् तस्मात् काश्यपः कश्यपसुतः पतितोऽभवत् । अत्र काश्यपपदं तस्य दैत्यस्य ब्राह्मणत्वस्य सूचनार्थम् । पक्षे । क्षतिरित्यादिकमुदाहरणवाक्यम् । ब्रह्मराज्ञः ५।, वर्च्चसः ५।, (च १) स्यात् ८।, ॥ २१ ॥

तमस इति । स दैत्यः यर्हि यस्मिन् काले तमसस्तमोगुणात् अन्धसमः अन्धतुल्यो-

व्याकरणम् ।

असदा अनित्यम् । सततं । “सम् तुम् मनः कामेऽवश्यं स्येऽन्त्यलोपं सम् मांसौ तु हित तते पाकपचने वा ।” मु । १८ । सन्ततम् ॥ १९ ॥

ऋचोऽत् । ऋचोऽत् स्यात् समासे । नित्यर्च्चरहितः । “ऋचः ।” मु ॥ २० ॥

ब्रह्मराज्ञो वर्च्चसश्च स्यात् । ब्रह्मवर्च्चसात् । “ब्रह्महस्तिभ्यां वर्च्चसः ।” पा । “ब्रह्महस्तिराजपल्यात् वर्च्चसः ।” मु ॥ २१ ॥

अवतश्च त्रिनेत्रस्य सान्निध्यादभवत् पुरा ।
पुरेऽवतमसं शम्भौ निर्य्याते सुतरां तमः ॥ २३ ॥
प्राध्वोऽपि स यदा भ्रष्टः शैवश्रेष्ठः सतोऽध्वनः ।
नानोपसर्गात्तर्ह्येव दूनोऽभूत् व्यध्वमाश्रितः ॥ २४ ॥
अथैवं लोकसंख्यातो भूमेः पृष्ठे स एकदा ।
पपात मदिरामत्तो बहुभूमं समश्नुवन् ॥ २५ ॥

ऽभवत् । तदा शङ्करः सन्तमसं निविड़ान्धकारं कुर्व्वन्निव पुरात् अन्तर्दधे । पद्ये । यर्ह्यी-त्यादिकमुदाहरणवाक्यम् । तमसः ५। अन्तमसः ५।, ॥ २२ ॥

अवत इति । अवतमसं क्षीणान्धकारम् । अन्यत् सुगमं । अवतः ५।, ( च १। ) ॥ २३ ॥

प्राध्व इति । स शैवमुख्यो दैत्यः प्राध्वोऽपि प्रकृष्टोध्वा पन्था यस्य स तथा । तादृ-शोऽपि यदा सतोऽध्वनः सत्पथात् भ्रष्टो व्यध्वमाश्रितोऽभवत् तर्ह्येव नानोपसर्गात् दूनोऽभवत् । पद्ये । प्राध्व इति उं । अध्वनः ५।, ( नाना उपसर्गात् ) नानोपसर्गात् ५। ॥ २४ ॥

अथैवमिति । अथानन्तरं एवं । लोकसंख्यातो लोकेषु ख्यातः स दैत्य एकदा मदिरामत्तः सन् बहुभूमं समश्नुवन् व्याप्नुवन् सन् भूमेः पृष्ठे पपात । पद्ये । अथैवं लोक ! हे लोक एवं शृखिति शेषः । संख्यातः ५।, भूमेः ५।, ॥ २५ ॥

व्याकरणम् ।

तमसोऽन्स समः । अन्यात् समश्च तमसोऽत् स्यात् । सन्तमसम् ॥ २२ ॥

अवतश्च । अवादपि तमसोऽत् स्यात् । अवतमसम् ॥ २३ ॥

अध्वनो नानोपसर्गात् । सकलोपसर्गादध्वनोऽत् स्यात् । व्यध्वं, प्राध्वः । "गेरध्वनः ।" सु ॥ २४ ॥

संख्यातो भूमेः । संख्यावाचकात् परभूमिशब्दादत् स्यात् । बहुभूमम् ॥ २५ ॥

अपि नद्याः सप्तनदसम्भेदात् स्यात् यथा रयः ।
तथा वेगात् यवन्योऽस्य जह्रुः शूलं शिवात्मकम् ॥ २६ ॥
गन्धादित्सोः सानुरागं मदामोदसुगन्धिनः ।
नद्यास्याब्जस्य तस्यास्य सङ्गन्धात् चेतनाऽभवत् ॥ २७ ॥

( अथ तयोः प्रश्नोत्तरम् । )

पद्मगन्धे ! क्व शूलं मेऽसुर ! देवोऽपमानतः ।
हृत्वा शूलं पुरोऽगात् तेऽचेतनस्याब्जगन्धक ! ॥ २८ ॥

अपि नद्या इति । अपि आगमवार्त्तायाम् । सप्तानां नदानां सम्भेदात् सङ्गमात् नद्या यथा रयो वेगः स्यात् तथा तादृशात् वेगात् वेगमाश्रित्य यवन्यो नद्यः अस्य दैत्यस्य शिवात्मकं शूलं जह्रुः । ( अपि १ । ) नद्याः ५।, ॥ २६ ॥

गन्धेति । मदस्य य आमोदस्तेन सुगन्धिनः नद्या आस्याब्जस्य मुखाम्बुजस्य गन्धादित्सोः गन्धमादातुमिच्छतो दैत्यस्य अस्य नदीमुखस्य सङ्गन्धात् सद्गन्धं प्राप्य चेतना अभवत् । पूतेश्च सुरभेश्चेति आत्मरागो नियामकः । पुतिर्गन्धिस्तथोद्गन्धिर्नैकः सर्व्वमतः क्वचित् पुस्तकान्तरे इत्यधिकमस्ति । गन्धात् ५।, इत् १।, सोः ५।, ॥ २७ ॥

पद्मेति । हे पद्मगन्धे ! मे मम शूलं क्व कुत्र । अस्योत्तरम् । हे अब्जगन्धक ! असुर ! देवः शिवः अपमानतः अर्थात् पूजाद्यभावरूपापमानात् अचेतनस्य ते तव शूलं हृत्वा पुरः पुरात् अगात् । पद्मे । पद्मगन्धे इति ङ । उपमानतः ५।, ॥ २८ ॥

व्याकरणम् ।

अपि नद्याः । संख्यावाचकात् नद्या अपि अत् स्यात् । सप्तनद—। "नदीभिश्च ।" पां । "संख्याया नदी गोदावरीभ्याञ्च ।" मु ॥ २६ ॥

गन्धादित्सोः । सूपसर्गात् गन्धात् इत् स्यात् । सुगन्धिनः ॥ २७ ॥

वोपमानतः । उपमानवाचकात् गन्धादित् वा स्यात् । पद्मगन्धे, अब्जगन्धक ।
"सूत्सूरभिपूतेर्गन्धादिर्वा तूपमानात् ।" मु ॥ २८ ॥

( असुरः। ) कुतः सुरभिगन्धे! ऽद्य ईशोऽवज्ञाऽसुर! त्वया।
न ध्यातो नार्चितो यत् स यवन्या मदमोदिना॥ २९॥
( अथ नटलिङ्गी राजा दैत्यं प्रति। )
अर्चार्थे ते राजमुखान्नाना देवान् समुत्सुकान्।
समया याहि मद्बाणपूतोऽह्यतिसखाऽसि मे॥ ३०॥
तत् श्रुत्वा असुरः आत्मगतम्।
अहो नटसुतोऽप्येवं वक्ति मां वीजमत्र किम्।
नटो नवायं तल्लिङ्गी सुराज्ञः कस्यचित् सुतः॥ ३१॥
( नटलिङ्गी राजा दैत्यं प्रति। )
अहं तेऽतिपुरो या पूर्दैवैरपि दुरासदा।
तत् त्वं युध्यस्व वीराणां माभूरतिपथोऽसुर!॥ ३२॥

कुत इति। हे सुरभिगन्धे! अद्य ईशः शिवस्य कुतः कस्मात् अवज्ञा। अस्योत्तरम्। हे असुर! त्वया यवन्या सह मदमोदिना सता यत् यस्मात् स शिवः न ध्यातः नार्चितश्च। पद्ये। पूर्व्वसूत्रस्योदाहरणमात्रम्॥ २९॥

अर्चेति। ते तव अर्चार्थे समुत्सुकान् राजमुखान् राजा चन्द्रः तन्मुखान् अर्थात् चन्द्रादीन् नानादेवान् समया समीपे मम बाणपूतः सन् याहि अर्थात् मृतः स्वर्गं गच्छ। हि यस्मात् त्वं मे मम अतिसखाऽसि॥ पद्ये। ना देवानित्यादिकमुदाहरणवाक्यम्। अर्चार्थे ७, अतेः ५।, राजमुखात् ५।, न१ अः १।,॥ ३०॥

अहो इति। अयं नटो न वा तल्लिङ्गी नटलिङ्गी नटवेशी कस्यचित् सुराज्ञः सुतः। पद्ये। नट इति सं। सुतः ५।, ( अपि १ ) ( एवं १ )॥ ३१॥

अहमिति। अहं तव अतिपुरः पुरमतिक्रान्तः। तत् तस्मात् युध्यस्व। हे असुर! वीराणां अतिपथः वीरपथमतिक्रान्तो माभूः। पद्ये। सूत्रस्य उदाहरणमात्रम्॥ ३२॥

व्याकरणम्।

सुरभिगन्धे॥ २९॥

अर्चार्थेऽते राजमुखान्नाः। अर्चायां प्रशंसायां अतेः अत्युपसर्गात् राजप्रभृतिशब्दात् अत् न स्यात्। अति सखा। सुतोऽप्येवम्। सु उपसर्गादपि अर्चार्थे राजादेरौ न स्यात्। सुराज्ञः। "न पूजनात्।" पा। नार्चाया स्वतेः सख्यादेरः।" मु॥ ३०॥३१॥

( दैत्यस्तं प्रति । ) चेपे किमस्ति मितवाक् वीरो भवति वालिश ! ।
किंराजा किंबलोऽसि त्वं मर्त्तुकाम इहागत: ॥ ३३ ॥
( नटलिङ्गी । ) राजाहवे भावनतोऽसुरव्यूहो ह्यनस्त्रवित् ।
अधुनाचासखोऽशूलो निर्व्विषोऽहिरिवेक्ष्यसे ॥ ३४ ॥
( भृगु: । अथ सुमति: । )
आशानन्तपथो वास्त्रैश्छन्नोऽकारि महीभुजा ।
भीत: पलायितुं दैत्योऽलोकयत् सर्व्वतोऽपथम् ॥ ३५ ॥

---

चेप इति । चेपे कुत्सायां किं प्रयोजनमस्ति । हे वालिश ! मूर्ख ! वीरो मितवाक् परिमितवाक् भवति । त्वं किंराजा कुत्सितराजा किंबलोऽसि कुत्सितपराक्रमोऽसि । मर्त्तुकाम: सन् इह आगत: । पचे । चेपे किम: इति सूत्रानन्तरं स्तिमितवाक् इत्यादिकमुदाहरणवाक्यम् । चेपे ७।, किम: ५।, ॥ ३३ ॥

राजेति । असुरव्यूहो दैत्यसमूहो राजाहवे राज्ञ: चत्रियस्य आहवे युद्धे भावेन स्वभावेन नतो भवति हि यस्मात् स: असुरसमूह: अनस्त्रवित् । अधुना च त्वं असख: नास्ति सखा सहायो यस्य स तथा । अशूल: शूलहीनश्च । निर्व्विष: सर्प इव इक्ष्यसे । दृश्यसे । पचे । राजेति कस्यचिन्नाम तत्सम्बोधनम् । अहवे ७।, अभावनत: ५।, ॥ ३४ ॥

आशेति । महीभुजा राज्ञा आशादिक् अनन्तपथश्च आकाशपथश्च अस्त्रै: छन्नोऽकारि । स दैत्य: भीत: सन् पलायितुं सर्व्वतश्चतुर्दिक्षु अपथं पथोऽभावं अलोकयत् । पचे । आशानन्त इति कस्यचित् सम्बोधनम् । पथ: ५।, ( वा १। ) ॥ ३५ ॥

व्याकरणम् ।

अर्ध्यायां किं अतिपुर:, अतिपथ: ॥ ३२ ॥

चेपे किम: । कुत्सायां किम: परात् राजादेरो न स्यात् । किंराजा । "किम: चेपे ।" सुं ॥ ३३ ॥

अहवेऽभावनत: । अभावार्थकनकारात् राजादेरो न स्यात् । न तु इवयो: । असख: । "नञस्तत्पुरुषात् ।" पां । "नञोऽहवे ।" सुं ॥ ३४ ॥

पथो वा । अभावार्थक नकारात् पथो न अ: स्यात् वा न तु इवयो: । अपथम् । "पथो विभाषा ।" पां । पथो वा । सुं ॥ ३५ ॥

नाशकत् क्वचिदेवायं पलायितुमथो यदा ।
तदा सिद्धासिनाऽच्छ्यत् राजा दैत्यं कदुक्तिकम् ॥ ३६ ॥
राजंस्तथा त्रिरथवदेतस्य पृष्ठरक्षकम् ।
सेनामुखं तदसिनाऽच्छिनत् कद्वदमुद्भटम् ॥ ३७ ॥
वृन्दारकाऽक्षेमकृति नष्टे काक्षेऽसुरेऽमराः ।
ववृषुः पुष्पवर्षाणि जीव जीवेति चाब्रुवन् ॥ ३८ ॥
( अथ दैत्यपत्नी तत्रागत्य विलपन्ती पतिमुद्दिश्य आह । )

नाशकदिति । अथो अनन्तरं अयं असुरः यदा यस्मिन् काले क्वचिदपि पलायितुं न अशकत् तदा राजा तं दैत्यं सिद्धासिना अच्छ्यत् चिच्छेद । किम्भूतं कदुक्तिकं कु कुत्सिता उक्तिर्यस्य स तथा तम् । पद्ये । नाशेति कत्वचित् सं । दैवायमित्यादिकमुदाहरण-वाक्यम् । कत् १।, कु १।, अचि ७।, ॥ ३६ ॥

राजन्निति । हे राजन् ! एतस्य असुरस्य पृष्ठरक्षकं त्रिरथवत् रथत्रययुक्तं सेनामुखं सेनामुखनामकं सैन्यविशेषं तेन असिना तथा अच्छिनत् । किम्भूतं कद्वदं कदुक्तियुक्तं उद्भटं विक्रान्तम् । पद्ये । राजन्निति सं । तथा १।, त्रि-रथ-वदे ७।, ॥ ३७ ॥

वृन्देति । वृन्दारकाणां देवानां अक्षेमकृति अशुभकारके काक्षे कुत्सिताक्षे असुरे नष्टे सति अमरा देवा पुष्पवर्षाणि ववृषुः । पद्ये । वृन्दारकेत्यादि असुरइत्यादिकञ्च एतस्य पूर्व्वापरभागः उदाहरणघटितवाक्यम् । का १।, अक्षे ७।, ॥ ३८ ॥

व्याकरणम् ।

कत् कचि । कुशब्दस्य कत्स्यादचि परे । कदुक्तिकम् ॥ ३६ ॥

तथा त्रि-रथ-वदे । त्र्यादिष्वपि कुशब्दस्य कत् स्यात् । कद्वदम् । "कोः कत् तत्पुरुषेऽचि । रथवदयोश्च ।" पा । "कत् कच् त्रि रथ वदे ।" मु ॥ ३७ ॥

का अक्षे कुशब्दस्य का स्यात् अक्षशब्दे परे । काक्षे ॥ ३८ ॥

क्वचिदपि पुरुषे पथिके नहि विश्वासः कापुरुषो यदसौ ।
कपटी त्वाऽशृङ्खलयत् नत्या विमोहितमिभ्या यथेभेन्द्रम् ॥ ३९॥
ईषदर्थे सदा रक्तो महानर्थं न पश्यति ।
काधीर्यथैनो मृगयुं तस्य गीत्येति मोहितः ॥ ४० ॥
इदं दुःखं मम स्थायि यत् गण्डूषीकृतोदधिः ।
पतिर्मे गोष्पदे मग्नः काजले नरसंज्ञके ॥ ४१ ॥

( अथ दितिः स्नुषां प्रति । )

क्वचिदिति । क्वचिदपि कस्मिंश्चिदपि पथिके पुरुषे नहि विश्वासः कार्य्य इति शेषः । यत् यस्मात् असौ कापुरुषः कुत्सितः पुरुषः कपटी कपटवेशी नत्या मोहितं त्वां अशृङ्खलयत् बबन्ध । यथा इभ्या हस्तिन्या मोहयित्वा इभं हस्तिनं शृङ्खलयति तथेत्यर्थः । पद्ये । क्वेनहीत्यादिकमुदाहरणवाक्यम् । क्वचित् ७।, ( अपि १। ) पुरुषे ७।, पथि ७।, ॥ ३९ ॥

ईषदिति । काधीः अल्पबुद्धिर्जनः ईषदर्थे अल्पस्मिन् सुखाद्यर्थे सदा रक्तोऽनुरक्तः सन् महानर्थं महान्तं अनर्थं महाविपदं न पश्यति यथा गीत्या गानेन मुग्धोऽयात् ईषत् सुखार्थी मृगः मृगयुं व्याधं एति प्रतियाति तथेत्यर्थः। पद्ये । रक्त इत्यादिकमुदाहरणवाक्यम्। ईषदर्थे ७।, सदा। ७।, ॥ ४० ॥

इदमिति । इदं दुःखं मम स्थायि न तु विनाशीत्यर्थः। यत् यस्मात् गण्डूषीकृत उदधिः समुद्रो येन तादृशो मे मम पतिः नरसंज्ञके गोष्पदे काजले ईषत्जले मग्नोऽभूत् । पद्ये। पूर्व्वसूत्रस्य उदाहरणमात्रम् ॥ ४१ ॥

व्याकरणम् ।

क्वचिदपि पुरुषे पथि । पुरुषे पथि च परे कोः कास्यात् वा । कापुरुषः । "विभाषा पुरुषे ।" पां । "पथि पुरुषे वा ।" मु ॥ ३९ ॥

ईषदर्थे सदा । काधीः । "ईषदर्थे ।" पां । कोरीषदर्थे । मु ॥ ४० ॥

काजले ॥ ४१ ॥

शोकाग्न्युष्णे! काकवकत् योऽमानि येन तेन हि।
स हतोऽहो काग्निनाब्धिः शोषितो वड़वोदरः॥ ४२ ॥ * ॥

( अथ नारदो दितिं प्रति। )

अपत्ये वाच्ये सति पितृमातृ-
स्वस्रादेर्जायतेऽणीयो यशः साध्वि! ॥ १ ॥
द्विजातिमातृस्वस्रीयानतापयदसौ बली।
तत्कर्म्मणाऽयशस्तेन हीनोऽभूत् शैवतेजसा ॥ २ ॥

शोकेति। हे शोकाग्निना उष्णे! येन असुरेण यः अर्थात् मनुष्यः काकवकत् काकवत् अमानि। तेन काकतुल्यजनेन सोऽसुरो हतः। अहो आश्चर्यं वड़वोदरो वड़वानल उदरे यस्य तादृशोऽब्धिः समुद्रः काग्निना ईषदग्निना शोषितोऽभूत्। अत्र काकवदित्यव्ययशब्दस्य टेः पूर्वेऽकि कृते काकवकदिति ज्ञेयम्। पद्ये। शोकेति कस्य-चित् सम्बोधनम्। अग्न्युष्णे ७।, का कव-कत् १।, ॥ ४२ ॥

---

अपत्य इति। हे साध्वि! अपत्ये सन्ताने वाच्ये गर्हिते सति पितृमातृस्वसृप्रभृतीनां यशः अणीयः लघु भवति। ( वाच्यन्तु कुत्सिते हीने वचनार्हे च वाच्यवदिति मेदिनी ) अपत्ये ७।, वाच्ये ७।, सति ७।, पितृमातृस्वस्रादेः ५।, जायते ८।, णीयः १।, ॥ १ ॥

द्विजातीति। असौ बली धूम्राक्षोऽसुरः। मातृस्वस्रीयान् देवान् अतापयत्। अन्यत् सुगमम्। पद्ये। पूर्व्वसूत्रस्य उदाहरणमात्रम् ॥ २ ॥

व्याकरणम्।

अग्न्युष्णे का-कव-कत्। कुशब्दस्य का, कव, कत् स्यात् अग्नि उष्ण परे। काग्निना। "कवञ्चोष्णे।" पा। "कत्कवौ चाग्न्युष्णे।" मु ॥ ४२ ॥ ० ॥

इति समाससंग्रहः ॥ ० ॥ * ॥

अपत्ये वाच्ये सति पितृमातृस्वस्रादेर्जायते णीयः ॥ १ ॥

मातृस्वस्रीयान् ॥ २ ॥

( इदमपि पश्य । )

उष्णेय आप्तस्तीग्मत्वं तापयत्योजसा जगत् ।

स पुनः स्वत एवैति मान्द्यं प्राञ्जेयि ! कालतः ॥ ३ ॥

( अपि च । ) न दीना भवतीवाद्य त्रितये जगतोऽस्ति यत् ।

सापत्नेयकुवाक् तप्ता लप्स्यसे कशिपू ततः ॥ ४ ॥

( किन्तु । ) स्याच्चेत् पक्षो नृपोऽयं वो देवानां हितकारकः ।

आत्रेयाद्याः सुरगणा वशे स्यास्यन्ति सर्व्वदा ॥ ५ ॥

रुष्टेऽस्मिन् नृपतौ रुष्टाः पीड़यिष्यन्ति दुर्बलम् ।

आदितेयाः काद्रवेयाः वैनतेया दितेः कुलम् ॥ ६ ॥

उष्ण इति । हे प्राञ्जेयि ! प्रज्ञावतः पुत्रि ! यो जनः अर्थात् सूर्य्यः उष्णे ग्रीष्मसमये तीग्मत्वं आप्तः प्राप्तः सन् ओजसा तेजसा जगत् तापयति । स सूर्य्यः पुनः कालतः कालेन स्वत एव मान्द्यं एति प्राप्नोति । पक्षे । उ इति सम्बोधनम् । ष्णेयः १।, आप्तः५।, ॥ ३ ॥

नदीनेति । जगतस्त्रितये त्रिजगति अद्य भवतीव त्वमिव दीना दुःखिता नास्ति । यत् यस्मात् सापत्नेयानां कुवाक् तप्ता सती ततः सापत्नेयेभ्यः कशिपू अन्नाच्छादने लप्स्यसे । पक्षे । नदीना ए इति च सं । अन्यत् उदाहरणघटितवाक्यम् । भवितः ए इत्यत्र विसर्गस्थाने यकारो जातः । भवति न, ( ईप् आदि भवितः ) ईवाद्य-त्रितः ५।, ॥ ४ ॥

स्याच्चेदिति । देवानां हितकारकः अयं नृपः सुमतिनामा चेत् यदि वो युष्माकं पक्षः सहायः स्यात् । अन्यत् सुगमम् ॥ ५ ॥

रुष्ट इति । दुर्बलं दितेः कुलमिति सम्बन्धः । अन्यत् सुगमम् ॥ ६ ॥

व्याकरणम् ।

ष्णेय आप्तः । आपन्तात् ष्णेयः स्यात् अपत्येऽर्थे । प्राञ्जेयि ! ॥ ३ ॥

भवतीवाद्यत्रितः । ईवादेरत्रेय ष्णेयो भवति । अपत्येऽर्थे । सापत्नेय ॥ ४ ॥

आत्रेयाद्याः ॥ ५ ॥

आदितेयाः काद्रवेयाः, वैनतेयाः ॥ ६ ॥

ब्रवीमि चातो भवतीरुक्तानुबन्धभाग् भवेत् ।
रोषोत्पादोऽस्य भौपाले साध्वि ! तोषय तन्नृपम् ॥ ७ ॥
तथा वाह्वग्निशर्म्मादे राज्ञोऽर्च्योऽसौ महारथः ।
औपविन्दवये कन्यां प्रयच्छास्मै सुलोचनाम् ॥ ८ ॥
( दैत्यपत्नी दितिं प्रति । )
यो गायनो नडेभ्यश्च मन्यते स्म लघुर्यया ।
सासुरी तं नरं दाक्षायणि ! किं मंस्यते गुरुम् ॥ ९ ॥

ब्रवीमीति । अतः कारणात् भवतीर्युष्मान् ब्रवीमि अस्य भौपालेः भूपालसुतस्य रोषोत्पादः क्रोधोत्पादनं उक्तानुबन्धभाक् कथितदोषोत्पादजनको भवेत् हे साध्वि ! तत् तस्मात् नृपं सुमतिनामकं तोषय । पक्षे । ब्रवीमि च सूत्रं कथयामि । अतः ५।, भवति ८।, इः १।, उक्तानुबन्धभाक् १।, भवेत् ८।, ॥ ७ ॥

तथेति । असौ महारथो नृपः वाहुराज अग्निशर्म्मादेः राज्ञोऽर्चनीयः अस्मै उपविन्दुसुताय सुलोचनां कन्यां प्रयच्छ । पक्षे । राज्ञ इत्यादिकमुदाहरणघटितवाक्यम् । तथा १।, वाह्वग्निशर्म्मादेः ५।, ॥ ८ ॥

योगायन इति । यया आसुर्य्या मम कन्यया गायनो यो गायकः नटलिङ्गी नृपः नडेभ्योऽपि तृणेभ्योऽपि लघुर्मन्यते स्म हे दाक्षायणि ! सा आसुरी तं नरं किं कथं गुरुं मंस्यते । पक्षे । योग इति कस्यचित् सम्बोधनम् । आयनः १।, नडेभ्यः ५॥, ( च १ ) ॥ ९ ॥

### व्याकरणम् ।

अतो भवतीरुक्तानुबन्धभाक् भवेत् । अकारान्तात् इर्भवति । स च उक्तानुबन्धभाक् षकारानुबन्धभाक् भवेत् । भौपालिः ॥ ७ ॥

तथा वाह्वग्निशर्म्मादेः । वाहुप्रभृतिशब्देभ्यः उक्तानुबन्ध इः स्यात् । औपविन्दवये ॥८॥

आयनो नडेभ्यश्च मन्यते । उक्तानुबन्धभागित्यनुवर्त्तते । दाक्षायणि ! ॥ ९ ॥

स्मरतु तथा भवती को हरेऽवत्यश्वपालादेः पुरा मे।
न बिभायाऽदितितनयोऽधुनाश्वपालिकोऽपि शिर आरोहेत् ॥१०॥
यो गर्गादेश्च वात्स्यादेर्योगागम्यः शिवोऽस्य या।
उरःसरा स्म शेतेऽङ्के तद्वत्से शाय्यहो नरः ॥ ११ ॥
( दितिस्तां प्रति। ) सुव्रतेऽस्तु तथाऽशेषशिवात् लब्धोऽनया पतिः।
यस्य बाहुबलाद्देवा अद्य स्वर्गभुजोऽभवन् ॥ १२ ॥

स्मरतु तथेति। भवती तथा स्मरतु। पुरा पूर्वकाले हरे शिवे अवति पालयति सति कोऽदितिसुतो देवो ममाश्वपालादेरपि न बिभाय अपि तु भीतोऽभवत्। अधुना अश्वपालसुतोऽपि मम शिरो आरोहेत्। पद्ये। पुरेत्यादिकमुदाहरणघटितवाक्यम्। स्मरतु ८।, ( तथा १। ) भवति ८।, इकः १।, ( ह १ ) रेवत्यश्वपालादेः ५।, ॥ १० ॥

य इति। यः शिवः गर्गादेर्वात्स्यादेश्च मुनेर्योगागम्यः अस्य शिवस्य अङ्के क्रोडे या मम सुता उरःसरा वक्षसा गच्छन्ती सती शेते स्म अहो खेदे तद्वत्से तस्या मम सुताया वक्षसि नरः शायी शयिता। उरोवत्सञ्च वक्षश्चेत्यमरः। पद्ये। योगागम्य इत्यादिकमुदाहरणघटितवाक्यम्। यः १।, गर्गादेः ५।, ( च १ ) ॥ ११ ॥

सुव्रत इति। हे सुव्रते ! तथास्तु। अनया सुलोचनया अशेषशिवात् अशेषपुण्यात् असौ नृपः पतिर्लब्धः अन्यत् सुगमम्। पद्ये। सुव्रते इति सम्बोधनम्। अस्तु ८।, तथा १।, अशेषशिवात् ५।, ॥ १२ ॥

व्याकरणम्।

स्मरतु तथा भवतीकोहरेवत्यश्वपालादेः। रेवत्यश्वपालादेः इको भवति तथा उक्तानुबन्धभागित्यर्थः। इकारश्चकारार्थे। आश्वपालिकः ॥ १० ॥

यो गर्गादेश्च। चकारादुक्तानुबन्धभाक्। वात्स्यादेः ॥ ११ ॥

अस्तु तथा शेषशिवात्। शेषशिवात् अः स्यात् तथा उक्तानुबन्धभागित्यर्थः ॥ १२ ॥

शौर्य्ये समो यः शैवस्य भार्गवस्य समः क्रुधि ।
यादवस्य समो मन्त्रे वाशिष्ठादेः समो यमे ॥ १३ ॥
यस्मात् त्रैलोक्यजयिनं दानवं हतवान् युधि ।
लीलयाऽसावतो मन्ये नासौ प्राकृतमानवः ॥ १४ ॥

( अथ देवास्तत्रागत्य प्रणतं नृपं प्रति । )

नृपगणाग्रगक्षिति ते वृद्धिरिष्यते चोग्रप्रभावस्य ।
यत्ते भुजबलगुप्तास्त्रिदिवेशाः क्रतुभुजश्चादितेयाः ॥ १५ ॥

( देवा दितिं प्रति । )

मातर्नता स्मो मारोदीरादित्यान् विद्धि नः सुतान् ।
सुलोचनामिमामस्मै यच्छास्माकं मुदावहाम् ॥ १६ ॥

शौर्य्य इति । शैवस्य कार्त्तिकेयस्य । भार्गवस्य परशुरामस्य । यमे समाधौ । पद्ये । पूर्वसूत्रस्य उदाहरणमात्रम् ॥ १३ ॥

यस्मादिति । अस्यार्थः सुगमः ॥ १४ ॥

नृपेति । हे नृपगणाग्रगण् ! यत् यस्मात् उग्रप्रभावस्य चण्डप्रतापस्य ते तव भुजबलगुप्ताः सन्तः आदितेया देवाः त्रिदिवेशाः क्रतुभुजश्च अभवन्निति शेषः । इति हेतोस्ते तव वृद्धिः उन्नतिरिष्यते अस्माभिरिति शेषः । पद्ये । नृपगणाग्रगीति सं । क्षिति ७।, ते ७।, वृद्धिः १।, इष्यते च।, च ६।, अग्रप्रभावस्य ६।, ॥ १५ ॥

मातरिति । हे मातः ! आदित्याम् अदितिसुतान् नोऽस्माम् सुतान् पुत्रान् विद्धि जानीहि । अन्यत् सुगमम् । पद्ये । पूर्वसूत्रस्य उदाहरणमात्रम् ॥ १६ ॥

व्याकरणम् ।

शैवस्य, भार्गवस्य, यादवस्य, वाशिष्ठस्य ॥ "बाह्वाद्यतोऽत्रामादेर्गर्गादेर्नडादेः पितृष्वसादेरेवत्यादेः शैषश्चिवादेः षि-ष्य-इ-ष्या-आयन-षीय-ष्णिका, ष्णा अपत्ये । मु' ॥ १३ ॥

मानवः ॥ १४ ॥

क्षिति ते वृद्धिरिष्यतेऽचोऽग्रप्रभावस्य । अग्रप्रभावस्य अग्रीभवस्य अचो वृद्धिरिष्यते अकारेत् तद्धितप्रत्यये परे । आदितेयाः ॥ १५ ॥

आदित्याम् ॥ १६ ॥

अथ दितिर्देवानां वचनात् तथाऽकरोत्। (अथ सा क्रन्दन्ती सुलोचनां प्रति।)

दौर्भागिनेयि! सुभगामुख्यानां पदयोर्द्वयोः।
रज आदाय शिरसि सौभाग्यं प्रार्थयस्व ताः॥ १७॥
परार्थपोषास्तनया गन्त्र्यः परपदस्य हि।
कस्यचिन्न चिरं गेहे कन्याः सन्ति सुकौलिकि!॥ १८॥
तद्गच्छ वत्से! मारोदीः स्मरणीया वयं सदा।
पतिं नारायणं विद्धि सुपाञ्चालजनेश्वरम्॥ १९॥

---

दौर्भागीति। हे दौर्भागिनेयि! दुर्भगायाः पुत्रि! सुभगामुख्यानां सुभगाश्रेष्ठानां। ताः सुभगाः। अन्यत् सुगमम्। पद्ये। दौर्भागिनेयीति उदाहरणम्। सुभगामुख्यानां ६॥, पदयोः ६॥, द्वयोः ६॥, ॥ १७॥

परार्थेति। तनयाः कन्यकाः परार्थपोषाः परेषां निमित्तं पोषो पोषणं यासां तास्तथा हि यस्मात् परपदस्य परस्थानस्य गन्त्र्यः गमनशीलाः। हे सुकौलिकि! सुन्दरकुलोत्पन्ने! कस्यचिदपि जनस्य गेहे चिरकालं कन्याः न सन्ति। पद्ये। परार्थपोषाः तनयाः गन्त्र्य इति च सम्बोधनम्। न चिरमित्यादिकमुदाहरणघटितवाक्यम्। परपदस्य ६।, (हि १) कस्यचित् ६।, ॥ १८॥

तद्गच्छेति। सुपाञ्चालजनेश्वरं सुष्ठु पञ्चालदेशीयजनानां पालकम्। अन्यत् सुगमम्॥ १९॥

व्याकरणम्।

सुभगामुख्यानां पदयोर्द्वयोः। सुभगादीनां द्वयोः पदयोर्वृद्धिरिष्यते ञिते। सौभाग्यम्॥ १७॥

परपदस्य हि कुर्वाचित्। कस्यचित् परपदमात्रस्यैव वृद्धिरिष्यते। सुकौलिकि!॥१८॥

सुपाञ्चालजनेश्वं। "ञिति शिरायचः सुभगसुपञ्चालाञ्चोस्तु द्व्यन्ददानाम्।" सुं॥ १९॥

अथ राजा दाक्षायणीं श्वश्रूं प्रणम्य तदनुमत्या सुलोचनां कन्यारत्नं वीर्य्यशुल्कां रजस्वलामादाय तस्याः पितृस्वस्रीय-मातृस्वस्रीयादीन् वैयासकि-वाह्नवि-आग्निशर्म्मि-आत्रेय-आदितेय-काद्रवेय-वैनतेय-रौहिणेय-गार्ग्य-वात्स्य-पाराशर्य्य-नाड़ायण-गार्गायण-वात्स्यायन-भार्गव-शैव-वाशिष्टाङ्गिरस-रैवतिकादींश्चागतान् प्रणम्य मङ्गल-पुरःसरं सगणः प्रतस्थे ॥ २० ॥

( अथ नलकूवरचराः पथि तां दृष्ट्वा नलकूवरावूचुः । )

अहो जनपदान्ते वामुमेवाद्य च यागता ।
शाकं सौवश्विराजेन युवां तां द्रष्टुमर्हथः ॥ २१ ॥

( अथ नलकूवरौ तत्रागत्य सुलोचनां प्रति । )

अयि ! यां भवतीं स्प्रष्टुं वातोऽप्यतिदुरासदाम् ।
बिभाय वैयाकरणो नैयायिकगिरं यथा ॥ २२ ॥

---

अहो इति । अहो सम्बोधने । वां युवयोः जनपदान्ते ग्रामस्यान्ते अद्य उमेव पार्वतीव या नारी सौवश्विनृपेण शाकं सार्द्धं आगता तां युवां द्रष्टुमर्हथः । पद्ये । अहो जन इति सं । अन्यदुदाहरणघटितवाक्यम् । पदान्ते ७।, वां ६॥।, उम् १।, ( एव ) आद्यचः ६।, ॥ २१ ॥

अयीति । अतिदुरासदां यां भवतीं स्प्रष्टुं वातोऽपि वायुरपि बिभाय भीतोऽभवत् । यथा नैयायिकस्य गिरं वाक्यं स्प्रष्टुं वैयाकरणो बिभेति । पद्ये । अयीति सं । स्प्रष्टुमित्यादिकं उं । यां ६॥।, भवति ८।, इम् १।, ॥ २२ ॥

व्याकरणम् ।

पदान्ते वामुमेवाद्यचः । आद्यचः स्थाने जातानामेव तया पदान्ते स्थितानां वकाराणां उम् स्यात् णित्ते । सौवश्विराजेन ॥ २१ ॥

यां भवतीम् । उक्तरूपाणां यकाराणां इम् स्यात् निर्णे । वैयाकरणः, नैयायिकः ॥ २२ ॥

सा त्वं प्राप्ता स्वतो बाले ! सुप्रभाताद्य सर्वरी ।
तदेहि मत्पुरं मास्तु वैयर्थ्यं यौवनस्य ते ॥ २३ ॥
स्वङ्गस्य च स्वागतस्य न क्वापि त्याग इष्यते ।
रत्नस्य धात्रदत्तस्य सार्थक्यं स्वाङ्गिकं कुरु ॥ २४ ॥

( सुलोचना तं प्रति । )

अहो आत्मवर्णनशब्दव्यवहारव्यायामस्य न
दृश्यते प्रयोजनं मूर्खाणां व्यवहारिकमेतत् ॥ २५ ॥

---

सा त्वमिति । हे बाले ! सा त्वं स्वत आत्मना प्राप्ता । शेषं सुगमम् ॥ २३ ॥

स्वङ्गेति । स्वङ्गस्य शोभनं अङ्गं यस्य तादृशस्य स्वागतस्य स्वयमागतस्य च धात्रदत्तस्य रत्नस्य त्यागो न क्वापि इष्टः । स्वाङ्गिकं शोभनाङ्गसम्बन्धि सार्थक्यं कुरु । पचे । त्यागेत्यादिकं ज्ञं । स्वङ्गस्य ६।, ( च १ ) स्वागतस्य ६।, न १। क्व ७।, ( अपि ) ॥२४॥

अहो इति । वर्णनं प्रशंसनं शब्दव्यवहारः शब्दप्रयोगः व्यायामः परिश्रमः । तथाहि आत्मनः प्रशंसनाय शब्दप्रयोगे परिश्रमस्य प्रयोजनं न दृश्यते । व्यवहारिकमिति । व्यवहारशब्दात् स्वार्थे णिकः । पचे । आत्मवर् इति छेदः तत्र कस्यचित् सम्बोधनम् । प्रयोजनमित्यादिकमुदाहरणघटितवाक्यम् । णनशब्दव्यवहारव्यायामस्य ६।, न १। दृश्यते ८।, ॥ २५ ॥

व्याकरणम् ।

वैयर्थ्यम् ॥ २३ ॥

स्वङ्गस्य च स्वागतस्य न क्वचित् । एतयोर्वस्य न ज्ञम् स्यात् । णित्ते । स्वाङ्गिकम् ॥ २४ ॥

णनशब्दव्यवहारव्यायामस्य न दृश्यते । णान्प्रत्ययान्तशब्दव्यवहारव्यायामानां यययोस्तथा न दृश्यते । व्यवहारिकम् ॥ २५ ॥

**मत्ताऽव्यङ्गस्वध्वरस्य क्वापि नार्हन्ति दानवाः।**
**दैवभोज्यं श्रद्धया यत् हविः स्वाध्वरिणा हुतम्॥ २६॥**

**( तौ सुलोचनां प्रति। )**

**जानीत धनदात्मजाविमौ क्वचिदपि नाद्याच्चरविभूत्यदान्त-**
**वयोरूपकुलौजोबलप्रतापैरस्मत्तुल्याः॥ २७॥**

**( सुलोचना। ) तथा बोधस्व ग्रामैकन्यग्रोधस्योच्छ्रयग्रहः।**
**स्यादेव सौवग्रामीणान् क्षुपानेवेचते स यत्॥ २८॥**

---

मत्तेति। हे मत्त! अव्यङ्गस्य अर्थात् साङ्गस्य स्वध्वरस्य शोभनयज्ञस्य हविः दानवाः नार्हन्ति। हविः किम्भूतं दैवभोज्यम्। स्वध्वरवेदिना श्रद्धया हुतम्। पक्षे। मत्ता इति सं। अर्हन्तीत्यादिकं उ। व्यङ्गस्वध्वरस्य ६।, क्व ७।, ( अपि ) न १।॥२६॥

जानीतेति। इमौ अर्थात् आवां धनदात्मजौ जानीत। अच्चरविभूतिः अक्षयैश्वर्य्यः अदान्तः अदमितः वयोरूपकुलादिभिः अस्मत्सदृशाः अद्य क्वचिदपि न सन्तीति शेषः। पक्षे। हे धनदात्मजाः! जानीत इति योज्यम्। विमौ १॥, क्वचित् ७।, ( अपि ) नाद्य-च्चरविभूत्यदान्तवयोः ६॥, ॥२७॥

तथेति। तथा बोधस्व जानीहि। ग्रामैकन्यग्रोधस्य ग्राममध्ये एक एव द्वितीय-रहितो यो न्यग्रोधो वटवृक्षस्तस्य स्वोच्छ्रयग्रहः आत्मन उन्नतत्वबोधः स्यादेव अवश्यं जायते। यत् यस्मात् स वटः सौवग्रामीणान् स्वसम्बन्धिग्रामोद्भवान् क्षुपानेव केवलम्

व्याकरणम्।

व्यङ्गस्वध्वरस्य क्वापि न। स्वाध्वरिणा॥ २६॥

विमौ क्वचिदपि नाद्याच्चरविभूत्यदान्तवयोः। नाद्याच्चरविभूत्योः अनादिवर्ण-स्थाने जातयोः अथ च अदान्तयोरदान्ते स्थितयोर्वयसोरपि क्वचित् उम् इमौ स्याताम् ॥ २७॥

तथा बोध, स्वग्रामैकन्यग्रोधस्य। स्वग्रामस्य अद्वितीयन्यग्रोधस्य च तथा जानीहि। सौवग्रामीणान्॥ २८॥

स्वः स्वस्य च तथा ज्ञातं भुजौजः स्वः पलायनात् ।
यदद्यासीत् सौवमोजस्तदस्यैव भुजार्जितम् ॥ २९ ॥
अहो विधातः स्वस्वस्ति स्वर्द्वारस्याप्यपावृती ।
इच्छाति सौवसौवस्तियस्य दौवारिको महान् ॥ ३० ॥
( तौ तां प्रति । )
ज्ञेयं तथा स्वादुमृदुस्वरस्य सम्पर्कतस्त्वद्वचनं कटूग्रम् ।
अप्येति सौवादुम्रदव्यमस्मात् वीणास्वरे ! सुन्दरि ! तत्
शृणोमि ॥ ३१ ॥

---

क्रमशाखङ्कत्वात् ईर्च्यते । पचे उक्थयदह इत्यादिकमुदाहरणघटितवाक्यम् । ( तथा बोध ८। ) स्वयामैकान्ययौधस्य ६।, ॥ २८ ॥

स्वः स्वेति । स्वः गतदिवसे स्वः स्वर्गात् पलायनात् पलायनेन हेतुना स्वस्य आत्मनस्तवेति यावत् । भुजौजः भुजबलं ज्ञातं मयेति शेषः । अद्य यत् सौवं स्वकीयं ओजो बलं आसीत् तत् बलं अस्यैव अर्थात् मम भर्त्तुर्भुजार्जितम् । पचे । ज्ञातमित्यादिकं उं । स्वःस्वस्य ६।, ( च १) ( तथा १ ) ॥ २९ ॥

अहो इति । अहो आश्चर्यं हे विधातः ! श्वसु कुक्कुरेष्वपि स्वर्गद्वारस्य अपावरणेऽपि उद्घाटनेऽपि अति इच्छा अस्ति । यस्य स्वर्गद्वारस्य दौवारिकः सौवसौवस्तिः । स्वर्भवा इति सौवा देवास्तेषां स्वस्ति कुशलं यस्मात् स तथा देवानां चेमकारक इत्यर्थः । पचे । अहो विधातः इति सं । अपावृतावित्यादिकं उं । श्व-स्वस्ति-स्वर् द्वारस्य ६।, (अपि १) ॥ ३० ॥

ज्ञेयमिति । तथा वक्ष्यमाणं ज्ञेयं भवत्या इति शेषः । हे वीणास्वरे ! त्वद्वचनं तव वाक्यं कटु उग्रमपि स्वादुमृदुस्वरस्य सम्पर्कतः सम्बन्धात् स्वादुमृदव्यं स्वादुत्वं मृदुत्वञ्च

## व्याकरणम् ।

स्वः स्वस्य च तथा । सौवम् ॥ २९ ॥

श्वस्वस्तिस्वर्द्वारस्यापि । एषामपि वस्य उम् स्यात् । सौव, सौवस्ति, दौवारिकः ॥३०॥

ज्ञेयं तथा स्वादुमृदुस्वरस्य । सौवादुम्रदव्यम् ॥ ३१ ॥

( तौ नृपं प्रति । ) अहो अयमपि नौ उपालभते ।

दृश्यते श्वापदन्यङ्कोरीदृक् रीतिः क्वचिच्च न ।
नैयङ्कवः स्पर्द्धतेऽहो शौवापदभुजान्तरे ॥ ३२ ॥

( भृगुः । ) ततस्तौ विद्यया जच्या मोहयित्वा नृपं बलात् ।
हृत्वा तां जग्मतुः स्वौकः श्वापदिर्न्यङ्कवीमिव ॥ ३३ ॥

( अथ सुलोचना कामुकौ तौ प्रति । )

अहो अकामां मां मास्पृशतम् । श्वादेरपि नेति दृष्टमकामाया धर्षणम् ॥ ३४ ॥

---

एति प्राप्नोति । अस्माद्धेतोस्तत् कटूग्रं वाक्यं शृणोमि । पद्ये । सम्पर्कंत इत्यादिकं उं । अयं १।, तथा १।, स्वादुमृदु-स्वरस्य ६।, ॥ ३१ ॥

दृश्यत इति । श्वापदन्यङ्कोः व्याघ्रमृगयोः ईदृक् रीतिः क्वचिदपि न दृश्यते । अहो आश्चर्यं शौवापदस्य व्याघ्रापत्यस्य भुजमध्ये नैयङ्कवः मृगसुतः स्पर्द्धते । पद्ये । नेत्यादिकं उं । दृश्यते ८।, श्वापदन्यङ्कोः ६॥, ईदृक् १।, रीतिः १।, क्वचित् ७।, (च) ॥ ३२ ॥

तत इति । तौ जचौ जचसम्बन्धिन्या विद्यया नृपं मोहयित्वा तां सुलोचनां हृत्वा स्वौकः स्वस्थानं जग्मतुः । श्वापदिः व्याघ्रसुतः न्यङ्कवीं मृगसुताम् ॥ ३३ ॥

अहो इति । श्वादेरपि कुक्कुरादेरपि । अन्यत् सुगमम् । श्वादेः ६।, (अपि १) न १।, इति ७।, दृष्टं १।, ॥ ३४ ॥

व्याकरणम् ।

दृश्यते श्वापदन्यङ्कोरीदृक्रीतिः क्वचिच्च । नैयङ्कवः, शौवापदम् ॥ ३२ ॥

श्वापदिः, न्यङ्कवीम् ॥ ३३ ॥

श्वादेरपि नेति दृष्टम् । इकारादौ तद्धिते परे श्वादेर्न स्यात् । "द्वारस्वर-स्वः स्वस्ति-स्वादुमृदु-व्यल्कस श्वः-श्वन्-स्फक्त-स्व-स्वाध्याय-स्वग्रामैकन्यग्रोधानां श्वापदन्यङ्कोस्तु वा नत्विति श्वादेः ।" सुं ॥ ३४ ॥

विशेषतः सपुष्पाहं तन्मां मास्पृशतं युवाम् ।
अपि श्वापचिको धत्ते घृणां स्प्रष्टुं रजस्वलाम् ॥ ३५ ॥

तदानीं मुनिस्तौ प्रति ।

ओरे ये नाशमिच्छन्ति अकामां परकामिनीम् ।
ते धर्षयन्तु भैरेय ! इत्यहं वारये युवाम् ॥ ३६ ॥
नैवं कद्रोः सुतात् भीतिः काद्रवेय-विषस्य यत् ।
प्रतिक्रियास्ति साध्वीनां कोपदृष्टिविषस्य न ॥ ३७ ॥
नाप्येवं श्रूयते पाण्डोर्भ्रात्रेया विलयं गताः ।
धर्षयित्वा पाण्डवेयवधूं तत्कोपवह्निना ॥ ३८ ॥

---

विशेषत इति । सपुष्पाहं ऋतुमती अहम् । श्वापचिकोऽपि व्याधोऽपि रजस्वलां स्प्रष्टुं घृणां धत्ते ॥ ३५ ॥

ओरे इति । ओरे इति सम्बोधनं । ये जना आत्मनः नाशमिच्छन्ति ते एव अकामां परयोषितं धर्षयन्तु । हे भैरेय ! भीरोः पुत्र ! इति युवां निवारये । पक्षे । अकामामित्यादिकं उदाहरणघटितवाक्यं । ओः ६।, एये ७।, नाशं २।, इच्छन्ति ८॥, ॥ ३६ ॥

नैवमिति । कद्रोः सुतात् सर्पात् एवं भीतिर्न स्यात् यत् यस्मात् काद्रवेयविषस्य प्रतिक्रिया चिकित्सास्ति । साध्वीनां कोपदृष्टिविषस्य प्रतिक्रिया नास्ति । पक्षे । सुतादित्यादिकं उं । न १।, एवं १।, कद्रोः ६।, ॥ ३७ ॥

नापीति । एवं नापि श्रूयते । किमित्याह । पाण्डोर्भ्रात्रेयाः दुर्योधनादयः पाण्डवेयवधूं द्रौपदीं केशाकर्षणवस्त्रापहरणादिरूपेण धर्षयित्वा तत्कोपवह्निना विनाशं गताः

## व्याकरणम् ।

श्वापचिकः ॥ ३५ ॥
ओरेये नाशमिच्छन्ति । उवर्णस्य एये परे नाशं लोपमिच्छन्ति । भैरेय ॥ ३६ ॥
नैवं कद्रोः । कद्रुशब्दस्य उवर्णस्य लोपो न स्यादेये । काद्रवेय ॥ ३७ ॥

मद्र उष्णो य इनेयः कल्याण्याः सत्तरस्त्रियाः ।
तेजसा स समो नेति कल्याणिनेय ! मन्यताम् ॥ ३९ ॥
सौभागिनेयौ ! त्यज्येयमकामर्त्तुमती तथा ।
सुभगाऽकुलटाऽदुर्भगापरस्त्र्यनुद्दिष्टितः ॥ ४० ॥
परभार्य्यां हरेन्नेति वाचं वैयासकीं शृणु ।
व्यासादेर्मन्यते कन्नो नादेयं तदिमां त्यज ॥ ४१ ॥

---

भाषा: । पक्षे । भाविया इत्यादिकं उं । न १।, (अपि १) एवं १।, श्रूयते ८।, पाण्डोः ६।, ॥ ३८ ॥

मद्र इति । उष्णे निदाघसमये यः इनेयः इनः सूर्य्यः तत्सम्बन्धी मद्रसंज्ञः स मद्रसंज्ञोऽपि कल्याण्याः कुशलवत्याः सत्तरस्त्रियाः सत्स्वभावायानार्य्याः तेजसा समस्तुल्यो न । हे कल्याणिनेय! इति मन्यताम् । ( मद्र उत्सवतेजसोरिति मेदिनी । ) पक्षे । मद्र उ इति पूज्यस्य सम्बोधनम् । सत्तरस्त्रिया इत्यादिकं उं । यः १।, इनेयः १।, कल्याण्याः ६।, ॥ ३९ ॥

सौभागीति । हे सुभगाया अपत्ये ! इयं परस्त्री अकामा तथा ऋतुमती तथा सुभगा अनुद्दिष्टितः पश्चात् परकालद्दिष्टितः त्यज्या । पक्षे । पूर्व्वार्द्धं उं । सुभगा-कुलटा दुर्भगा परस्त्री-अनुद्दिष्टितः ५।, ॥ ४० ॥

परेति । व्यासादेर्मुनेः कं आदेयं को जनो न मन्यते ? अर्थात् सर्व्वैरेव मन्यते तत् तस्मादिमां त्यज । या च स्यात् बन्धकी ज्येष्ठा कनिष्ठा मध्यमा तथा । रमेयाथां तया

व्याकरणम् ।

माप्येवं श्रूयते पाण्डोः । पाण्डोरो लोपो न स्यात् । पाण्डवेय । “श्रोर्लोपोऽकद्रु-पाण्डोरेये ।” सुं ॥ ३८ ॥

अयि इनेयः कल्याण्याः । कल्याणिनेय ॥ ३९ ॥

तथा सुभगा-कुलटा-दुर्भगा-परस्त्र्यनुद्दिष्टितः । सौभागिनेयौ । “कल्याणी सुभगा दुर्भगा-बन्धकी रजकी-बलीवर्दी-ज्येष्ठा कनिष्ठा-मध्यमा परस्त्र्यनुस्त्र्यनुद्दिष्टिकुलटाभ्य इनेयः ।” सुं ॥ ४० ॥

( भृगुः नृपं प्रति। ) अथ तौ सुतपसौ मुनेर्वाक्यमनादृत्य तां नीत्वा स्वपुरमध्ये स्थापयामासतुः।

अथात्मभाव्यो नृप! तौ तु दम्पती स्मरन् समुद्विग्नमना विदेशितुः। वाचः समस्तद्धितकृत् ययौ तयोर्दिदृक्षया सत्वरमब्धि रोधसि ॥४२॥

अथ नारदस्तं नृपं चेतयामास।

अथो अति विपन्नोऽसौ आगतं वीक्ष्य नारदम्।
मुदं लेभे सन्तितीर्षुर्नाव्ये सिन्धौ तरीमिव ॥ ४३ ॥

जैहृकिनेयौ मत्कामया॥ सतीन्द्रधृतवैरारौ सुद्रार्दरिव सत् स्त्रियाः। उरौ मार्हसि नाटेरः कौलटेरोऽहंषं यथा॥ गौधादेश्चाङ्कतश्चाटकैरगौधारकं यथा। व्याधस्तथाऽहरत् कन्यां यो विश्वजयिनोऽङ्कतः॥ गौधेरं मन्यते स त्वाममरारिकुलान्तकः। स चेन्मुग्धो नाभविष्यत् तदाशास्यः स्वपौरुषम्॥ पुस्तकान्तरे एतान्यधिकपद्यानि सन्ति। व्यासादेः ६।, भकङ् १।, मन्यते ८।, ॥ ४१ ॥

अथेति। हे नृप! आत्मभूर्ब्रह्मा तस्यापत्यमिति आत्मभाव्यो नारदः तौ दम्पती स्मरन् उद्विग्नमनाः सन् तद्धितकृत् तयोर्दम्पत्योर्हितकारी तयोर्दिदृक्षया अब्धेः समुद्रस्य रोधसि कूले लघु क्षिप्रं यथा स्यात् तथा ययौ नारदः कीदृशः विदा ज्ञानेन वाचः सरस्वत्याः ईशितुः वागीशस्य समस्तुल्यः। पक्षे। आत्मभाव्य इत्यादिकं उं। वाकारः पादपूरणे। अचः ६।, समः १।, तद्धित कृत् यः १।, औतः ५।, ओः ५।, ॥ ४२ ॥

अथो इति। अतिविपन्नः विपदापन्नोऽसौ राजा आगतं नारदं वीक्ष्य मुदं हर्षं प्राप। यथा तितीर्षुर्जनः नाव्ये नौकया तार्य्ये सिन्धौ नद्यां आगतां तरीं दृष्ट्वा मुदं लभते तथेत्यर्थः। पक्षे। पूर्व्वसूत्रस्य उदाहरणम्॥ ४३ ॥

व्याकरणम्।

व्यासादेर्मन्यते भकङ्। वैयासकीम्। व्यासादेर्ङक् णौ। सुं ॥ ४१ ॥

अचः समस्तद्धितकृत् यः औतः ओः। औतः औकारात् ओः ओकारात् परस्तद्धितकृद्विहितो यकारः अचः समः स्यात्। आत्मभाव्यः। "ओदौतोऽज्वत् तकृद य क्यङ्याः।" सुं ॥ ४२ ॥

नाव्ये ॥ ४३ ॥

(नारदः नृपं प्रति।) सुलोचना क्व गता ?। नृपः। मुने! सा धनदात्मजाभ्यां हृता।

आत्मनो नो न लोपोऽस्ति तेनेदं दुःखमक्षयम्।
देहिनो देहनाशेऽपि नात्मनीनगुणक्षयः॥ ४४॥

(अपि च।) अध्वनश्च दुरारोहात् महाव्याडैर्निषेवितात्।
प्रत्यागतोऽध्वनीनोऽहं पुरद्वारेऽस्मि शुनाहतः॥ ४५॥

(नारदस्तं प्रति।) राजन्! हरिं स्मर।

स्मृते प्रसन्ने वार्ष्णेयेऽविकारेऽभावकर्म्मके।
अनन्तस्य च नो राजन्याधेरन्तो भवेत् क्षणात्॥ ४६॥

आत्मन इति। नोऽस्माकं आत्मनो जीवात्मनो लोपो विनाशो नास्ति। आत्मनो नित्यत्वात्। तेन हेतुना ममेदं दुःखं अक्षयं अविनाशि। आत्मनीनस्य आत्मसम्बन्धीयस्य गुणस्य दुःखादेः क्षयो न भवति। पक्षे। अदं दुःखमित्यादिकमुदाहरणघटितवाक्यम्। आत्मनः ६।, नः ६।, न १।, लोपः १।, अस्ति ८।, (त-इने) तेने ७।, ॥ ४४॥

अध्वन इति। अध्वनीनोऽहं महाव्याडैः मांसादपश्वादिभिर्निषेवितात् दुरारोहाच्च अध्वनः प्रत्यागतश्च पुरद्वारे शुना कुक्कुरेण हतोऽस्मि। पक्षे। दुरारोहादित्यादिकं उ॰। अध्वनः ६।, च १।, ॥ ४५॥

स्मृत इति। हे राजन्य! वार्ष्णेये कृष्णे स्मृते सति तथा प्रसन्ने सति अनन्तस्यापि आधेः मानसव्यथायाः क्षणात् अन्तो नाशो नो भवेत् अपि तु भवेदेव। किम्भूते अवि-

## व्याकरणम्।

आत्मनो नो न लोपोऽस्ति तेने। आत्मन्-शब्द-सम्बन्धीयस्य नकारस्य लोपो नास्ति तेने तद्धितसम्बन्धीय ईने परे आत्मनीन॥ ४४॥

अध्वनश्च। अध्वनोऽपि नस्य लोपो नस्यात् ईने। अध्वनीनः॥ ४५॥

( राजा ) मुने ! तत् सत्यं किन्तु ।

सदा मनो न स्तोकार्थेऽल्येकायनमसाधु धिक् ।
यत् क्षणो ईदृगेकाग्रं याज्वनस्यापि मे न तत् ॥ ४७ ॥
न स्यादिनोऽपि जगतां दैत्यारिर्म्मम चित्तगः ।
धार्म्मिणस्योपकर्त्तुश्च शोकाग्न्युत्तप्तचेतसः ॥ ४८ ॥

कारि विकाररहिते । भावः उत्पत्तिः कर्म्म शरीरारम्भकमदृष्टं ताभ्यां रहिते । पक्षे । वार् इति जलस्य सम्बोधनम् । ष्णे ७।, ये ७।, अविकारे ७।, अभावकर्म्मके ७।, अनन्तस्य ६।, नः ६।, ॥ ४६ ॥

सदेति । नोऽस्माकं असाधु मनो मानसं धिक् । कीदृशं अतिस्तोकार्थे अतिस्वल्पार्थेऽपि सदा अल्येकायनं एकाग्रं अत्यासक्तमित्यर्थः । यत् यस्मात् याज्वनस्यापि मे मम तत् चित्तं क्षणं ईदृक् एकाग्रं आसक्तं न भवति । पक्षे । अकायनमित्यादिकमुदाहरणघटितवाक्यम् । सदा ७', अमनः ६।, नः ६ ।, तोकार्थे ७', अल्ये ७।, ॥ ४७ ॥

न स्यादिति । जगतां इनोऽपि प्रभुरपि दैत्यारिः धार्म्मिनस्य धार्म्मिकसमूहस्य उपकर्त्तुरपि मे मम चित्तगः चेतसि गतो न भवेत् । तत्रानागमने हेतुगर्भविशेषणमाह । मम किम्भूतस्य शोकाग्न्युत्तप्तचेतसः । तथा हि उत्तप्ते चेतसि कथं स आगच्छेदिति भावः । इनः सूर्य्ये प्रभावित्यमरः ॥ ४८ ॥

व्याकरणम् ।

ष्णे येऽविकारेऽभावकर्म्मके अनन्तस्य नः । अनन्तस्य नो लोपो न स्यात् अविकारार्थे ष्णे अभावकर्म्मार्थे ये च । राजन्य ॥ ४६ ॥

सदाऽमनो नः तोकार्थेऽल्ये । मनन्तभिन्नस्य नस्य लोपो न स्यात् तोकार्थे अपत्यार्थे अल्ये अप्रत्यये परे । याज्वनस्य ॥ ४७ ॥

न स्यादिनोऽपि । संयोगादिमस्यापि नलोपो न स्यादपत्यार्थे ष्णे । धार्म्मिणस्य ॥ ४८ ॥

( नारदस्तं प्रति । ) जानन् पुंसः स्त्रियश्चाति प्रेमनैघ्नंग्र शुचे मुहे ।
सदेति कः पुमान् स्त्रैणो धैर्य्यं नाश्रयते नृप ॥ ४९ ॥

(राजा तं प्रति ।) मुने ! इदन्तु मम दुःखं प्रियावियोगतोऽप्यतिशेते । तथा च । योऽसुरस्त्रैलोक्यविजयी संभद्रात् संख्यातश्चातिमात्रन्तस्योरःचरत्चतजैर्दिक्पालबलिर्विहितो मया येन षाण्मातुरेण तारकासुरस्येव सोऽहमद्यकाकादभिभूतोऽस्मि ॥ ५० ॥

तद्भवतु अद्याहं तपसे गच्छामि स्त्रियाः प्रयोजनं नास्ति । (नारदस्तं प्रति । ) माखिद्यस्व सुखदुःखं कर्म्मणैव भवति । अधुनाहं तौ नलकूवरौ परदारापहरणपापस्य फलं दर्शयिष्यामि ।

वाच्ये सति तु वाढ़ेऽघे कारकस्य परत्र हि ।
तत् प्राक्तनप्रत्ययाः स्युस्तात्कार्म्मिकफलोदयात् ॥ ५१ ॥

---

जानन्निति । हे नृप ! पुंसः स्त्रियश्च अतिप्रेमनैघ्नंग्र अतिस्नेहस्य आयत्तता वशीभूतत्वं शुचे शोकाय मुहे मोहाय भवति इति सदा जानन् कः स्त्रैणः स्त्रियामासक्तः पुमान् धैर्य्यं नाश्रयते । पक्षे । जा इति जन्यानां सम्बोधनम् । प्रेमेत्यादिकं ७ं । नन् १ं, पुंसः ५ ।, स्त्रियः ५।, ( च १ ) अति ७।, ॥ ४९ ॥

योऽसुर इति । संभद्रात् शुभादृष्टात् । अतिमात्रं अत्यन्तं संख्यातो विख्यातः । तस्य असुरस्य उरो वक्षःस्थलात् चरत् रक्तैः । अभिभूतोऽस्मि पराजितोऽस्मि । अन्यत् सुगमम् । पक्षे । योसुरस्त्रैलोक्यविजयीति चरदित्यादिकञ्च उदाहरणघटितवाक्यम् । संभद्रात् ५।, संख्यातः ५।, ( च १।, ) ( मात्र अन्तस्य ) मात्रन्तस्य ६।, उरः १।, ॥ ५० ॥

वाच्य इति । वाच्ये गर्हणीये वाढ़े दृढ़े अघे पापे सति परत्र हि उत्तरकाले एव

व्याकरणम् ।

नन् पुंसः स्त्रियश्चाति । आभ्यां नन् स्यात् अकारे परे । स्त्रैणः । "नन् पुंस्त्रियोः ।" सु ं ॥ ४९ ॥

संभद्रात् संख्यातश्चातिमात्रन्तस्योरः । संभद्रसंख्याभ्यां मातृशब्दस्यान्तभागस्य उरः स्यात् अति अकारे परे । षाण्मातुरेण । "संख्यासंभद्रान्मातुर्डुर् णि ।" सु ं ॥ ५० ॥

वाच्ये सति तु वा ढे घे कारकस्य परत्र हि तत्प्राक्तनप्रत्ययाः स्युः । ढे कर्म्मणि

( शृणु । ) अपारमार्थिकौ इमौ कायिके वाचिकेऽपि तौ।
पापे एव प्रवर्त्तेते न धर्म्मे पारलौकिके ॥ ५२ ॥
तयोः स्वाभाविकी सम्पत् कुलरूपाभिमानिता।
याऽद्यतां नाश्रयिष्यामि भोगञ्चैहिकमेतयोः ॥ ५३ ॥
नेया क्षत्रिय ! सा योषिन्मणी नेयकणोऽपि यत्।
नोपेक्ष्यते स्वांश इति नैतिकैर्जीविते सति ॥ ५४ ॥

तात्कार्म्मिकफलोदयात् तत्तत्कर्म्मजनितफलस्योदयादेव कारकस्य पापकर्त्तुः तत्प्राक्तन-कर्म्मणां, प्रत्ययाः ज्ञानानि स्युः न तु पापकरणकाले तस्य पापस्य ज्ञानं जायते इति भावः। पद्ये। तात्कार्म्मिकफलोदयादित्युदाहरणम्। वाच्ये ७।, सति ७।, ( तु ) (वा १।,) द्वे ७।, घे ७।, कारकस्य ६।, परत्र ७।, (हि) तत्प्राक्तनप्रत्ययाः १।।।, स्युः ८।।।, ॥५१॥

अपारेति । अपारमार्थिकौ परमार्थाविदिनौ। इमौ साहङ्कारौ कायकृते वाचा-कृतेऽपि पापे एव तौ प्रवर्त्तेते। पारलौकिके परलोकाय हिते धर्म्मे न प्रवर्त्तेते। पद्ये पूर्वसूत्रस्य उदाहरणम् ॥ ५२ ॥

तयोरिति । तयोर्नलकूवरयोर्या स्वाभाविकी स्वभावादुत्पन्ना सम्पत् कुलरूपैः अभिमानिता अहङ्कारः अद्य तां अभिमानितां नाश्रयिष्यामि। एतयोः ऐहिकं इह निष्पाद्यं भोगञ्च नाश्रयिष्यामि। पद्ये उदाहरणम् ॥ ५३ ॥

नेयेति । हे क्षत्रिय ! सा योषिन्मणी स्त्रीरत्नं नेया पुनःपुनर्याच्या। यत् यस्मात् नैतिकैर्नीतिज्ञैः जनैः जीविते सति स्वांशः स्वीयभाग इति मत्वा नेयकणोऽपि ग्राह्यस्य वस्तुनः कणोऽपि लवोऽपि न उपेक्ष्यते। पद्ये। हे क्षत्रिय ! हे योषिन्मणि ! रमणीश्रेष्ठ ! सा उक्तिः नेया इति कं प्रत्युक्तिः। नौनेयकणः १।।।, ( अपि । ) ॥ ५४ ॥

### व्याकरणम्।

अथवा घे कर्त्तरि वाच्ये सति कर्म्मादिकारकात् परत्र तत्प्राक्तनप्रत्ययाः स्युः। तात्-कार्म्मिक ॥ ५१ ॥

क्रमेणोदाहरणानि। अपारमार्थिकौ। कायिके। वाचिके। पारलौकिके ॥५२॥

स्वाभाविकी। ऐहिकं भोगम् ॥ ५३ ॥

नौनेयकणोऽपि। तत्तदर्थे कारकात् नौन-इय-कण् प्रत्ययाः स्युः। नैतिकैः ॥ ५४ ॥

तुष्णीकः स्याच्च को धीमान् विवादे सार्थं उत्थिते ।
कोवातिधीरः भ्रात्तीकः कान्दिशीको भवत्यजात् ॥ ५५ ॥
राट् ! पौष्णाद्याश्च ये केचित् अत्रत्याः श्रुतिगोचराः ।
सानुबन्धा अपि तथा न क्वचित्ते विरोधिनः ॥ ५६ ॥
अहो क्षत्रियमूर्द्धण्य ! रसिकाग्रैतदीर्य्यते ।
त्वयि क्रोधिनि तत्रेते भूयात्तद्देशविप्लवः ॥ ५७ ॥

तुष्णीति । को धीमान् बुद्धिमान् सार्थे सप्रयोजनके विवादे उत्थिते उपस्थिते सति तुष्णीकः मौनी स्यात् । कोवा भ्रात्तीकः अत्यया योधी अतिधीरः अजात् छागात् कान्दिशीको भयात् द्रुतः स्याच्च । पक्षे । तु पादपूरणे । ष्णीकः १।, स्यात् ८।, (च) ॥ ५५ ॥

राडिति । हे राट् ! राजन् ! अत्रत्या एतत्कालभवाः पौष्णाद्याश्च पुष्णोऽपत्यमिति पौष्णो यमः तदाद्या ये केचित् श्रुतिगोचरा आसन् ते सानुबन्धा अपि सानुचरा अपि क्वचिदपि न विरोधिनः भवन्तीति शेषः । पक्षे । राट्पाविति कयोः सम्बोधनम् । ष्णाद्याः १।।।, (च) ये १।।।, केचित् १।।।, अत्र ७।, त्याः १।।।, श्रुतिगोचराः १।।।, सानुबन्धाः १।।। (अपि) (तथा) न १।, क्वचित् ७।, ते १।।।, ॥ ५६ ॥

अहो इति । हे क्षत्रियमूर्द्धण्य ! हे रसिकाग्र ! मया एतदीर्य्यते । क्रोधिनि त्वयि तत्र नलकूवरसमीपे इते गते सति । तद्देशस्य विप्लवो भूयात् । पक्षे । पूर्व्वसूत्रस्य उदाहरणम् ॥ ५७ ॥

### व्याकरणम् ।

ष्णीकः स्याच्च । तदर्थे कारकात् ष्णीकः स्याच्च । भ्रात्तीकः, कान्दिशीकः ॥ ५५ ॥

ष्णाद्याश्च ये केचित् अत्र त्याः श्रुतिगोचराः सानुबन्धाः अपि तथा न क्वचित् ते ।
ष्णप्रभृतयोऽत्र श्रुता ये ये त्याः प्रत्ययाः ते क्वचित् सानुबन्धाः क्वचिन्न तथा ॥ ५६ ॥

क्षत्रियमूर्द्धन्य । रसिक । अग्र ॥ ५७ ॥

याभ्यां हृता त्वदीया स्त्री कुलीना रसिका तयोः।
दम एव तवोद्देश्यः स तु मत्तोऽपि सेत्स्यति ॥ ५८ ॥

अतोऽहं तत्साधनार्थमधुनैव गच्छामि। ( राजा तं प्रति )

तत् व्रजेदं हितार्थे वा धर्मार्थे स्वार्थ एव वा।
प्रकृतेः परिणामार्थेऽत्यास्ते यद्यपि तेऽस्पृहा ॥ ५९ ॥

ततो नारदस्तत्रागच्छत्।

गाणिक्यसङ्गिनौ मत्तौ क्रीड़न्तौ नार्म्मदे जले।
तावधर्म्मायशस्यानायुष्यकर्म्मप्रवर्त्तिनौ ॥ ६० ॥
दृष्ट्वापि मुनिमभ्यासे कामुकौ तं न नेमतुः।
यद्गौरवं हि त्रैलोक्ये स्त्रीकण्ठे हैमभूषवत् ॥ ६१ ॥

---

याभ्यामिति। तयोर्दम एव दण्ड एव तव उद्देश्यः। स तु दण्डः मत्तोऽपि मत्सकाशादपि सेत्स्यति। पद्ये। सूत्रस्य उदाहरणम् ॥ ५८ ॥

तद् व्रजेति। इदं हितार्थे एतस्य अर्थात् मम हितार्थे ( इदम् पदेन हितपदेन सह समासः। ) धर्म्मार्थे वा स्वार्थे स्वप्रयोजनार्थं वा तत्तदा व्रज गच्छ। यद्यपि प्रकृतेः परिणामार्थे प्रकृतिर्म्मायां तस्याः परिणामो विकारस्तदर्थस्तन्मयवस्तु तस्मिन् अर्थात् मिथ्यामयेऽस्मिन् संसारे यद्यपि ते तव अति अतिशयिनी अस्पृहा आस्ते। तथापि गच्छेति भावः। पद्ये। तदिति तदवधारयेति योजनीयम्। व्रजेदंहितार्थे ७।, (वा १।), धर्म्मार्थे ७।, स्वार्थे ७।, ( एव वा ) प्रकृतेः परिणामार्थे ७।, त्याः १॥, ते १॥, ॥ ५९ ॥

गाणिक्येति। गाणिक्यं गणिकासमूहः तत्सङ्गिनौ। अधर्म्यं अनायुष्यं अयशस्यञ्च

## व्याकरणम्।

त्वदीया। कुलीना ॥ ५८ ॥

व्रजेदंहितार्थे वा धर्म्मार्थे स्वार्थे एव वा प्रकृतेः परिणामार्थे त्यास्ते। व्रजार्थे समूहार्थे इदमर्थे हितार्थे च धर्म्मार्थे अर्थात् भावार्थे तथा स्वार्थे प्रकृतेः परिणामार्थे अर्थात् विकारार्थे ते त्याः पूर्व्वोक्तप्रत्ययाः स्युः ॥ ५९ ॥

गाणिक्य। नार्म्मदे। अधर्म्य। अयशस्य। अनायुष्य ॥ ६० ॥

गौरवम्। त्रैलोक्य। हैम ॥ ६१ ॥

( नारदस्तौ प्रति। )

यन्मां दृष्ट्वाप्यन्तिकस्थं क्षीवाक्षौ क्रीड़थोऽनुकौ।
मत्तौ वासः कटेर्व्यस्य नाशो याचित एव तत्॥ ६२॥
यौनकीटौ दुर्विनीतौ अहंयू देवताधमौ।
विनेयौ स्थो युवां तस्मात् पादपौ भवतं लघु॥ ६३॥

( भृगुराह। )

तौ पश्यन्तौ अश्वदाराद्व्ययस्य नरात्मनः।
लीलाः पुण्यस्य कुञ्जस्यारातीयौ यमलार्ज्जुनौ॥ ६४॥

---

यत् कर्म्म तत्प्रवर्त्तिनौ। तौ नलकूवरौ अभ्यासे समीपे मुनिं नारदं दृष्ट्वापि अस्य मुनेः सत्कृतिं पुरस्कारं न चक्रतुः। यद्द गौरवं यस्य नारदस्य गौरवं त्रैलोक्ये स्त्रीणां कण्ठे हेमभूषवत् भातीति शेषः। पक्षे। सूत्रस्य उदाहरणमात्रम्॥ ६०॥ ६१॥

यन्मामिति। यत् यस्मात् अन्तिकस्थं मां दृष्ट्वापि क्षीवाक्षौ लज्जावहिर्भूतौ अनुकौ कामुकौ मत्तौ सन्तौ कटेर्व्वासो वस्त्रं व्यस्य उत्क्षिप्य क्रीड़थः तत् तस्मात् विनाशो याचित एव भवद्भ्यामिति शेषः। पक्षे। पूर्व्वभागः उदाहरणघटितवाक्यत्वेन सार्थकः। टेः ६।, व्यस्य ६।, नाशः १।, याऽचि ७।, ते ७।, ( एव )॥ ६२॥

यौनेति। यौनकीटौ रतासक्तौ अहंयू साहङ्कारौ युवां विनेयौ दण्डनीयौ स्थः। तस्मात् लघु शीघ्रं पादपौ भवतम्। पक्षे। कीटावित्यादिकं उदाहरणवाक्यम्। यौ ७।, न १।,॥ ६३॥

ताविति। तौ नलकूवरौ यमलार्ज्जुनौ भूत्वा नरात्मनः नराकारस्य अव्ययस्य

## व्याकरणम्।

टेर्व्यस्य नाशो याचित एव। अव्ययस्य टेर्नाशः स्यात् तद्धिते ये अचि च। एव-कारोऽवधारणे। क्षीवाक्षौ। एवं पौनःपुनिकः॥ ६२॥

यौ न। युप्रत्यये परे टेर्लोपो न स्यात्। अहंयू॥ ६३॥

अश्वदाराद्व्ययस्य न। अनयोरव्यययोः टेर्लोपो न स्यात्। आरातीयौ॥ ६४॥

वृत्तत्वमाप्ता वसतश्चिरन्तौ पुण्ये व्रजे मारुतमर्त्ययाच्ये ।
यौ नापदं नारदशापरूपां प्राप्याप्यमानस्यकणामवित्ताम् ॥ ६५ ॥

अथ नारदस्तस्य नृपस्य समीपे आगमिष्यन् विष्णुनाहूतो। वैकुण्ठं गतवान् । अथ नृपः सुमतिश्चिन्तयति ।

रुचा शारदतडित्मानिव स मनस्वी मुनिः कृष्णवसतावस्त्यर्थे वाथ कस्मिंश्चिदासक्त इति नागतवान् ॥ ६६ ॥

अथ नारदे चिरमनागते स राजा उन्मत्तवत् स्वमणं हित्वा एकाकी निशि प्रतस्थे ।

---

श्रीकृष्णस्य पुण्यस्य पवित्रस्य कुञ्जस्य आरातीयौ निकटस्थौ सन्तौ शश्वत् निरन्तरं लीलाः पश्यन्तौ विलोकयन्तौ । पक्षे । तौ पश्यन्ताविति कयोश्चित् सं । शश्वदारादव्ययस्य ६।, न ११, ॥ ६४ ॥

वृत्तत्वमिति । तौ नलकूवरौ वृत्तत्वं प्राप्य पुण्ये व्रजे गोकुले चिरं वसतः । कीदृशे व्रजे मारुतमर्त्ययाच्ये मरुत् देवस्तत्समूहस्य मर्त्यस्य च मनुष्यस्य च याच्ये प्रार्थनीये । यौ नारदशापरूपां आपदं प्राप्यापि अमानस्यकणामपि दुःखलवमपि न अवित्तां न ज्ञातवन्तौ । पक्षे । वृत्तत्वेत्यादिकमुदाहरणघटितवाक्यम् । अच्येऽयौ ७।, ना ११, पदं ११, ॥ ६५ ॥

रुचेति । रुचा दीप्त्या शरत्कालीनतड़िल्मान् मेघ इव मनस्वी मुनिर्नारदः कृष्णवसतौ कृष्णस्य निकेतने वैकुण्ठे अस्ति अथवा कस्मिंश्चिदर्थे कार्य्ये आसक्तः अस्ति इति हेतोर्नागतः । पक्षे । रुचेत्यादिकमुदाहरणवाक्यम् । स तौ १॥, अस्त्यर्थे ७।, वा ११, ॥ ६६ ॥

व्याकरणम् ।

अच्येऽयौ ना पदम् । अयौ अचि ये च परे पूर्व्वं पदसंज्ञं न स्यात् । मारुत । अमानस्यम् ॥ ६५ ॥

सतावस्त्यर्थे वा । सान्तताान्तौ अस्त्यर्थे च पदसंज्ञौ न स्तः । अत्र वाशब्दश्चकारार्थे । तड़िल्मान् । मनस्वी ॥ ६६ ॥

थ ऋतोऽरोऽसुरं हत्वा शक्राय त्रिदिवं ददौ।
स दुर्बलः पित्र्यमित्रवङ्गराजाश्वपोऽभवत् ॥ ६७ ॥

नैतच्चित्रं यतः।

स्वतेजसो विलोपः स्यादनुष्णे उदिते सति।
पुष्णोऽप्यतः पुनः काले पौष्णमाभाति तन्महः ॥ ६८ ॥

अथैकदा वङ्गराजस्तं नृपं प्रति।

आयुष्मन्! मन्यते युष्माकमत्येति प्रभा रविम्।
तत् यौष्माकं परिचयमिच्छामि त्वन्तु नाश्वपः ॥ ६९ ॥

थ ऋत इति। ऋतः प्रदीप्तः यः सुमतिर्नाम राजा अरः शीघ्रगामी सन् असुरं हत्वा शक्राय स्वर्गं ददौ सोऽपि दुर्बलः सन् पितुर्मित्रस्य सख्युः वङ्गराजस्य अश्वपालकोऽभवत्। ऋतमुञ्छशीले प्रोक्तं प्रदीप्ते विश्विति, अरं शीघ्रे रथाङ्गे च शीघ्रगे पुनरन्यवदिति कोषः। ये ७, ऋतः ६।, रः १। ॥ ६७ ॥

स्वतेजस इति। अनुष्णे उष्णो ग्रीष्मकालस्तद्भिन्ने काले उदिते सति पुष्णः सूर्य्यस्य स्वतेजसो लोपः स्यात् अतः परं पुनः काले स्वसमये पौष्णं तन्महस्तत्तेजः प्रदीप्यते। पक्षे। स्वतेजस इति केषाञ्चित् सं। विलोपः १।, स्यात् ८।, (अनु) ष्णे ७।, उदिते ७।, सति ७।, पुष्णः ६।, (अपि) अतः ६।, ॥ ६८ ॥

आयुष्मन्निति। हे आयुष्मन्! युष्माकं प्रभा कान्तिः रविं सूर्य्यमपि अत्येति अतिक्रामति इति मन्यते। तत् तस्मात् यौष्माकं परिचयमिच्छामि त्वं न अश्वपालकः। युष्माकमित्यत्र आदरे बहुलम्। पक्षे। आ इति शिष्यान् प्रति कोपप्रकाशः। युष्मत् १।, मन्यते ८।, युष्माकं १।, अति ७।, ॥ ६९ ॥

व्याकरणम्।

ये ऋतो रः। ऋकारस्य रः स्यात् ये परे। पित्र्य ॥ ६७ ॥

विलोपः स्यादनुष्णे उदिते सति पुष्णोऽप्यतः। पश्चात् ष्णे उदिते सति पुष्णोऽपि अकारस्य लोपः स्यात् अधिकारात् हनद्धतराज्ञोः परिग्रहः। पौष्णं एवं यार्त्रघ्नं, धार्त्तराज्ञम् ॥ ६८ ॥

युष्मन्मन्यते युष्माकमति। युष्मत्शब्दस्य युष्माकं स्यात् अकारे परे। यौष्माकम् ॥६९॥

सुमतिस्तं प्रति ।

भवेदस्माकमस्मद्वा कथं परिचयस्त्वयि ।
नह्यात्मतत्त्वबोधोऽस्त्यास्माक एव हि भूपते ? ॥ ७० ॥
तावकोऽपि त्वदितरज्ञानेनार्थो न बोध्यते ।
त्वमेव नृप ! जानीहि तावकोऽर्थः स एव हि ॥ ७१ ॥
बोध्यं मन्ममकस्तातः कोवाहं कुत आगतः ।
नैत्येतन्मामके बोधे तत् किं त्वां बोधये नृप ! ॥ ७२ ॥

भवेदिति । त्वयि तव समीपे अस्माकं परिचयः अस्मत् अस्माकं सकाशात् कथं भवेत् । अत्र हेतुमाह । हि यस्मात् आस्माक एव अस्मत्सम्बन्धीय एव आत्मनस्तत्त्वबोधो नास्ति । तथाहि कोऽहमिति स्वयं नात्मानं जानामि इति कथं मत्तस्तत् परिचयः सम्भवेदित्यर्थः । पद्ये । वाकारः अवधारणे । भवेत् ८।, अस्माकं १।, अस्मत् १।, ॥ ७० ॥

तावक इति । हे नृप ! त्वदितरज्ञानेन त्वत्तः इतरेषां ज्ञानेन तावकस्त्वत्सम्बन्धीयः अर्थः प्रयोजनं न बोध्यते । हे नृप ! त्वमेव आत्मानमेव जानीहि स एव तावकोऽर्थस्तव प्रयोजनम् । पद्ये । इतरेत्यादिकमुदाहरणवाक्यम् । तावकः १।, (अपि) त्वत् १।, ॥ ७१ ॥

बोध्यमिति । मत् मम सकाशात् बोध्यं त्वयेति शेषः मम तातः पिता कः अहं वा कः कुतो वा आगतः इत्येवं मामके बोधे न एति आगच्छति कथं त्वां तत् बोधयामि । पद्ये । तात इत्यादिकमुदाहरणघटितवाक्यम् । बोध्यं १।, मत् १।, ममकः १।, ॥७२॥

व्याकरणम् ।

भवेदस्माकमस्मत् । अस्मत्स्थाने अस्माकं स्यात् ष्णे परे । आस्माकः ॥ ७० ॥
तावकोऽपि त्वत् । त्वत्स्थाने तावकः स्यात् ष्णे परे तावकः ॥ ७१ ॥
बोध्यं मन्ममकः । मत् स्थाने ममकः स्यात् । मामके ॥ ७२ ॥

भवतीने तथा वृद्धे वाक्प्रपञ्चो न युज्यते ।
आस्माकीनस्तथाप्येवं तावकीनाज्ञयाऽब्रुवम् ॥ ७३ ॥
के परे को वा स्वः इत्यपि मन्दप्रज्ञकेन
विनष्टमेधाकेन च मया न ज्ञातुं शक्यते ॥ ७४ ॥

वङ्गराजस्तं प्रति ।

कवित्वस्य त्वदुक्तस्य भावे त्वस्तस्य धीगणः ।
मया स तु न तद्भावे प्रवेष्टुं क्षमतामगात् ॥ ७५ ॥
सद्गीस्त्वं ज्ञानचक्षुष्टं याद्दक् ते ज्ञायते ततः ।
योऽसौ वेशो वाजिपोषः सोऽलीकस्ते गुरोर्धिया ॥ ७६ ॥

---

भवतीति । इने प्रभौ तथा वृद्धे भवति त्वयि आस्माकीनः अस्मत्सम्बन्धीयो वाग्विस्तारो न युज्यते तथापि तवाज्ञया एवं अब्रुवम् । पद्ये । वृद्ध इत्यादिकं ज । भवति ८।, इने ७।, (तथा १) ॥ ७३ ॥

के पर इति । के जना परे अनात्मीयाः को वा स्वः आत्मीयः मन्दबुद्धिना मया एतत् न ज्ञायते । पद्ये । इत्यपीत्यादिकमुदाहरणवाक्यम् । के ७।, परे ७।, अकः ६।, वा १।, स्वः १।, ॥ ७४ ॥

कवित्वेति । त्वदुक्तस्य त्वयोक्तस्य कवित्वस्य काव्यस्य भावे तु अभिप्राये तु मया धीगणः बुद्धिसमूहः अस्तश्च क्षिप्तोऽपि स तु धीगणः तद्भावे तस्य काव्यस्य अभिप्राये प्रवेष्टुं क्षमतां मागात् न प्राप्तवान् । पद्ये । कवित्वस्येत्यादिकमुदाहरणम् । भावे ७।, त्वः १।, तः १।, ( च ) ॥ ७५ ॥

सद्गीति । ते तव सद्गीस्त्वं साधुवाक्यत्वं ज्ञानचक्षुष्टं ज्ञायते ततस्तस्मात् असौ यो वाजिपोषो वाजिनां पोषाय हितो वेशः सः धिया गुरोर्गौरवापन्नस्य ते तव अलीकः

व्याकरणम् ।

भवतीने तथा । युष्मदादेर्यौष्माकाद्यादेशा भवन्ति ईनेपि । तावकीन ॥ ७३ ॥

के परेऽकः स्वो वा । ककारे परे अको ह्रस्वः स्यात् वा । मन्दप्रज्ञकेन । विनष्टमेधाकेन ॥ ७४ ॥

भावे त्वतल । भावेऽर्थे त्वतौ प्रत्ययौ स्याताम् । कवित्वस्य । क्षमताम् ॥ ७५ ॥

भृगुराह। इत्थं वङ्गराजस्तं ज्ञानिनं मत्वा सपुरस्कारमपालयत्।
अथावनीनेनाङ्कोऽङ्को द्विस्त्रिराह्निकवत् तदा।
देवर्षिः सस्मरे तेन विपदब्धिं तितीर्षुणा ॥ ७७ ॥
तदा मुनिस्तं राजानं स्मृत्वा तस्य मनोव्यथाम्।
बह्वह्नीनां नाशयिष्यन् कुवेरस्य पुरं ययौ ॥ ७८ ॥
( अथ नारदः कुवेरं प्रति। )
इष्यते वत्स ! चिदिवार्थं इह क्वापि नो सता।
मदाय मदवत् ह्यर्थो मत्तता पतनाय च ॥ ७९ ॥

---

काल्पनिकः। पक्षे। सङ्गीत्वमित्यादिकमुदाहरणम्। ष: १।, स: १।, लोक: ५।, ते ७।, अगुरोः ५।, ॥ ७६ ॥

अथेति। तेन अवनीनेन अवन्या इनेन प्रभुना विपदब्धिं तितीर्षुणा सता तदा अङ्कोऽङ्को द्विस्त्रिः प्रतिदिनं द्वित्रिवारं आह्निकवत् देवर्षिर्नारदः सस्मरे। अङ्क इति सुप्प्रत्यययोगेन षष्ठी। पक्षे। अवनीति पृथिव्याः सम्बोधनं, अथ अनन्तरम्। ईने ७।, न १।, अङ्गः ६।, अङ्गः १।, ॥ ७७ ॥

तदेति। अस्यार्थः सुगमः। बह्वह्नीनां बहुदिवसीयाम्। पक्षे। पूर्व्वसूत्रस्य उदाहरणम् ॥ ७८ ॥

इष्यत इति। हे वत्स ! इह लोके क्वापि कुत्रापि सता सुधिया चिदिव ज्ञानमिव अर्थो धनं न इष्यते हि यस्मात् अर्थो धनं मदाय मत्ततायै भवति मत्तता च पतनाय भवति। पक्षे। इहेत्यादिकमुदाहरणघटितवाक्यम्। इष्यते ८।, वत् १।, सः १।, चित् १।, इवार्थे ७।, ॥ ७९ ॥

### व्याकरणम्।

षः सोलोकस्तेऽगुरोः। त्रिङ्गस्थेकः परः सः षः स्यात् तकारे परे नतु दीर्घात्। ज्ञानचक्षुष्टम्। दीर्घात् किं सङ्गीत्वम् ॥ ७६ ॥

ईनेनाङ्गोङ्गः। अहन् शब्दस्य अङ्गः स्यात् नतु ईने परे। आह्निकवत् ॥ ७७ ॥

ईनेतु बह्वह्नीनाम् ॥ ७८ ॥

इष्यते वत्स चिदिवार्थे। इवार्थे वत् प्रत्यय इष्यते स तु चित् स्यात्। मदवत् ॥ ७९ ॥

मम तु प्रत्ययोऽस्तीति अर्थं आपत्करोऽसताम् ।
इन्द्रत्वान्नहुषो धीमान् सम्पन्नत्तोऽपतत् पुरा ॥ ८० ॥
विन्मायाया बाधिकाऽतो नासत्ये सद्ग्रहः सताम् ।
मायाविमाययामुग्धोऽज्ञो मृषापीच्चतेऽमृषा ॥ ८१ ॥
यथा विन्मन्यतेऽमेधाः स्रजोऽहीनच्चिदोषतः ।
तथाऽमेधाव्यजादोषाद्विश्वेशं मन्यते जगत् ॥ ८२ ॥

इदमपि महदाश्चर्य्यं यथा ।

स्वदेहमलजान् कीटानात्मजान् मन्यतेऽबुधः ।
तद्वियोगाधिदहनस्तं दहत्यमनस्विनम् ॥ ८३ ॥

ममेति । मम तु इति प्रत्ययो निश्चयोऽस्ति । तत् किमित्याह । असतां जनानां अर्थो धनं आपत्करो भवति । एतदेव दर्शयति । नहुषः इन्द्रत्वात् सम्पन्मत्तः सन् पुरा अपतत् । पक्षे । म इति ब्रह्मणः सं । मतुप्रत्ययः १।, अस्तीत्यर्थे ७।, ॥ ८० ॥

विन्मायेति । वित् ज्ञानं मायाया बाधिका विनाशिनी अतः कारणात् सतां सुधियां असत्ये सद्ग्रहः सत्यत्वज्ञानं न भवेत् । अज्ञो जनः मायाविनो महेश्वरस्य मायया मुग्धः सन् मृषापि मिथ्यामयमपि जगत् अमृषा सत्यवत् ईक्षते । मायान्तु प्रकृतिं विद्यात् मायिनन्तु महेश्वरमिति श्रुतिः । विन् १।, मायायाः ५।, वा १।, ॥ ८१ ॥

यथेति । हे वित् ! ज्ञानिन् ! अमेधा अज्ञानी जनः यथा अच्चिदोषतः स्रजो मालाः अहीन् सर्पान् मन्यते । तथा अमेधावी जनः अजादोषात् मायारूपदोषात् विश्वेशं जगन्मन्यते इदं विश्वमिति मन्यते । भ्रमस्य दोषजन्यत्वात् । पक्षे । यथेति यथार्थवादिनः सं । विन् १।, मन्यते ८।, ( मेधा अस् ) मेधाःस्रजः ५।, ॥ ८२ ॥

स्वदेहेति स्पष्टम् । पक्षे । पूर्व्वसूत्रस्य उदाहरणम् ॥ ८३ ॥

व्याकरणम् ।

मतुप्रत्ययोऽस्तीत्यर्थे । धीमान् ॥ ८० ॥

विन् मायाया वा । मायाया विन् स्यादस्त्यर्थे वा । मायावि ॥ ८१ ॥

विन् मन्यते मेधाःस्रजः । मेधाशब्दात् असुभागान्तशब्दात् स्रज्शब्दाच्च विन् स्यादस्त्यर्थे । मेधावी ॥ ८२ ॥

मनस्विनः ॥ ८३ ॥

इति न तव तु प्रत्ययो भवति ममोपधावतः कर्णे श्रीपतिराह।
गोकुले क्रीड़तो ममचरणस्पर्शात् कुवेरात्मजौ पुनः पूर्ववत् देह-
वन्तौ भविष्यतः॥ ८४॥ (किन्त्वेवं जानीहि।)

न विद्यावान् नो यशस्वान् शीलवान् पुण्यवान् न यः।
स किम्वान् पुरुषो लोके परं पित्रोः शुचावहः॥ ८५॥

तस्माच्चित्वन्! शिवसख! शोकमात्मजयोः क्षते।
समुज्झ पादपितनू अपि तौ क्षणमाप्स्यतः॥ ८६॥

अन्यच्च तव हिताय वदामि।

मितवादिन्यनेका च स्फुटपङ्कजशोभिनी।
तथा गुणवती चास्ते सैरिन्ध्री त्वत्पुरान्तरे॥ ८७॥

---

इतीति। उपधावतः समीपं गच्छतो मम कर्णे श्रीपतिरिदमाह तु किन्तु इति तव प्रत्ययो न भवति। अन्यत् सुगमम्। पक्षे। नत इति सं। वतुप्रत्ययः १।, भवति ८।, (म्-अ)-म, (म्-अ) (म उपधावतः) ममोपधावतः ५।, ॥ ८४॥

न विद्यावानिति। स किम्वान् अतितुच्छ इत्यर्थः। अन्यत् सुगमम्। पक्षे। पूर्व्वसूत्रस्य उदाहरणम्॥ ८५॥

तस्मादिति। हे चित्वन् बुद्धिमन्! आत्मजयोः क्षते पुत्रयोर्निमित्तं शोकं समुज्झ त्यज। तौ तव पुत्रौ पादपितनू। पादपीति पादप एवेति स्वार्थे णिःप्रत्ययः। पक्षे। तस्मादित्यादिकमुदाहरणवाक्यम्। आपात् ५।, (अपि १)॥ ८६॥

मितवादीति। हे मितवादिन्! परिमितकथनशील! त्वत्पुरान्तरे तव पुरमध्ये

व्याकरणम्।

वतुप्रत्ययो भवति ममोपधावतः। मकारान्तादवर्णान्तात् मकारावर्णोपधाच्च वतुप्रत्ययः स्यादस्त्यर्थे देहवन्तौ॥ ८४॥

विद्यावान्, यशस्वान्, शीलवान्, पुण्यवान्, किम्वान्॥ ८५॥

आपादपि। अन्नन्ताच्च वतुस्यादस्त्यर्थे। चिद् विद्यते अस्य इति चित्वन्॥ ८६॥

यासुरी त्वद्गृहे भन्तो ! सात्वमाङ्गलिकोति यत् ।
पौराः शङ्कन्त इति तु प्रत्ययो जायते न ते ॥ ८८ ॥
भव्ययुत ! भवति या वा एवंविधा हेया सा सपद्येव ।
शंयोऽवधारय तावत् कथयामि यावदेव शीलमस्याः ॥ ८९ ॥

अहो निधिस्वामिन् ! किन्नरवारकेन ! इराऽममायुतेभवललो रणे रसशाली लीलालवस्य विबुधानाम्। लच्यानुसारिणो यस्य विशिखा रथिरः स महासुरोऽस्याः पितासीत् ॥ ९० ॥

---

स्फुटपङ्कजशोभाशालिनी गुणवती अनेका सैरिन्ध्री आसे। पक्षे। मित इति सं। वा १।, आत् ५।, इन् १।, अनेकाचः ५।, ॥ ८७ ॥

यासुरीति। हे भन्तो ! कल्याण-युत ! त्वद्गृहे तव गेहे या आसुरी असुरस्य कन्या आस्ते सा तु अमाङ्गलिकी अमङ्गलाय स्थिता इति यत् पौराः पुरवासिनो जनाः शङ्कन्ते इति तु तव प्रत्ययो ज्ञानं न जायते। पक्षे। यासुरीत्यादिकमुदाहरणघटितवाक्यम्। शंकंतः ५॥, (इति) तुप्रत्ययः १।, जायते ८।, ॥ ८८ ॥

भव्येति। हे भव्ययुत ! कुशलयुक्त ! या वा यापि स्त्री एवम्विधा अर्थादमाङ्गलिकी भवति सा स्त्री सपदि एव हेया त्यज्या हे शंयो ! यावदस्या आसुर्य्याः शीलं कथयामि तावदवधारय। पक्षे। भव्येति सम्बोधनम्। यु-त-भ व-ति याः १॥, एवम्विधाः १॥, ॥ ८९ ॥

अहो इति। हे निधिस्वामिन् ! हे किन्नरवारकेण ! किन्नरस्य वारः समूहः तस्य इन प्रभो ! रथिरो ! महारथो महासुरोऽस्याः पिता आसीत् कीदृशः इराऽममायुतेभवललः इरा मदिरा तया अममा अमान्ता अर्थात् मत्ता ये अयुतसंख्यका इभा हस्तिनस्तत्सम

व्याकरणम्।

वादिन्ननेकाचः। अनेकाचोऽवर्णान्तात् इन् स्यात् वा अस्त्यर्थे। शोभिनी ॥ ८७ ॥
शङ्कन्त इति तुप्रत्ययो जायते। शं कं भ्यां एवं तुप्रत्ययो जायते अस्त्यर्थे। भन्तो ॥ ८८ ॥
यु-भ-व-ति यावा एवम्विधाः। एते प्रत्यया एतत् प्रकाराः ज्ञेयाः। वाक्कारयार्थे। शंयो ॥ ८९ ॥

गोमी पिशाचकिजातो बद्धदिव्याङ्गनापतिः ।
हृतेन्द्रकुञ्जरः शैवाजगवी केशवद्विषन् ॥ ८१ ॥
भीता वृन्दारका यस्मादभवन् मलिनाननाः ।
अजेया वैजयन्ताभप्रासादा यत् पुरी सती ॥ ८२ ॥
अलोमशाऽस्त्र्यादिशून्या नन्दनद्रुमशोभिता ।
यस्याहंयोः पर्वताभा तुन्दिभा वलिभा तनुः ॥ ८३ ॥

---

बलशाली। रणे युद्धे रसशाली अनुरागयुक्तः। विबुधानां देवानां लीलायाः श्रियाः लवच्छेत्ता। यस्य विशिखा वाणाः लक्ष्यानुसारिणः लक्ष्यभेदिनः। पचे। निधिस्था इति केषाञ्चित् सं। मिन् किन् न र-व आरक इन इर अश-म यु-त बल-ल उर- ण ईर-स शालिन् इल-उल आलवः १॥, विबुधानां ६॥, लक्ष्यानुसारिणः १॥, ॥ ८० ॥

गोमीति। पुनः कीदृशः गोमी गवां स्वामी पिशाचकिना शिवेन जातः। हृत इन्द्रस्य कुञ्जरो येन स तथा। शैवाजगवी शैवं शिवसम्बन्धीयं अजगवं धनुर्विद्यते यस्य स तथा। केशवद्विषन् विष्णुद्वेषी। पचे। पूर्व्वसूत्रस्य उदाहरणम् ॥ ८१ ॥

भीता इति। यत्पुरी यस्य पुरी वैजयन्ताभप्रासादा वैजयन्ता इन्द्रस्य प्रासादास्तदाभाः प्रासादा यस्याः पुर्य्याः सा तथा। पचे। पूर्व्वसूत्रस्य उदाहरणम् ॥ ८२ ॥

अलोमेति। कीदृशी पुरी अलोमशा लोमशून्या। यस्य अहंयोः साहङ्कारस्य तनुः पर्व्वताभा तुन्दिभा स्थूला तथा वलिभा विवलियुक्ता। पचे। सूत्रस्य उदाहरणम् ॥ ८३ ॥

## व्याकरणम् ।

मिन्-किन्-न-र-व-आरक-इन-इर-अ-श-म-यु-त-बल-ल-उर-ण-ईर-स-शालिन्-इल-उल-आलवो विबुधानां लक्ष्यानुसारिणः। एते प्रत्ययाः पण्डितानां प्रयोगानुसारेण प्रयोक्तव्या इत्यर्थः। रचिरः ॥ ८० ॥

पिशाचकि, अङ्गना, कुञ्जर, अजगवी, केशव ॥ ८१ ॥

वृन्दारक, मलिन, वैजयन्त, प्रासाद, ॥ ८२ ॥

अलोमशाः, द्रुम, अहंयोः, पर्व्वत, तुन्दिभ, वलिभ ॥ ८३ ॥

कोटिदन्तावला यस्य द्वारे आसन् रजस्वलाः ।
मांसलाः पृथुलास्तद्वत् चटुला अपि दन्तुराः ॥ ९४ ॥
रणप्राज्ञस्य काण्डीरः स्वर्णसो योगशाल्यपि ।
फेनिलं स्यान्मुखं वक्तुं यच्छौर्य्यैश्वर्य्यवर्णने ॥ ९५ ॥
एवं बलूलो यो दैत्यो हृदयालुः पिनाकिनः ।
सदास्याः कन्दलात् तस्य सा श्रीरन्तर्दधेऽचला ॥ ९६ ॥

तदेवं ब्रवीमि ।

यत् स्वाम्यं किञ्चिदस्त्यर्थे नाम न्यङ्मन्यते गुरुः ।
सोपि श्रीद ! निधिस्वामी न कैस्त्वं मन्यसे गुरुः ।
परास्तया किमैश्वर्य्यं गौरवं वा भवेत् तव ॥ ९७ ॥

---

कोटीति । दन्तावला हस्तिनः ॥ ९४ ॥

रणेति । प्राज्ञः प्रज्ञावान् । काण्डीरः अस्त्रयुक्तः स्वर्णसः स्वर्णस्वामी यस्यासुरस्य शौर्य्यैश्वर्य्ययोर्वर्णने मुखं फेणिलं स्यात् । पचे । सूत्रस्य उदाहरणम् ॥ ९५ ॥

एवमिति । एवं बलूलः एवम्बिधबलवान् पिनाकिनः हृदयालुः सहृदयः । अस्यास्तत्-सुतायाः सदा कन्दलात् मौखर्य्यात् तस्यासुरस्य अचला श्रीरन्तर्दधे । पचे । सूत्रस्य उदाहरणम् ॥ ९६ ॥

यदिति । किञ्चिदस्त्यर्थे धने यत् स्वाम्यं स्वामित्वं अस्ति स न्यक् अपि चुद्रोऽपि गुरुर्म्मन्यते लोकैरिति शेषः । हे श्रीद ! निधिस्वामी त्वं कैर्जनैर्गुरुर्न मन्यसे । अपि तु तथा मन्यसे । पचे । यत्स्वाम्यमिति उदाहरणम् । अस्त्यर्थे ७, नामनि ७, अक १, मन्यते ८, गुरुः १ ॥ ९७ ॥

व्याकरणम् ।

दन्तावल, रजस्वला, मांसलाः, पृथुला, चटुलाः, दन्तुराः ॥ ९४ ॥

प्राज्ञः, काण्डीरः, स्वर्णसः, योगशाली, फेनिलम् ॥ ९५ ॥

बलूलः, हृदयालुः ॥ ९६ ॥

अस्त्यर्थे नामन्यङ् मन्यते गुरुः । अस्त्यर्थे प्रत्यये परे नामनि संज्ञायां अक् गुरुर्मन्यते । स्वाम्यं स्वामी ॥ ९७ ॥

एतत् श्रुत्वा कुवेरोऽन्तःपुरात् तामसुरसुतामानीय तां प्रति।

नु! व्रजेतो बन्धुजनादेः समीपेऽसुरात्मजे!।
बिभेति पौरा जनता सदा त्वत्सहवासतः॥ ९८॥
इनः खलानां हि तथाऽत्र्यो गोः श्रीविनाशनः।
य आसीदसुरः क्रूरः पद्मिन्याः शूककीटवत्॥ ९९॥
तस्यात्मजा त्वं हे सुभ्रु! तवाघ्राणात् पुरस्त्रियः।
त्रस्ताः समस्ता गोत्रेव मृगादन्या विलोविलोकिता॥ १००॥
अथ तां बन्धुताहीनां पतितां शोकसागरे।
आदायर्षिर्व्रजे गच्छन्नाहेदं नृपमुद्दिशन्॥ १०१॥

नुव्रजेति। नुभोः! इत एतस्मात् देशात् बन्धुजनादेः समीपे: व्रज। पौरजनता पुरस्थजनसमूहः तव सहवासतो बिभेति। पद्ये। नु इति सम्बोधने। व्रजे ७', तः १', बन्धुजनादेः ५', ॥ ९८॥

इन इति। अत्र्योऽस्मिन् लोके भवो योऽसुरः पद्मिन्याः पद्मसमूहस्य शूककीट इव क्रूर आसीत्। कीदृशः खलानां क्रूराणां इनः प्रभुः। गोः स्वर्गस्य श्रीविनाशनः। पद्ये। श्रीविनाशन इत्यादिकमुदाहरणघटितवाक्यम्। इनः १', खलानां ६''', (हि) (तथा १) त्र्यः १', गोः ५', ॥ ९९॥

तस्येति। हे सुभ्रु! तस्यासुरस्य आत्मजा त्वं, तव घ्राणात् गन्धात् समस्ताः पुरस्त्रियः त्रस्ताः भीता बभूवुः मृगादन्या व्याघ्रा विलोकिता गोत्रा गोसमूह इव। पद्ये। पूर्व्वसूत्रस्य उदाहरणम्॥ १००॥

अथेति। बन्धुताहीनां बन्धुसमूहरहितां तामादाय ऋषिर्नारदः व्रजे पथि नृपं उद्दिश्य इदं वक्ष्यमाणमाह। पद्ये। सूत्रस्य उदाहरणम्॥ १०१॥

व्याकरणम्।

व्रजेतो बन्धुजनादेः। बन्ध्वादेर्जनादेश्च तः स्यात् व्रजे समूहार्थे। जनता॥ ९८॥

इनः खलानां तथा त्र्यो गोः। खलादेरिनः स्यात् तथा गोशब्दात् त्र प्रत्ययः स्यात् समूहार्थे। पद्मिन्याः॥ ९९॥

गोत्रा॥ १००॥

बन्धुता॥ १०१॥

स्त्रीरत्नपूरणेऽट्टे राजते संख्यात इन्दुवत् ।
लोके यः सोऽश्वशालायामास्ते सादिचतुर्दशः ॥ १०२ ॥

( सुलोचना नारदं प्रति । )

ऋषे ! मदर्थमट् नान्तादसंख्यादित आधितः ।
शीर्णो मे दयितो नूनं प्राप्तवान् दशमीं दशाम् ॥ १०३ ॥

( भृगुराह । )

अथो स वित्तमः षष्ट्या विपलैस्तां तदासुरीम् ।
विच्छेदाह्नात् षष्टितमाह्नेऽनैषीत् पत्युरन्तिकम् ॥ १०४ ॥

स्त्रीरत्नेति । लोके भुवने इन्दुवत् संख्यातो विख्यातो यो राजा स्त्रीरत्नैः पूरिते अट्टे अट्टालिकायां राजते स्म स राजा सादिनां अश्वपालानां मध्ये चतुर्दशः सन् अश्वशालायामास्ते । पद्ये । स्त्रीरत्नेति सं । पूरणे ७।, अट् १।, टेः ६।, राजते ८।, संख्यातः ५।, ॥ १०२ ॥

ऋषेरिति । मे मम दयितः प्रियः मदर्थं मम प्राप्तिनिमित्तं अट् गच्छन् सन् नान्तात् अनन्तात् असंख्यात् इतः एतस्मात् आधितः मनोदुःखात् शीर्णः सन् नूनं निश्चितं दशमीं दशां मृत्युरूपां विरहदशां प्राप्तवान् । पद्ये । मदर्थ इति सं । मट् १।, नान्तात् ५।, असंख्यादितः ५।, ॥ १०३ ॥

अथो इति । अथो अनन्तरं स वित्तमो ज्ञानिश्रेष्ठो नारदः तदा तां आसुरीं असुरसुतां षष्ट्या विपलैः पत्युरन्तिकं समीपं अनैषीत् । कस्मिन् दिने इत्याह विच्छेददिवसात् षष्टितमे दिने । पद्ये । अथो इति प्रश्न । सः १।, ( उद्दत ) वित् १।, तमः १।, षष्ट्याः ५।, ॥ १०४ ॥

व्याकरणम् ।

पूरणेऽट् टे राजते संख्यातः । संख्याशब्दात् टेः स्थाने अट् दीयते अर्थात् भवति पूरणेऽर्थे । चतुर्दशः ॥ १०२ ॥

मट् नान्तादसंख्यादितः । असंख्यादेर्नान्तसंख्याया मट् स्यात् पूरणे । दशमीम् ॥ १०३ ॥

स वित्तमः षष्ट्याः । षष्ट्यादेस्तमः स्यात् स च वित् उकारेत् स्यात् । अत्र षष्टिपदं अमत्यादेरुपलक्षणं लाघवात् । षष्टितम ॥ १०४ ॥

( राजा नारदं प्रति । )

विंशतेर्व्वा दिनेभ्यः परे विंशतितमे दिवसे वा पुनर्भवतः पदं दृष्टम् ॥ १०५ ॥

अहो नित्यानन्दथो ! वित् ! परे कतिपयात् युगात् ।
वर्षे कतिपयथे वा पुनर्दृष्टं भवत्पदम् ॥ १०६ ॥

इति तु निर्णेतुं न शक्नोमि । ( भृगुराह । ) अस्य भ्रान्तिर्युज्यते एव । यतः ।

स जड़ति षट्चतुरोऽपि यो दिवसान् ज्वरति सकृच्चतुर्थयामे ।
चिरविरहज्वरतप्तः किमु नायं जड़ति नृपो राजन् ॥ १०७ ॥

( राजा विधिमाक्षिपति । )

अचित् ! विधेऽधाः संख्यातो वह्निर्दुःखं कथं मयि ।
पात्रेऽयोग्ये तद्भरात् तत् त्रुट्यतीह द्विधा त्रिधा ॥१०८॥

---

विंशतेरिति । स्पष्टं । विंशतेः ५।, वा १।, ॥ १०५ ॥

अहो इति । हे नित्यानन्दथो ! नित्यः आनन्दथुः आनन्दो यस्य स तथा । हे वित् ! ज्ञानिन् ! कतिपययुगात् परे कतिपयथे वर्षे वा भवतः पदं पुनर्दृष्टम् । पक्षे । नित्यानन्द इति सं । थः १।, ( उ इत् ) वित् १।, परे ७', कतिपयात् ५।, ॥ १०६ ॥

स जड़ेति । यो जनः षट् चतुरोपि दिवसान् चतुर्थयामे सकृत् ज्वरति ज्वरी भवति स जनो जड़ति अज्ञो भवति हे राजन् ! अयं नृपस्तु चिरविरहज्वरेन तप्तः किमु कथं न जड़ति अवश्यमेव जड़तीत्यर्थः । अत्र ज्वरतीत्यकर्म्मकधातुयोगे षट्चतुर इति अधिकरणे द्वितीया । पक्षे । सज आसक्तो भव । डति षट्चतुरः ५।, (अपि) ॥१०७॥

अचिदिति । हे अचित् ! अज्ञान ! हे विधे ! संख्यातो वह्निः अर्थात् असंख्येयं दुःखं कथं अपात्रे अयोग्ये मयि अधाः समस्थापयः तद्भरात् दुःखस्य भारात् तत्पात्रं

व्याकरणम् ।

विंशतेर्व्वा । अत्रापि विंशतिपदं उपलक्षणम् । विंशतितमे ॥ १०५ ॥

थो वित् परे कतिपयात् । कतिपयात् थः स्यात् पूरणेऽर्थे । स च वित् उकारानु-बन्धः । कतिपयथे ॥ १०६ ॥

डतिषट् चतुरोपि । चतुर्थे ॥ १०७ ॥

अथ परगेहे पत्न्याश्चिरवासकृतं दोषं शङ्कमानं नृपं प्रति नारदः ।

राजन् ! विद्धीति नूनं सवित्तयोऽवयवे हृदि ।
अस्या दोषं न पश्यन्ति कालत्रितयवेदिनः ॥ १०९ ॥
अथैवं नतकायः स वित् द्वितस्त्रित एव वा ।
मुन्युक्तेश्छिन्नसन्देहोऽग्रह्णात् मुनिपदद्वयम् ॥ ११० ॥
मुनिर्लोकत्रयस्वैरी दम्पती तौ शुभाशिषा ।
प्रतिनन्द्य ययौ वीणां वादयन् वैष्णवीं पुरम् ॥ १११ ॥

द्विधा त्रिधा त्रुट्यति स्वयं भग्नं भवति । पचे । स इति सं । चित् १।, विधे ७।, धाः १।, संख्यातः ५।, ॥ १०८ ॥

राजन्निति । हे राजन् ! इति सर्व्वं विद्धि जानीहि । सवित्तयः वित्तिर्ज्ञानं तया सह वर्त्तमानाः ज्ञानवन्त इत्यर्थः कालत्रितयवेदिनो जनाः अस्यास्तव प्रियायाः अवयवे तथा हृदि मनसि दोषं न पश्यन्ति । पचे । राजन् इति सं । सवित् १।, तयः १।, अवयवे ७।, ॥ १०९ ॥

अथेति । अथानन्तरं स वित् ज्ञानवान् राजा द्वितस्त्रितस्य मुनेर्नारदस्य उक्तेर्व्वचनात् निरस्तसन्देहः तथा नतकायः सन् मुनेः पदद्वयं अग्रह्णात् । पचे । नतक इति सं । अयः १।, सः १।, वित् १।, द्वितः ५।, त्रितः ५।, ( एव ) वा १।, ॥ ११० ॥

मुनिरिति । लोकत्रये स्वैरी स्वच्छन्दगामी अव्याहतगतिरित्यर्थः अन्यत् सुगमम् । पचे । सूत्रस्य उदाहरणम् ॥ १११ ॥

व्याकरणम् ।

चित् विधे धाः संख्यातः । विधे प्रकारार्थे संख्यायाः धाः स्यात् स तु चित्कार्य्यकारी भवति । द्विधा, त्रिधा ॥ १०८ ॥

स वित्तयोऽवयवे । संख्यायाः तयः स्यात् अवयवार्थे स च वित् उकारानुबन्धः स्यात् । कालत्रितय ॥ १०९ ॥

अयः स वित् । द्वितस्त्रित एव वा । द्वित्रिभ्यां स वित् उकारानुबन्धेन सह वर्त्तमानः अयः स्यात् वा अवयवार्थे । पदद्वयम् ॥ ११० ॥

लोकत्रय । द्वितयं, त्रितयम् ॥ १११ ॥

अथ अत्यधीरं नृपं प्रति सुलोचना आह। राजन्! न जानासि अद्य पर्व वर्त्तते तस्मात् दिनद्वयं क्षमस्वेति। तत् श्रुत्वा राजा आह। अहो तव योगोऽपि वियोग इव मन्यते। सुलोचना आह। राजन्! नेह स्थातव्यं यात्रोपायं चिन्तय। राजा।

प्रियेऽश्वानामनेकेषामेकस्योत्कर्षं ईक्षितः।
तमस्फुटं समारुह्य यास्यावो द्वौ सतीतमे!॥ ११२॥

(सुलोचना।)

पन्था दूरतरोऽश्वेनैकेनायं मन्यतेऽतरः।
द्वयोरतिशये भारे ग्लास्यत्यश्वोऽपि सत्तरः॥ ११३॥
राजा। प्रियेऽयमश्वः समर्थः। (भृगुराह।)
राजा प्रियतमामश्वं रोहयित्वा तथा स्वयम्।
शुशुभेऽसौ तयाथोच्चैःश्रवस्थः स शचीन्द्रवत्॥ ११४॥

प्रियेश्वेति। हे प्रिये! अनेकेषां अश्वानां मध्ये एकस्याश्वस्य औत्कर्ष: उत्तमत्वं ईक्षितः दृष्टः तं अश्वं अस्फुटं अव्यक्तं यथा स्यात् तथा आरुह्य हे सतीतमे! आवां द्वौ यास्याव:। पद्ये। प्रिये इति सं। अनेकेषां ६।॥, एकस्य ६।, उत्कर्षे ७।, ईक्षित: १।, तम: १।, ॥ ११२॥

पन्था इति। अयं दूरतर: पन्था: एकेन अश्वेन अतर: अनुत्तार्य्यः मन्यते। सत्तरोऽपि साधुतरोऽपि अश्व: द्वयोर्जनयोर्भारे अतिशये सति ग्लास्यति ग्लानो भविष्यति। पद्ये। पूर्व्वापरभागौ उदाहरणम्। मन्यते ८।, तर: १।, द्वयो: ६॥, अतिशये ७।, ॥ ११३॥

राजेति। राजा सुमति: प्रियतमां पत्नीं अश्वं रोहयित्वा स्वयमपि तथा अर्थादारुह्य

व्याकरणम्।

अनेकेषामेकस्योत्कर्षे तम ईक्षित:। अनेकेषां मध्ये एकस्योत्कर्षार्थे तमप्रत्ययो दृष्ट:। सतीतमे॥ ११२॥

मन्यते तरो द्वयोरतिशये। द्वयोर्मध्ये एकस्योत्कर्षे तरो मन्यते। दूरतर: सत्तर:॥ ११३॥

तयोस्तथाकल्परूपे दृष्टे वेपोऽलघुर्म्मदः।
लोमाञ्चः कस्य वा यूनो नासीत् सतितरापते!॥ ११५॥
( राजा प्रियां प्रति। )
करभोरुतरे! मूलं फलं नौ जीवनं पथि।
क्वचिच्चोपस्थितिमतो लघुतायाति तत्र मे॥ ११६॥
( भृगुः। ) कोमलाङ्गितरा साथ व्रजन्ती वाजिवाहना।
तत्प्लुतप्रचलद्गात्रा श्रान्ता तन्वीतमाभवत्॥ ११७॥

---

असौ राजा तया पत्न्या अति शुशुभे। क इव उच्चैःश्रवस्य: स शचीन्द्रवत् शच्या सह इन्द्र इव। पक्षे। पूर्व्वसूत्रस्य उदाहरणम्॥ ११४॥

तयोरिति। हे सतितरापते! तयोर्दम्पत्योः तथा आकल्पे तादृशवेशे रूपे च दृष्टे कस्य यूनो वा वेपः कम्पः अलघुर्म्मदः मत्तता रोमाञ्चश्च नासीत् अपितु सर्व्वस्यैव। आकल्पवेशौ नेपथ्यमित्यमरः। पक्षे। मद इत्यादिकमुदाहरणघटितवाक्यम्। तयोः ७॥, ( तथा ) कल्परूपे ७।, दृष्टे ७।, वा १।, ईपः ६।, लघुः १।,॥ ११५॥

करभेति। हे करभोरुतरे! पथि नौ आवयोः फलं मूलञ्च जीवनं जीवनोपायः। क्वचिच्च अर्थात् गृहस्थस्याश्रमे उपस्थितिमतो भोजनार्थमुपस्थितस्य तत्र मे मम लघुता आयाति। पक्षे। करभोरुतरे इति उदाहरणम्। क्वचित् ७।, ( च ) ऊपः ६।, स्थितिमतः ६।, लघुता १।, आयाति ८।, तत्र ७',॥ ११६॥

कोमलेति। अथ सा कोमलाङ्गितरा वाजिवाहना घोटकवाहना व्रजन्ती सती पथि तत्प्लुतेन तस्य घोटकस्य प्लुतगत्या चलद्गात्रा अतएव श्रान्ता सती तन्वीतमा क्षीणतमा अभवत्। पक्षे। सूत्रस्य उदाहरणमात्रम्॥ ११७॥

व्याकरणम्।

प्रियतमाम्॥ ११४॥

तयोस्तथा कल्परूपे दृष्टे वेपो लघुः। तयोस्तरतमयोस्तथा रूपकल्पे च परे उत्तरत्र दृष्टे सति ईपो ह्रस्वो वा स्यात्। सतितरा॥ ११५॥

क्वचिच्चोपस्थितिमतो लघुतायाति तत्र। तत्र तर-तम-रूपकल्पेषु परेषु क्वचित् स्थितिमतः ऊपः लघुता आयाति। करभोरुतरे॥ ११६॥

कोमलाङ्गितरा। तन्वीतमा॥ ११७॥

ग्लायत्तरा तृषार्त्ता च सासीद्दुत् स्त्री पुमानिव ।
वाहगत्याङ्गधूतिं न सहते यन्महत्तराम् ॥ ११८ ॥
( सुलोचना । ) अवसीदन्ति मे प्राणा महतीतरया तृषा ।
अङ्गव्यथा च महतीतरातोऽश्वात् वतारय ॥ ११९ ॥
मुड्मालिङ्गति वादे रूपप्रत्ययो भवति न कस्यापि ।
अङ्गं नेङ्गति चाङ्गानङ्गाङ्गनाकथा सुतरां हतरूपा ॥ १२० ॥
नापश्यमेकदापीह सस्मितं ते मुखाम्बुजम् ।
इत्येव मां व्यथयतेरूपं न हि स्मृतिर्मम ॥ १२१ ॥

ग्लायेति । अतिशयेन ग्लायन्ती इति ग्लायत्तरा तृषार्त्ता च सा सुलोचना रुत् शोदनान्विता आसीत् वाहगत्या घोटकेन गत्या महत्तरां अङ्गधूतिं अतिशयशरीर कम्पनं स्त्रीजनो न सहते पुमानिव पुरुषवत् । पक्षे । ग्लायत्तरा इति उदाहरणम् । इदुत् स्त्री १।, पुमानिव १। ,वा १।, ॥ ११८ ॥

अवेति । अतः कारणात् अश्वात् अवतारय मामितिशेषः अन्यत् सुगमम् । पक्षे । पूर्व्वसूत्रस्य उदाहरणम् ॥ ११९ ॥

मुड़िति । वादे कथायां मुड् मोदी मा मां आलिङ्गति अर्थात् आश्रयति । कस्यापि दृश्यवस्तुनो रूपप्रत्ययो रूपज्ञानं न भवति । हे अङ्ग ! मम अङ्गं न इङ्गति न चलति । अनङ्गाङ्गनाकथा रतिकथा हतरूपा अतिशयेन हता । मुड़िति मुदधातोः क्विपि रूपं । पक्षे । मुड्मा इति मुग्धोपमजनानां सम्बोधनं । न कस्यापीत्यादिकमुदाहरणवाक्यम् । लिङ्गतिबादेः ५।, रूपप्रत्ययः १।, भवति ८।, ॥ १२० ॥

नापश्यमिति । हे नृप ! एकदापि एकस्मिन् समयेऽपि ते तव सस्मितं मुखाम्बुजं न

व्याकरणम् ।

इदुत् स्त्री पुमानिव वा । ऋश्च उश्च इति रु ततस्तकार इति रुत्, इत्रुत् यस्य इति इदुत् ऋकारेत् उकारेचेत्यर्थः तादृशस्त्रीलिङ्गशब्दः पुमानिव अर्थात् पुम्वत् वा स्यात् तरतमरूपकल्पेषु । ग्लायत्तरा, महत्तरा ॥ ११८ ॥

महतीतरा, महतितरा ॥ ११९ ॥

लिङ्गतिबादे रूपप्रत्ययो भवति । उत्कर्ष इत्यनुवर्त्तते । हतरूपा ॥ १२० ॥

(राजा तां प्रति ।) प्रिये ! शीघ्रगमनार्थमश्वमाश्रितस्त्वाञ्चमां तां बाहुभ्यामादाय लोकानां वसतिपर्य्यन्तं यास्यामि ततः शिविकया यास्यामि ।

( सुलोचना तं प्रति । )

प्राणेश ! प्रेष्ठ ! यन्निष्ठो गुणादुत्कर्षं ईप्सितः ।
क्षोदिष्ठायाः कृते तस्य ते ग्लानिर्म्मम दुःसहा ॥ १२२ ॥

( भृगुः । ) प्रेयस्युक्तं तथापीय सुस्थिरत्वं न चेतसः ।
लेभे सर्व्वंसहाधीशः स स्थेयान् धृतिमानपि ॥ १२३ ॥

अपश्यं इत्येव मां व्यथयतेरूपं अत्यर्थं पीड़यति । स्मृतिर्मृत्युर्न व्यथयति । पचे । सूत्रस्य उदाहरणम् ॥ १२१ ॥

प्राणेति । हे प्राणेश ! हे प्रेष्ठ ! प्रियतम ! यन्निष्ठो यज्जनकर्त्तिर्गुणादुत्कर्षों गुणजनितोत्कर्ष ईप्सित आसीत् क्षोदिष्ठायाः अतिक्षुद्रायाः कृते निमित्तं तस्य ते तव ग्लानिर्म्मम दुःसहा । पचे । यन् इति गमनशीलस्य सं । इष्ठः १।, गुणात् ५।, उत्कर्षे ७।, ईप्सितः १।, ॥ १२२ ॥

प्रेयेति । तथा तत्प्रकारेण प्रेयस्या उक्तं आपीय श्रुत्वा सर्व्वंसहाधीशः पृथ्वीपतिः स राजा स्थेयानपि स्थिरोऽपि धृतिमानपि चेतसः सुस्थिरत्वं न लेभे अर्थादस्थिरोऽभवत् । पचे । प्रेयसीति सं । ( तथा १। ) ( अपि ) ईयसुः १।, ॥ १२३ ॥

व्याकरणम् ।

व्यथयतेरूपम् ॥ १२१ ॥

इष्ठो गुणादुत्कर्षे ईप्सितः । गुणवाचकात् उत्कर्षार्थे इष्ठ ईप्सितः । प्रेष्ठ, क्षोदिष्ठायाः ॥ १२२ ॥

तथापीयसुः । तथा तादृशार्थे ईयसुरपि स्यात् । प्रेयसी, स्थेयान् ॥ १२३ ॥

अथावतार्य्य वाहात् तां बाहुभ्यां जगृहे नृपः ।
दशनाभ्यां गरिष्ठाभ्यां करी बिसलतामिव ॥ १२४ ॥
शुभ्राम्बुदं तड़िदिव तदिमं नु तथा सती ।
सा महीयांसमाश्रित्य शुशुभे वरवर्णिनी ॥ १२५ ॥

स राजा बाहुभ्यां तामादाय जलाशयं स्मगयते स्म ।

अथो तड़िद्वदेका चोनषड्दशसमावया: ।
वने प्रसूतपुत्रा स्त्री ददृशे श्रेष्ठभूभुजा ॥ १२६ ॥

अथ स राजा तां स्त्रियं पप्रच्छ ।

त्वं स्थेष्ठा चपला किम्वा विपिनस्यास्य देवता ।
अथ वा श्रीशचन्द्रमसो ब्रूहि मे पृच्छतः सति ! ॥ १२७ ॥

---

अथेति । अथानन्तरं नृपः तां सुलोचनां वाहात् अश्वात् अवतार्य्य बाहुभ्यां जगृहे । क इव इत्याह । करी हस्ती गरिष्ठाभ्यां दशनाभ्यां दन्ताभ्यां बिसलतां मृणालमिव यथा हस्ती दन्ताभ्यां मृणालं गृह्णाति तथेत्यर्थः । पचे । सूत्रस्य उदाहरणम् । शुभेति । शुभोः तत् तदा सा वरवर्णिनी तथा सती नृपेण गृहीता सती महीयांसं महान्तं आश्रित्य शुशुभे । अत्र सादृश्यमाह । शुभ्राम्बुदं तड़िदिव । यथा श्वेतं मेघं आश्रित्य तड़ित् शोभते तथेत्यर्थः । पचे शुभाम्बुदन्त इति सं । डित् १।, इव १।, इमन् १।, (नु) तथा १।, ॥१२५॥

अथो इति । अथो अनन्तरं श्रेष्ठेन भूभुजा वने तड़िद्वत् विद्युदिव एका स्त्री ऊन-षड्दशसमावयाः एकोनषोड़शवर्षवयस्का प्रसूतपुत्रा ददृशे । पचे । उत इति सं । ड्वित् १।, एकाचः ५।, न १।, ॥ १२६ ॥

त्वमिति । स्थेष्ठा स्थिरतरा । अन्यत् सुगमम् । पचे । सूत्रस्य उदाहरणम् ॥१२७॥

व्याकरणम् ।

गरिष्ठाभ्याम् ॥ १२४ ॥

डिदिव तदिमनु तथा । तत् इष्टेयसु डित्वत् स्यात् इमन् च तथा । नुशब्द-श्चकारार्थे । महीयांसम् ॥ १२५ ॥

ड्वद्वदेकाचो न । एकाचः परं तत् इष्ठादिकं ड्विद्वन्नस्यात् । श्रेष्ठ ॥ १२६ ॥

स्थेष्ठा ॥ १२७ ॥

( सा तं प्रति। )

पापिष्ठां दुर्भगां दीनां मानुषीं विद्धि मां शुभ !।
विपत्सागरमग्नाया द्वीपो मे भव सम्प्रति ॥ १२८ ॥
मेधाविन् ! मद्वदायाति नाशं का बालिका भुवि।
ईदृग्विपत्सिन्धुमग्ना कान्या पापीयसीं विना ॥ १२९ ॥
ननान्दृ-देवृ-जातृ-स्व-भर्तृ नो दृश्यतेऽत्र च।
लोप एषां कृतो मन्येऽर्थानां प्राणैर्हरिष्ठकैः ॥ १३० ॥

हतहत हतभाग्यायाः मम पुत्रोत्पादोऽपि शोकाय भवति।

नेदमस्त्यन्तिकस्थाने येन छित्वाशु नाड़िकाम्।
स्तन्यं दद्यामस्य मुखे नेदिष्ठान्तस्य सीदतः ॥ १३१ ॥

पापिष्ठामिति। सुगमम्। पक्षे। उदाहरणम् ॥ १२८ ॥

मेधेति। हे मेधाविन् ! भुवि का बालिका मद्वत् मम इव नाशं आयाति प्राप्नोति ॥ पापीयसीं विना अर्थात् मां विना का अन्या ईदृक् आपत्सिन्धुमग्ना भवति अपि तु कापि एवं न भवति। पक्षे। मेधा इति मेधाविशिष्टानां सम्बोधनम्। विन् १।, मद्वत् १।, आयाति ८।, नाशम् २।, ॥ १२९ ॥

ननान्दृ इति। ननान्दा भर्तृभगिनी, देवा देवरः, जातरः देवरपत्न्यः, स्वाः ज्ञातयः, भर्ता स्वामी, एतेषां समाहार इति ननान्दृदेवृजातृस्वभर्तृ। तत् अत्र स्थाने नो दृश्यते। हरिष्ठकैरतिशयेन हर्तृभिः अर्थात् नृपभटैः एषां ननान्द्रादीनां प्राणैः सह अर्थानां धनानां लोप एव कृतः इति मन्ये। स्वो ज्ञातावात्मनि स्वमित्यमरः। पक्षे। ननान्दृदेवृजातृ-स्वभर् इति ननान्द्रादीनां भरणकर्तुः सम्बोधनम्। तृणः ६।, दृश्यते ८।, अत ७।, ( च ) लोपः १।, ॥ १३० ॥

नेदमिति। अन्तिकस्थाने समीपे इदं वस्तु नास्ति येन वस्तुना नाड़ीं संछिद्य अस्य पुत्रस्य मुखे स्तन्यं दुग्धं दद्याम्। कीदृशस्य सीदतः प्राप्तविषादस्य नेदिष्ठान्तस्य नेदिष्ठो-

व्याकरणम्।

पापिष्ठाम् ॥ १२८ ॥

विन् मद्वदायाति नाशम्। विन् तथा मत् वत् च प्रत्ययौ लोपं प्राप्नोति इष्ठादिषु। अतिशयेन पापवतीमिति पापीयसीम् ॥ १२९ ॥

तृणो दृश्यतेऽत्र च लोपः। इष्ठादिषु परेषु तृणः लोपो दृश्यते। हरिष्ठकैः ॥ १३० ॥

एतत् श्रुत्वा नृपः सुलोचनां प्रति ।

वृन्दारकस्य वृन्दमपि विपदापन्ने दयां धत्ते वृन्दिष्ठे ॥१३२॥

उरोरिव भवति वरोऽनुक्रोशो दीने वरिष्ठे ! ॥ १३३ ॥

दृश्यते दवोऽदूर इतस्तस्मादद्विष्ठाद्वक्रिमानयानयोः

स्वेदकते ॥ १३४ ॥

आदौ जातस्य नाड़ीं छिन्धि ।

प्रियस्य प्रस्फुटत्पद्मसंशोभिवदनस्य तत् ।

वच आदाय कारुण्यात् प्रेयसी सा तथाऽकरोत् ॥ १३५ ॥

ततः सा निजकटीकौषेयडोरकेण जातस्य नाड़ीं बद्ध्वा वंशत्वचा छित्वा सुतं मातुः क्रोड़मनयत् । अथ राजा पप्रच्छ । त्वं कासि ? ।

---

ऽन्तिकतमः अन्तो मृत्युर्यस्य स तथा तस्य आसन्नमृत्योरित्यर्थः । पचे । येनेत्यादिक-सुदाहरणघटितवाक्यम् । नेदं १।, अन्ति ८।, (च) । अन्तिकस्थाने ७।, ॥ १३१ ॥

वृन्देति । वृन्दारकस्य वृन्दं देवसमूहः । वृन्दिष्ठे हे अतिशयरूपवति ! । वृन्दारकस्य ६।, वृन्दं १।, ॥ १३२ ॥

उरोरिति । उरोर्महतः । अनुक्रोशो दया । वरिष्ठे हे महति ! । उरोः ६।, वरः १।, भवति ८।, ॥ १३३ ॥

दृश्यत इति । दवो वह्निः । इतः अस्मात् स्थानात् अदूरे । अदविष्ठात् अदूरात् ॥ दृश्यते ८।, दवः १।, दूर १ ॥ १३४ ॥

प्रियस्येति । प्रस्फुटत् विकसत् पद्ममिव संशोभि वदनं यस्य तादृशस्य प्रियस्य भर्त्तुस्त-द्वचनं आदाय श्रुत्वा सा प्रेयसी कारुण्यात् तथा अकरोत् । पचे । स्फुटदित्यादिकं उ' । प्रियस्य ६।, प्रः १।. ॥ १३५ ॥

व्याकरणम् ।

नेदमस्त्यन्तिकस्थाने । नेदिष्ठ ॥ १३१ ॥

वृन्दारकस्य वृन्दम् । वृन्दिष्ठे ॥ १३२ ॥

उरोर्व्वरो भवति । वरिष्ठे ॥ १३३ ॥

दवो दूरः । अदविष्ठात् ॥ १३४ ॥

प्रियस्य प्रः । प्रेयसी ॥ १३५ ॥

सा आह । मम श्वशुरः पण्डितः वृद्धो जात्या वैद्यो गङ्गाया आने-
तुर्यन्नाम तन्नामा ।

सर्वविद्योऽयवो यूनो यवीयस्या मनोरमः ।
कृष्णाग्रजस्य यन्नाम तन्नामा मम वल्लभः ॥ १२६ ॥

( राजा तां प्रति । ) अत्रागमने को हेतुः । सा आह ।

अभद्राघस्य दीर्घस्य मन्योः पात्रं सुमन्दधीः ।
नृपोऽस्माकं यस्य सदा दण्डे द्राघीयसी रतिः ॥ १२७ ॥

तस्य पुत्रवधूश्चिररोगिणी मम श्वशुरेण मम भर्त्रा च चिकित्सितापि सा मृता । एतदपराधेन राजा तयोः कायिकदण्डमादिदेश । तद्भयात् श्वशुरः सपरिवारो निशि पलायितः ।

प्रजागरो गुरुर्जातः श्रान्तिर्मेऽभूत् गरीयसी ।
अत्रालस्याद्विश्रामायाभून्मे सूतिवेदना ॥ १२८ ॥

सर्व्वेति । अयवः अयः शुभावहमदृष्टं तद्वान् । यूनो यवीयस्याश्च मनोरमः । कृष्णाग्रजस्य अर्थात् बलरामस्य यन्नाम तन्नामा मम पतिः । पक्षे । उभौः सर्व्वविद्य इति सं । यव: १।, यून: ६।, ॥ १२६ ॥

अभद्रेति । अस्माकं राजा अभद्राघः भद्रं शुभं तद्रहितः अघः पापी । अभद्राघ इत्यत्र कर्म्मधारयः । दीर्घस्य मन्योः क्रोधस्य पात्रम् । यस्य नृपस्य दण्डकरणे द्राघीयसी रतिः । दीर्घोऽनुरागः । पक्षे । अभेति सं । द्राघ: १।, ( च ) दीर्घस्य ६।, ॥१२७॥

प्रजेति । गुरुः अतिशयः प्रजागरो जागरणं जातः । सूतिवेदना प्रसववेदना अन्यत् सुगमम् । पक्षे । प्रजा इति सं । गरः १।, गुरुः १।, जातः १।, ॥ १२८ ॥

व्याकरणम् ।

यवो यूनः । यवीयस्याः ॥ १२६ ॥

द्राघस्य दीर्घस्य । द्राघीयसी ॥ १२७ ॥

गरो गुरुर्जातः । गुरुशब्दो गरो जायते इत्यादिषु । गरीयसी ॥ १२८ ॥

पाशहस्तेषु नृपतिपत्तिष्वनुपतत्सु ते ।
गरिष्ठभयतो याता मां त्यक्त्वा श्वशुरादयः ॥ १३९ ॥

( राजा तां प्रति )

तव श्वशुरो ज्यायान् मन्त्रणे वसुधेज्यो वृद्धश्च ।
भवती यस्या वधूः सापि बुद्धिमतीषु ज्येष्ठा कथं त्वां त्यक्त्वा गता ॥ १४० ॥

सा आह ।

प्रशस्यस्तु श्रयेतैवं श्रेयसीं मतिमापदि ।
एकस्यार्थे विपद्येरन् यथा न बहवो जनाः ॥ १४१ ॥

पाशेति । नृपतेः पत्तिषु पदातिषु बन्धनार्थं पाशहस्तेषु अनुपतत्सु पश्चात् धावत्सु सत्सु ते मम श्वशुरादयः गरिष्ठभयात् अतिभयात् मां त्यक्त्वा याता गताः । पद्ये । पूर्व्वसूत्रस्य उदाहरणम् ॥ १३९ ॥

तवेति । तव श्वशुरः ज्यायान् अतिशयेन वृद्धः पण्डितः बुधवृद्धौ पण्डितेऽपि इति कोषात् । मन्त्रणे वसुधेज्यः भूबृहस्पतिः भवती त्वं यस्या वधूः स्नुषा अन्यत् सुगमम् । पद्ये । वसुधे इति सं । ज्यः १।, वृद्धः १।, ( च ) भवति ८।, ईयस्-ई १।, आः १।, ॥ १४० ॥

प्रशस्येति । प्रशस्यः प्रशंसनीयो जनः आपदि एवं एतादृशीं श्रेयसीं श्रेष्ठां मतिं बुद्धिं श्रयेत आश्रयेत कीदृशीमित्याह । बहवो जना एकस्य निमित्तं यथा येन उपायेन न विपद्येरन् न म्रियेरन् एवं बुद्धिं आश्रयेत । प्रशस्यः १।, ( तु ) श्रः १।, एत ८॥, ( एवं ) ॥ १४१ ॥

व्याकरणम् ।

गरिष्ठ ॥ १३९ ॥

ज्यो वृद्धश्च भवती यस्याः । वृद्धशब्दो ज्यो भवति तस्माच्च ईयस् सम्बन्धीयस्य ईकारस्य आः स्यात् । ज्यायान् ज्येष्ठा ॥ १४० ॥

प्रशस्यस्तु श्र एत एवम् । प्रशस्यः श्रः स्यात् एवं एत जानीत । श्रेयसीम् ॥ १४१ ॥

किन्तु । सामर्थ्यभाक् युवा कन्नु जीवनोपायं कर्त्तुमर्हतीति
विपदीत्यतो मम पतिस्तत्कनिष्ठस्य जीवति श्वशुरौ वृद्धौ
मृताविति मन्ये ॥ १४२ ॥

राजा । एवमाशङ्का भवति । यतः ।

धीरोऽभीः श्रान्त उत्साही साहसी स्यात् ज्ञ आपदि ।
एष यूने कल्प उक्तो मृतकल्पः स यो जरन् ॥ १४३ ॥

सूतिका आह । दयागुणादिमन् ! भावेनान्यदुःखेन दुःखित ! ।
पिपासा गरिमा जाता पांशुलञ्च मुखं मम ॥ १४४ ॥

जलाभावादहं म्रिये । मयि मृतायामेष बालोऽपि नंक्ष्यति । अतो-
ऽहं वदामि । भूर्य्यर्थकादल्पार्थकाच्च शस्ततः कर्म्मणो भूरिशो-
ऽल्पशश्च फलं कर्त्ता लभते विशेषतः स्वजनहीनस्य विपत्-

सामर्थ्यभागिति । कन्नु किमपि जीवनोपायं कर्त्तुमर्हति । अन्यत् सुगमम् । पक्षे सामर्थ्यभागिति सं । युवा १।, कन् १।, ॥ १४२ ॥

धीर इति । ज्ञः बुद्धिमान् जनः आपदि धीरो धैर्य्यावलम्बी स्यात् । अभीः निर्भयः स्यात् । श्रान्तः परिश्रमी उत्साही साहसी च स्यात् । एष कल्पो विधिर्यूने युवजनार्थं उक्तः यो जनो जरन् वृद्धः स मृतकल्प एव । अर्थात् स विपदि किमपि कर्त्तुं नार्हति । पक्षे । धीर इत्यादिकमुदाहरणघटितवाक्यत्वेन सार्थकम् । एषः १।, ऊने ७।, कल्पः १।, उक्तः १।, ॥ १४३ ॥

दयेति । हे दयागुणादिमन् ! हे भावेन स्वभावेन अन्यदुःखेन दुःखित ! अन्यत् सुगमम् । गुणात् ५।, इमन् १।, भावे ७।, ॥ १४४ ॥

भूर्य्येति । भूर्य्यर्थकात् भूरिफलकात् अल्पार्थकात् अल्पफलकाद्वा शस्ततः प्रशस्तात्

व्याकरणम् ।

युवा कन् । कनिष्ठः ॥ १४२ ॥

एष ऊने कल्प उक्तः । ऊने अर्थे एष कल्पप्रत्ययः स्यात् । मृतकल्पः ॥ १४३ ॥

गुणादिमन् भावे । गरिमा ॥ १४४ ॥

सागरमग्नस्य म्रियमाणस्य जनस्य समुद्धरणात् यत् फलं
तस्याइंशोऽपि वक्तुं नार्हति ॥ १४५ ॥

तस्मात् मां त्राहि। सुलोचना। राजन्नहमप्येवं जलाभावात् म्रिये।
भृगुराह। अथैवं लोकसंख्यातोऽवीप्सायां ज्ञानगोचरे।

नार्य्योस्तयोरुत्कम्पितो बहुशो विललाप सः ॥ १४६ ॥

अहो विधातः! एते द्वे स्वाङ्गचालनेऽप्यशक्ते पिपासया म्रियेते।
क्व वा जलं जलाहरणार्थं पात्रमपि नास्ति अत्र किं विधेयं। हत हत।

एकार्थपादखण्डादेरनेके स्युर्विभागिनः।
ममापदोऽंशिनः के स्युः के खण्डशश्च के ॥ १४७ ॥

---

कर्मणा: भूरिशः भूरि अल्पशः अल्पं फलं लभते। अन्यत् सुगमम्। भूर्य्यर्थकात् ५।, अल्पार्थकात् ५।, शस् १।, १४५ ॥

अथेति। इयोर्नार्य्योः अवीप्सायां अपी जलानि आनुमिच्छायां प्रानुमिच्छायां ज्ञानगोचरे बुद्धिविषये सत्यां लोकसंख्यातो लोकेषु विख्यातः स राजा उत्कम्पितः उत्कण्ठितचित्तः सन् विललाप ॥ पचे लोक इति सं। संख्यातः ५।, वीप्सायां ७।, ज्ञानगोचरे ७।, ॥ १४६ ॥

एकार्थेति। एकार्थस्य साधारणैकवस्तुनः पादखण्डादेश्चतुर्थांशादेः आदि-पदात् अर्द्धांशादेर्विभागिनः अनेके स्युः। खण्डं अंशः। भिन्नं शकलखण्डे वा पुंस्यर्द्धोऽर्द्धं समेंऽशके इत्यमरः। मे मम विपदोऽंशिनः के स्युः। खण्डशः खण्डं खण्डं कृत्वा के वा गृह्णीयुः। एकार्थपादखण्डादेः ५।, ॥ १४७ ॥

व्याकरणम्।

भूर्य्यर्थकादल्पार्थकाच्छस्। बह्वर्थकात् कारकात् अल्पार्थकात् कारकाच्च शस् स्यात्। भूरिशः फलं लभते, अल्पशः फलं लभते ॥ १४५ ॥

संख्यातो वीप्सायां ज्ञानगोचरे। संख्यावाचकात् वीप्सायां ज्ञानविषये सत्यां शस् स्यात्। बहुशः ॥ १४६ ॥

एकार्थपादखण्डादेः। एकार्थात् पादखण्डादिशब्दात् शस् स्यात् वीप्सायाम्। खण्डशः ॥ १४७ ॥

अथुराह ।

ययौ स राजा वारे च कृत्वोरसि तमर्भकम् ।
विश्राम्यन्त्यौ नैककृत्वो बाहू आलम्ब्य ते अपि ॥ १४८ ॥
नवप्रसुच्चतुर्द्विविभ्यः पादेभ्यो बहिर्गता ।
द्विविराहेत्यतिम्लाना क्व जलं गन्तुमक्षमा ॥ १४९ ॥
सोऽय क्षत्रियजातीयस्तत्प्रकारे स्त्रिते उभे ।
महाजातीये च रूपैः कष्टान्निन्ये सरस्तटम् ॥ १५० ॥

तच्च सरोऽतिरमणीयं वरुणस्य केलिस्थानमतिप्रियम् । तत्सरसो रक्षकान् वरुण एवं शास्ति स्म ।

ययाविति । तं अर्भकं शिशुं उरसि कृत्वा वक्षसि धृत्वा वारे वार्जलं तदर्थे स राजा ययौ । नैककृत्वः अनेकवारं विश्राम्यन्त्यौ सत्यौ बाहू आलम्ब्य नृपस्य बाहुद्वयं अवलम्ब्य ते अपि नार्यौ ययतुः । वार्व्वारि सलिलमित्यमरः । पद्ये । कृत्वोरसितमित्यत्र रसोऽस्य जात इत्यर्थे रसितम् । वारे ७।, चकृत्वस् १।, ॥ १४८ ॥

नवप्रसुदिति । नवप्रसुत् नवप्रसूता नारी चतुर्द्विविभ्यः पादेभ्यः पादपरिमितभूभागेभ्यः बहिर्गता सती अतिम्लाना सती क्व कुत्र जलं गन्तुमशक्ताहं इति द्विविराह । पद्ये । न वप्र इति सं । सुच् १।, चतुर्द्विविभ्यः ५।।।, ॥ १४९ ॥

स इति । क्षत्रियजातीयः क्षत्रियजातिसम्भवः स राजा ते उभे नार्यौ तत्प्रकारे उक्तप्रकारापन्ने कष्टात् सरस्तटं निन्ये । कीदृश्यौ रूपैर्महाजातीये महतीप्रकारे अत्र जातीये परे महतस्तो आः । पद्ये । क्षत्रियेति सं । जातीयः १।, तत्प्रकारे ७।, ॥ १५० ॥

व्याकरणम् ।

वारे चकृत्वस् । संख्यातश्चकृत्वस् स्याद्वारे । नैककृत्वः ॥ १४८ ॥
सुच्चतुर्द्विविभ्यः । द्विः, विः ॥ १४९ ॥
जातीयस्तत्प्रकारे । महाजातीये ॥ १५० ॥

योऽस्य चौर्य्यादअमयट् तदात्मक उतागसि ।

जाते मल्लोकमाप्तः स स्थेयात् कारामये गृहे ॥ १५१ ॥

एवं योऽस्मिन् सरसि अशुचि वस्त्रं प्रक्षालयिष्यति मृणाला-
दिकञ्चापहरिष्यति तस्याप्येष दण्ड इति ।

ततस्तस्यां तीर्थमय्यां सरस्यामवतीर्य्य ते ।

वस्त्रं प्रक्षाल्य धौताङ्गे पीत्वा जहृषतुः पयः ॥ १५२ ॥

तथा सुलोचना क्रीड़नार्थं कियन्ति पद्मानि अवाचिनोत् ।
एवं ते नार्य्यौ क्षुधिते कियन्ति मृणालान्यवदाय बुभुजाते ।

तच्च श्रुत्वा चरमुखादप्पतिर्दुःखितोऽभवत् ।

अस्य जात इतः कोपो येनागः फलितं तयोः ॥ १५३ ॥

योऽस्येति । अयट् अदेवपूजकः अर्थात् देवतापूजकभिन्नो योजनः अस्य सरसोऽञ्
चौर्य्यात् आप्तः प्राप्तः स जनः तदात्मके चौर्य्यात्मके आगसि अपराधे जाते सति
मम लोके कारामये गृहे स्थेयात् । अयट् इति यजधातोरूपम् । अयट् १।, तदा-
त्मके ७, ॥ १५० ॥

तत इति । ते नार्य्यौ जहृषतुः हृष्टे बभूवतुः । पयः । पूर्व्वसूत्रस्य उदाहरणम् ॥१५२॥

तच्चेति । अप्पतिर्वरुणः तच्च मृणालादीनामपहरणं चरस्य मुखात् श्रुत्वा अस्य
वरुणस्य इतः कर्म्मणः कोपो जातः येन कोपेन तयोर्नार्य्योः आगोऽपराधः फलितं फल-
वत् बभूव । अस्य जाते ७।, इतः ११, ॥ १५१ ॥

व्याकरणम् ।

मयट् तदात्मके । कारामये ॥ १५१ ॥

तीर्थमय्याम् ॥ २५२ ॥

अस्य जात इतः । अस्य जात इत्यर्थे इतः स्यात् । फलितः ॥ १५३ ॥

अथास्य दूता आदिष्टा उभे ते वरुणालयम्।
निन्युः चणाददृष्ट्वा ते नृपतिर्मूर्च्छितोऽपतत्॥ १५४॥

अथ वरुणः तं सुमतिनामानं नृपं ज्ञात्वा तत्रागत्य शोकेन मरणायोद्यतं नृपं प्रत्याह। राजन्! निवर्त्तस्व शृणु।

भावादिमो हि निर्वृत्तेऽप्रियेऽर्थे नानुशोचति।
पाकिमापि न ते विद्या शोकेभस्याङ्कुशायते॥ १५५॥

राजन्! आरब्धस्याभिलषितस्य कर्म्मणः सिद्धिर्नाभूत् तदर्थमपि शोकं माकुरु यतः।

इच्छाविर्भवत्यसतस्तद्भावेऽर्थे भुवीरतः!
कार्य्यन्तु दैवस्येच्छाया वशीभूयैव सिध्यति॥ १५६॥

अथास्येति। अस्य वरुणस्य आदिष्टा आज्ञप्ता दूता ते उभे नार्य्यौ वरुणालयं निन्युः। ते नार्य्यौ अदृष्ट्वा। पद्ये। पूर्वसूत्रस्य उदाहरणम्॥ १५४॥

भावेति। अप्रियेऽर्थे प्रियवियोगरूपे अप्रिये कार्य्ये निर्वृत्ते भूते सति भावादिमः भावो विद्वान् तस्य आदिमः आदिभूतः अर्थात् पण्डिताग्रगण्यो जनः नानुशोचति। पाकिमापि पाकान्निष्पन्नापि ते तव विद्या शोकेभस्य शोकरूपस्य हस्तिनः नाङ्कुशायते अङ्कुशो न भवति। भावात् ५', इमः १।, (हि) निर्वृत्ते ७।,॥ १५५॥

इच्छेति। असतः अभूतस्य वस्तुनः तद्भावेऽर्थे तदुत्पादनार्थे भुवीरतः भुवि ईरतः गच्छतो जनस्य अर्थात् मर्त्त्यस्य प्राणिनः इच्छा आविर्भवति उत्पद्यते। कार्य्यन्तु क्रियमाणं घटादिरूपं कार्य्यं दैवस्य ईश्वरस्य इच्छाया वशीभूय सिध्यति। तथा च ईश्वरेच्छावशत एव कार्य्यं निष्पद्यते न तु व्यापारतो जनस्य इच्छामात्रेणेति भावः। पद्ये। इच्छ। इति सं। विः १।, भवति ८।, असतः ६।, तद्भावे ७।, भुवि ७।, ईः १।, अतः ६।,॥ १५६॥

व्याकरणम्।

मूर्च्छितः : १५४॥

भावादिमो निर्वृत्ते। पाकिमा॥ १५५॥

विर्भवति असतस्तद्भावेऽर्थे भुवीरतः। असतस्तद्भावेऽर्थे विप्रत्ययो भवति भूधातोः परे तस्मिन् अतः अवर्णस्य ईः स्यात्। अत इति षष्ठ्यासम्। वशीभूय॥ १५६॥

दृश्यते धावसि मृते माजाल्मीष्या: कदापि भो:।
प्रेयान् प्राणान् को हितार्थी परार्थे दु:खितस्त्यजेत् ॥ १५७ ॥

एवमपि बोध्यम्।

करोति धाताऽवति मन्यतेऽसुभृदहं करोमीति जड़ीकृतोऽजया।
तदीशसम्पादितसम्पदापदोर्न तत्त्ववित् हृष्यति शोचति क्वचित् ॥ १५८॥
सत्योऽविनाशी स चिदेव बोध्यो लघुर्गुरुर्व्वात्र नचाव्ययस्य।
अस्त्यस्य जीवा: स्वविपत्तिकेऽपि कृत्ये प्रवर्त्तन्त इहेच्छयास्य ॥१५९॥

राजा वरुणं प्रति। देव!।

दृश्यत इति। मृते मरणार्थं धावसि इति दृश्यते। भो: कदापि मा जाल्मीष्या: अजाल्मो जाल्मो मा भव। जाल्मोऽसमीक्ष्यकारी स्यादित्यमर:। हितार्थी को जन: अतिप्रियान् प्राणान् परार्थे त्यजेत्। दृश्यते ८।, धौ ७।, असि ७।, ॥ १५७ ॥

करोतीति।.धाता ईश्वर: करोति अवति च पालयति च। असुभृत् प्राणी अजया ईश्वरस्य मायया जड़ीभूत: मुग्धो भूत: सन् अहं करोमीति मन्यते। तत् तस्मात् ईशेन ईश्वरेण सम्पादितायां सम्पदि आपदि च तत्त्वविज्जनो न हृष्यति न वा शोचति। करोति धातौ ७।, अतिमन्यते ८।, ॥ १५८ ॥

सत्य इति। स देव ईश्वर: सत्य: अविनाशी चिदेव नित्यज्ञानस्वरूप: बोध्य: बोध्यव्य: अत्र जगति अस्य अव्ययस्य चयरहितस्य अस्य देवस्य लघुर्गुरुर्व्वा नास्ति तस्य सर्व्वे समाना इति भाव:। इह लोके जीवा: स्वविपत्तिकेऽपि स्वस्य आत्मनो विपत्ति-र्यस्मात् तादृशेऽपि कृत्ये अस्य ईशस्येच्छया प्रवर्त्तन्ते। स: १।, विनाशी १।, स: १।, चित् १।, (एव) बोध्य: १।, लघु: १।, गुरु: १।, (वा) अत्र ७।, न च १।, अव्ययस्य १।, अस्ति ८।, ॥ १५९ ॥

व्याकरणम्।

दृश्यते धावसि। असधातौ च परे विप्रत्ययो दृश्यते। जाल्मीष्या: ॥ १५७ ॥

करोति धातावति मन्यते। कृधातौ परे च स विर्मन्यते जड़ीकृत: ॥ १५८ ॥

सत्यो विनाशी स चिदेव बोध्यो लघुर्गुरुर्व्वा न चाव्ययस्यास्ति। स: त्य: प्रत्यय: विनाशी लोप्य: स्यात् स चिदपि चकारेच स्यात्। बोध्य एव केवलं श्राप्य एव। तस्मिन् परे लघुर्गुरुर्भवति अव्ययस्य नास्ति न भवतीत्यर्थ: ॥ १५९ ॥

जानन्नपि न जानामीशोमायाया वशीभवन् ।
लघुर्भवति विच्छेदव्यथाया मे मृतिव्यथा ॥ १६० ॥

देव ! एवमपि अनुशये । तद्यथा ।

येन शोकेन धीदेहं लोप्यते सोऽन्तमिच्छति ।
मनसः किन्न येनाधेर्मनीकरणं भवेत् ॥ १६१ ॥
पञ्चशीर्षस्य कालाहेर्मण्यानीता महोज्ज्वला ।
स्पृष्टापि न रहोभूते स्थले सुस्थेन चेतसा ॥ १६२ ॥

वरुणस्तं प्रति । राजंस्तव मरणं नोचितम् । यतः ।

विश्वं यद्वीर्य्यसात् सम्पद्यते मा स च सात् क्वचित् ।
समस्तायत्ततार्थे यत् सम्पदस्युत्तरेच्चण ! ॥ १६३ ॥

---

जानन्निति । ईशः ईश्वरस्य । मृतिव्यथा मरणवेदना । पद्ये । सूत्रस्य उदाहरणम् ॥ १६० ॥

येनेति । येन शोकेन धीदेहं धीर्ज्ञानं देहः शरीरं लोप्यते विनाश्यते सः शोकः किं कथं मनसोऽन्तं नाशं न इच्छति अर्थात् स मनसोऽपि नाशं कथं न करोति । येन मनसो विनाशेन आधेः मनोगतव्यथाया मनीकरणं मननं न भवेत् न सम्भवेत् । लोप्यते ७।, सः ६।, अन्तं २।, इच्छति ८।, मनसः ६।, ॥ १६१ ॥

पद्येति । पञ्चशीर्षस्य विस्तृतमस्तकस्य कालाहेः कालसर्पस्य महोज्ज्वला मणी मया आनीता । सुस्थेन चेतसा रहोभूते निर्जनीभूते स्थले सकृदपि सा स्पृष्टापि न । पद्ये । सूत्रस्योदाहरणम् ॥ १६२ ॥

विश्वमिति । विश्वं जगत् यद्वीर्य्यसात् यदीयवीर्य्यस्याधीनं सम्पद्यते स च जनः क्वचित् कस्मिंश्चिदपि मा सात् मा नश्यतु मासादिति सोयनाशे इत्यस्य रूपम् । सम-

व्याकरणम् ।

वशीभवन् ॥ १६० ॥

लोप्यते सोऽन्तमिच्छति मनसः । लोप्यते लुप्ते तद्धिते परे अर्थात् च्वौ परे मनसः सः सकारस्य अन्तं लोपं इच्छति । मनीकरणम् ॥ १६१ ॥

रहोभूते ॥ १६२ ॥

अस्यादौ च स्म भुवनमात्मसात्कृत्य योऽसुरः ।
राजन् ! स भूमिसात् सम्पद्यते स्म तव वीर्य्यतः ॥ १६४ ॥

स ईड़तमः सर्व्वतएव बहूनां सधर्म्मिणां मध्ये यस्य कस्याप्येकस्य यत्किञ्चित् गुणादिना उत्कर्षेऽवगते तत् किमन्यतो भवति यदेकतोऽपि भवतो भुवनमुज्जृम्भितं दैत्यबलाब्धिमग्नं अतः कतमो नाम न त्वां स्तोतुमिच्छति ॥ १६५ ॥

तस्य सकलस्य आयत्ततानिमित्तं यत् सम्पत् यस्य वीर्य्यरूपा सम्पदस्ति । हे उत्तरेचण ! उत्तरकालदर्शिन् ! । पचे । चण इति उत्सवयुक्तस्य सं । चसात् १।, क्वचित् ७।, ( यत् १ ) सम्पद् १।, अस्ति ८।, उत्तरे ७।, ॥ १६३ ॥

अस्तीति । आदौ पूर्वस्मिन् काले योऽसुरः भुवनं आत्मसात् कृत्य स्वस्यायत्तं कृत्वा अस्ति स्म । हे राजन् ! सोऽसुरः तव वीर्य्यतः भूमिसात् सम्पते स्म । अस्यादौ ७।, ( च ) ॥ १६४ ॥

सईड़िति । बहूनां समानधर्म्माणां मध्ये एकस्य उत्कर्षे ज्ञाते सति सइ स तु जनः सर्वतः सर्व्वत्र ईड़तमः अतिशयेन स्तवनीयो भवति । एकस्मादपि भवतः दैत्यबलाब्धिमग्नं भुवनं यत् उज्जृम्भितं तत् किं अन्यस्मात् जनात् भवितुमर्हति । अतः नाम सम्भावनायां कतमो जनः त्वां स्तोतुं नेच्छति अपि तु सर्व एव । ईडतमः १।, सर्वतः ७।, ( एव ) बहूनां ६॥।, सधर्म्मिणां ६॥।, मध्ये ७।, यस्य ६।, कस्य ६।, ( यत्किञ्चित् ) गुणादिना ३। उत्कर्षे ७।, अवगते ७।, तत् किं अन्यतः ५॥।, यत् एकतः ५॥, (अपि) भवति ८।, ॥१६५॥

व्याकरणम् ।

चसात् क्वचित् समस्तायत्ततार्थे यत् सम्पदस्त्युत्तरे । साकल्यार्थे तथा अधीनतार्थे चसात् स्यात् वा यत् यदि सम्पदधातुः उत्तरे स्यात् । वीर्य्यसात् सम्पद्यते ॥ १६३ ॥

अस्यादौ च । असधातु भूधातौ च स्यात् । आत्मसात्कृत्य भूमिसात् सम्पद्यते ॥१६४॥

ईडतमः सर्व्वत एव बहूनां मध्ये यस्य कस्यापि एकस्य यत् किञ्चित् गुणादिना उत्कर्षेऽवगते तत्किमन्यतो भवति । सर्वतः सर्वदा अर्थानित्यम् ॥ १६५ ॥

यस्मिन् जीवति जीवन्ति महान्तो बहवो जनाः।
स जीवताच्चिरं राजन्! यतमो गुणवीर्य्यभाक्॥ १६६॥

तस्माद्राजन्। ईदृशस्य भवतः स्त्रीनिमित्तं मरणं नोचितम्। एतच्चावधारय।

यत् त्यक्ष्यसि तनुं स्त्र्यर्थे तत्रादौ तद्विचारय।
तयोः प्रियतमा कास्यात् कतमा वातिदुर्लभा॥ १६७॥

( राजा तं प्रति। )

निर्धारेऽस्याऽस्मरतिजड़तरस्तद्द्वयोर्म्मध्य एकोत्-
कर्षेणेऽत्थं भवति दयिता तादृशी नेतरा च।
भूयोऽलभ्या भवति यतराऽयत्नलभ्या च का वा
कस्यास्त्यागे भवति पुरुषो निर्व्यथो नेतिवेद्मि॥ १६८॥

यस्मिन्निति। अस्यार्थः सुगमः॥ १६६॥

यदिति। स्त्र्यर्थे स्त्रीनिमित्तं तनुं यत् त्यक्ष्यसि। तयोः स्त्रीतन्वोर्मध्ये का प्रियतमा? इति तत्रादौ तद्विचारय॥ १६७॥

निर्धार इति। अस्य सर्वोक्तस्य निर्धारे निर्णये जड़तरोऽस्मि अल्पज्ञोऽस्मि। तद्द्वयोः स्त्रीतन्वोर्मध्ये एका उत्कर्षेण दयिता प्रियतमा भवति इतरा अन्या एका तादृशी न प्रियतमा न। द्वयोर्मध्ये यतरा अर्थात् या भूयः पुनः अलभ्या का वा अयत्नेनापि लभ्या भवति एवं कस्यास्त्यागे पुरुषो व्यथारहितो भवति इत्यहं न वेद्मि वेत्तुं न शक्नोमि। अस्याभिप्रायं पश्चात् व्यक्तीकरिष्यति। पक्षे अतिजेति कस्यचित् सं। उतरः १।, तद्द्वयोः ६॥, मध्ये ७।, एकोत्कर्षेण ३।, ( इत्थं १। ) भवति ८।,॥ १६८॥

व्याकरणम्।

यतमः॥ १६६॥

कतमा॥ १६७॥

उतरस्तद्द्वयोर्मध्य एकोत्कर्षेण इत्थं भवति यदेकतोऽपि। यतरा॥ १६८॥

( वरुणास्तं प्रति । )

उक्तेस्त उत ! तात्पर्य्यं वेद्मि नो यत् कलेवरे ।
नष्टे पुनर्नाप्यते तत् सत्यर्थे स्त्री तु सर्व्वतः ॥ १६९ ॥

( राजा तं प्रति । )

तादृक् स्त्री दुर्लभा नृणामनेकत्रापि जन्मसु ।
अयत्नतोऽपि सुलभं शरीरं जन्मजन्मनि ॥ १७० ॥

( इदमपि जानीहि । )

यत्नतो बहुतोऽवाप्त्या जायतेऽत्रो न चेत् फलम् ।
तदा काले बहुत्रापि तद्दुःखं हृन्निकृन्तति ॥ १७१ ॥

( अपि च । )

पूर्व्वत्र कालीमनुसाधनस्य तथा परत्रापि च सर्व्वनाम्नः ।
सङ्कीर्त्तनस्यापि फलं तदेकं स्त्रीरत्नमाप्यं किमु यत्र तत्र ॥ १७२

उक्तेरिति । उत भोः ते तव उक्तेस्तात्पर्य्यं न वेद्मि न ज्ञातुं शक्नोमि । यत् यस्मात् शरीरे नष्टे सति तत् शरीरं पुनर्नाप्यते । अर्थे धने सति स्त्री तु सर्वत्रैव आप्यते । पथ्ये । उ इति सं । क्तेः ६।, तस् १।, ॥ १६९ ॥

तादृगिति । अस्यार्थः सुगमः ॥ १७० ॥

यत्नेति । बहुतो यत्नतः अनेकयत्नात् अवाप्त्याः प्राप्तेः फलं चेत् यदि अत्र लोके उभो न जायते तदा तद्दुःखं प्राप्तेः फलाभावजनितं दुःखं बहुकालेऽपि हृदयं निकृन्तति । जायतेऽत्रो इत्यत्र उ सम्बोधने । बहुतः ५।, (वा १) अप्त्याः ६।, जायते ८।, त्रः १।, ॥ १७१ ॥

पूर्व्वत्रेति । पूर्व्वत्र पूर्व्वस्मिन् काले कालीमनुसाधनस्य काल्यामन्त्रसाधनस्य परत्रापि तदुत्तरकाले च सर्वनाम्नः सर्वस्य शिवस्य नाम्नः सङ्कीर्त्तनस्य फलं एकं तत् स्त्रीरत्नं किमु

व्याकरणम् ।

क्तेस्तस् । क्तेः स्थाने तस् स्यात् । सर्व्वतः ॥ १६९ ॥

अयत्नतः ॥ १७० ॥

बहुतो वाप्त्या जायतेऽत्रः । बहुशब्दात् सप्तम्यास्त्रः स्यात् वा । बहुत्र ॥ १७१ ॥

अतोऽहं तच्छोकान्न जीवामि। (वरुणस्तं प्रति।)

श्रुतोऽभवत् पूर्व्वतो न त्वत्तुल्योऽन्य: सुवीर्य्यभाक्।
यतो भवत्यसिभृति देवा: स्वर्गभुजोऽभवन्॥ १७३॥

(अपि च।) कालेऽदा: सर्व्वतो राजन्नर्थिनि सर्वदा।
देवाश्च तर्पिता हव्यकव्यैर्मन्त्रोऽपि साधित:॥ १७४॥
एकतश्चातितुच्छार्थे मोहाद्दोषात् विगर्हितात्।
सर्वएव गुणा राजन्नेकदा विलयं गता:॥ १७५॥
तदेतस्मिन् शोकवह्नौ नात्मानं पातयेर्वरम्।
वृणु यच्छामि तुष्टस्तेऽमरत्वं मर्त्यदुर्लभम्॥ १७६॥

यत्र तत्र आप्यं प्राप्तियोग्यं अपि तु नेत्यर्थ:। (तथा १।) परत्र ७।, (अपि) (च) सर्व्वनाम्न: ५।, ॥ १७२॥

श्रुत इति। पूर्वत: पूर्वकाले त्वत्तुल्यस्तव सम: सुवीर्य्यभाक् अन्य: श्रुतो न अभवत्। यतो यस्मात् भवति त्वयि असिभृति खड्गधारिणि सति देवा: स्वर्गभुजोऽभवन्। श्रुत: १।, भवत् पूर्वत: ५।, (न) ॥ १७३॥

काल इति। सर्वत: सर्वत्र अर्थिनि याचके अन्नं काले स्वकाले अदा: दत्तवानसि। अन्यत् सुगमम्। काले ७।, दा: १।, ॥ १७४॥

एकत इति। अतितुच्छार्थे यो मोहस्तद्रूपात् एकस्मादेव दोषात्। अन्यत् सुगमम्। एकत: ५।, (च) ॥ १७५॥

तदिति। तत् तस्मात्। यच्छामि ददामि। अन्यत् सुगमम्॥ १७६॥

व्याकरणम्।

तथा परत्रापि च सर्व्वनाम्न:। सर्वनामशब्दात् परेऽपि सप्तमी क्वचित् त: स्यात् वा। पूर्वत्र, यत्र तत्र॥ १७२॥

श्रुतो भवत् पूर्व्वतो न। भवदादिशब्दात् श्रुतो यस्त: स न स्यात्। भवति। एवं दियुष्मदस्मदादे:॥ १७३॥

काले दा: सर्व्वत:। सर्व्वशब्दात् सप्तम्या: काले दा: स्यात्। सर्वदा॥ १७४॥

एकतश्च। एकशब्दादपि सप्तम्या: दा: स्यात् काले। एकदा॥ १७५॥ १७६॥

( राजा वरुणं प्रति । )

दीप्यतेऽन्तः शोकवह्निरपि यत्तत् किमन्यतः ।
शान्तिं व्रजेत् विना कान्तां कृतान्तं वाथ कर्हिचित् ॥१७७॥
अमरत्वं चेल्लभेयं तर्हि तत् स्त्रीमणिं विना ।
जीवन्नाधिभारमेव चिरं वोढास्मि दुर्वहम् ॥ १७८ ॥

तस्मान्मम मरणमेव श्रेयः । यतः ।

मृतस्य मे भवेद् वै द्युः परतोऽह्नि सुखास्पदम् ।
यत् परेद्युर्नैतदाधिभारं वोढास्मि दुर्वहम् ॥ १७९ ॥

दीप्यत इति । शोकवह्निः शोकाग्निः अन्तः अन्तःकरणे यत् दीप्यते तद्दीपनं कान्तां कृतान्तं वा विना किं कर्हिचित् अन्यतः शान्तिं व्रजेत् प्राप्नुयात् अपि तु नेत्यर्थः । र्हिः ११, ( अपि ) यत् तत् किमन्यतः ५। ॥ १७७ ॥

अमरेति । स्त्रीमणिं स्त्रीरत्नं विना । आधिभारं मनोदुःखस्य भारं वोढास्मि वहनं करिष्यामि । पञ्चे । सूत्रस्य उदाहरणम् ॥ १७८ ॥

मृतस्येति । मृतस्य मे मम द्युः स्वर्गः परतोऽह्नि परस्मिन् दिने सुखास्पदं भवेत् । यत् यस्मात् परेद्युः एतदाधिः एतस्य मनोदुःखस्य दुर्वहं भारं न वोढास्मि । द्युस्त्रीवमह्नि गगने वह्नौ स्वर्गे तु पुंस्यपीति नव्यकोषः । भवेत् ८।, वा ११, एद्युः ११, परतः ५।, अह्नि ७१, ॥ १७९ ॥

व्याकरणम् ।

र्हिरपि यत्तत्किमन्यतः । अपिकारात् दाश स्यात् काले । कर्हि ॥ १७७ ॥

तर्हि ॥ १७८ ॥

भवेद्द्युः परतोऽह्नि । परतः परशब्दात् सप्तम्या वा एद्युस् भवेत् अह्नि दिवार्थे । परेद्युः ॥ १७९ ॥

यतः ।

उत्तरादित एवं न यथाधिः स्यात्तथा बुधः ।
इच्छत्यतोऽहं नेच्छाम्युत्तरेद्युरपि जीवितुम् ॥ १८० ॥

( वरुणस्तं प्रति । ) यद्येवं तदा ।

सागसं तव कान्तां तां पूर्वेद्युर्मच्चरोऽहरत् ।
तां ते यच्छामि मद्धाम प्रापितां दुर्लभामपि ॥ १८१ ॥
तदानीमेव सन्दीप्तो वियोगः प्राणवातदः ।
विहितः समयेदानीं शान्तिभाक् तद्धितेच्छया ॥ १८२ ॥

राजा तं प्रति । देव ! यदि तुष्टोऽसि तदा अस्य शिशोर्जननीमपि देहि न चेदसौ अधुनैव मरिष्यति । वरुण आह । स्वेयापराधान्मम लोके नीताः स्त्रियः पुरुषा वा न पुनरावर्त्तन्ते इति मम

---

उत्तरेति । उत्तरादितः इतः एतस्मात् समयात् उत्तरात् उत्तरकाले यथा येन प्रकारेण एवं आधिः एतादृशं दुखं न स्यात् बुधः ज्ञानी तथैव इच्छति । अतोऽहं परेद्युरपि जीवितुं नेच्छामि । उत्तरादितः ५।, ( एवं १।, ॥ १८० ॥

सागसमिति । सागसं सापराधां तव तां कान्तां पूर्वेद्युर्मम चरोऽहरत् मम धामप्रापितां दुर्लभामपि तां कान्तां ते तुभ्यं यच्छामि ददामि । पचि । सुबन्तोदाहरणम् ॥१८१॥

तदानीमिति । तदानीं तव प्रियाया हरणकाले ते तव स्त्रीवियोगोऽभवत् । कीदृशः सः प्राणवातदः प्राणरूपं वातं वायुं द्यति छिनत्तीति स तथा । इदानीं मया स वियोगः शान्तिभाक् विहितः कृतः । ( वा १।, ) तदः ५।, समये ७।, दानीं १।, ॥ १८२ ॥

व्याकरणम् ।

उत्तरादित एवम् । उत्तरप्रभृतिशब्दादप्येवम् । उत्तरेद्युः ॥ १८० ॥

पूर्वेद्युः ॥ १८१ ॥

वा तदः समये दानीम् । तदशब्दात् काले सप्तम्या दानीं वा स्यात् । तदानीम् ॥ १८२ ॥

शासनमस्ति तथापि उपकारिणस्तव प्रत्युपकारार्थं तयोर्नार्य्योरेकतरामेव प्रयच्छामि अत्रान्यत् त्वया न वाच्यं प्रार्थनीयं वा।
( अथ राजा आत्मगतम्। )

तयोरेकतरालाभे मृत्युरेकतरस्य नौ।
भुवोऽधरेद्युः किं तर्हि विधेयं मे महापदि॥ १८३॥

अस्प्रक्ष्यं कुतुकी सकृत् यदि तु तां पाणिग्रहाह्नात् क्वचित्
अन्येद्युः सफलः श्रमस्तदपि मे सार्थोऽभविष्यत् क्षणात्।
प्राणान् व्यर्थमनोरथस्य धिगतस्तत्सिद्धिरावश्यकी
तत् श्रेयान् दयितासिपक्ष उत नो पक्षः परार्थे मृतिः॥ १८४॥

विभाव्य अहो भ्रान्तोऽस्मि।

आयासः सफलो न किं ह्युपकृता ईशा दिशानामतः
तत्काले दिशि देश उच्छ्रितयशो लब्धं स्त्रियो लब्धये।

---

तयोरिति। तयोर्नार्य्योः। नौ आवयोः मम अस्य शिशोश्च। अधरेद्युः उत्तरदिने। पक्षे। सूत्रस्य उदाहरणम्॥ १८३॥

अस्प्रक्ष्यमिति। पाणिग्रहाह्नात् पाणिग्रहदिनात् अन्येद्युः अन्यस्मिन् दिने क्वचिदपि समये कुतुकी कुतूहलान्वितः सन् यदि तां प्रियां सकृदपि अस्प्रक्ष्यं स्पर्शं अकरिष्यं तदपि तस्मादपि क्षणात् उत्सवात् मे मम सकलः परिश्रमः सार्थकोऽभविष्यत्। व्यर्थमनोरथस्य जनस्य प्राणान् धिक् अतः कारणात् तत्सिद्धिः मनोरथसिद्धिः आवश्यकी। तत् तस्मात् दयिताप्राप्तिपक्ष एव श्रेयान् परार्थे परस्य रक्षार्थं मृतिर्मरणं न श्रेयसी। पक्षे। सूत्रस्य उदाहरणम्॥ १८४॥

आयास इति। किं मम आयासः परिश्रमः सफलो न अपि तु सफल एव। हि यस्मात् स्त्रियो लब्धये तत्स्त्रीलाभार्थं दिशानां दशदिशां ईशा दिक्पतय उपकृताः

### व्याकरणम्।

अधरेद्युः॥ १८३॥

अन्येद्युः॥ १८४॥

दुष्पारासुरसिन्धुमन्थनफलं स्त्रीरत्नमाप्ता वशे
नीतश्चान्यमपेक्षितं किमुत मे शोकः परस्ताच्च कः ॥ १८५ ॥
कीटसाधारणं तुच्छं सुखमैन्द्रियकं परम् ।
अपेक्षितं प्राक् तद्दूरे च स्तात् क्षणविनाशि च ॥ १८६ ॥
( अपि च । ) एनोऽवाप्तो भवेत् सोऽस्मिन् नावेत् दत्ताभयं श्रितम् ।
स्वप्राणैरपि यः शक्त उत्तरेणैति यातनाम् ॥ १८७ ॥

---

अवुविमाशनादिति शेषः अतो हेतोः तात्काले तत्काले दिशि देशे च उच्छ्रितं उद्दीप्तं यशो लब्धम् । दुष्पारो दुस्तरो योऽसुररूपः सिन्धुस्तस्य मन्थनफलीभूतं स्त्रीरत्नं आप्ता प्राप्य स्ववशे नीतश्च । उत वितर्के अन्यत् किं मम अपेक्षितं अपि तु मम किमप्यपेक्षितं नास्तीत्यर्थः । परस्तात् उत्तरकाले च मम कः शोकोऽस्ति अपि तु न कोऽपि शोकोऽस्ति । पक्षे । ईशा इति सं । दिशानामतः ५।, काले ७।, दिशि ७।, देशे ७।, ॥ १८५ ॥

कीटेति । कीटसाधारणं कीटपश्वादिसमानं ऐन्द्रियकं इन्द्रियजन्यं सुखं परं केवलं प्राक् पूर्वकाले अपेक्षितम् । इदानीन्तु क्षणविनाशि तत् सुखं दूरे स्तात् अस्तु । अधः ५।, स्तात् १।, क्षणविनाशि १।, १८६ ॥

एन इति । स जनः अस्मिन् लोके एनोवाप्तो एनः पापं तस्य अवाप्तं प्राप्तिस्तद्विद्यतेऽस्येति एनोवाप्तो भवेत् पापो भवेत् उत्तरेण उत्तरकाले च नरकयातनां एति प्राप्नोति यो जनः शक्तः सन् दत्ताभयं दत्तं अभयं यस्मै न तथा तं श्रितं आश्रितं जनं स्वप्राणैरपि नावेत् न रक्षेत् । एनः १।, ( वा १।, ) प्तो १।, भवेत् ८।, ॥ १८७ ॥

व्याकरणम् ।

दिशिनामतस्तात्काले दिशि देशे । दिग्वाचकशब्दात् सप्तम्याः स्तात् स्तात् दिक्-देशकाले वाच्ये । परस्तात् ॥ १८५ ॥

अधस्तात् क्षणविनाशि । दिग्वाचकादन्तात् विहितस्तात् विनाशि स्तात् प्राक् ॥१८६॥

एनोवाप्तो भवेत् । दिक्वाचकशब्दात् प्तो एनः स्तात् । उत्तरेण ॥ १८७ ॥

तस्मात्। मा पयोधरात् सादुत्तरत-
स्त्वायमिति स्मरिष्यति॥ १८८॥

इति निश्चित्य वरुणं प्रत्याह।

रक्षितेऽस्मिन् शिशौ कीर्त्तिः स्वर्गश्च भवितोत्तरात्।
तस्मात् स्तनन्धयोऽसौ स्तात् समाहृक इरापते!॥ १८९॥
अथो अप्पतिरानीय निबद्धां नवसूतिकाम्।
तां धेनुमिव पीनोध्नीं वत्सं तस्यै समर्पयत्॥ १९०॥

(तामुवाच च।) यशस्वी धार्मिको ज्ञानी राजा वंशकरः सुखी।
पुत्रस्ते भविता साध्वि! गन्ताधस्तात् पुरं मम॥ १९१॥

(भृगुः।) सदावस्तादस्य वरो मङ्गलायेत्युदीर्य्यराट्।
तस्य मातरमाश्वास्य ततोऽवः स्वामिनेऽनमत्॥ १९२॥

---

मेति। अयं पयोधरात् पयोधरं अत्ति पिबतीति पयोधरात् स्तन्यपायी मा सात् न नश्यतु। उत्तरकाले इत्ययं स्मरिष्यति। सादिति षोऽन्तकर्म्मणि इत्यस्य रूपम्। माङ्योगे नामागमः। अधरात् ५।, सा १।, आत् १।, उत्तरतः ५।, (च) अयं १।, (इति) स्मरिष्यति ८।, ॥ १८८॥

रक्षित इति। उत्तरात् उत्तरकाले हे इरापते! जलपते! असौ स्तनन्धयः, समाहृकः स्तात् अस्तु इत्यर्थः। स्तादिति असधातो रूपम्। पद्ये। सूत्रस्य उदाहरणम्॥ १८९॥

अथो इति। अप्पतिर्वरुणः। अन्यत् सुगमम्॥ १९०॥

यशस्वीति। सुगमम्॥ १९१॥

सदेति। अस्य वरुणस्य वरः वो युष्माकं मङ्गलाय मङ्गलनिमित्तं स्तात् अस्त्वित्यर्थः। राट् राजा सुमतिरित्युदीर्य्य उक्त्वा तस्य मातरं आश्वास्य च अवः स्वामिने अवरदिशि

व्याकरणम्।

अधरात् सादुत्तरतस्त्वायमिति स्मरिष्यति। अधरशब्दात् सा सप्तमी आत् स्यात् उत्तरशब्दात्त्वायं विधिरिति स्मरिष्यति बुध इति शेषः॥ १८८॥

उत्तरात्॥ १८९॥ १९०॥

अधस्तात्॥ १९१॥

एतत् श्रुत्वा ययातिः साश्रुनेत्र आह। मुने!

याहक् संश्रूयतेऽपूर्व्वः पुरोदन्तो नहीदृशः।
श्रुतो यतो मे वैराग्यं जायते स्म पुरो न यत्॥ १८३॥

मुने! इदमपि ज्ञातमासीन्मम। यथा।

अधस्तात् यत् सुखं तद्धि सुखं यत् सुमतिर्नृपः।
उदर्कसुखकामो स्त्रीरत्नसम्भोगमत्यजत्॥ १८४॥
रागो ममासीत् यो नार्य्या अधरोरोजयोः स्पृशि।
सोऽधोऽगात् सुमतेराश्चर्य्यरितं शृण्वतो मम॥ १८५॥

स्वामिनि अर्थात् पश्चिमदिक्स्वामिनि वरुणाय अनमत्। अव इति स्वामिशब्दयोगे सप्तमी। (सदा ११, अव: ११, स्तादशि ७१, अवरः ११, ॥ १८२॥

याद्दगिति। याहक् अपूर्वः अत्युत्तमः उदन्तो वृत्तान्तः श्रूयते सः पुरा पूर्वकाले ईदृश उदन्तो नहि श्रुतः। यतो यस्मात् श्रवणात् मम वैराग्यं जातं पुरोऽग्रे यत् वैराग्यं नासीत्। संश्रूयते ८१, पूर्वः ११, पुरः ११, ॥ १८३॥

अधस्तेति। अधस्तात् परकाले यत् सुखं तद्धि तदेव सुखं सुखम्। यत् यस्मात् स सुमतिर्नृपः उदर्कसुखकामो पारलौकिकसुखकामनया स्त्रीरत्नसम्भोगं अत्यजत्। उदर्कः फलमुत्तरमित्यमरः॥ १८४॥

राग इति। नार्य्याः अधरस्य उरोजस्य स्तनस्य च स्पृशि स्पर्शे मम यो रागोऽनुरागः आसीत्। सुमतिराश्चर्य्यरितं शृण्वतो मम सोऽनुरागोऽधोऽगात्। अधरः ११, अरः ११, ॥१८५॥

व्याकरणम्।

सदावस्तादस्त्ववरः। अवरः अवः स्तात् सदा स्तादसोः। अतएव अस्य॥ अव-स्वामिने॥ १८२॥

संश्रूयते पूर्व्वः पुरः। पूर्व्वशब्दः पुरः स्यात् स्तादसोः। पुरः॥ १८३॥

अधस्तात्॥ १८४॥

अहो मुने ! स राजा धन्यः । यतः ।

यल्लब्धुं तपसा वपुःक्षितिरथो नार्य्येः शिवाराधनं
प्राणद्यूतरणे महासुरवधो वज्राश्वघासाहृतिः ।
तत् स्त्रीरत्नमभुक्तमप्यतियुवाऽसौराट् परार्थे जहौ
भार्य्यां भुक्तरतां न हातुमशकं धिङ्मां जरत्कामुकम् ॥ १९६ ॥

एतन्महाद्भुतमहो न तथाविधार्थे
चिज्जायतेऽत्रवदमुत्र सुखं यतः स्यात् ।
मूढ़ा भवन्त्यसति कर्म्मणि सर्वथानु-
रक्ता यतोऽत्र परतोऽप्ययशोऽशुभं स्यात् ॥ १९७ ॥

मुने ! ततः स राजा किमकरोत् ? । भृगुराह । ततः स राजा वरुणात् धनुरस्त्राणि च गृहीत्वा तया सपुत्रया नार्य्या सह वरुणदत्तं कामगं विमानमारुह्य यत्र भगीरथनामा वैद्य आस्ते तत्रा-

---

यल्लब्धुमिति। यत्स्त्रीरत्नं लब्धुं लाभार्थं तपसा वपुःक्षितिः शरीरस्य क्षयोऽभूत्। अथानन्तरं नार्य्येन शिवस्याराधनम्। प्राणद्यूतरणे प्राणान् पणीकृत्य द्यूतरूपे रणे युद्धे महासुरस्य वधः। वज्रस्य वज्रराजस्य अश्वानां घासस्य आहृतिः आहरणम्। तत्स्त्रीरत्नं अभुक्तमपि अतियुवा असौ राट् राजा परार्थे परोपकारार्थं जहौ अत्यजत्। भुक्तं रतं रतिर्यस्यास्तादृशीमपि भार्य्यां हातुं त्यक्तुं नाशकम्। जरत्कामुकं वृद्धं कामुकं मां धिक् ॥ १९६ ॥

एतदिति। यतो यादृशार्थात् यादृशकर्मणः अत्रवत् इहलोके इव अमुत्रापि परलोकेऽपि अर्थात् इह लोके परलोकेऽपि सुखं स्यात् तादृशार्थे चित् बुद्धिर्न जायते। मूढ़ा जना असति कर्म्मणि सर्वथा अनुरक्ता इच्छावन्तो भवन्ति। यतः असतः कर्मणः अत्र लोके परत्र परलोकेऽपि अयशः अशुभञ्च भवेत् अहो एतन्महाद्भुतम्। पद्ये। नत इति सं। था १।, विधार्थे ७।, चित् १।, जायते ८।, एवत् १।, ॥ १९७ ॥

व्याकरणम्।

अधरोऽरः। अधरशब्दः अरः रकारहीनः स्यात् सादृशीः। अधः ॥ १९५ ॥ १९६ ॥

गमत् । अथ तस्मै भगीरथाय स्नुषां पौत्रञ्च समर्पयन् स यस्य नृपस्य दण्डभयात् पलायितः तं नृपं ससैन्यं हत्वा तस्मिन् राज्ये तं शिशुं अभिषिच्य सिंहासनमुपावेशयत् ।

ततः स्वपुरमागत्य ख्यातकीर्त्तिः शशास गाम् ।
तत्परोपकृतेः पुण्यैरधस्तात् स्वर्गमाप सः ॥ १९८ ॥

ययातिः । मुने ! इदानीं मया किं कर्त्तव्यम् । भृगुराह ।

यत्नश्चिरादितः कार्य्यो भवाद्यर्थे पुनः सता ।
येनोपायेन नश्येयुश्चिरत्नान्यशुभानि च ॥ १९९ ॥
उत नोद्यादितो माया पुत्रदारगृहादिषु ।
ततः प्रव्रज्य पुरुषमाश्रयेत पुरातनम् ॥ २०० ॥

तत इति । अस्यार्थः सुगमः ॥ १९८ ॥

यत्न इति । यथा येनोपायेन पुनर्भवाद्यर्थे भवो जन्म आदिना जरामृत्योर्ग्रहणं तेषामर्थे तेषां निवृत्त्यर्थे इतः अस्मिन् काले सता साधुना यत्नः कार्य्यः । येनोपायेन चिरत्नानि चिरकालार्जितानि अशुभानि दुरदृष्टानि नश्येयुः । त्नः १।, चिरादितः ५।, कार्य्यः १।, भवाद्यर्थे ७।, ॥ १९९ ॥

उत इति । उत भोः आदितः आदौ पुत्रदारगृहादिषु माया नोद्या छेद्या । ततः प्रव्रज्य गृहात् निर्गत्य पुरातनं पुरुषं अर्थादीश्वरं आश्रयेत । तनः १।, अद्यादितः ५।, ॥ २०० ॥

व्याकरणम् ।

घा विधार्थे चिञ्जायते वयत् । येभ्यस्त्व उक्तेभ्यः था स्यात् विधार्थे मकाराद्य स चित् चकारेत् जायते । सर्व्वथा ॥ १९७ ॥ १९८ ॥

त्नश्चिरादितः कार्य्यो भवाद्यर्थे । चिरादेः त्नः स्यात् भवाद्यर्थे । चिरत्नानि ॥१९९॥

तनोऽद्यादितः । अद्यादेः तनः स्यात् भवाद्यर्थे । पुरातनम् ॥ २०० ॥

पश्चादितो दृश्यतेऽत्यण् प्रायशः शोकभाक् ततः।
पाश्चात्ये सति पौरस्त्यः पुरुषः प्रव्रजेत् गृहात्॥ २०१॥
प्राक्तने सञ्चयेऽमुत्र न विषीदन्ति देहिनः।
यथा पूर्व्वं सञ्चयिनो वर्षासु गृहमेधिनः॥ २०२॥
(तथोक्तम्। पूर्वाह्णे प्रावृषः पूर्वं तारुण्ये इह सञ्चयी।
पराह्णे प्रावृषि जरस्यमुत्र न विषीदति॥ २०३॥
यत्नतः स्वधर्मः सर्वदा पालनीयः। यतः।
बन्धुधर्मोऽत्रादितस्तुल्यो मृतं सोऽनुयाति यत्।
त्यक्तं बन्धुभिरन्त्यैराजन्मप्रतिपालितैः॥ २०४॥

---

पश्चादिति। अत्यण् अतिशीघ्रो जनः उत्तरकाले प्रायशः शोकभाक् इतः एतस्मिन् लोके दृश्यते। ततस्तस्मात् पाश्चात्ये पश्चाज्जाते पुत्रादौ सति वर्त्तमाने एव पौरस्त्यः पूर्वकालजातः पित्रादिः गृहात् प्रव्रजेत्। अण् इति अणङ् प्राणने इत्यस्य रूपम्। पश्चादितः ५।, दृश्यते ८।, त्यण् १।, २०१॥

प्राक्तन इति। पूर्वकालीने सञ्चये सति देहिनः अमुत्र परकाले न विषीदन्ति। यथा पूर्वं पूर्वकाले सञ्चयिनो गृहमेधिनः गृहस्थाश्रमिणः वर्षासु न विषीदन्ति तथेत्यर्थः। पद्ये। पूर्वसूत्रस्य उदाहरणम्॥ २०२

पूर्वेति। अस्य यथाक्रमेणान्वयः यथा पूर्व्वाह्णे सञ्चयी जनः पराह्णे न विषीदति। प्रावृषः पूर्वं सञ्चयी प्रावृषि न सीदति। तारुण्ये यौवनकाले सञ्चयी जरसि वृद्धावस्थायां न सीदति। इह लोके सञ्चयी अमुत्र परलोके न सीदति॥ २०३॥

बन्धुरिति। तत्र परलोके आदितः आदिकालमारभ्य धर्मः स्वधर्म एव तुल्यः

व्याकरणम्।

पश्चादितो दृश्यते त्यण्। पश्चादादेस्त्यण् दृश्यते। अचि परे पश्चात् शब्दस्य तकारस्य लोपः। पश्चाद्वेनेति वत्। पाश्चात्ये। पौरस्त्यः॥ २०१॥

प्राक्तने॥ २०२॥ २०३

( एतत् श्रुत्वा ययातिर्भृगुं प्रति । )

खल्वभ्रमो वैभवादो मयाद्यादित आदिम !

सतां सम्पत् यत् परत्र नानुगच्छति संस्थितम् ॥ २०५ ॥

यतः । सचित् सक्तेः किमस्तं न याति मोहः पिशाचिका ।

पिशाची दीक्षितं कच्चित् शक्ता भ्रामयितुं न यत् ॥ २०६ ॥

( भृगुर्ययातिं प्रति । ) राजन् ! एवं वाचा अभिलपसि यदा कर्मणैतत् सम्पादयिष्यसे तदैतत् सत्यं ज्ञास्यामि । यतः ।

मायामयोऽयं संसारो दीर्घस्वप्न इवास्थिरः ।

संसारिणो वदन्तीति वैराग्यात् क्षणिकात् क्वचित् ॥ २०७ ॥

---

प्रशंसनीयो बन्धुः यत् यस्मात् स धर्मः मृतं जनं अनुयाति तेन सह गच्छति । मृतं कीदृशं आजन्मप्रतिपालितैः अवत्यैर्बन्धुभिः पुत्रादिभिस्त्यक्तम् । अवादि तः ५।, ( तु ) त्यः ११, ॥ २०४ ॥

खल्विति । वैभवादो विभवस्य समूह इति वैभवं तद्वादी खलभ्रमो खोर्यत्वभ्रान्तिः अद्य मया आदितः छिन्नः नाशित इत्यर्थः हे सतां आदिम आदिभूत ! यत् यस्मात् सम्पत् ऐश्वर्यं संस्थितं मृतं जनं परत्र परकाले नानुगच्छति । भवादौ ७।, मः ११, आद्यादितः ५।, ॥ २०५ ॥

सचिदिति । चित् ज्ञानं तेन सह वर्त्तमानः सचित् ज्ञानी तेन सक्तेः सङ्गात् अर्थात् ज्ञानिना संसर्गात् मोहः पिशाचिका किं अस्तं न याति न प्राप्नोति । यत् यस्मात् दीक्षितं गुरुणा उपदिष्टं कश्चित् जनं भ्रामयितुं पिशाची शक्ता न भवेत् । चित् ११, सक्तेः ५।, किमः ५।, ॥ २०६ ॥

मायेति । अयं दारादिमयः संसारः मायामयः दीर्घस्वप्न इव अस्थिरः इति संसारिणो वदन्ति । पद्मे सूतस्य उं ॥ २०७ ॥

व्याकरणम् ।

अवादितस्तु त्यः । अवादेस्त्यः स्यात् भवाद्यर्थे अवत्यैः ॥ २०४ ॥

भवादौ मः आद्यादितः । आद्यादेर्मः स्यात् भवाद्यर्थे । आदिम ॥ २०५ ॥

चित् सक्तेः किमः । सविभक्तिकात् किं शब्दात् चित् स्यात् । कच्चित् ॥ २०६ ॥

क्वचित् ॥ २०७ ॥

तथा च नो भवत्येषां स्वदेहे क्षणिकत्वधीः।
कदाचन प्रभोर्मायामुग्धानां विषयैषिणाम्॥ २०८॥

ययातिर्भृगुं प्रति। मने! नैवम्। भवता क्षणसंसर्गादेव मम यथार्थबोध आसीत्।

यतः। त आदित्याः समुदिता मन्यन्ते इह साधवः।
येऽन्तस्तमो निहत्याशु बोधयन्ति हृदम्बुजम्॥ २०९॥

अथाभिनन्द्य क्षितिपं शुभाशिषा भृगुः प्रतस्थे स नृपोऽपि निस्पृहः।
वनं गतस्तीव्रसमाधिशोषितं विहाय देहं समगात् परं पदम्॥२१०॥

इति महामहोपाध्याय श्रीकृष्णानन्दवाचस्पतिकृतौ
अन्तर्व्याकरणे मात्यपरिशिष्टनामनाटके
षष्ठीरात्रिविनोदः।

---

तथेति। तथाच तथापि एषां संसारिणां स्वस्य देहे क्षणिकत्वबुद्धिः कदाचन न भवति। किम्भूतानां प्रभोरीश्वरस्य मायया मुग्धानाम्। तथा १।, चनः १।, भवति ८।, ॥ २०८॥

त आदित्या इति। इह जगति ये साधवो जनाः अन्तस्तमः अन्तरस्थमन्धकारं निहत्य आशु शीघ्रं हृदयाम्बुजं हृत्पद्मं बोधयन्ति प्रकाशयन्ति ते एव आदित्याः सूर्य्या उदिता मन्यन्ते। तः १।, (ष-आदि) आदि-त्याः १॥,। समुदिताः १॥, मन्यन्ते ८॥,। इह ७।,। साधवः १॥,। ये १॥, ॥ ॥ २०९॥

अथेति। भृगुः शुक्राचार्य्यः। अन्यत् सुगमम्॥ ०॥

इति श्रीअजितनाथन्यायरत्नकृतौ राजतरणीसमाख्यायां मात्यपरिशिष्ट-व्याख्यायां षष्ठीरात्रिविनोदः समाप्तः॥ ०॥

व्याकरणम्।

तथा चनो भवति। कदाचन॥ २०८॥

त आदित्याः समुदिता मन्यन्त इह साधवो ये। अकारादिप्रत्यया इह यत्र्य ये समुदिताः ते प्रत्ययास्तद्धित इति मन्यन्ते॥ २०९॥ २१०॥

इति तद्धितसंग्रहः।

# অন্তর্ব্যাকরণনাট্যপরিশিষ্টের সমালোচনা।

অন্তর্ব্যাকরণনাট্যপরিশিষ্টম্। মহাকবি-বাচস্পতি-শ্রীযুক্ত-কৃষ্ণানন্দ-সরস্বতী-প্রণীতম্। কবিভূষণ-শ্রীযুক্ত-অজিতনাথ-ন্যায়রত্ন-কৃতয়া রাজসরণী-সমাখ্যয়া ব্যাখ্যয়সমেতম্। শ্রীযুক্ত রাজকিশোরমণ্ডলেন প্রকাশিতম্। খণ্ডং প্রতি মূল্যমেকমুদ্রামাত্রম্।

মহাকবি শ্রীযুক্ত কৃষ্ণানন্দ সরস্বতী প্রণীত অন্তর্ব্যাকরণ নাট্যপরিশিষ্ট অমূল্য ও অপূর্ব্ব সংস্কৃত গ্রন্থ মুদ্রিত হইতেছে। চারি খণ্ডে সমাপ্ত হইবে। সম্পূর্ণ পুস্তকের অগ্রিম মূল্য ৩৲ তিন টাকা। প্রতি খণ্ডের মূল্য ১৲ টাকা এবং পশ্চাদ্দেয় মূল্য ৫৲ টাকা।

নদীয়া কৃষ্ণনগর রাজবাটীতে শ্রীযুক্ত অজিতনাথ ন্যায়রত্ন মহাশয়ের নিকট অথবা ২৪পরগণা বাওয়ালী পোঃ শ্রীযুক্ত বাবু রাজকিশোর মণ্ডলের নিকট প্রাপ্তব্য। এই গ্রন্থের একটু পরিচয় গ্রহণ করুন।

বর্ত্তমান সময় সংস্কৃত সাহিত্য ঘোরতর অবনতি-প্রবণ। নূতন সংস্কৃত সাহিত্যের উদয় যে এককালে নাই, তাহা নহে; তবে অমূল্য সংস্কৃত ভাণ্ডারে আসন পাইবার উপযুক্ত সংস্কৃতসাহিত্যের আবির্ভাব এখন আর নাই, বলিলেই হয়। ভয়ে-ভয়ে বলিলাম, 'বলিলেই হয়', এই ছয়টী অক্ষরের পূর্ব্বেই কিন্তু পূর্ণচ্ছেদ দেওয়া উচিত। তবে ঘোর অন্ধকারে বিদ্যুৎস্ফুরণের ন্যায় কদাচিৎ এক এক খানি অপূর্ব্ব সংস্কৃত সাহিত্যের উদয়, ৪০ বৎসরের পূর্ব্ব পর্য্যন্ত হইয়া গিয়াছে; কিন্তু এই সুদীর্ঘ কাল তেমন শুভ সংবাদ আর নাই। আমাদের আলোচ্যমান গ্রন্থখানিই শেষ অপূর্ব্ব সাহিত্য। আমরা শ্রীশ্রী৺ নারায়ণের নিকট প্রার্থনা করি, এই গ্রন্থের শেষত্ব যেন অচিরেই দূর হয়। একটী কবিতা আছে—

"সুবন্ধুর্বাণভট্টশ্চ কবিরাজ ইতি ত্রয়ঃ।
বক্রোক্তিমার্গনিপুণাশ্চতুর্থো বিদ্যতে ন বা ?"

সুবন্ধু ( বাসবদত্ত-গ্রন্থ প্রণেতা, শক পঞ্চম শতাব্দীতে প্রাদুর্ভূত )' বাণভট্ট (কাদম্বরী প্রভৃতি-গ্রন্থ প্রণেতা, ঐ সময়ে প্রাদুর্ভূত) এবং কবিরাজ (রাঘব-

পাণ্ডবীয় গ্রন্থ-প্রণেতা, শক দশম শতাব্দীর পূর্ব্বে প্রাদুর্ভূত) বক্রোক্তি কথনে এই তিন ব্যক্তিই নিপুণ, চতুর্থ ব্যক্তি আছেন কি না সন্দেহ।

অন্তর্ব্যাকরণ নাট্যপরিশিষ্ট রচিত হইবার পরে 'চতুর্থো বিদ্যতে'ই স্থির হইয়া গিয়াছে, 'নবা' অর্থাৎ সংশয় আর নাই; এ কথা আমরা মুক্তকণ্ঠে বলিতে পারি।

অন্তর্ব্যাকরণ নাট্যপরিশিষ্টে ব্যাকরণ ও কাব্য একাধারে বর্ত্তমান। ব্যাকরণের সূত্র, উদাহরণ সবই ইহার মধ্যে আছে, সঙ্গে সঙ্গে সর্ব্বাঙ্গসুন্দর কাব্য। এরূপ গ্রন্থের তুলনা নাই। একমাত্র 'রাঘব-পাণ্ডবীয়' কাব্য, আগাগোড়া দুটি অর্থের প্রকাশক, এক অর্থ শ্রীরাম পক্ষে, অন্য অর্থ পাণ্ডব পক্ষে। কিন্তু এক অর্থে ব্যাকরণ ও অন্য অর্থে কাব্যরস এই গ্রন্থ ভিন্ন আর কিছুতেই নাই। কোথায় নীরস ব্যাকরণ, আর কোথায় সরস কাব্য? এতদুভয়ের একত্র সমাবেশ যিনি করিতে পারিয়াছেন, তাঁহাকে কবিকুল-সিংহাসনের কোন্ ভাগে বসাইয়া যে তৃপ্তিলাভ করিব, তাহা বলিতে পারি না।

উদাহরণস্বরূপে দুই একটী শ্লোক উদ্ধৃত করিতেছি;—

"পুরস্কৃতো গুরুর্যেন না শোকস্তস্য জায়তে।
সমানস্যার্থনির্বহান্ সাধয়ত্যঞ্জসাত্মনঃ॥"

টীকা, ব্যাকরণ পক্ষে—পুরস্কৃতো গুরুর্যেন তস্য সমানস্য অকো নাশো জায়তে। যথা, অঞ্জসাত্মনঃ ইত্যাদি।

যে সবর্ণ (একজাতীয়) অকের (অ, আ, ই, ঈ, উ, ঊ, ঋ, ৠ, ঌ, ৡ, মতান্তরে নাই) গুরু (দীর্ঘ আ, ঈ, ঊ, ৠ এবং ৡ) স্বর পরে থাকে, তাহার নাশ হয়। যথা অঞ্জসাত্মনঃ। অঞ্জসা+আত্মনঃ; 'অঞ্জসা' শেষে আকার, ইহার পরেই 'আত্মনঃ' আকার; সবর্ণ অকের পরে গুরু স্বর আকার থাকাতে পূর্ব্ববর্ত্তী অক যে অঞ্জসা+এই আকার, তাঁহার নাশ হইল, দুইটী আকারের অবশিষ্ট থাকিল একটী, পদ সিদ্ধ হইল অঞ্জসাত্মনঃ।

কাব্য পক্ষে—যেন গুরুঃ পুরস্কৃতস্তস্য শোকো না জায়তে, এবং স, আত্মনঃ মানস্যার্থনিবহান্ অঞ্জসা সাধয়তি।

যিনি পিত্রাদি গুরুজনের পূজা করেন, তাঁহার দুঃখ শোক হয় না, এবং মনোঽভিলষিত প্রয়োজন সকল ঝটিতি সিদ্ধ করিতে সমর্থ হন।

আর একটী শ্লোক ;—

"বিরাজসিগুণী যুচ্চ কোট্যর্থৈশ্চাপবংশজঃ।
কেবলং পরপীড়ায়ৈ নম্রতাগুণ কোটয়ঃ॥"

এক রাজা, উচ্চকুল-সম্ভূতা কোন রমণীর নিকটে, তাঁহার পাণিগ্রহণাভিলাষ ব্যক্ত করেন, তাহাতে গর্ব্বিতা রমণী রাজার শরাসনকে লক্ষ্য করিয়া ছলে রাজাকে যে, উপযুক্ত উত্তর দেন, উপরি উক্ত শ্লোকে তাহাই বিবৃত। অথচ ব্যাকরণের সূত্র ও উদাহরণ সঙ্গে সঙ্গে আছে।

টীকা, ব্যাকরণ পক্ষে—জসিগুণী যুৎ, যথা নম্রতাগুণকোটয়ঃ। জস্ অর্থাৎ প্রথমা বিভক্তির বহুবচনে হ্রস্ব ইকার, হ্রস্ব উকারের গুণ হয়। যথা—কোটয়ঃ কোটি শব্দের প্রথমা-বহুবচনে সিদ্ধ হয়।

কাব্য পক্ষে—হে চাপ! (শরাসন!) তুমি বংশসম্ভূত (বাঁশ হইতে উৎপন্ন), কোটি ও গুণ যুক্ত; কিন্তু তোমার যে নম্রতা গুণ (ছিল) ও কোটি (অগ্র) তাহা কেবল পর-পীড়ার জন্য।

রাজন্! আপনি গুণবান্, কোটি কোটি ধনে ভূষিত, কিন্তু অপবংশ সম্ভূত; অতএব আপনার যে নম্রতা ও কোটি কোটি গুণ ও কোটি কোটি অর্থ কেবল পরপীড়নের জন্য।

আমরা সংস্কৃতানুরাগী ব্যক্তিমাত্রকেই এই গ্রন্থ খানি গ্রহণ করিয়া স্ব স্ব গৌরব রক্ষা করিতে অনুরোধ করি।

এই কাব্য-রচয়িতা মহাকবি শ্রীযুক্ত কৃষ্ণানন্দ সরস্বতী। নদিয়া জেলার অন্তর্গত মহেশপুর গ্রামে ইঁহার জন্ম। প্রসিদ্ধ বুনা রামনাথ ইঁহার অধ্যাপক। শেষে বাস করেন, নবদ্বীপের পাঁচ ক্রোশ উত্তরে ধর্ম্মদহ গ্রামে। তিনি নবদ্বীপাধিপতি মহারাজ শ্রীশচন্দ্রের সভাপণ্ডিত ছিলেন। সরস্বতী মহাশয়ের পুত্র শ্রীযুক্ত সীতাপতি শিরোমণি মহাশয় বর্ত্তমান আছেন। সরস্বতী মহাশয় দীর্ঘজীবী ছিলেন, এবং নানা শাস্ত্রে পণ্ডিত ছিলেন, তাঁহার আবির্ভাবে বাঙ্গালাদেশ গৌরবান্বিত হইয়াছে।

সম্প্রতি সুকবি বহুশাস্ত্রে বিশারদ নবদ্বীপাধিপতির সভাপণ্ডিত শ্রীযুক্ত অজিতনাথ ন্যায়রত্ন মহাশয় এই গ্রন্থের টীকা করিতেছেন; আর প্রকাশ করিতেছেন,—বাওয়ালীর সংস্কৃতানুরাগী ধার্ম্মিক জমিদার শ্রীযুক্ত রাজকিশোর মণ্ডল। টীকাকার ও প্রকাশক গ্রন্থের অনুরূপই হইয়াছে। এক্ষণে গ্রাহক অনুরূপ হইলেই, সর্ব্বাংশে তুল্যযোগিতা হয়।

বঙ্গবাসী ১৩ই মাঘ, ১৩০১ সাল।

---

पुस्तकमिदं नवद्वीपप्रदेशान्तर्गतमहेशपुरवास्तव्येन नवद्वीपाधिपतिश्रीमन्महाराजश्रीलश्रीशचन्द्रनृपतेरन्यतमसभास्तारेण पण्डितप्रवरमहाकविश्रीकृष्णानन्दवाचस्पतिना विनिर्म्मितं, पूर्व्वं भवानीचरणवन्द्योपाध्यायेन सटीकं मुद्रितमपि साम्प्रतं दुर्लभमभवत्। ततश्चैतत् पुनरभिनवात्मकृतव्याख्यया मुद्रयित्वा प्रकाशयता पण्डितवरेण श्रीमताजितनाथन्यायरत्नेन संस्कृतानुशीलनपराणां सुमहानुपकारः कृतः। तथैतत् प्रकाशनव्ययसाहायकं विधित्सुः श्रीमान् राजकिशोरमण्डलश्चैतत् साधुकृत्य प्रोत्साहनार्थं विपुलं धन्यवादमर्हति। साम्प्रतमस्मत्पाठकानामभिज्ञानार्थमेतदपूर्व्वग्रन्थरत्नस्यांशतः परिचयं दातुमिच्छामः। विद्योदय, पौष १२०१ साल।

---

# अन्तर्व्याकरणनाट्यपरिशिष्टम् ।

## [ उत्तरार्द्धम् । ]

अत्यादित्याः सन्ति सिद्धा आख्याताख्याः प्रयोगिनः ।
शब्दयोनेः समाः स्वाच्छ्यनैर्लिप्यान्नौमि तान् कवीन् ॥ १ ॥
अत्रत्यास्तेऽशीतिशतसंख्यावन्तो जयन्त्यलम् ।
निपीय भारतीर्येषां नाद्रियन्ते बुधाः सुधाम् ॥ २ ॥

---

अत्येति । अत्यादित्याः आदित्यं सूर्य्यमतिक्रान्ताः तेजस्विन इत्यर्थः । आख्याताख्याः आख्याताः लोकैः सङ्कीर्त्तिता आख्या नामानि येषां ते तथा लोकसङ्कीर्त्तितनामान इत्यर्थः सिद्धास्तपःसिद्धाः सन्ति । प्रयोगिनः प्रकृष्टयोगशालिनः यद्वा प्रयोगो वैधकर्म्मानुष्ठानं तद्वन्तः । स्वाच्छ्यं नैर्म्मल्यं नैर्लिप्यं सङ्गरहितत्वं तेन शब्दयोनेः आकाशस्य समाः तुल्याः तान् कवीन् अर्थात् व्यासादीन् नौमि इत्यन्वयः । पक्षे । अ इति विष्णोः सम्बोधनं समा इत्यादिभागः उदाहरणघटितवाक्यत्वेन सार्थकः । त्यादित्याः १॥, सन्ति ८॥, सिद्धाः १॥, आख्याताख्याः १॥, प्रयोगिनः १॥, शब्दयोनेः ६।, ॥ १ ॥

अत्रेति । अत्रत्याः अत्रोद्भवाः ते अशीतिशतसंख्यावन्तः अशीतिशतसंख्यकाः संख्यावन्तः पण्डिताः ( संख्यावान् पण्डितः कविरित्यमरः । ) अलम् अत्यर्थं जयन्ति । येषां भारतीः वाक्यानि निपीय श्रुत्वा बुधाः सुधामपि नाद्रियन्ते । पक्षे । जयन्तीत्यादिपरभागः उदाहरणवाक्यत्वेन सार्थकः । अत्र ७।, त्याः १॥, ते १॥, अशीतिशतसंख्यावन्तः १॥, ॥ २ ॥

### व्याकरणम् ।

त्यादित्याः सन्ति सिद्धा आख्याताख्याः प्रयोगिनः शब्दयोनेः । त्यादिप्रत्ययाः प्रसिद्धा एव सन्ति आख्यातसंज्ञास्ते च शब्दयोनेर्धातोः परे प्रयोगशालिनः । नौमि ॥ १ ॥

अत्रत्यास्तेऽशीतिशतसंख्यावन्तः । ते प्रत्ययाः अशीत्युत्तरशतसंख्यावन्तः ॥ २ ॥

एकैवाम्बा जगत्यास्ते विभक्ता दशधा क्रमात् ।
आद्यादिदश नामाप्ता दशदिक्ष्ववितुं जगत् ॥ ३ ॥

( नान्द्यन्ते सूत्रधारः नटीं प्रति । )

सुभगेऽनुपमाभिख्याभाजस्ते न वशो भवेत् ।
को वा पश्यन् साङ्गहारं नाट्यचातुर्य्यमद्भुतम् ॥ ४ ॥
शितोऽपि पञ्चरोपस्य विशिखो मन्यते तव ।
कटाक्ष एव भ्रूचापे निहितः स्मितलिप्तकः ॥ ५ ॥

एकैवेति । जगति अम्बा शिवशक्तिः एकैव दशदिक्षु जगत् अवितुं रक्षितुं दशधा विभक्ता सती आद्यादिदशनाम प्राप्ता इत्यन्वयः । पक्षे । अम्बा जग इति दुर्गाशिवयोगायकस्य सम्बोधनम् । त्याः १॥, ते १॥, विभक्ताः १॥, दशधा १॥, क्रमात् ५।, ( आद्या आदि ) आद्यादिदशनाम २।, आप्ताः १॥, ॥ ३ ॥

सुभग इति । हे सुभगे ! अनुपमाभिख्याभाजः निरुपमशोभावत्यास्ते तव साङ्गहारम् अङ्गविक्षेपसहितम् अद्भुतं नाट्यचातुर्य्यं पश्यन् सन् को वा जनो न वशो भवेत् अपितु सर्व एव इत्यन्वयः । पक्षे । नु सुभगे इति सम्बोधनम् । पमाऽभिख्याभाजः १॥, ते १॥, नवशः १॥, ॥ ४ ॥

शित इति । पञ्चरोपस्य पञ्चबाणस्य कामस्य शितोऽपि निशितविशिखोऽपि तव कटाक्ष एव मन्ये । कीदृशः भ्रूचापे निहितः । स्मितेन लिप्तकः । ( विषाक्ते दिग्ध-

व्याकरणम् ।

त्यास्ते विभक्ता दशधा क्रमात् आद्यादिदशनामाप्ताः । ते प्रत्ययाः दशधा विभक्ताः सन्तः आद्याद्वितीयादिदशसंज्ञाः प्राप्ताः । ( को खो गो घो टो ठो डो ढो तो थोऽष्टादशशः । मुं । पाणिनिना तु यथाक्रमं लट्, विधिलिङ्, लोट्, लङ्, लुङ्, लिट्, लुट्, आशीर्लिङ्, लृट्, लृङ् एतत्संज्ञकानि कृतानि ) ॥ ३ ॥

पमाऽभिख्याभाजस्ते नवशः । ते प्रत्यया नव नव क्रमात् पमाख्याभाजः पमसंज्ञाशालिनः स्युः । ( नवशः पमे जितोऽन्यङ्क्ष्यां घे । मुं । ) ॥ ४ ॥

अथ नटीं विरसां मौनावलम्बिनीमधोमुखीं वीक्ष्य तां प्रति सूत्र: । मानिनि ! नूनं कोऽपि मत्सर: खलो भवत्या असूयतीति मन्ये तद्भवतु किन्त्वेन खलानामेष हि स्वभाव: ।

नृशंसतिर्य्यङ्ङिदपि द्रोहभावस्य कर्हिचित् ।
सकारणं द्रुह्यति स खलो द्रुह्यत्यकारणम् ॥ ६ ॥

तदेवं पश्य ।

किन्नाम षष्टाष्टमपञ्चमेषु दिनेषु कष्टं न ददाति मन्द: ।
निरागसे स्वार्थमृतेऽपि तस्मै यस्योदयं वीक्षत उत्थितस्य ॥ ७ ॥

---

लिप्तकावित्यमर: । ) पक्षे । अपस्येत्यादिकमुदाहरणवाक्यम् अपस्य अपालकस्य इत्यर्थ: । श्रित: १॥, ( अपि ) पञ्च १॥, र: १।, ॥ ५ ॥

नृशंसेति । नृशंसतिर्य्यङ् नृशंसो घातुक: तिर्य्यङ् पशु: पक्षी च द्रोहभावस्य परानिष्टस्वभावस्य इतोऽपि प्राप्तोऽपि स तिर्य्यङ् न सकारणमेव कर्हिचित् द्रुह्यति खलस्तु निष्कारणं सर्वदैव द्रुह्यति। पक्षे। नृशंसतिर्य्यङ्ङिति सम्बोधनम् । इ पादपूरणे । ङित् १।, अपिद्र: १।, ॥ ६ ॥

किन्नामेति । मन्द: शनैश्चर: स्वार्थमृतेऽपि स्वप्रयोजनं विनापि तस्मै निरागसे निरपराधायापि षष्ठाष्टमपञ्चमेषु दिनेषु जातावधि षष्ठादिदिनेषु किं नाम कष्टं पीडां किं न कष्टं ददाति अपितु ददात्येव नाम सम्भावनायाम् । कस्मै इत्याह उत्थितस्य उत्पन्नस्य बालकस्य यस्य उदयं लग्नं वीक्षते । अत्र मन्द: क्रूरो जन उत्थितस्य वर्द्धितस्य नरस्य यस्य उदयम् उन्नतिं वीक्षते तस्मै कष्टं ददातीति शनैश्चरस्य मन्दत्वमेव उत्थितस्य दु:खदायित्वे हेतु: । पक्षे । मेषु शोभायुक्तेषु । कित्नाम १।, षष्ठाष्टमपं १।, ॥ ७ ॥

व्याकरणम् ।

श्रितोऽपि पञ्च र: । तेषां प्रथमा: पञ्च रसंज्ञा: स्यु: शकारितश्च । ( पञ्चर: श्रिच सु । ) ॥ ५ ॥

ङिदपिद्र: । अपित् री ङित्संज्ञ: स्यात् । ( ङिदपिद्र: सु । ) ॥ ६ ॥

किन्नाम षष्ठाष्टमपं । अपिदनुवर्त्तते तेन अपित्षष्ठ: अष्टमपरस्मैपदञ्च कित्संज्ञ: स्यात् । कित् ही दीपं । सु । ॥ ७ ॥

किन्तु स खलो महादुःखी। यतः।

सदाधादाततानाधीन् योऽन्येषां यशसा श्रिया।
तदनिष्टोपायचिन्तोद्वेगी कस्तत्समोऽर्त्तिमान् ॥ ८ ॥
मन्यते योऽद्वैधवादी राजते सखिरुक् जगत्।
विद्वान् परश्रीसन्तुष्टो बभूव स पुमान् सुखी ॥ ९ ॥
वाचा क्रीतजगत् विद्वान् मन्यते चायली भव।
कोऽजिरे वा विदेशे वा द्वेष्यः स्यात् गुणिनां गुणी ॥ १० ॥

---

सदेति। यः खलः अन्येषां जनानां यशसा श्रिया च आततान् विस्तृतान् आधीन् मनःपीड़ाः सदा अधात् धृतवान् कोजनस्तत्समपेक्ष्य अर्त्तिमान् पीड़ावान् अस्तीति शेषः। सः कीदृशः तदनिष्टोपायचिन्तोद्वेगी तेषां परेषाम् अनिष्टोपायचिन्तया उद्वेगयुक्तः। पक्षे। ततेत्यादिकमुदाहरणवाक्यम्। स दाधा १।, दा १।, ॥ ८ ॥

मन्यत इति। परश्रीसन्तुष्टो यो विद्वान् अद्वैधवादी अद्विरुक्तिशीलः सन् तथा सखिरुक् जगत् सन् सख्युरिव मित्रस्येव रुक् अनुरागो जगति यस्य तादृशः सन् राजते दीप्यते स एव पुमान् सुखी बभूव इति मन्यते। पक्षे। रुक् इत्यादिक-मुदाहरणवाक्यम्। मन्यते ८।, यः १।, (द्वैधव आदि) द्वैधवादिः १।, राजते ८।, सः १।, खिः १।, ॥ ९ ॥

वाचेति। वाचा क्रीतं वशीकृतं जगत् येन तादृशो विद्वान् भवे संसारे अयलः शुभावहविधिशाली मन्यते। अयः शुभावहो विधिः तदस्तीति चूड़ादित्वात् लः। को गुणी अजिरे निजाङ्गने विदेशे वा गुणिनां द्वेष्यः स्यात्। पक्षे। ए सम्बोधने। मन्यते ८।, अचा ३।, यलः ६।, (भव इक) भवेकः १॥।, जिः १।, ॥ १० ॥

व्याकरणम्।

सदाधादा। दाधद्भिन्नो धा दासंज्ञः स्यात्। (दाधादा। सुं।) ॥ ८ ॥

मन्यते यो द्वैधवादी राजते स खिः। द्विरुक्तधातुसम्बन्धी य आदिः राजते सः खिः मन्यते। बभूव। "द्विः पूर्व्वः खिः। सुं।" ॥ ९ ॥

मन्यतेऽचा यलो भवेको जिः। अचा युक्तस्य यलस्य स्थाने भूता इकः जिसंज्ञाः स्युः "यलोऽचेक् जिः। सुं।" ॥ १० ॥

मन्यते स गुरुः स्वोऽपि यः परस्य स्फुरत्श्रिया।
गुणैर्यशोभिः सन्तुष्टो बन्धुः स्यात् स्वयमापदि ॥ ११ ॥
गुणधारुर्गुरुर्मान्यः यदि स स्यादमत्सरः।
विद्वेषी गुणिनां यः स्यात् दृक्लक्ष्यो गुणिनां न सः ॥ १२ ॥

नेपथ्ये। अहो तव वचनानि मम कर्णपूरतां यान्ति। सूत्रः। प्रिये! पश्य राजा आयाति। य एवम्।

अङ्कानुबन्धरहितो गुणी नाम्नास्ति सर्वजित्।
एषा ख्यातस्य संज्ञास्य स्मरणीया विपश्चिताम् ॥ १३ ॥

मन्यत इति। योजनः परस्य स्फुरत्श्रिया दीप्यमानैश्वर्य्यैर्गुणैर्यशोभिश्च सन्तुष्टः स्यात् तथा आपदि स्वयमेव बन्धुः स्यात् स एव जनो गुरुः स्वोऽपि आत्मीयोऽपि इति मन्यते। पक्षे। स्फुरदित्यादिकमुदाहरणवाक्यम्। मन्यते ८।, सः १।, गुरुः १।, स्वः १।, (अपि) यः १।, परस्य: १।, ॥ ११ ॥

गुणेति। गुणधारुः गुणधारणशीलीजनः गुरुः गौरवापन्नः स जनो मान्यः यदि स जनः अमत्सरः परशुभद्वेषरहितः स्यात् यो जनो गुणिनां विद्वेषी स्यात् स जनो गुणिनां दृक्लक्ष्यो न स्यात्। पक्षे। गुणधा इति गुणिनां सम्बोधनम्। रुः १।, गुरुः १।, मान्यः १।, ॥ १२ ॥

अङ्केति। सर्वजित् इति नाम्ना राट् राजा अस्ति। ख्यातस्य तस्य राज्ञः एषा संज्ञा नाम विपश्चितां पण्डितानां स्मरणीया। कीदृशः अङ्कानुबन्धरहितः अङ्को लोकापवादः अनुबन्धो दोषः ताभ्यां रहितः। पक्षे। सर्वजिदिति सम्बोधनम्। ङ्कानुबन्धरहितः १।, गुणी १।, नाम्ना ३।, अस्ति ८।, ॥ १३ ॥

### व्याकरणम्।

मन्यते स गुरुः स्वोऽपि यः परस्यः। परे स्यः संयोगो यस्य तादृशो यः स्वो लघुः स गुरुर्मन्यते। "स्वः स्ये रुः। सुं।" ॥ ११ ॥

रुर्गुरुर्मान्यः। गुरुः रुसंज्ञः स्यात्। "स्वर्घौ घुरु। सुं।" ॥ १२ ॥

ङ्कानुबन्धरहितो गुणी नामास्ति। ङकारककारानुबन्धरहितो गुणिसंज्ञः स्यात्। एषा आख्यातस्य संज्ञा पण्डितानां स्मरणीया ॥ १३ ॥

अनघेशप्रेमभक्तिरसशुद्धान्तरात्मन:।
यस्य व्रजति सत्कीर्त्तिर्दिग्वधूकर्णपूरताम्॥ १४॥
अनुरक्तेन गुणिनि अन्तजादेर्लघोरपि।
गुण: समाहृतो येन धर्म्मे चेतति यो विराट्॥ १५॥
न गतोऽत्यादरं कोऽस्य गुणवान् गुणरागिन:।
वहन्ति चम्पकं मूर्ध्ना प्रीत्या सुन्दर्य्य एव हि॥ १६॥

---

अनघेति। यस्य नृपस्य सत्कीर्त्तिर्दिक्रूपा या वध्व: स्त्रिय: तासां कर्णपूरतां कर्णभूषणतां व्रजति प्राप्नोति। कीदृशस्य अनघो हृद्यो य ईशप्रेमभक्तिरस: शिवं प्रति प्रीतिभक्तिरूपो रसोऽनुराग: तेन शुद्धोऽन्तरात्मा यस्य तादृशस्य। पचे। अन इति प्राणिसम्बोधनम्। ममकीत्यादिकमुदाहरणवाक्यम्। घे ७।, शप् १।, रे ७।, ॥१४॥

अन्विति। येन नृपेण गुणिनि अनुरक्तेन अनुरागशालिना लघोरपि अन्तजादे-र्हीनजाते: गुण: समाहृत: यो राजा धर्मे स्वधर्मे चेतति सावधान इत्यर्थ:। पचे। अनुरक्तेनेति अनुरक्तनृपस्य सम्बोधनम्। येनेत्यादिकमुदाहरणवाक्यम्। गुणिनि ७।, (अन्तज आदि) अन्तजादे: ६।, लघो: ६।, (अपि) गुण: १।, समाहृत: १।, ॥ १५॥

नेति। को वा गुणवान् गुणरागिण: गुणानुरागशालिनस्तस्य नृपस्य सकाशात् अत्यादरं न गत: न प्राप्त: अपितु प्राप्त एव हि यस्मात् सुन्दर्य्य एव प्रीत्या चम्पकं मूर्ध्ना शीर्षा वहन्ति। पचे। आदरमित्यादिकमुदाहरणवाक्यम्। नक् १।, अत: ६।, अति ७।, ॥ १६॥

### व्याकरणम्।

घे शप्रे। धो: शप् स्यात् कर्त्तरि वाच्ये रे परे व्रजति। "घेशप्रे। सुं।" ॥१४॥

गुणिनि अन्तजादेर्लघोरपि गुण: समाहृत:। गुणिसंज्ञके परे अन्त्यजातवर्णस्य आदिभूतो यो लघुस्तस्य गुण: स्यात् अपिकारादन्त्यस्यापि। चेतति। "पुर्घूङ्शाक-ङिति। सुं।" ॥ १५॥

नगतोऽति। अकारे परे अकारस्य नक् नाम: स्यात्। वहन्ति। "लोपो-ऽतोऽदेघो:। सुं।" ॥ १६॥

एति चामुं गुणिजनोऽनावृत्त्येव यथा विभुम् ।
योगिहृत् तद्गुणान् भाषे यदि पश्चास्यतां भवे ॥ १७ ॥

इति निष्क्रान्तौ । अथ प्रविशति राजा सर्व्वजित् । परिक्रम्योपविश्य आकाशे कर्णं निधाय अरे ! द्वारि को रौति । अथ राजानुमत्या प्रतीहारेण प्रवेशितः साञ्जलिः राजन् ! नमस्तुभ्यं मगधाधिपतेर्विश्वामित्रस्य दूतोऽहम् । मनो युज्यताम् ।

श्रूयतां मद्दराथातोऽतः परे साधु मन्त्रताम् ।
चित्तात्मानौ सुप्रसादं भवेते यत्र तत् कुरु ॥ १८ ॥

एतीति । गुणिजनोऽनावृत्त्ये व पुनरावृत्तिरहितं यथा स्यात् तथा अमुं नृपम् एति प्राप्नोति । यथा योगिहृत् योगिनां मनः विभुमीश्वरम् अनावृत्त्येव एति तथेत्यर्थः । यदि पश्चास्यतां भवे प्राप्नोमीत्यर्थः । तदा तद्गुणान् भाषे कथयामि । एति ७।, (च) ॥ १७ ॥

श्रूयतामिति । अथ आरम्भे । अतः अस्मिन् समये मे मम दरा वाक्यं श्रूयताम् अतः परे मद्वचः श्रवणोत्तरं साधु यथा स्यात् तथा मन्त्रतां यत्र कर्त्तव्ये चित्तात्मानौ सुप्रसादं भवेते प्राप्नुतः तत् कर्म्म कुरु । पद्ये । श्रूयतां मे इति शिष्यावधानाय । साध्वित्यादिकमुदाहरणवाक्यम् । दः १', मा १।, आथातः ६।, अतः ५।, परे ७।, ॥१८॥

व्याकरणम् ।

एति च । एकारे परे च अकारस्य नाशः स्यात् । भाषे, भवे । "लोपोऽतोऽद्देचोः । मुं ।" ॥ १७ ॥

दराथातोऽतः परे । अकारात् परस्थितयोः आथातोराकार दः स्यात् । भवेते । "आथातोऽतः । मुं ।" ॥ १८ ॥

धराद्वितीयाख्यातस्य ईयुर्यायुरुकीर्त्तय: ।
उदयं विकशेत्ताभि: किमरिस्त्रीमुखाम्बुजम् ॥ १९ ॥
जयेयं यामियं सैन्यं शोषयेयमपां निधिम् ।
वहेयं पांशुतां मेरुं नयेयं पृथिवीमध: ॥ २० ॥
नाशोहेयुं ज्यते शूरैर्यः स्यादाशीविषो बली ।
डुण्डुभान् दुर्ब्बलान् भीरून् हन्तुं मा मादिश प्रभो ! ॥२१॥

---

धरेति ! धरा पृथ्वी द्वितीया भार्य्या येषामिति धराद्वितीया राजान: तेषु मध्ये आख्यातस्य सम्यक्प्रसिद्धस्य तस्य नृपस्य या उरुकीर्त्तय: उदयं प्रकाशम् ईयु: प्राप्तवत्य: ताभि: कीर्त्तिभि: अरिस्त्रीमुखाम्बुजं किं विकसेत् अपितु नैव । पक्षे । धरा इति धारकाणां सम्बोधनम् । उ सम्बोधने । अन्यदुदाहरणवाक्यम् । द्वितीयाख्यातस्य ६।, इ इयुस् १।, या युस् १।, ॥ १९ ॥

जयेयमित्यादिभिश्चतुर्भि: श्लोकै: कुलकम् । यामियं यमसम्बन्धिसैन्यं जयेयं मेरुं सुमेरुं पांशुतां चूर्णतां वहेयं प्रापयेयं पृथ्वीं अधो रसातलं नयेयम् । याम् १।, इयम् १।, ॥ २० ॥

नाश इति । शूरै: अहै: सर्पप्रायस्य शत्रो: नाशो वधो युज्यते योऽहि: आशीविष: बली च स्यात् हे प्रभो ! राजन् ! भीरून् दूर्ब्बलान् डुण्डुभान् निर्विषसर्पविशेषान् हन्तुं मा मां मादिश नाज्ञापय । पक्षे । शूरैरित्यादिकमुदाहरणवाक्यम् । नाश: १।, हे: ६।, युज्यते ८।, ॥ २१ ॥

व्याकरणम् ।

द्वितीयाख्यातस्य ईयुर्यायु: । अकारात् परयो: द्वितीयस्य आख्यातस्य या-युसो: स्थाने इ इयसौ स्यातां । विकशेत् ॥ १९ ॥

यामियं । याम: स्थाने इयं स्यात् । जयेयं, शोषयेयं, वहेयं, नयेयं । "स्याया-युस्-यामामीयुसीयम् । सु ।" ॥ २० ॥

नाशोहेर्युज्यते । अकारात् परस्य हेर्लोप: स्यात् । आदिश । "हेर्लोपो-ऽस्योप्रोश्च । सु ।" ॥ २१ ॥

एवमाहोपुरुषिका अहमहमिकापि भटानामेतस्य ।
परिभवति प्रतिपत्तान् यदि शक्ताः शमयेत वा सहेथाः ॥२२॥
अपिच । अस्य नूपस्थितस्याजौ प्रीत्यै किन्नु पतिम्बरा ।
धरा पराङ्गनाभूषालङ्कृता स्वरुचिं तनु ॥ २३ ॥
अपिच । चतुर्थे पञ्चमेऽन्त्येऽन्धोऽरमायात्यपि पङ्गुवाट् ।
यामार्द्धे तत् पुरेऽन्नार्थी यं दृष्ट्वाऽश्रूणि मेऽपतन् ॥ २४ ॥

एवमिति । एतस्य नृपस्य भटानां एवं इत्याकारिका आहोपुरुषिका अहमहमिका च प्रतिपत्तान् परिभवति तिरस्करोति यदि शक्तास्त्वं तदा शमय उत वा सहेथाः त्वमिति शेषः । पत्ते । पूर्व्वसूत्रस्य उदाहरणम् ॥ २२ ॥

अस्येति । नु वितर्के सम्बोधने वा । आजौ युद्धे उपस्थितस्य अस्य नृपस्य प्रीत्यै धरा पृथ्वी पतिम्बरा सती पराङ्गनायाः शत्रुयोषितः या भूषा भूषणं तया अलङ्कृता सती किं स्वरुचिं स्वस्य शोभां तनु अतिशयेन विस्तारयति । तनु इत्यत्र मुहुर्भृशार्थे हि त स्व ध्वमिति सूत्रेण अतिशयार्थे वर्त्तमाने लोट् । अन्यापि पतिम्बरा यथा परासां योषितां भूषणालङ्कृता सती नायकं प्रति स्वरुचिं दीप्तिं विस्तारयति इयमपि तथेत्यर्थः । अत्र अस्मिन् नृपे रणे उपस्थिते सति शत्रुयोषितः स्ववैधव्यं निश्चित्य स्वकीयाभरणानि भुवि त्यजन्तीति व्यज्यते । अस्य-नूपः ५।, स्थितस्य ६।, ॥ २३ ॥

चतुर्थ इति । चतुर्थे पञ्चमे अन्त्ये च यामार्द्धे अन्नार्थी अन्धो जनः पङ्गुवाट् पङ्गु-वाहकः सन् तत्पुरे तस्य नृपस्य पुरे अरं शीघ्रं यथा स्यात् तथा आयाति । यं अन्धं दृष्ट्वा मे मम अश्रूणि अपतन् । चतुर्थे ७।, पञ्चमे ७।, अन्त्ये ७।, अम् १।, धोः ५।, अमा ३।, ॥ २४ ॥

## व्याकरणम् ।

शमय ॥ २२ ॥

अस्यनूपस्थितस्य । असंयुक्तात् नोः उपस्य परस्थितस्यापि हेर्लोपः स्यात् । तनु ॥ २३ ॥

चतुर्थे पञ्चमेऽन्त्येम् धोरमा । चतुर्थे पञ्चमे अन्त्ये च परे धोरम् स्यात् । न तु माायोगे । अपतन् ॥ "धोटोधोष्वम् धोरमा । सुं ।" ॥ २४ ॥

स्वर्गिणाञ्च श्रवसि रुत् पद्यते पञ्चमेऽंशके।
अन्नार्थिनां यथा रावाः सुधार्थमुदपत्सत ॥ २५ ॥
कृषादिभ्यः क्वचिदपि नासृक्षत् कृपया करम्।
यः पालयति धर्मेण प्रजाः स्वानौरसानिव ॥ २६ ॥
रणेऽस्मिन् भूमिपे दृष्टिपथमेते इनो भुवः।
अन्तर्धत्तेऽसिरुङ्नष्टदृक्रुवन् मृदभूदिति ॥ २७ ॥
विधिः सदास्यापि वत उक्तो लोकेऽत्र भूभुजा।

स्वर्गीति। पञ्चमेऽंशके अह्नः पञ्चमयामार्द्धे तत्पुरे अन्नार्थिनां रुत् कोलाहलः स्वर्गिणां स्वर्गस्थायिनां श्रवसि कर्णे पद्यते गच्छति। यथा सुधार्थं रावाः शब्दाः स्वर्गिणां कर्णे उदपत्सत उत्थिताः तद्वदित्यर्थः। सिः १।, उत्पद्यते ८।, पञ्चमे ७।, ॥२५॥

कृषेति। यो राजा कृषादिभ्यः कीनाशेभ्यः क्वचिदपि कृपया करं राजग्राह्यभागं नासृक्षत् यः स्वान् औरसान् इव धर्मेण प्रजाः पालयति। पद्ये। नासृक्षदित्यादिक-मुदाहरणवाक्यम्। कृषादिभ्यः ५।।।, क्वचित् ७।, (अपि १।) ॥ २६ ॥

रण इति। अस्मिन् अवनिपे राजनि रणे दृष्टिपथमेते आगते सति असिरुक्-नष्टदृक् असीनां या रुक् दीप्तिस्तया नष्टा दृक् दृष्टिर्यस्य तादृशः सन् मृत्युरभूदिति रुवन् शब्दायमानः सन् अन्तर्धत्ते। पद्ये। रणेऽस्मिन् भूमीति एतद्रणभूमेः सम्बोधनम्। नष्टेत्यादिकमुदाहरणवाक्यम्। पे ७।, दृष्टिपथं २।, एते ७।, इनः ५।, भुवः ५।, अन्तर्धत्ते ८।, सिः १।, उक् १।, ॥ २७ ॥

विधिरिति। तेन नृपेण अत्र लोके उक्तः वेदोक्तोविधिः सत् साधु यथा स्यात्

व्याकरणम्।

सिरुत्पद्यते पञ्चमे। पञ्चमे परे धोः सिः स्यात्। उदपत्सत। "ज्यां सिः। सुं।" ॥ २५ ॥

कृषादिभ्यः क्वचिदपि। कृषादिभ्यः सिर्व्वा स्यात्। असृक्षत् ॥ २६ ॥

पे दृष्टिपथमेते इनो भुवः अन्तर्धत्ते सिरुक्। परस्मै पदे दृष्टे सति इनोभुवः पर उक्तः सिरन्तर्धत्ते पञ्चमे इत्यनुवर्त्तते। अभूत् ॥ २७ ॥

येनादौपि चतुष्पादो वृष: सोऽस्थात् कृते यथा ॥ २८ ॥
धर्म्मानवन् भुव: षष्ठविभक्तावन्यमीहते ।
नर्त्तं पुराणं यत् श्रुत्वाऽभूवन् धर्म्मरता: प्रजा: ॥ २९ ॥
तत्राहमपि नित्यं तदितिहासामृतं पिवन् ।
विलक्षणोऽन्यरसेऽभूवं तेनैवोद्दैश्यविस्मृति: ॥ ३० ॥
यथास्यमान्तोऽदनतोऽगदस्य जयेतिहासामृतपानत: स्यात् ।

तथा यास्यापि सम्यक् स्थापित: वत वर्षे विधिस्थापनेन वृषो धर्म्म: चतुष्पाद: सन् अदौपि यथा स धर्म्म: कृते सत्ययुगे अस्थात् । पचे । लोक इत्यादिकमुदाहरणवाक्यम् । विधि: १।, स: १।, दास्थापिवत: ५।, उक्त: १।, ॥ २८ ॥

धर्म्मेति । भुव: पृथिव्या धर्म्मान् अवन् पालयन् षष्ठविभक्तौ दिनस्य षष्ठयामार्द्धे पुराणं ऋते विना अन्यत् न ईहते इच्छति । यत् श्रुत्वा प्रजा: धर्म्मरता अभूवन् । पचे । धर्म्मानिति धर्म्मैर्जीवितु: सम्बोधनम् । नर्त्तेत्यादिकमुदाहरणवाक्यम् । वन् १।, भुव: ५।, षष्ठविभक्तौ ७।, अनि ७।, अमि ७।, ईहते ८।, ॥ २९ ॥

तत्रेति । तत्र पुरे अहमपि नित्यं इतिहासामृतं पिवन् सन् अन्यरसे विलक्षण: अभूवं तेनैव पानेन उद्दैश्यविस्मृतिरभूवमित्यन्वय: । पचे । पूर्व्वमूत्रस्य उदाहरणमात्रम् ॥ ३० ॥

यथेति । अगदस्य भेषजस्य अदनतो भक्षणात् अमान्तो अमो रोगस्तस्यान्तो नाशोऽस्ति स्यात् इत्यर्थ: तथा जयाख्यं जयनामकं इतिहासामृतं तस्य पानत: संसारसा-

व्याकरणम् ।

विधि: स दास्थापिवत उक्त: । दास्थापाधातोरपि उक्त: स एव विधि: । अस्थात् । "भूस्थापिवदेनोलुक् पे । सुं ।" ॥ २८ ॥

वन् भुव: षष्ठविभक्तावन्यमीहते । भुवो वन् स्यात् षष्ठविभक्तौ अनि अमि च इतीच्छति । अव्यवहितं अन् अम् च पञ्चमस्यैवेति द्रष्टव्यम् । अभूवन् ॥ २९ ॥

अभूवं । "भुवो वन् टौव्यपि । सुं ।" ॥ ३० ॥

संसारतापोपशमस्तथेति के कुर्व्वते नात्र रुचिं विमूढाः॥३१॥

भावो यशोवसोरस्यानाविद्धोरिमुदेऽत्यभात्।

यत् स्वास्त्रपूतान् स्वर्नेतुं तानबाधिष्ट सोऽधिराट्॥३२॥

अपिच। विदधे वाससलोपोऽपि दुर्हृदां स्वामिषैषिणाम्।

येन येभ्यो यूयमपि अभविद्ध भयं पुरा॥ ३३॥

अथ स राजा दूतं प्रति। रे दूत! अलं वाक्प्रयोगेण लेख्य-

पोपशमः स्यात् इति हेतोः के विमूढा अत्र अमृतपाने रुचिं न कुर्व्वते। पक्षे। यथा इति यथार्थवादिनः आस्य इति आस्तिकस्य सम्बोधनम्। अगदस्येत्यादिकमुदाहरण-वाक्यम्। मान्तः १।, अत् १।, अनतः ५।,॥ ३१॥

भाव इति। यशोवसोः यश एव वसुर्धनं यस्य तादृशस्य अस्य नृपस्य अनाविद्धः अकुटिलः भावः स्वभावः अरीणां मुदे हर्षाय अत्यभात् अत्यदीपि। यत् यस्मात् सोऽधिराट् राजा तान् अरीन् स्वं आत्मीयं यत् शस्त्रं तेन पूतान् पवित्रान् कृत्वा स्वः स्वर्गं नेतुं अबाधिष्ठ हन्तिस्म। पक्षे। भावो यश इति स्वभावतः शिवे यशस्विन सम्बो-धनम्। उदेतीत्यादिकमुदाहरणवाक्यम्। वसः ६।, अरस्य ६।, (न औ इत्) अनाविद्धोः ५।,॥ ३२॥

विदेति। येन नृपेण स्वामिषैषिणां स्वस्य यत् आमिषं लभ्यं वस्तु तदिच्छन्ति ये ते तेषां दुर्हृदां विपक्षाणां वाससलोपोऽपि वसतिच्छेदोऽपि विदधे। चक्रे। पुरा पूर्व्वकाले येभ्यः दुर्हृद्भ्यः शत्रुभ्यः यूयमपि भयं अभविद्ध प्राप्ताः। पक्षे। विद इति ज्ञानिनः सम्बोधनम् अपीत्यादिकमुदाहरणवाक्यम्। धे ७।, वा १।, स-लोपः १।,॥ ३३॥

व्याकरणम्।

मान्तोऽदनतः। मस्यान्तोऽत् स्यात् न लकारात् परस्य। कुर्व्वते। "मान्तोऽदनतः। सुं।"॥ ३१॥

वसोरस्यानाविद्धोरिम्। अनौदितो धोः परस्यारस्य वसः इम् स्यात्। अबा-धिष्ट॥ "वसोरस्येमनौदितः। सुं।"॥ ३२॥

धे वा सलोपः। सलोपः स्यात् धे परे वा। अभविद्ध। "धेसलोपो वा। सुं।"॥३३॥

मस्योत्तरं इत्युक्त्वा तं दूतं विससर्ज्ज । अथ समयान्तरे मन्त्रिणा सह विभाव्य तस्योत्तरं लिखित्वा दूते समर्पयति । स तत् गृहीत्वा निष्क्रमं नाटयित्वा पुनः प्रविश्य अहो प्राप्तोऽस्मि विश्वामित्रस्य पुरीमिति द्वारि उपस्थितः प्रतीहारेण प्रवेशितः सभां गत्वा पत्रपाठकहस्ते लिपिमर्पयति । वाचकोऽपि राज्ञः सन्निहितः पठति । तद्यथा ।

तदेव भविता भाले यल्लिलेख सकृत् विधिः ।
दिने षष्ठे भवेत् धातुर्द्विर्लिपिर्नान्यथापि वा ॥३४॥ अन्यच्च ।

सम्यङ् परोऽपि सुकृती कृतिनां प्रशस्यो
नाज्ञः सखापि शरतल्पगतोऽपि भीष्मः ।
मूर्द्ध्नि निधीकृतविचित्रमृदूपधानं
हित्वादधत् कृतशरात्मशिरोधिवक्त्रम् ॥ ३५ ॥

तदेवेति । विधिः षष्ठे दिने भाले ललाटे सकृत् यल्लिलेख तदेव भविता विधातुर्लिपिः द्विर्वारं न भवेत् । पद्ये । दिनेत्यन्तपूर्व्वभाग उदाहरणवाक्यम् । नान्यथेत्यादिकन्तु विधानस्य दृढताज्ञापनाय । षष्ठे ७।, भवेत् ८।, द्विः १।, लिपिः १।, ॥३४॥

सम्येति । सम्यङ् साधुः सुकृती धन्यः परोऽपि शत्रुरपि कृतिनां जनानां प्रशस्यो भवति अज्ञो मूर्खः सखापि न प्रशस्यः । एतदेव दर्शयति । शरतल्पगतोऽपि शरमयशय्यागतोऽपि भीष्मः मूर्द्ध्नि मस्तकस्य निधीकृतं आश्रयीकृतं विचित्रं मृदूपधानं मृदूपवर्हं येन तं अर्थादेताहृशं दुर्य्योधनं हित्वा कृतः शरात्मकः शिरोधिः उपधानं येन स तथा तस्य वक्त्रं मुखं अर्थात् ताहृशार्ज्जुनस्य मुखं अदधत चुचुम्ब इत्यन्वयः । पद्ये । समीति कस्याश्चित्सं । सुकृतीत्यादिकमुदाहरणघटितवाक्यत्वेन सार्थकम् । अङ्परः १।, (अपि) ॥ ३५ ॥

व्याकरणम् ।

षष्ठे भवेत् द्विर्लिपिः । षष्ठे परे धातुः द्विरुक्तः स्यात् । लिलेख ॥ ३४ ॥

अङ्परोपि । अङ् परे यस्य ताहशोऽपि धातुः द्विरुक्तः स्यात् । अदधत् ॥ ३५ ॥

तस्मादेतादृश: प्रतिपक्ष एव क्षत्रियाणामिष्ट:। तदस्तु।

गर्व्वमेखेर्गुरुर्याति लघुभावं क्षभोऽजव:।
भवेत् कालेन यत् सोऽस्मिन् विदधाति शुभाशुभम्॥ ३६॥
एतत् सदाऽवेखथर्त्तं उत्पद्येते च पौरुषम्।
सम्पत्सुखे न तत्सत्वे कश्चिचासति तत्फले॥ ३७॥

तद्भवतु। कश्चोरस्तमस: का वा कुलटा परपूरुषात्।
मृत्योर्बिभेति क: प्राय: कश्चक्रे युधभयं विराट्॥ ३८॥

अतो नाहं युद्धाद्बिभेमि। किन्त्वेवमपि।

गर्व्वेति। पर्व्वमहङ्कारं एखि: प्राप्नुया: कालेन गुरुरपि लघुभावं लघुत्वं याति प्राप्नोति क्षभ: प्रचण्डानिलस्तत्तुल्योऽपि जन: अजवो वेगरहितो भवेत् यत् यस्मात् स काल: शुभाशुभं विदधाति। पक्षे। गर्व्वमे इति गर्व्वक्षीनाया: सं। कालेत्यादिक-सुदाहरणवाक्यम्। खे: ६।, गुरु: १।, याति ८।, लघुभावं २।, क्षभ: १।, जव: १।, भवेत् ८।, ॥ ३६॥

एतदिति। एतत् सदा अवेखथ आनीथ यूयमिति शेष:। किन्तदित्याह। पौरुषं ऋते विना सम्पत्सुखे नोत्पद्येते तत्सत्वे पौरुषसत्वे को जन: तत्फले सम्पत्सुखे चिच्छासति छेत्तुमिच्छति। पक्षे। अवे इति सूर्य्यस्य सं। रुषमित्यादिकसुदाहरण-वाक्यम्। (खथ ऋत) खथर्त्त: ६।, उत्पद्येते ८।, (चप-च-चौ) चपौ १॥, ॥३७॥

कश्चोर इति। कश्चोर: तमस: अन्धकारात् बिभेति का वा कुलटा परपुरुषं बिभेति क: प्राय: प्रायोपवेशव्रती मृत्योर्बिभेति को वा विराट् क्षत्रियो युधभयं चक्रे। पक्षे। चरमित्यादिकसुदाहरणवाक्यम्। क: ६।, च: १।, ॥ ३८॥

### व्याकरणम्।

खेर्गुरुर्याति लघुभावं क्षभो जवो भवेत्। खेर्दीर्घो ह्रस्व: स्यात् क्षभो जव: स्यात्। बिदधाति॥ ३६॥

खथर्त्त उत्पद्येते चपौ। खे: खथस्थाने चप् ऋवर्णस्य अवर्ण: स्यात्। चिच्छासति॥३७॥

कश्च:। खे: ककारस्य चकार: स्यात्। चक्रे॥ ३८॥

जिघांसोरतिलोभस्य देहगस्य जये नृप !।
यतस्त्वापाततो योऽरिः सुहृद्भावं जगाम ते ॥ ३९ ॥

अन्यच्च।

वसंश्च षष्ठे विषये भुवोऽङ्ग ! नाथोऽजिघांसुर्यदि ते जिघांस्यः।
ये त्वां जिघांसन्त्यरयोऽन्तरस्था न तेषु हिंसा किमु ते बभूव ॥ ४० ॥
अहो यदि स्यो रुद्भ्योपीं नेतुं शक्नोति हेलया।
किं तदैन्द्रीं श्रियं वीक्ष्य न्यश्वसीदन्वयो दितेः ॥ ४१ ॥

जिघांसोरिति। हे नृप ! अतिलोभस्य देहगतस्य जिघांसोः शत्रोर्जये यतस्त्व योऽरिर्लोभः आपाततः प्राप्तिक्षण एव ते तव सुहृद्भावं जगाम। तथाच परराज्ये लोभं माकुरु तत्कृतौ मरिष्यसीति भावः। पद्ये। पूर्वापरभागौ उदाहरणवाक्ये। देहगस्य ६।, जः १।, ॥ ३९ ॥

वसन्निति। हे अङ्ग ! भुवोनाथः क्षत्रियः षष्ठेऽपि स्वराज्यात् षष्ठदेशे वसन्नपि अर्थादत्युदासीनः अजिघांसुरपि यदि ते तव जिघांस्यः स्यात् तदा येऽरयः अन्तरस्थाः सन्तः त्वां जिघांसन्ति हन्तुमिच्छन्ति तेष्वरिषु किं कथं ते तव हिंसा न बभूव। पद्ये। वसन्निति वसतः सं। गमाथ इत्यादिकमुदाहरणवाक्यम्। षष्ठे ७।, विषये ७।, भुवः ६।, अङ् १।, ॥ ४० ॥

अहो इति। अहो आश्चर्यं यदि स्यः स जनः रुद्भ्योऽपि रोधकेभ्योऽपि ईं लक्ष्मीं अर्थात् राजलक्ष्मीं हेलया नेतुं शक्नोति तदा दितेरन्वयः दितिसन्ततिः ऐन्द्रीं इन्द्र-सम्बन्धिनीं श्रियं वीक्ष्य किं कथं न्यश्वसीत् दीर्घनिश्वासं त्यक्तवान्। पद्ये। अहो य इति वायोः सं। नेतुमित्यादिकमुदाहरणवाक्यम्। दिस्योः ६॥, रुद्भ्यः ५॥, ( अपि ) ईम् १।, ॥ ४१ ॥

व्याकरणम्।

देहगस्य जः। खेर्हस्य गस्य च जः स्यात्। जिघांसोः, जगाम ॥ ३९ ॥

षष्ठे विषये भुवोऽङ्। षष्ठे ज्ञानगोचरे सति भुवः खेरङ् स्यात्। बभूव ॥ ४० ॥

दिस्योरुद्भ्योपीम् रुदादेः परयोर्दिस्योरपि ईम् स्यात्। न्यश्वसीत् ॥ ४१ ॥

यस्य चास्ति सितो मन्त्री मृतसञ्जीवनो गुरुः ।
तस्यापि सुमनोद्वेषात् बलेरासीदधोगतिः ॥ ४२ ॥
( इत्यपि पश्य । ) इच्छन् स्वसुखलोपं भावयसेऽरिमयीमिमाम् ।
जगतीं पश्य कः स्वास्थ्यमाजीदप्येकशात्रवः ॥ ४३ ॥
( अपिच । ) वचः समुज्झसि परे तल्लघोर्मानवर्द्धनम् ।
गुरुर्न जग्टहेऽयोग्यं समस्तत् प्रत्युपाहृत ॥ ४४ ॥

---

यस्येति । यस्य बलेः सितः शुक्राचार्य्यो मन्त्री गुरुः मृतसञ्जीवनश्च गुरुरस्ति तस्यापि बलेः सुमनोद्वेषात् देवान् प्रति द्वेषात् अधोगतिरासीत् । अत्र सुमनःपदेन देवानां साधुत्वं व्यज्यते बलेरधोगतौ च साधुद्वेष एव हेतुरिति भावः । पचे । यस्येति यत्नं कुरु बोधायेति शेषः । इति तु शिष्यावधानार्थम् । मन्त्रीत्यादिकमुदाहरणवाक्यम् । ( च ) असिसित: ५॥, ॥ ४२ ॥

इच्छन्निति । स्वसुखलोपमिच्छन् इमां जगतीं अरिमयीं शत्रुप्रायां भावयसे चिन्तयसि । एकशात्रवोऽपि एकमात्रशत्रुरपि कः पुरुषः स्वास्थ्यं सुस्थिरत्वं आजीत् प्राप्तवान् इति पश्य । पचे । इच्छन् स्वसुखेति सं । मामित्यादिकमुदाहरणवाक्यम् । लोपं २।, भावय ८।, से: ६।, इमः ५।, ईमि ७।, ॥ ४३ ॥

वच इति । परे शत्रौ अन्यजने वा वचः समुज्झसि वाक्प्रयोगं करोषि । तद्वचः लघोर्जनस्य मानवर्द्धनं भवति । गुरुर्गौरवापन्नो जनः तद्वचः अयोग्यमिति ज्ञात्वा न जग्टहे न गृहीतवान् समो जनस्तद्वचः प्रत्युपाहृत प्रत्युपहारं दत्तवान् । पचे । वचःसमुदिति वचसा सङ्घर्षस्य सम्बोधनम् । मानेत्यादिकमुदाहरणवाक्यम् । झसि ७।, परे ७।, तत् २।, लघोः ५।, ॥ ४४ ॥

व्याकरणम् ।

चास्तिसितः । अस्तिधातोः सेश्च परयोः दित्योरीम् स्यात् । आसीत् ॥ ४२ ॥

लोपं भावय सेरीम् ईमि । इमः परस्य सेर्लोपं भावय विधेहि ईमि परे । आजीत् ॥ ४३ ॥

झसि परे तल्लघोः । झसि परे झसात् लघोश्च परस्य सेर्लोपं विधेहि । प्रत्युपाहृत ॥ ४४ ॥

अतो जिगीषोर्वाक्प्रयोगो न युज्यते। तद्भवतु! इदमपि आश्चर्य्यम्।

दृश्यते नुः सितो भूतः केशोऽदान्तोऽन्तिकेऽन्तकः।
तथापि परवित्ताशा गर्व्वेर्षा नागुरत्ययम्॥ ४५॥

(अलं वाक्प्रपञ्चेन।) युद्धार्थिनि द्विरुक्ताच्च वैधर्म्यं नो विनोमिति।
अजन्तुर्भूरि ये भूमोद्गिरन्तीत्यध्रुवं बहु॥ ४६॥

(एतदपि विवेच्यम्।) खेरायचः परो लोप्यो मिथ एव न चैककः।
दैवं हेतुस्तत्र तच्च जन्ने कस्याक्षिगोचरः॥ ४७॥

दृश्यत इति। नुर्मनुष्यस्य केशः सितीभूतः शुक्लीजातः इति दृश्यते अदान्तः अशान्तः अन्तकः यमः अन्तिके समीपे दृश्यते तथापि परवित्ताशा परधनाशा गर्व्वेर्षाः अत्ययं नाशं न अगुः न प्रापाः। पचे। केश इत्यादिकमुदाहरणवाक्यम्। दृश्यते ८, अन् १, उस् १, सितः ५, अभूतः ५, ॥ ४५॥

युद्धेति। युद्धार्थिनि आगते सति ओं इति विना अर्थात् स्वीकारव्यञ्जकशब्दं विना द्विरुक्तादपि नोऽस्माकं चत्रियाणां वैधर्म्यं भवेदिति शेषः। ननु तदा कथं बहु-सौख्य आह ये जना भूरि जन्तुः बहु भुक्तवन्तः ते जनाः भूम अतिशयं उद्गिरन्ति इति हेतोः अध्रुवम्। पचे। युद्धार्थिनीति युद्धार्थिन्याः स्त्रियाः सम्बोधनम्। वैधर्म्येत्यादिकं ७। द्विरुक्तात् ५, (च)॥ ४६॥

खेरिति। खमाकाशः इरा भूः आद्यपदात् जलादि तच्चरः अर्थात् खचरः भूचरः जलचरः परः शत्रुः मिथ एव परस्परमेव लोप्यः नाशार्हः न तु एककः एक एव एकस्य नाश्यः तत्र दैवं अदृष्टमेव हेतुः। ननु जयादृष्टं ममैवास्ति इति तु मावद। अत्र हेतुमाह। तच्चादृष्टं केषामक्षिगोचरश्चक्षुर्गोचरो जज्ञे अभूत्। अथात् पूर्वं तन्निश्चयो

व्याकरणम्।

दृश्यतेऽनुः सितीऽभूतः। सेः परः अन् उस् स्यात् न तु भुवः। अगुः। दृश्यते-नुरित्यत्र अकारस्य लोपे पूर्व्वं ऋत्वाभावात् नकारस्य न द्वित्वमिति ध्येयं॥ ४५॥

द्विरुक्ताच्च। द्विरुक्तादपि अन् उस् स्यात्। अजन्तुः॥ ४६॥

अथ विश्वामित्रः स्वदूतं प्रति । रे दूत ! नृपस्य सर्व्वजितः सभायां त्वं गतः । तव समक्षं स किमवदत् । दूतः नृपं प्रति । राजन् ! राज्ञः सेनानीरेवमाह ।

मखपादिश सोऽन्यस्याऽन्तोऽपि नाश्यः परस्य हि ।
इति तं दर्शये नाहं शुश्रूषुस्तद्यशोमदम् ॥ ४८ ॥

एतदपि महदाश्चर्य्यम् ।

कस्य क्व स्वगुणारोपविधौ पुस्फोर वाङ्मुखात् ।
को वा शृणोति तद्वीरांस्तिष्ठासति च तत्र कः ॥ ४९ ॥

अथ स राजा सर्व्वजित् सेनापतिं प्रति एवमाह । मैवम् ।

न भवतीति भावः । पक्षे । मिथ इत्यादिकमुदाहरणवाक्यम् । खिः ६।, आद्यचः ५।, परः १।, लोप्यः १।, ॥ ४७ ॥

मखेति । स राजा अन्यस्य नृपस्य अन्तो नाशकोऽपि परस्य हि परस्यैव नाश्यः इति हेतोः हे मखप ! मखं यज्ञे सोमपानशील ! आदिश आज्ञापय तं परं अहं दर्शये । अर्थात् यस्य परस्य स नाश्यः तं परं अहं दर्शये । तस्य यशः अहङ्कारस्य अहं न शुश्रूषुः श्रोतुं न शक्नोमीत्यर्थः । पक्षे । म इति महेशस्य सम्बोधनम् । खपादिशमः १।, अन्यस्य अन्तः १।, ( अपि १ ) नाश्यः १।, ॥ ४८ ॥

कस्येति । क्व कुत्र कस्य जनस्य स्वगुणारोपविधौ स्वस्य यो गुणारोपः स्तुतिस्तद्-विधाने मुखात् वाक् पुस्फोर स्फूर्त्तिं प्राप अपि तु न कस्यापीत्यर्थः । को वा जनस्तान् शृणोति को वा जनस्तत्र तिष्ठासति स्थातुमिच्छति । पक्षे । पूर्वसूत्रस्य उदाहरणम् ॥ ४९ ॥

## व्याकरणम् ।

खिराद्यचः परो लोप्यः । नशि ॥ ४७ ॥

खपादिशमोऽन्यस्याऽन्तोऽपि नाश्यः । खपस्यादिभूतो यः शमः स नाश्यः स्यात् । तदन्यो यः स्यः संयोगः तस्यान्तो नाश्यः स्यात् । शुश्रूषुः ॥ ४८ ॥

पुस्फोर, तिष्ठासति ॥ ४९ ॥

वातेरितो हि वाक्पञ्चमपेतार्थमसङ्गतम् ।
करोत्येव तदावेशात् कस्य धीरत्वमच्युतत् ॥ ५० ॥
(सेनापतिस्तं प्रति ।) वज्रो विषो वा जठरे क्वचित् जीर्य्यति कारणात् ।
कदापि रिपुवाग्वज्रं शूरचेतसि नाजरत् ॥ ५१ ॥
मां प्रति एवमाह स्म ।
सदा शास्ति द्युत् पुड़ादितोऽलितोऽपि स चेत् भवेत् ।
भीरुः पलायितस्तर्हि कथं स क्ष्मावनेऽशकत् ॥ ५२ ॥

अटो विभाव्यताम् । इति स विरराम । अथ स राजा विश्वामित्रः तत् श्रुत्वा विहस्य सुबन्धुनामानं सभापण्डितं प्रति । भाव !

वातेति । वायुरोगेण ईरितश्चलितः अर्थात् वातुलो जनः अपेतार्थं अर्थशून्यं असङ्गतं सङ्गतिरहितं वाक्पञ्चं वाग्विस्तारं करोत्येव तदावेशात् तत्रानुरागात् कस्य जनस्य धीरत्वं अच्युतत् । पक्षे । वातेति वायोः सं । अतार्थमित्यादिकमुदाहरणवाक्यं अतार्थं गतार्थमित्यर्थः । इरितः ५।, वा १।, अक् १।, पञ्चमपे ७।, ॥ ५० ॥

वज्र इति । हे भूपते ! वज्रो विषो वा क्वचिदपि काले जठरे जीर्य्यत्यपि रिपुवाग्वज्रं शूराणां चेतसि चित्ते कदापि न अजरत् विषशब्दः पुमानपि विषमस्त्री क्ष्वेड़े इति नव्यकोषः । पक्षे । व इति वरुणस्य सं । जः ५।, विषः ५।, वा १।, ॥५१॥

सदेति । यो राजा आदितः आदिकालमारभ्य द्युत् द्युतिमान् पुट् पोषकः सन् सदा शास्ति स जनः चेत् यदि अलितोऽपि वृश्चिकादपि भीरुः सन् पलायितो भवेत् तर्हि स जनः कथं केन प्रकारेण क्ष्मावने क्ष्मा पृथ्वी तस्या अवने पालने अशकत् । पक्षे । चेदित्यादिकमुदाहरणघटितवाक्यम् । ( सदा १। ) शास्तिद्युत्पुड़ादितः ५।, लितः ५।, ( अपि १।, ) सः १।, ॥ ५२ ॥

व्याकरणम् ।

इरितो वाक् पञ्चमपे । इरितो धातोः अक् स्यात् वा पञ्चमस्य परस्मैपदे । अच्युतत् ॥ ५० ॥

जीविषो वा । जृविषाभ्यामपि अक् वा स्यात् । अजरत् ॥ ५१ ॥

सदा शास्तिद्युतपुड़ादितो लितोऽपि सः । शासो द्युतादेः पुषादेः लृकारेतश्च सः अक् सदा भवेत् । अशकत् ॥ ५२ ॥

भवतैव एतद्वाचिकस्य प्रत्युत्तरं लेख्यम् । सुबन्धुः राजानं प्रति । )

यद्वाचिकतरङ्गिण्या गाम्भीर्य्यस्यान्तमेव मे ।
धीर्नागमत् कथं साद्य स्यात् तदुत्तरणे क्षमा ॥ ५३ ॥

( अपि च । ) वाहसोपान्तयानोऽन्तर्धत्ते गुणयुतान्तिकात् ।
मूर्खो यथा तथा मे धीरेतद्वाचिकतोऽरिमथ् ॥ ५४ ॥

( राजा तं प्रति । ) के वाऽकस्मात्तव धियं ममथुः प्रतिभां कवे ! ।
किं वा सोत्तानपरवाक् पल्वलोत्तरणेऽक्षमा ॥ ५५ ॥

यद्वाचीति । मे मम धीः यद्वाचिकतरङ्गिण्याः यस्याः सन्देशवाक्यरूपाया नद्याः गाम्भीर्य्यस्य अन्तमेव सीमामेव नागमत् कथं सा मम धीः तदुत्तरणे तस्या नद्या उत्तरणे क्षमा शक्ता स्यात् । पद्ये । पूर्व्वसूत्रस्य उदाहरणम् ॥ ५३ ॥

वाहेति । वाहसोपान्तयानः वाहसोऽजगरस्तस्योपान्ते समीपे यातीति स तथा तादृशो जनः यथा अन्तर्धत्ते पलायते यथा वा मूर्खो जनः गुणयुतान्तिकात् गुणयुक्तस्य समीपात् अन्तर्धत्ते तथा मे मम धीः एतद्वाचिकतः सन्देशवाक्यात् अन्तर्धत्ते हे अरिमथ् ! अरिं मथ्नातीति यः स तथा । अजगरे शयुर्व्वाहस इत्युभावित्यमरः । पद्ये । वा इति वार्थेः सं । उतान्तिकादित्यादिकं उं । हसोपान्तया: १।, न १।, अन्तर्धत्ते ८।, अगुणे ७।, ॥ ५४ ॥

केवेति । के वा जना अकस्मात् तव धियं प्रतिभां नवनवोन्मेषं ममथुः उन्नीतवन्तः कथं वा सा धीः अनुत्तानं अगम्भीरं यत् परस्य शत्रोर्व्वाक्यरूपं पल्वलं अल्पसरः तदुत्तरणे अक्षमा आसीदिति शेषः । पद्ये । पूर्व्वसूत्रस्य उं ॥ ५५ ॥

व्याकरणम् ।

अदोऽपि विभाव्यतां । अदधातोरपि अक् विभाव्यतां । अगमत् ॥ ५३ ॥

हसोपान्तयानोऽन्तर्धत्तेऽगुणे । हसन्तधातोः उपान्ते अन्तवर्णसमीपे याति यस्मादृशो नकारोऽन्तर्धत्ते लोपमाप्नोति अगुणे परे । अरिमथ् ॥ ५४ ॥

ममथुः ॥ ५५ ॥

अत्र परेषु राग एव हेतुर्मन्यते । इति तु चिन्त्यम् ।

नाश्वया: परगुणान् विद्वन् ! समक्षं मेऽतिदुःसहान् ।
न चेदितो माननाथ स्थितो नाथ्या: कथञ्चन ॥ ५६ ॥

मदन्नपुष्टोऽपि परानुरक्तस्तेषां गुणान् गायसि मे पुरस्तात् ।
कैवल्यदात्रीमवगाह्य गङ्गां यथा विमूढा यमुनां स्तुवन्ति ॥ ५७

अतो मामवजानासि । सुबन्धुः ।

अधिक्रियतां विषय: षष्ठोऽपि देव ! स्याद्वा किन्नु तेन मे ॥ ५८ ॥

विररञ्जुः परगुणाविस्कारे ये सतामपि ।
दोषोद्गारेऽनुररजुस्तेऽस्मार्य्या मत्सरा: सताम् ॥ ५९ ॥

नाथ्या इति । हे विद्वन् ! अतिदुःसहान् परगुणान् मे मम समक्षं नाश्वया: प्रशंसां न विधास्यसि । न चेत् इत: स्थित्वा अत्र स्थित्वा कथञ्चन माननां पुरस्कारं नाथ्या: न प्राप्स्यसीत्यर्थ: । पद्ये । पूर्व्वापरार्द्धं छं । न १।, (च) इदित: ६।, मान-नाथ: ६।, ॥ ५६ ॥

मदन्नेति । स्पष्टम् । पद्ये । उदाहरणम् ॥ ५७ ॥

अधीति । षष्ठराज्याधिपते: अत्युदासीनत्वात् तस्य विषय: नृपाणां स्पृहणीयो न इति सोऽपि षष्ठविषयोऽधिक्रियताम् । देव ! हे राजन् ! तेन किं मे भवेदित्यर्थ: । षष्ठ: १।, अपित् १।, (एव) स्यात् ८।, वा १।, कित् १।, ॥ ५८ ॥

विरेति । ये जना: परगुणाविष्कारे परेषां गुणानुकीर्त्तने विररञ्जुर्व्विरक्ता अभवन् ये च सतामपि दोषोद्गारे दोषानुकीर्त्तने अनुररजु अनुरक्ता अभवन् मत्सरास्ते जना: सतामस्मार्य्या: । पद्ये । सूत्रस्य छं ॥ ५९ ॥

## व्याकरणम् ।

न चेदितो माननाथ: । इदितो माननार्थक अश्वधातोश्च न-लोपो न स्यात् । नाथ्या: । गत्यर्थादौ तु अच्या: ॥ ५६ ॥

अनुरक्त: ॥ ५७ ॥

षष्ठोऽपिदेव स्याद्वा कित् । अपिदेव षष्ठ: कित् वा स्यात् ॥ ५८ ॥

विररञ्जु: । अनुररजु: ॥ ५९ ॥

( राजा सक्रोधम् । )

दृश्यतां दुर्ग्रहो विद्यावसोरस्य किमूदितः ।
इच्छतीमं न नाथं यत् योऽगौप्सीन्मानमात्मना ॥ ६० ॥
चेन्मत्सरो भवेत् प्यायश्चायस्फायस्तदा स हि ।
निजोन्नतिर्यतोऽप्यास्त तच्चापि मन्यते लघुम् ॥ ६१ ॥

अहो विद्वन् ! वृथैव परं स्तुवन् मां भीषयसि ।

सूतो धूतो भवति नो हेषितैर्भीषितः क्वचित् ।
सविता स्तनितैर्नापि चत्रियो नारिगर्ज्जितैः ॥ ६२ ॥

---

दृश्यतामिति । विद्यावसोर्व्विद्यैव वसु धनं यस्य तादृशस्यास्य दुर्ग्रहो दुर्बुद्धिः किमु किं उदितः उदयं प्राप्तः इति दृश्यताम् । यत् यस्मात् इमं नाथं प्रभुं अर्थान्मां न इच्छति यो नाथ आत्मना यत्नेन मानं अगौप्सीत् रक्षितवान् । पक्षे । दृश्यतामिति हे विद्याः ! विद्यावन्तः ! दुर्ग्रहो दुःखेन ग्रहमाणोर्थः दृश्यतां ज्ञायतामित्यर्थः एतच्च शिष्यावधानाय । न नाथेत्यादिकं स्प° । वसः ६।, अरस्य ६।, ( किं १। ) ( ऊत् इत् ) ऊदितः ५।, इच्छति ८।, इमं २।, ॥ ६० ॥

चेदिति । चेद्यदि मत्सरोजनः प्यायो वर्द्धमानो भवति आयश्च लाभोऽपि स्फायो वृद्धो भवेत् तदा स हि स एव मत्सरः यतो जनात् निजोन्नतिः अप्यास्त परिवर्द्धिता तच्चापि लघुं मन्यते । पक्षे । उ भो मत्सर ! इति सं । तदेत्यादिकं उ° । भवेत् ८।, प्यायः ५।, चायः ५।, स्फायः ५।, ॥ ६१ ॥

सूत इति । सूतः सारथिः हेषितैरश्वानां शब्दैर्भीषितः सन् धूतश्चलितो नो भवति सविता सूर्यः स्तनितैर्मेघगर्ज्जितैः भीषितः सन् धूतो न भवति चत्रियः अरिगर्ज्जितैर्न चलितो भवति । सूतः ५।, धूतः ५।, भवति ८।, ॥ ६२ ॥

## व्याकरणम् ।

वसोऽरस्य किमूदितः इच्छतीमं । ऊदितो धातोः रभिन्नवसस्य इमं इच्छति । किं अर्थात् विकल्पेन । अगौप्सीत् ॥ ६० ॥

भवेत् प्यायश्चायस्फायः । प्यायचायस्फायेभ्योऽपीम् स्याद्वा । अप्यास्त ॥ ६१ ॥

सूतोधूतो भवति । सूधूभ्यामपि इम् वा स्यात् । सविता ॥ ६२ ॥

एवं रधादितो राजा निवर्त्तेत न किन्तु सः ।
नारद्गूरधिता भूयात् प्रार्थयेत् वैरमुत्तमैः ॥ ६३ ॥

अतो मम का भीतिः । अन्यच्च ।

वसन्तो विषये षष्ठे तत् स्थाने दोःप्रभावतः ।
यस्य मे पार्थिवास्त्रस्ता न यान् दुदुविम क्वचित् ॥ ६४ ॥
धीमन्नुतनुतोऽप्येवं सोरिर्भीषयता त्वया ।
नोपह्वार्य्यो न वा सेव्यो वृथा नुनविषस्यरिम् ॥ ६५ ॥

एवमिति । एवमन्यच्चेत्यर्थः । रधादितो हिंसादिभ्यो राजा निवर्त्तते किन्तु स राजा अरद्गुः अहिंसकस्य रधिता न भूयात् उत्तमैः सह वैरं प्रार्थयेत् । पक्षे । राजेत्यादिकं उं । ( एवं १।, ) रधादितः ५।, ॥ ६३ ॥

वसेति । षष्ठेष्वपि विषये स्वराज्यात् षष्ठराज्येऽपि वसन्तो नृपाः यस्य मे मम दोः-प्रभावतः बाहुप्रभावात् तत्स्थाने षष्ठविषयेऽपि सदा त्रस्ता आसन्निति शेषः । यान् नृपान् कदाचिदपि न दुदुविम वयं न गता इत्यन्वयः । पक्षे । वसन्त इति वसति-आर्त्तनां सम्बोधनम् । भावत इत्यादिकं उं । विषये ७।, अषष्ठे ७।, तत्स्थाने ७।, दोः ६।, ॥ ६४ ॥

धीमन्निति । हे धीमन् ! मां भीषयता त्वया उरु विपुलं यथा स्यात् तथा एवम्प्रकारेण नुतोऽपि स्तुतोऽपि सोऽरिः अतुः मे मम न उपह्वार्य्यः उपह्वारयोग्यः न वा सेव्यः वृथा अरिं नुनविषसि स्तोतुमिच्छसीत्यर्थः । पक्षे । धीमन् नु इति सं । इरित्यादिकं उं । इः कामः । तनुतः ५॥, ( अपि १। ) ( एवं १। ) सोः ५।, ॥ ६५ ॥

व्याकरणम् ।

एवं रधादितः । अरद्गुः, रधिता ॥ ६३ ॥

विषयेऽषष्ठे तत्स्थाने दोः । षष्ठाख्यातभिन्ने अरवसे विषये ज्ञानगोचरे सति तत्स्थाने इम् वा स्यात् दुधातोः परे । दुदुविम ॥ ६४ ॥

तनुतोऽप्येवं सोः । तनुसुभ्योऽपि षष्ठाख्यातभिन्नस्यारवसस्य इम् वा स्यात् । नुनविषसि ॥ ६५ ॥

अत: प्रतिपक्षपक्षपातिनस्तव इतोऽवस्थानं युज्यते। अथ सुबन्धुः सक्रोधम् ।

तपसा वीध्यते वृद्धिरलन्तस्य महीभुज: ।
शिष्यो येन त्वन्मतिं तत् व्यदासीदिति मन्यते ॥ ६६ ॥

इत्युक्का सशिष्यो निष्क्रमं नाटयति। अथ राजानं चर आह ।

शृणु प्रियम्वद ! रजनिम्ब्रजे स्थित:
परेऽह्नि गादुषसि कृताह्निको वने ।
असार्षुरन्वहह समस्तपाठका:
यथा रविं वियति चरन्तमातपा: ॥ ६७ ॥

अथ सुबन्धुः सशिष्य: पुन: प्रविश्य शिष्यान् प्रति भो: इदं पुण्य-वनं अत्रैव वस्तव्यम् । स पुनर्मृगं प्रति ।

तपेति। तस्य महीभुज: तव प्रभुभूतस्य नृपस्य येन तपसा अलमत्यर्थं शिष्यो वृद्धिरीध्यते तत् तस्य राज्ञस्तप एव त्वन्मतिं तव बुद्धिं व्यदासीत् बिभेद इति मन्यते। पक्षे। त इति प्रठस्य सं। पसौ ७।, ईध्यते ८।, वृद्धि: १।, अलन्तस्य ६।, ॥ ६६ ॥

शृणिवति। हे प्रियम्वद ! शृणु रजनिं व्रजे पथि स्थित: सन् परेऽह्नि उषसि कृताह्निक: सन् वने अगात् सुबन्धुरिति शेष:। अहह खेदे समस्तपाठका: शिष्या अनु पश्चात् असार्षुस्तमनुजग्मुरित्यर्थ: यथा वियति आकाशे चरन्तं रविं आतपा अनु-गच्छन्ति तथेत्यर्थ:। पक्षे। शृणु प्रियमिति शिष्यावधानार्थम्। वदरजनिम्-व्रजे: ६।, ॥ ६७ ॥

व्याकरणम् ।

पसावीध्यते वृद्धिरलन्तस्य। अलन्तस्य वृद्धि: स्यात् परस्मै पदे सौ परे। व्यदा-सीत् ॥ ६६ ॥

वदरजनिम्ब्रजे:। वदे: अरन्तस्य अजन्तस्य अनिमष व्रजेश्च वृद्धि: स्यात् पे सौ। असार्षु: ॥ ६७ ॥

वनजा गुरु किं तप्तं समये यदजागरीत् ।
काले खादति निद्राति मदान्धं न च सेवते ॥ ६८ ॥
नाव्राजीद्धनिनं लुब्धो नासावीदवमाननाम् ।
नाश्रावीत् परुषं तस्य नन्वताप्सीत् भवान् क्वचित् ॥ ६९ ॥

अहन्तु धनिना कोषादिसम्भवमदप्रचण्डवातैर्निर्वापिततेजा अस्मि । शिष्या गुरो ! मैवं वादीः यतः ।

अनेकमणिजन्तस्य अपि तेजो विवर्द्धितम् ।
त्वद्ब्रह्मवर्चसं दीप्तमार्दयीदद्य मन्यते ॥ ७० ॥

सुबन्धुः । इदानीं वनवासो युज्यते इत्युपविशति । शिष्याः तं प्रति । गुरो ! अत्र भिक्षां को दास्यति । सुबन्धुः तान् प्रति । नैवम् ।

वनेति । हे वनजाः ! मृग ! भवता किं गुरुतपस्तप्तं यत् यस्मात् समये अजागरीत् काले खादति निद्राति मदान्धं न सेवते च भवानिति शेषः । वनजा इति जनधातोर्विट् प्रत्ययेन सिद्धम् । पक्षे । व इति वरुणस्य सम्बोधनम् । उसम्बोधने । किमित्यादिकं उं । न १।, जागुः ६।, ॥ ६८ ॥

नाव्राजीदिति । भवान् लुब्धः सन् धनिनं धनिनः समीपं न अव्राजीत् न गतवान् अवमाननां तस्मादिति शेषः न असावीत् न प्राप्तवान् तस्य परुषं कटूक्तिं न अश्रावीत् ननु भोः क्वचिदपि समये न अतासीत् न सन्तापमनुभूतवान् । पक्षे । सूत्रस्य उदाहरणम् ॥ ६९ ॥

अनेकेति । अस्य नृपस्य अनेके ये मणयस्तज्जं तज्जातं विवर्द्धितं दीप्तमपि तेजः प्रतापः अद्य त्वद्ब्रह्मवर्चसं तव ब्रह्मतेजः आर्द्दयीत् विनाशयामास इति मन्यते । आर्द्दयीदिति णिजन्त अर्द्दधातोरूपं वैकल्पिकत्वात् न अङ् । पक्षे । अनेकस इति बहुश्रीकस्य सं । णिजन्तस्य ६।, (अपि १।) ॥ ७० ॥

व्याकरणम् ।

न जागुः । जागर्तेर्न वृद्धिः स्यात् । अजागरीत् ॥ ६८ ॥

अव्राजीत्, असावीत्, अश्रावीत्, अताप्सीत् ॥ ६९ ॥

णिजन्तस्यापि । णिजन्तस्यापि न वृद्धिः । आर्द्दयीत् ॥ ७० ॥

असनीदयमिदमस्मै मावादीरिति तद्धि विधिरसानीत्।
विरतस्य चोपघातो वाहसादेर्वैधे मोदोऽस्मे हि॥ ७१॥

इति श्रुत्वा शिष्याः पल्लवास्तरणे उपविशन्ति। अथ सर्व्वजिन्नाम राजा चारमुखात् श्रुत्वा तत्रागत्य प्रणम्य कृताञ्जलिराह।

यो मोहयेदितो नैव स गुरुर्नापि बान्धवः।
सोऽश्रमीत् यस्य संसर्गात् स गुरुः स हि बान्धवः॥ ७२॥
समीक्ष्यते न चणिवत् क्षणस्तत् सफलः स हि।
साधुसङ्गात् सदालापात् यः क्षणः सच्चणोऽच्चणीत्॥ ७३॥

असनीदिति। अयं जनः इदं धनं अस्मै जनाय असनीत् दत्तवान् इति मा वादी मा वद। हि यस्मात् तद्धनं विधिर्विधाता असानीत् दत्तवान्। हि यस्मात् वाहसादेरजगरादेः उपघातः उपायपूर्व्वकात् आरम्भात् अर्थात् स्वोद्योगात् विरतस्य निवृत्तस्यापि वैधे विधिदत्ते अन्ने मोदो हर्षः। पचे विरतस्येत्यन्तपूर्व्वभागः उ। अदः एतत् स्वीयविधानं हे अन्! जीवन् इति जानीहि। इति तु शिष्यावधानार्थम्। (उपघा अतः) उपघातः ६।, वा १।, हसादेः ६।, वैधेमः ६।, ॥७१॥

यो मोहेति। इती जगति यो जनः मोहयेत् दारादिमयसंसारमायां प्रापयति स गुरुर्बान्धवोऽपि नैव। यस्य संसर्गात् स मोहः अश्रमीत् स एव गुरुर्बान्धवश्च। पचे। गुरुरित्यादिकं उ। यः ६।, मः ६।, (एत् इत्) एदितः ६।, न १।, (एव) सः १।, ॥ ७२॥

समीक्ष्यत इति। असौ जीवनं चणिवत् चणिक इव चणमात्रस्थायीव न दृश्यते अपि तु दृश्यते। तत् तस्मात् स एव क्षणः सफलः यः क्षणः सक्षणः उत्सवयुक्तः सन्

## व्याकरणम्।

उपघातो वा हसादेर्वैधेमः। विहितेमो हसादेर्धातोः उपधाया अकारस्य वृद्धिर्वा स्यात् सौ पे। असनीत्, असानीत्॥ ७१॥

यो मो हयेदितो नैव सः। यान्त-मान्तहान्त-एदितां धातूनां स विधिर्नैव। अश्रमीत्॥ ७२॥

अतो भवतां पादरेणवो मम पुरं पवित्रीकुर्व्वन्तु । सुबन्धुः । भविष्यति विलम्बेन यतः ।

यद्युत्तरेणानुबन्धोऽघञ्च तद्वद्विभाव्यते ।
तदा साधोरन्तिके च स्थेयान्नो यो दधार गाम् ॥ ७४ ॥
उपधातोऽपि विज्ञेया साधुतादौ सता ततः ।
सेव्यं सेवेत विश्वस्त एवं कोऽनुततताप सन् ॥ ७५ ॥

अचणीत् गतवान् । अर्थात् संसारी यत्-चणं सोत्सवः सन् यापयामास स एव चणः सफल इत्यर्थः । समीद्यते ८।, न १।, चणि-वत् श्वसः ६।, ॥ ७३ ॥

यद्युत्तरेणेति । यदि उत्तरेण उत्तरकाले अनुबन्धो दोषोत्पादो विभाव्यते तद्वत् तथा अघं व्यसनं विभाव्यते तदा साधोरन्तिके च साधुसमीपेऽपि न स्थेयात् यो जनो गां वाणीं दधार अर्थात् वाक्प्रयोगे शक्नोति । पचे । स्थेयादित्यादिकं उं । अन्तिकेचः इत्यत्र विसर्गस्य असादिरूपान्ते परे लोपः । (यदि) उत्तरे ७।, (ण अनुबन्धः) णानुबन्धः १।, घञ् १।, (च) (तद्वत् १।,) विभाव्यते ८।, तदा ७। सा १।, धोः ६।, अन्तिकेचः ६।, ॥ ७४ ॥

उपधेति । सता पण्डितेन आदौ उपधातोऽपि धर्म्माद्यैः परीक्षणादपि साधोः साधुता विज्ञेया ततः परं सेव्यं सेवायोग्यं विश्वस्तः सन् सेवेत । एवं सति कः सन् पण्डितः अनुततताप अपि तु न कोऽपि । पचे । धुतेत्यादिकं उं । उपधाऽतः ६।, (अपि) विज्ञेया १।, ॥ ७५ ॥

## व्याकरणम् ।

समीद्यते न चणिवत् श्वसः । चण वध श्वसां वृद्धिर्नेष्यते । अचणीत् ॥ ७३ ॥

यद्युत्तरे णानुबन्धो घञ्च तद्वद्विभाव्यते तदा सा धोरन्तिकेचः । यदि उत्तरे णकारानुबन्धस्तथा घञ्च घञ् प्रत्ययश्च दृश्यते तदा धातोरन्त्यस्येचः सा वृद्धिः स्यात् । दधार ॥ ७४ ॥

उपधातोऽपि विज्ञेया सा । उपधाया अकारस्यापि सा वृद्धिः स्यात् । अनुततताप ॥ ७५ ॥

स्याद्वोत्तरेण पिशुनोऽलमरुन्तुदोऽसौ
आपाततोऽतिमधुरस्तदतर्क्यशीलः ।
आप्याययन् तटतरून् किल मूलसेकात्
पूरोऽनुपातयति हा जगमाहमेतत् ॥ ७६ ॥

अथ राजा सर्व्वजित् तदभिप्रायं विज्ञाय तत्रैव पुरीं निर्म्माय तस्मै दत्त्वा तेन सह तत्रैवोवास। सुबन्धुः शिष्यान् प्रति। अहो अतोऽहं ब्रवीमि पण्डितानां वनेऽपि मित्राणि भवन्तीति पश्य।

अथ सुबन्धुः नृपाय नीतिमाह।

कदाचिदोखेर्नाशस्तश्चाये ! राजति वा किति।
षष्ठेऽह्नोंशे भजेर्वृद्धान् ये तेरुः शास्त्रवारिधिम् ॥ ७७ ॥

---

स्यादिति। उत्तरेण उत्तरकाले पिशुनो जनः अलमत्यर्थं अरुन्तुदः मर्म्मस्पृक् पीड़ादायकः स्यात् वा एव। आपाततः प्राप्तिक्षण एव अतिमधुरः अतिप्रिय इत्यर्थः। तत् तस्मात् असौ खलः अतर्क्यशीलः अलक्ष्यस्वभावः। एतदेव दर्शयति पूरो जलप्रवाहः तटतरून् तटस्थितवृक्षान् पादसेकात् मूलसेकात् आप्याययन् सन् अनु पश्चात् पातयति हा विषादे एतत् अहं जगम ज्ञातवानस्मि। गमधातोर्गत्यर्थकत्वेन ज्ञानार्थकत्वात्। पक्षे। शुन इत्यादिकं उं। स्यात् ८।, वा १।, उत्तरे ७।, अपि ७।, ॥ ७६ ॥

कदाचिदिति। अयि हे राजन् ! अप्रशस्तः सन् कदापि न ओखेः न गच्छेः किति स्वनिवासे राजति वा, शोभमाने च सति अह्नो दिवसस्य षष्ठे अंशे षष्ठयामार्द्धे वृद्धान् पण्डितान् भजेः ये वृद्धाः शास्त्ररूपवारिधिं तेरुः। अर्थात् यदा त्वं गृहे तिष्ठेः तदा शास्त्रज्ञपण्डितसंसर्गं कुर्य्याः। कितीति कितनिवासे इत्यस्य रूपं निवासार्थं सनोऽभावात्। पक्षे। कदाचिदो इति कस्य सुखस्य दानज्ञानवतः सम्बोधनं ओ इति च सम्बोधनम्। अह्न इत्यादिकं उं। वाकारः समुच्चये। खेः ६।, नाशः १।, (च) अः १।, एः १।, राजति ७।, (वा) किति ७।, षष्ठे ७।, ॥ ७७ ॥

व्याकरणम्।

स्याद्वोत्तरेऽपि उत्तरे अपि परे पूर्व्वोक्तं कार्य्यं वा स्यात्। जगम ॥ ७६ ॥

खेर्नाशस्तश्चाये राजति वा किति षष्ठे। तृधातोः खेर्लोपः स्यात् अकारश्च एः स्यात् किति षष्ठे परे। तेरुः ॥ ७७ ॥

भ्रश्यद्विधिः सदम्भो नो ग्रन्थग्रन्थ्योऽपि वात्रपः ।
सम्भावनीयो धीमद्भिर्ये देभुः पेतुरेव ते ॥ ७८ ॥
भेजेऽदृष्टवशाद्‌बन्धमतो मुक्तफलो भजेः ।
अनाद्यन्तस्य ह स ईट् तेनेऽदृष्टवशाज्जगत् ॥ ७९ ॥
दूरे सतां सद्‌गुणिनस्तु मानलोप्योऽन्यथाख्योऽस्तु नरावभासः ।
सम्भावनीयो न हि स क्षितीशामप्यौरसोऽदो जगदुर्म्मुनीन्द्राः ॥ ८० ॥

---

भ्रश्यदिति । भ्रश्यत् विधिर्व्वेदविधानं यस्य स तथा सदम्भः दाम्भिकः ग्रन्थग्रन्थः ग्रन्थः शिथिलीभूतो ग्रन्थः भारतादिसन्दर्भविशेषो यस्य स तथा अत्रपो निर्लज्जः एतादृशो जनः धीमद्भिः सम्भावनीयो न नहि चिन्तनीयः । ये देभुर्दम्भं कृतवन्तः ते जनाः पेतुरेव निपतिता अभवन् मानसम्पदादिभिर्भ्रष्टा अभवन्नित्यर्थः पद्ये । भ्रश्यदिति सं । विधिः १।, सः १।, दम्भः ६।, अनः ६।, ग्रन्थग्रन्थः ६।, ( अपि ) ( वा ) त्रपः ६।, सम्भावनीयः १।, धीमद्भिः ३॥, ॥ ७८ ॥

भेज इति । अदृष्टवशात् प्राक्तनकर्म्मवशात् बन्धं संसारबन्धं भेजे प्राप्तवान् भवानिति शेषः । अतः कारणात् मुक्तफलः त्यक्तफलाभिसन्धिः सन् अनाद्यन्तस्य न स्त आद्यन्तौ यस्य स तथा तस्य अर्थादीश्वरस्य भजेः । ह यस्मात् स ईट् ईश्वरः अदृष्टवशात् अदृष्टसहकारियैव जगत् तेने विस्तृतवान् । पद्ये । मुक्तान्तपूर्व्वभागः उं । फलः ६।, भजेः ६।, अनाद्यन्तस्य हसः ६।, ७९ ॥

दूर इति । सद्‌गुणिनः सद्‌गुणयुक्तस्य जनस्य मानलोपी मानहन्ता अन्यथाख्यः गुणिनो गुणमानयोः अन्यथा ख्याति यः स तथा गुणमानयोर्व्विपरीतवक्तेत्यर्थः नरावभासो नर इव आभासते ज्ञानविषयो भवति नरावभासः मनुष्यतुल्य इति यावत् ।

व्याकरणम् ।

विधिः स दम्भोऽसौ ग्रन्थग्रन्थोऽपि वा त्रपः सम्भावनीयो धीमद्भिः । अनो नकाररहितस्य दम्भः ग्रन्थग्रन्थस्तथा त्रपोऽपि स एव विधिः धीमद्भिश्चिन्तनीयः । वा समुच्चये। भेजे, देभुः ॥ ७८ ॥

फलो भजेरनाद्यन्तस्य-हसः । नास्ति आद्यन्तौ स्यः संयोगो यस्य तादृशस्य हसान्तस्य स विधिः । भेजे, तेने ॥ ७९ ॥

( राजा सुबन्धुं प्रति । )

न मन्यते पूर्व्ववदच्छशोभाभरो ममारिर्भवदुज्झितस्य ।
तस्माद्भवन्तं द्विजराजमेतं श्रियोऽपि किन्ना ववजुर्निशो वत् ॥ ८१ ॥

यतस्त्वसः स्याद्बज्रोऽपि फण्यादेर्वाऽवमः स न ।
बिभेति ब्रह्ममन्युभ्यो ये जेरुर्नापि चक्रिणि ॥ ८२ ॥

---

सः सतां पण्डितानां साधूनां वा दूरे अस्तु स जन औरसोऽपि क्षितीशां राज्ञां न सम्भावनीयः न पुरस्कार्य्यः मतज्ञा नीति विदः अदः इति जगदुः । पक्षे । दूरे सतां सद इति पण्डितानां दूरे गमनशीलस्य सं । रावभास इत्यादिकं उं । गुणिनः ६।, ( तु ) ( मा ) नलीप्यन्यथाख्यौः ६॥, ( तु ) ज १।, ॥ ८० ॥

न मन्यते इति । भवदुज्झितस्य भवता त्यक्तस्य ममारिः शत्रोस्तस्य राज्ञः पूर्व्ववत् अच्छशोभाभर अच्छा निर्म्मला या शोभा तस्या भरः अतिशयः न मन्यते । अत्र हेतु-माह । यस्मात् राज्ञः एतं आगतं भवन्तं त्वां द्विजराजं द्विजश्रेष्ठं अनु सहैव श्रियः शोभाः किन्न आववजुः आगतवत्यः अपि तु त्वया सहैव आगता इत्यर्थः । कस्मादिव निशोवत् रात्रेरिव । यथा रात्रेः सकाशात् एतं आगतं भवन्तं नक्षत्रवर्त्मं द्विजराजं चन्द्रं अनु सहैव श्रियो गच्छन्ति तथेत्यर्थः पक्षे । भाभर इत्यादिकं उं । न १।, मन्यते ८।, ( पूर्वें व ) पूर्व्वं व-दच्छशः ६।, ॥ ८१ ॥

यत इति । फण्यादेरिव सर्पादेरिव ब्रह्ममन्युभ्यः स अवमः न बिभेति यतो येभ्यो ब्रह्ममनुभ्यो बज्रोऽपि वसः वश्यो भवति । ये ब्रह्ममन्यवश्चक्रिण्यपि नारायणेऽपि न जेरुः शीर्णतां न प्राप्ता । पक्षे । यत इति यत्नवतां सं । सम इत्यादिकं उं वकार इवार्थे । वसः ६।, स्यात् ८।, ( व-इव ) ज्ञः ६।, ( अपि ) फण्यादेः ६।, वा १।, वमः ६।, ॥ ८२ ॥

व्याकरणम् ।

गुणिनस्तु मा, नलीप्यन्यथाख्यौस्तु न । गुणवती नलीपिनः अन्यथाभूतस्तैरपि न । माशब्दो निषेधार्थकः । जगदुः ॥ ८० ॥

न मन्यते पूर्व्ववदच्छशः । पूर्वें वकारो यस्य तादृशधातोः ददः शश्च न मन्यते । आववजुः ॥ ८१ ॥

वसः स्यात् वज्रोऽपि फणादेर्वा वमः । वसजुफणादिवमां वा स्यात् । जेरुः ॥ ८२ ॥

विधिरपि दृश्यत एवं सेमिथ पिनाकिना सदृशस्त्वञ्चापि ।
भेजिथ च वैमनस्यं का कथाल्पतपसां नु मद्विधानाम् ॥८३॥

( सुबन्धुः । )

खेरानदाद्यस्य परस्य चाशः षष्ठेऽपि भागे किल वासरस्य ।
अवश्यलभ्योऽकृतिनोऽप्यभीष्टः स ईहते तत्र य आनशेऽदः ॥ ८४ ॥

( राजा । एवम् । ) स च नैव मृदाद्यस्य परस्यात्मन उक्तिषु ।
यः श्राद्धः कीर्त्तिमानर्च्छ मृतो जीवोऽप्यनीदृशः ॥ ८५ ॥

विधिरिति । एवमपि विधिर्दैवं दृश्यते । किमित्यत आह । पिनाकिना शिवेन सदृशस्त्वञ्चापि सेमिथ व्याकुलीभावं प्राप्तवानसि । सेमिथेति षम वैक्लव्ये इत्यस्य रूपम् । वैमनस्यं विमनस्कत्वं भेजिथ च प्राप्तवांश्च । नु भोः अल्पतपसां मद्विधानां का कथा अस्तीत्यन्वयः । पक्षे । नाकिनेत्यादिकं ज्ञं । विधिः १।, ( अपि ) दृश्यते ८।, ( एवं १।, ) सेमि ७।, थपि ७।, ॥ ८३ ॥

खेरेति । खेरानदाद्यस्य खमाकाशं इरा भूः नदी जलाशयः तत्र अद्यं भोजनं यस्य तादृशस्य अर्थात् भूचरस्य खचरस्य जलचरस्य परस्य तदितरस्यापि अकृतिनोऽपि अभीष्टः अशः वाञ्छितं भोजनं वासरस्य षष्ठेऽपि भागे अवश्यलभ्यः हि यस्मात् तत्र विषये स एव ईहते चेष्टते यः अदो विश्वं आनशे व्याप्नोति स्म । पक्षे । अपीत्यादिकं ज्ञं । खेः ६।, आन् १।, ( अत् आद्यस्य ) अदाद्यस परस्य ६।, ( च ) अशः ६।, षष्ठे ७।, ॥ ८४ ॥

स चेति । आद्यस्य जगतामादिभूतस्य परस्यात्मनः परमेश्वरस्य उक्तिषु अर्थात् वेदेषु श्राद्धः अतिशयश्रद्धावान् यो जनः कीर्त्तिं आनर्च्छ प्राप्तवान् स च स तु जनः नैव मृत् न मृत इत्यर्थः । कीर्त्तिर्यस्य स जीवतीत्युक्तेः । अनीदृशः अश्राद्धः अकीर्त्तिमान् जनो जीवोऽपि मृत एव । पक्षे । सचनेति गतिविशिष्टस्य सं । आत्मन इत्यादिकं ज्ञं । ( एवं १।, ) ऋदाद्यस्य ६।, ॥ ८५ ॥

व्याकरणम् ।

विधिरपि दृश्यत एवं सेमि थपि । सेमिथ ॥ ८३ ॥

खेरानदाद्यस्य परस्य चाशः षष्ठे । स्यः संयोगः परे यस्य तादृशस्य अकारादेः अश्नोतेश्च खेरान् स्यात् षष्ठे । आनशे ॥ ८४ ॥

( सुबन्धुः । ) क्रोधोऽरामोऽनुप्रयोज्योऽपि भूर्म्माऽसहनोऽस्थिरः ।
बिभरामास कुः सर्व्वमात्मसात्कृत्य वर्द्धते ॥ ८६ ॥
सन्मन्त्रणास्त्वनेका च यां मन्येतार्थसाधनीम् ।
तामाश्रितो जयेत् शत्रुं चकाशामास यो बली ॥ ८७ ॥
सत्यतो नापरो धर्म्मो बुद्धितो नाऽपरं बलम् ।
घातयामास यद्धीमान् काको बलिबलीमुखम् ॥ ८८ ॥

राजा । किं तत् । सुबन्धुः । श्रूयताम् । मल्लभूमौ अत्युन्नते बहुशाखिनि अश्वत्थविटपिनि लोमशनामा वानरो बहुतिथ-

---

क्रोध इति । अरामः अरमणीयः क्रोधः अनुप्रयोज्यः पश्चादेव नियोज्यः नत्वापातत इत्यर्थः । यद्वा नु मा प्रयोज्यः वशीकर्त्तव्य इत्यर्थः प्रयोगो मा नियुक्तौ च वशीकृते इति कोषः । असहनः अस्थिरोऽपि माभूः । अस्य फलं दर्शयति । कुः पृथिवी सर्व्वं बिभरामास दधार सर्व्वमात्मसात्कृत्य वर्द्धते । पक्षे । मासहनेत्यादिकं ।उ' । ( कृ अस् ) कृः १।, धोः ५।, आमः ५।, ( अनु ७।, ) प्रयोज्यः १।, ( अपि ) भूः १।, ॥ ८६ ॥

सन्मन्त्रणेति । अनेकापि सन्मन्त्रणा अस्ति यां मन्त्रणां अर्थसाधनीं प्रयोजननिष्पादिकां मन्येत तामेव मन्त्रणामाश्रितः सन् शत्रुं जयेत् । यः शत्रुः बली स चकाशामास अदीपीत्यर्थः । पक्षे । सन्मन्त्रण इति मन्त्रिणः सं । अनेकाचः ५।, आम् १।, मन्येत ८।, ॥ ८७ ॥

सत्यत इति । बलिबलीमुखं बलवान् यो बलीमुखनाम वानरस्तम् । अन्यत् सुगमम् । पक्षे । नापर इत्यादिकं उदाहरणघटितवाक्यत्वेन सार्थकम् । सः १।, त्यतः ५।, ॥ ८८ ॥

व्याकरणम् ।

एवं भृदादास्य । आनर्च्छ ॥ ८५ ॥

क्रोधोरामोऽनुप्रयोज्योऽपि भूः आमन्तात् धातोः पश्चात् कृ-अस्-भूरपि प्रयोज्यः । बिभरामास ॥ ८६ ॥

अनेकाच आम् मन्येत । अनेकाच धातोराम् स्यात् पक्षे । चकाशामास ॥ ८७ ॥

स त्यतः प्रत्ययन्तात् परोऽपि स आम् स्यात् । घातयामास ॥ ८८ ॥

मवात्सीत् । एकदा च यदृच्छया भ्रमन् कतिपयवानराधिपः बलीमुखनामा वानरस्तं दृष्ट्वा आह अरे वानर ! अस्मिन् ममाधिकारे केन स्थापितोऽसि केन वा पट्टपत्रं दत्तम् । लोमशस्तं प्रति । तत् किमपि न जाने पैतृकोऽसौ वास्तुश्च इत्येव जानामि । बलीमुखः । अहो किमेतत् ।

मयीश्वरे सत्यपि गौरवान्वितेऽजादेश्च ग्रावो बलवीर्य्यभागपि ।
वने ममानन्दनखेलनास्पदे इन्दाम्बभूवेति वयं न शुश्रुमः ॥ ८९ ॥

अत एतस्मात् मम क्रीडाकाननात् निःसर अथ वा युध्यस्व । लोमशस्तं प्रति ।

अयोदयश्चेष्यते तेऽधुनायायाञ्चकृषे रुषा ।
दुर्ब्बलो व्यसनी चाहं योत्से किं बलिना त्वया ॥ ९० ॥

( किन्तु । ) आस्त एष विधिर्यस्तु वास्तौ यत्राविरोधिनि ।
आसाञ्चक्रे बहुतिथं तस्य तं दापयेन्नृपः ॥ ९१ ॥

मयीति । मयि ईश्वरे प्रभौ सत्यपि अजादेश्च छागादेरपि ग्रावः पृथुकः बलवीर्य्यभाक् सन् ममानन्दखेलनस्य आस्पदे स्थाने इन्दाम्बभूव परमैश्वर्य्ययुक्तो बभूव इति वयं न शुश्रुमः । पक्षे मयीश्वरे सतीति मत्सम्बन्धीयाया ईश्वर्य्याः सत्याः सं । अन्यत् स्पं । गौरवान्वितेऽजादेः ५।, ( च ) ॥ ८९ ॥

अयेति । अधुना ते तव अयोदयः शुभावहादृष्टस्य उदयो वृद्धिरीष्यते रुषा क्रोधेन आयायाञ्चकृषे आगतोऽसि अहं दुर्ब्बलः व्यसनी विपदापन्नश्च बलिना बलवता त्वया सह किं कथं योत्से युद्धं करिष्ये । पक्षे । ते इत्यादिकं स्पं । अयः ५।, दयः ५।, ( च ) इष्यते ८।, ॥ ९० ॥

आस्त इति । एष विधिरास्ते अविरोधिनि यत्र वास्तौ यो जनो बहुतिथं बहुकालं आसाञ्चक्रे आस्ते स्म । राजा तस्य जनस्य सम्बन्धे तं वास्तुं दापयेत् । प्रतिवादिनमिति शेषः । पक्षे य इत्यादिकं स्पं । आसः ५।, एधः १।, विधिः १।, ॥ ९१ ॥

व्याकरणम् ।

गौरवान्विते जादेश्च । गुरुसंज्ञक-इजादेश्च आम् स्यात् । इन्दाम्बभूव ॥ ८९ ॥
अयो दयश्चेष्यते । अयदयाभ्यामपि आम् स्यात् । आयाञ्चकृषे ॥ ९० ॥

तस्माद्विचारार्थं राजानं गच्छाव:। बलीमुख: सक्रोधम्। आ: पाप! दुरात्मन्! ममापि राजास्ति त्वां यमालयं नेष्यामीत्युक्त्वा गृहीत्वा च तं हन्तुमुद्यतं वीक्ष्य लोमशस्य सहवासी सखा च एकनीड़नामा वायसस्तत्रागत्य अहो अब्रह्मण्यं शाखामृगस्य वधोऽयशस्करस्ते। यतो भवानेवम्।

भवत्यृच्छति उर्णोति धुतो न किमु गोपुरम्।
बृहत्कवाटैरिन्द्रोऽपि त्वत्तो नानर्च्छ को भयम्॥ ९२॥
यथा सकाशो जागर्त्त्युषो धुतो भवति क्वचित्।
त्वद्भिया त्वदरि: किमु जागरामास नो तथा॥ ९३॥

तथा दरिद्रोऽपि भवति॥ ९४॥ तस्मात्।

भवतीति। भवति त्वयि ऋच्छति यदृच्छया च गच्छति सति इन्द्रोऽपि धुत: कम्पित: सन् बृहत्कवाटैर्गोपुरं पुरद्वारं उ भो: किं न उर्णोति आच्छादयति अपि तु तथैव। तत्तो भयं को जन: न आनर्च्छ प्राप अपि तु प्रापेत्यर्थ:। पचे। किमु इत्यादिकं उं। भवति ८।, ऋच्छति-उर्णोति-धुत: ५।, (न १।,)॥ ९२॥

यथेति। सकाश: काशरोगी जन: यथा जागर्त्ति क्वचित् उष: दाहात् धुत: कम्पितो यथा भवति तवारिस्तव शत्रु: त्वद्भिया तथा सन् दाहकम्पित: सन् नु भो: किं न जागरामास। पचे। यथाशब्दोऽत्र परसूत्रापेक्षया। अन्यत् उं। स: १।, काश: ५।, जागर्त्त्युष: ५।, धुत: ५।, भवति ८।, (क्वचित् ७।,)॥ ९३॥

तथेति। तथा त्वद्भिया तव शत्रु: दरिद्रोऽपि भवति। (तथा १।, दरिद्र: ५।, (अपि) भवति ८।,॥ ९४॥

### व्याकरणम्।

आस एष विधि:। आसधातोरपि एष विधि: स्यात्। आसाञ्चक्रे॥ ९१॥

भवत्यृच्छति उर्णोति धुतो न। ऋच्छ उर्णुभ्यां धुभ्यामपि न भवति आनर्च्छ॥ ९२॥

स काशो जागर्त्त्युषो धुतो भवति क्वचित्। एभ्य: स आम् स्यात् वा। जागरामास॥ ९३॥

तथा दरिद्रो भवति॥ ९४॥

त्यज स्ववैमनस्यादिम् षष्ठस्थाने स्रुतोऽपि न ।
सुखं स्वपिति यस्यारिस्तं त्वां सस्रुम नो वयम् ॥ ९५ ॥
भवन्नेवं शृणु भृतो द्रुतस्त्वस्मात् स्रुतस्तथा ।
व्रतः स्वीयैरिति ननु शीर्षाज्ञां बभ्रमापि ते ॥ ९६ ॥

एवमपि मनोकरोतु ।

कृतोऽसतोऽप्यनुक्रोषश्चेत् कोऽस्य मारणे क्षमः ।
चकृषे निगृहीतं यं को वा तं रक्षितुं क्षमः ॥ ९७ ॥

---

त्यजेति । स्ववैमनस्यादिं स्वीयमुत्कण्ठादिकं त्यज यस्यारिः षष्ठस्थाने षष्ठराज्ये स्रुतोऽपि गतोऽपि सुखं यथा स्यात् तथा न स्वपिति तं त्वां वयं न सस्रुम न ज्ञातवन्तः । स्रुधातोर्गत्यर्थकत्वेन ज्ञानार्थकत्वात् । पक्षे । त्यजस्ववैमन इति त्यक्तस्वीयविमानस्य सं । स्यात् ८, इम् १, षष्ठस्थाने ७, स्रुतः ६, ( अपि १ ) न १, ॥ ९५ ॥

भवन्निति । हे भवन् ! एवं वक्ष्यमाणं शृणु । भृतो दासः अर्थादयं वानरः द्रुतः पलायितः तथा स्वीयैरात्मीयैर्व्रतः सन् अस्मात् व्रजात् स्रुतः गतवान् तवाज्ञामपि शीर्षा मस्तकेन बभ्रम वयमिति शेषः इति ननु जानीहि । पक्षे । भवन्नेवं शृणु इति शिष्यावधानाय । शृणु-भृतः ५।, द्रुतः ५।, स्रु-अस्मात् ५।, स्रुतः ५।, (तथा) व्रतः ५।, ॥ ९६ ॥

कृत इति । चेत् यदि असतोऽपि असाधोरपि जनस्य अनुक्रोषः कृपा कृतः भवतीति शेषः । को जनः अस्य भवदनुगृहीतस्य जनस्य मारणे क्षमो भवति । यं जनं निगृहीतं निग्रहास्पदं चकृषे कृतवांस्त्वं को वा जनस्तं जनं रक्षितुं क्षमो भवति । पक्षे । अखिल्यादिकं उं । कृतः ५।, असतः ५।, ( अपि ) ॥ ९७ ॥

व्याकरणम् ।

स्यादिम् षष्ठस्थाने स्रुतोऽपि न । स्रुधातोः षष्ठस्थाने इम् न स्यात् । अपिरनुक्तसमुच्चये । सस्रुम ॥ ९५ ॥

भृतो द्रुतस्त्वस्मात् स्रुतस्तथा व्रतः । भृ-द्रु-स्रु-स्रु-व्र एभ्योऽपि इम् न स्यात् षष्ठस्थाने । बभ्रम ॥ ९६ ॥

कृतोऽसतोऽपि नास्ति सो यत्र तादृश कृधातोरपि अर्थादसुम् कृधातोरपि इम् न स्यात् । चकृषे ॥ ९७ ॥

वलीमुखः । एवमेव मत्प्रभावं भवानेव वेत्ति । लोमशं प्रति । अरे ! त्यक्तोऽसि किन्त्वेवम् ।

अत्रागे मागमो भूयोऽजादेरेव हि शासनम् ।
भूयः सकृत् सतामैन्द्रदैन्द्रत् कोऽपि न दुर्बलः ॥ ९८ ॥

काकः । एवमस्तु । किन्त्वस्य पत्नी आसन्नप्रसवा इति तत् सन्ततेरानिष्क्रमणं चन्तव्यं भवता । वलीमुखः । तथास्त्विति निष्क्रान्तः । काकः विहस्य लोमशं प्रति अहो असौ वराको वानरो वानर एव यतः ।

उरुवर्णे श्रुते खेराट् मोदते मुट् च नो बुधः ।
पश्यास्योऽसीत्यतः कानः क उवोख मुदं बुधः ॥ ९९ ॥

लोमश उच्चैर्विहस्य उरावाहत्य सखे ! हत हत एतत् कौतुकं न सुखसमये आसीत् तदस्तु इदानीं किं विधेयम् । एकनीडः ।

---

अत्रेति । अत्र अगे उचे भूयः पुनरपि मागमः न आगच्छेः अजादेर्गवादेरेव भूयः पुनःपुनः शासनमस्ति सतां बुद्धिमतां एतत् शासनं सकृत् कोऽपि दुर्बलो नैन्द्रत् परमैश्वर्य्ययुक्तोऽभवत् । पक्षे । अत्रागे इति अत्रागतायाः सं । अमागमः १।, ( भूयः १।, ) अजादेः ५।, ( एव ) ॥ ९८ ॥

उर्व्विति । उरुवर्णे उरुरतिशयो यो वर्णः स्तुतिः तस्मिन् श्रुते सति खेराट् खे आकाशे राजते इति खेराट् गरुडादिर्मोदते हर्षयुक्तो भवति मुट् च मूढोऽपि मोदते न बुधः पण्डितो मोदते अतिशयस्तवे श्रुते न तुष्यति । अत्र हेतुमाह । त्वं पश्यास्य इत्यतः इति वाक्यतः कः कानो बुधः अचिहीनो बुधः मुदं हर्षं उवोख प्राप्तवान् । पक्षे । राट् इत्यादिकं उं । उः १।, उव् १।, अर्णे ७।, श्रुत ७।, खेः ६।, ॥ ९९ ॥

व्याकरणम् ।

अमागमो भूयोऽजादेरेव अजादेरमिकृते पुनरम् स्यात् । ऐन्द्रत् ॥ ९८ ॥

उः उव् अर्णे-श्रुते खेः । अर्णे असमानवर्णे-परत्र श्रुते सति खेरुवर्णं उव् स्यात् । उवोख ॥ ९९ ॥

स्यान्वेये स्थिर आवासे परीचेत शुभाशुभम् ।
नापरीच्य परस्थानमियर्त्ति सहसा बुधः ॥ १०० ॥

तस्मात् सुचित्तेन विविच्यैव विधेयम् । अथ वानरी साश्रुनेत्रा पतिं प्रति । भवानेव करोतु विवेचनाम् । अहमितश्चलितास्मि ।

मद्दते काः स्त्रियो वीक्षुरीदृक्कापुरुषं पतिम् ।
ईदृशी दुःखिता का वा इयेष व्यर्थजीवितम् ॥ १०१ ॥

एकनीडः वानरीं प्रति ।

किं यास्यसि वने मातस्त्वेका च स्त्री स्वभावतः ।
भीरुस्तत् स्वैरिणी माभूः स्थास्यस्यत्रैव शाखिनि ॥ १०२ ॥

( अपि च । ) अस्य चैव मुदे स्थेयाः सकोरा सुपरिस्कृता ।
दुःखानि सुखवन्मत्वा यथासौ तोषमेष्यति ॥ १०३ ॥

---

स्यादिति । स्थिरे आवासे वसतिभूमौ चेये विधेये सति शुभाशुभं परीक्षेत । बुधः पण्डितः परस्थानं अपरीच्य सहसा न इयर्त्ति गच्छति । स्यात् ८ा, ( अ ) इय् १ा, ए: ६ा, ॥ १०० ॥

मदिति । मद्दते मां विना का वा स्त्रियः ईदृक्कापुरुषं पतिं ऊक्षुः प्राप्तवत्यः का वा स्त्री ईदृशी दुःखिता सती व्यर्थजीवितं इयेष इच्छति स्म । पथ्य । सूत्रस्य उदाहरणम् ॥ १०१ ॥

किमिति । हे मातः ! स्वभावतो भीरुरेका च स्त्री त्वं कथं वने यास्यसि । तत् तस्मात् स्वैरिणी स्वेच्छाचारिणी माभूः अत्रैव शाखिनि स्थास्यसि । पथ्य । पूर्व्वापरभागौ उं । न १ा, इम् १ा, मातः ५ा, एकाचः ५ा, ॥ १०२ ॥

अस्येति । अस्यैव तव भर्त्तुर्मुदे हर्षाय सकोरा सकाशा सुपरिस्कृता सती स्थेयाः । अन्यत् सुगमम् । पथ्य । अस्येति चपकस्य सं । ( अ १ा, ) ( एवं १ा, ( उत् ए: ) उदेः ५ा, ॥ १०३ ॥

व्याकरणम् ।

स्यात्रेयेः । असवर्णे श्रुते खेरिवर्णस्य इय् स्यात् । इयर्त्ति ॥ १०० ॥

ऊक्षुः, इयेष ॥ १०१ ॥

नेमातः एकाचः । एकाच आदन्तात् इम् न स्यात् । यास्यसि, स्थास्यसि ॥ १०२ ॥

चैवमुदेः । एवं अर्थात् एकाच उदन्तात् इवर्णान्ताच्च इम् न स्यात् । एष्यति ॥१०३॥

ऋतोऽप्येवं यामिजनो नोद्विग्नं कुरुते पतिम्।
कार्षीदाश्रय उत्तमे आश्रिता स्त्री सुखं सति!॥ १०४ ॥
प्रबोधयामि भवतीम् अग्रादेश्चापल्यकारणम्।
गृहे चले श्रिता श्रीः किं चापल्यं नाश्रयिष्यति ॥ १०५ ॥
या नाशयिष्ट दिवसेऽस्नावीत् पत्युः पुरः सदा।
नान्यवाचि वचोऽयावीदवरिष्ट रमापि ताम् ॥ १०६ ॥
अश्वयीत् स्त्रीगुणान् लक्ष्मीस्तद्दोषादड्यिष्ट सा।
दृष्ट्वैतदतो भर्त्तुर्मास्णावीर्दुःखमुत्थितम् ॥ १०७ ॥

---

ऋत इति। यामिजनः कुलस्त्रीजनः ऋतोऽपि पीड़ितोऽपि एवं अनेन प्रकारेण पतिं उद्विग्नं न कुरुते। अत्र हेतुमाह। आश्रये अर्थात् पत्यौ उत्तमे सति आश्रिता का स्त्री सुखं आर्षीत् प्राप्ता अपि तु नेत्यर्थः। सतीति सम्बोधनम्। ऋतः ५। (अपि) (एवं १।,)॥ १०४ ॥

प्रबोधेति। अग्रादेर्लक्ष्माग्रादेश्चापल्यकारणं भवतीं प्रबोधयामि। गृहे गृहिण्यां चले चञ्चले सति श्रिता आश्रिता श्रीर्लक्ष्मीः किं कथं चापल्यं चाञ्चल्यं न आश्रयिष्यति इत्यर्थः। गृहिणी गृहमित्याहुः स्मृतिः। (प्रबोधयामि ८।,) भवति ८।, इम् १।, अग्रादेः ५।,॥ १०५ ॥

या नेति। या स्त्री दिवसे न अशयिष्ट न शेते स्म या च पत्युः पुरोऽग्रे सदा अस्नावीत् उपास्य स्थिता या च अन्यवाचि अन्यस्य पुरुषस्य वाचि वाक्ये वचो न अयावीत् नामिश्रयत् रमापि लक्ष्मीरपि तां स्त्रियं अवरिष्ट आश्रयति स्म। वृङ् सम्भक्तौ इत्यस्य रूपमिदम्। पद्यं। पूर्व्वसूत्रस्य उदाहरणम् ॥ १०६ ॥

अश्वयीदिति। अश्वयीत् वृद्धिं प्राप्ता। सा लक्ष्मीः अड्यिष्ट नभःपथेनगता। उत्थितं उपस्थितं भर्त्तुर्दुःखं मा अस्णावीः न उत्तेजय इत्यर्थः। पद्यं। सूत्रस्य उं ॥१०७॥

व्याकरणम्।

ऋतोऽप्येवम्। ऋदन्तादप्येवं विधिः। आर्षीत् ॥ १०४ ॥

प्रबोधयामि भवतीम् अग्रादेः। अग्रादेरिम् स्यादिति बोधयामि। श्रयिष्यति ॥ १०५ ॥

अशयिष्ट, अस्नावीत्, अयावीत्, अवरिष्ट ॥ १०६ ॥

अश्वयीत्, अड्यिष्ट, अस्णावीत् ॥ १०७ ॥

प्रिये निजेऽवाचि च निर्गुणे सति
धवस्य हेये स्थिरभक्तियोगिनी ।
या शिश्रिये तं पतिदेवता पतिं
जीवं मृतं वा प्रणमामि तामहम् ॥ १०८ ॥
अस्त्येव यस्यानेका च स्फूर्त्तिमत्पुण्यसंहतिः ।
स एव निन्ये स्वगृहं भार्य्यां गुणवतीं सतीम् ॥ १०९ ॥
साधोर्नु त्यस्य चोवुः सद्गुणज्ञा न यशोमयम् ।
तत्स्त्रीगुणैर्दिग्वराशिं न युवन्ति श्रियोऽपि तम् ॥ ११० ॥

---

प्रिय इति । हे सति ! निजे आत्मीये प्रिये भर्त्तरि अवाचि । न नास्ति वाक् यस्य तादृश्यपि अर्थात् मूके निर्गुणे धवस्य नरस्य हेये अनादरणीयेऽपि स्थिरभक्तियोगिनी अचलभक्तियुक्ता सती या पतिदेवता स्त्री तं पतिं जीवं जीवन्तं मृतं वा शिश्रिये आश्रितवती तां स्त्रियं अहं प्रणमामि । पद्ये । प्रिये निजे इति स्वप्रियायाः सं । स्थिरेत्यादिकं उं । अचि ७।, (च) निर्गुणे ७।, सति ७।, धवस्य ६।, (आह ८।,) इय् १।, एः ६।, ॥ १०८ ॥

अस्तीति । यस्य जनस्य अनेका स्फूर्त्तिमत् पुण्यसंहतिः दीप्यमानपुण्यसमूहोऽस्त्येव स एव जनः सतीं गुणवतीं भार्य्यां स्वगृहं निन्ये । अस्ति ८।, (एव) य् १।, अस्यानेकाचः ५।, ॥ १०९ ॥

साधोरिति । नु भोः त्यस्य तस्य साधोस्तस्यैव स्त्रीगुणैः कारणभूतैः सद्गुणज्ञा जनाः यशोमयं दिग्वराशिं दिशां स्थूलसाटीवस्त्रं न ऊवुः न निर्म्ममुः अपि तु तथा । वराशिः स्थूलसाटक इत्यमरः । ऊवुरिति वेञ् स्यूतौ इत्यस्य रूपम् । श्रियोऽपि सम्पदोऽपि तं साधुं न युवन्ति न यान्ति अपि तु यान्ति एव । पद्ये । सा इति अहीनां सं । धोः ६।, नु त्यस्य ६।, (च) उव् १।, उः १।, ॥ ११० ॥

व्याकरणम् ।

अचि च निर्गुणे सति धवस्याहेयेः । अगुणे अचि परत सति धातुसम्बन्धीयस्य इवर्णस्य इय् स्यात् शिश्रिये ॥ १०८ ॥

अस्त्येव य् अस्यानेकाचः । असंयुक्तानेकाचः परस्य तस्य इवर्णस्य य अस्ति स्यादित्यर्थः । निन्ये ॥ १०९ ॥

धोर्नु त्यस्य चोवुः । धातोर्नुप्रत्ययस्य च उवर्णं उव् स्यात् । युवन्ति ॥ ११० ॥

वानरो तद्भवत्। सम्प्रति।

तद्दत् कटकटाशब्दं शृण्वन्त्या मे ज्वरोऽभवत्।
तथा वद स्यान्नु त्यस्यान्तो यथा पक्षिणाम्बर ! ॥ १११ ॥

( एकनीड़: ) ब्रवीमि वाचो भवतीम् सृट् दृशो-स्थ-पयो यतः।
ससर्ज्जिथाद्य तच्छित्तावुपायेय सुमन्त्रणात् ॥ ११२ ॥

किन्तु अषड़्क्षीणैव मन्त्रणा फलति अतः स्वभावतोऽसम्बृतमुखया भवत्या न श्रोतव्यम्। अथ समयान्तरे एकनीड़ो लोमशं प्रति।

सखेऽस्ति कर्कटीचेत्रमदूरे क्रोशमन्तरे।
भद्रा नाम नदीतीरे तत् ददर्शिथ वा न वा ॥ ११३ ॥

---

तद्वदिति। तस्य वानरस्य दत्तकटकटाशब्दं शृण्वन्त्या मे मम ज्वरोऽभवत्। नु भोः त्यस्य तस्य ज्वरस्य अन्तो नाशो यथा स्यात् तथा वद। हे पक्षिश्रेष्ठ !। पक्षे पूर्व्वापरभाग उदाहरणवाक्यम्। ( तथा १।, ) ( वत् १।, ) अस्मात् ५।, नु त्यस्य ६।, अन्तः १।, ॥ १११ ॥

ब्रवीमीति। भवतीं वाचो ब्रवीमि। सृट् सृष्टं दृशोः स्थ-पयः चक्षुषोः स्थितं वारि यतः कारणात् ससर्ज्जिथ त्यक्तवती मन्त्रणात् तच्छित्तौ तस्य चक्षुर्ज्जलविसर्गकारणस्य छित्तौ छेदविषये उपायेय उपायं कुर्य्याम्। पक्षे। पथ इत्यस्य उत्तरे ओकारः सम्बोधने। यत इत्यादिकं उ॰। वा १।, अचः ५।, भवति ८।, इम् १।, सृज-दृशोः ६॥, थपः ५।, ॥ ११२ ॥

( अषड़क्षीणा तृतीयादिजनानां अगोचरः। ) सखे इति। कर्कटीचेत्रं कर्कटीफलविशेषस्तस्य चेत्रं ददर्शिथ वा न वा त्वया दृष्टं नवेत्यर्थः। पक्षे। पूर्व्वसूत्रस्य उ॰ ॥ ११३ ॥

## व्याकरणम्।

तथा वत् अस्मान्नु त्यस्यान्तः। असंयोगात् परस्य नुप्रत्ययस्य अन्तो वत् स्यात् अगुणे अचि परे। वत् इति तकारः स्वरूपार्थकः। शृण्वन्त्या ॥ १११ ॥

वा अचो भवतीम् सृजदृशोस्थपः। अजन्तात् सृजो दृशश्च थप्। इम् वा स्यात्। ससर्ज्जिथ ॥ ११२ ॥

ददर्शिथ, ददृष्ठ ॥ ११३ ॥

यदि न दद्रष्ठ तदा तदहं दर्शये। इति स तेन सह कियद्दूरं गत्वा उच्चैःशिरसं शालमारुह्य दर्शयन्नाह सखे! पश्य तदिदं चेत्रं अस्य स्वामी कृषीवलोऽप्ययं रङ्कमास्ते। (अनेन हि।)

याप्यतेऽत्र सदा निट् तु स्फुरदच्छाल्यजन्ततः।
नायाति भीत्या रात्रौ न कदाप्यत्राजगन्थ किम्॥ ११४॥
एतत्फलाद्दतो नित्यं व्ययते रङ्क एषकः।
पटमेतदवन् चेत्रमादिथैतत् फलं न वा॥ ११५॥
मध्वस्ति नेतरदिमामृत ऐष्यतेयङ्
कर्कव्यदभ्रलसितैः किमु नापि देवैः।

याप्यत इति। सदा अत्र स्थाने निट् निशा याप्यते ततः कारणात् स्फुरदच्छालजं स्फुरन्ती दीप्यमाना ये अच्छा भल्लुकास्तेषां आलिः श्रेणी अजः छागश्च भीत्या रात्रौ न आयाति। स्फुरदच्छाली च अजश्चेति समाहारः। कदापि अत्र स्थाने न किं आजगन्थ न आगतोऽसि। पचे। याप्यतेऽत्रेति अस्मिन् सूत्रार्थे याप्यते नीयते भवानिति शिष्यावधानार्थम्। नायातीत्यादिकं उ'। सदाऽनिट् तुः ५।, (स्फुरत्-अत्-शालि-अच्-अन्ततः) स्फुरदच्छाल्यजन्ततः ५।, ॥ ११४॥

एतदिति। एषकः असौ रङ्कः दरिद्रः एतत्फलाद्दतः एतत्कर्कटीफलेभ्याद्दतः सन् एतत् चेत्रं अवन् रचन् सन् पटं व्ययते पटं निर्म्माति एतत्फलं आदिथ भचितवान् न वा। पचे एतत्फल इति एतत्फलविशिष्टस्य सं। अद्दतः ५।, नित्यं १।, व्ययतेः ५।, ॥ ११५॥

मध्विति। इमां कर्कटीं ऋते विना इतरत् मधु नास्ति देवैरपि अदभ्रविलसितैरतिशयविलासशालिभिरपि इयं कर्कटी न ऐष्यत अपि तु वाञ्छितैव। देवस्तदिदं

## व्याकरणम्।

सदाऽनिट् तुः स्फुरदच्छाल्यजन्ततः। सदा अनिट्त्वप्रत्ययो यस्मात् तादृशो यः पाठकाले स्फूर्त्तिमत् अत् विशिष्टो धातुस्तथा अजन्तधातुश्च तस्मात् थप इम् वा स्यात्। जगन्थ॥ ११४॥

अद्दतो नित्यं व्ययतेः। अद ऋ व्येञ्भ्यो नित्यं थप इम् न स्यात्। आदिथ॥ ११५॥

आस्वाद्य तत् फलमिदं सकृदेव देवः
किं दुर्लभादमृततोऽपि ऋतीयते न ॥ ११६ ॥

एष हि कृषीवलः क्षेत्रमिदमासङ्गवात् गोपायति अथ भुक्त्वा सम्यगुपयाय स्फुटकर्कटीमन्वहं विपणौ पणायते ॥ ११७ ॥

धूपायितस्त्वातपाद्यैर्यदायाति कृषीवलः ।
गृहं तदासौ भवति पणितोऽपि च धूपितः ॥ ११८ ॥

स्वविपणिङ्गम एष यदैष्यति त्वरितमत्र समेत्य तदा फलम् ।
समुपभुज्य कियच्च गृहं नये यदपि कामयतेऽमरराडपि ॥ ११९ ॥

फलं सकृत् आस्वाद्य भुक्त्वा दुर्लभादमृततोऽपि किं न ऋतीयते न घृणां धत्ते अपि तु तथैव । पक्षे । मध्वस्ति नैतरदिमामिति विनेति शेषः । एतच्च शिष्याणां रोचनार्थम् । कर्कट्यादिकं ज्ञं । ऋतः ५।, ऐष्यत ८।, ईयं १।, ॥ ११६ ॥

एष इति । आसङ्गवात् सङ्गवकालपर्यन्तं सम्यक् यथा स्यात् तथा भुक्त्वा उपयाय विपणौ गत्वेत्यर्थः अन्वहं प्रतिदिनं पक्वकर्कटीफलं विक्रीणीते । गुपः ५।, आयः १।, ॥ ११७ ॥

धूपेति । कृषीवलः कृषकः आतपाद्यैर्धूपायितः सन्तप्तः सन् यदा गृहं आयाति तदा असौ कृषीवलः पणितोऽपि स्तुतोऽपि धूपितः सन्तप्तो भवति वाक्यमपि न सहते इत्यर्थः । पक्षे । तदेत्यन्तपूर्व्वभाग ज्ञं । असौ १।, भवति ८।, पणितः ५।, ( अपि ) धूपितः ५।, ॥ ११८ ॥

स्वेति । हे स्व आत्मीय ! एष कृषीवलः सदा कमः इच्छुः सन् विपणिं पण्य-वीथिकां एष्यति यास्यति तदा अत्र त्वरितं एत्य इदं फलं कियत् समुपभुज्य भुक्त्वा

## व्याकरणम् ।

ऋत ऐष्यत ईयङ् । ऋतीयते ॥ ११६ ॥

गुपयायः । गुप आयः स्यात् । गोपायति, पणायते ॥ ११७ ॥

असौ भवति पणितोऽपि च धूपितः । पणधूपाभ्यामपि असौ आयः स्यात् । धूपायितः ॥ ११८ ॥

साधवो हि ऋतीयाद्या बिभ्रति स्तेयकर्म्मणि ।
कृतेऽपणायितास्तु स्युर्व्वानरस्यात्र का त्रपा ॥ १२० ॥

इति तौ स्वस्थानमाजग्मतुः । अथ कृषीवले विपणौ गतवति लोमशः काकेन यथोपदिष्टमकरोत् । अथ कृषीवलः सायं क्षेत्रमागत्य फलानि अदृष्ट्वा आत्मगतम् अहो किमेतत् ।

कर्कटीप्रसवा गुप्ता ये तदीयाग्रगण्यकाः ।
त्रयो नेक्ष्यन्त ईक्ष्यन्ते रेखा नखभवा इमे ॥ १२१ ॥

हत हत गोपालैरिदमनिष्टमाचरितम् । अथवा शृगालैर्भक्षितं इति निश्चित्य परदिने च तथैव दृष्ट्वा विषसाद । अनन्तरं गोपालबालकमुखात् वानरातिक्रमं श्रुत्वा आह ।

कियन्त ग्रहं नये: आनये: यदपि फलं अमरराट् इन्द्रोऽपि कामयते । पक्षे स्वविप इति धनस्य विशेषेण पालकस्य सं । णिङ् १।, कम: ५।, ॥ ११९ ॥

साधव इति । साधवो हि साधव एव स्तेयकर्म्मणि ऋतीयाद्याः घृणाद्या बिभ्रति धारयन्ति आदिपदात् लज्जादेः परिग्रहः । कृते स्तेयकर्म्मणि कृते अपणिताः अप्रशंसिताः स्युः अत्र स्तेये कर्म्मणि वानरस्य का त्रपा का लज्जा ? । पक्षे सा इति अष्टीनां सं । धवः १।, (हि) ऋतीयाद्याः १॥, ॥ १२० ॥

ये कर्कटीति । ये कर्कटीप्रसवाः कर्कटीफलानि गुप्ताः पालिताः मयेति शेषः । तदीयाग्रगण्यकाः तेषां मध्ये अग्रगण्याः श्रेष्ठास्त्रयः प्रसवाः नेक्ष्यन्ते नखभवा इव रेखा दृश्यन्ते च । पक्षे । ये तदित्यन्तपूर्व्वभाग ष्ठ । खानेति कृतखमनचित्रभवसद्मानां सं । ईयाग्रगण्यकाः १॥, त्रयः १॥, न १।, ईक्ष्यन्ते ८॥, ईक्ष्यन्ते ८॥, (च) अरे ७।, ॥ १२१ ॥

व्याकरणम् ।

णिङ्मः । कमो णिङ् स्यात् कामयते ॥ ११९ ॥

धवो हि ऋतीयाद्याः धुसंज्ञाः स्युः । अपनायिताः ॥ १२० ॥

ईयाग्रगण्यकास्त्रयो नेक्ष्यन्ते ईक्ष्यन्तेऽरे । ईयाद्यास्त्रयः अरे परे कश्चित् दृश्यन्ते न दृश्यन्ते च अर्थात् वा स्युः । गुप्ताः ॥ १२१ ॥

व्यर्थो गोपाय क्लमोऽपि दीर्घया च मयाशया ।
दूरं जग्मेऽस्याहृतौ यदाक्लामं तमवैति कः ॥ १२२ ॥
सर्व्वोऽनश्यन्लषोऽघे हि रेवातीरे स्थिते कपौ ।
न भद्रं मे यतः सोऽतिबलो लष्यति कर्कटीम् ॥ १२३ ॥

बालकास्तं प्रति । दृष्टञ्चैतत् ।

तथात्र सोऽच त्रुटितोऽभ्रमोऽभ्रासस्तथाऽक्लमः ।
एति यादृक् खाच्युतं भं न वा त्रस्यति लोष्टतः ॥ १२४ ॥

व्यर्थ इति । गोपाय रक्षणाय क्लमः परिश्रमो व्यर्थः मे मम दीर्घया आशया च दूरं जग्मे गतम् । अस्य चैत्रस्य आहृतौ आह्वतिकरणे यत् आक्लामं क्लान्तिं प्राप्तोऽस्मि तत् को जनः अवैति जानाति । पक्षे । व्यर्थो गोपायेति पूर्ब्बसूत्रीयोदाहरणम् । आशयेत्यादिकं उ । क्लमः ६।, आचमः ६।, (दीर्घः १।, अपि ७।, ॥ १२२

सर्व्व इति । सर्व्वो लषः स्पृहा अनश्यत् नष्टः अघे पापात्मनि कपौ वानरे रेवानदीतीरे स्थिते सति मे मम न भद्रं न शुभम् । यतो यस्मात् स वानरः कर्कटीं लष्यति स्पृहयति । पक्षे । सर्व्वोन इति सर्व्वकनिष्ठस्य सं । तीरे इत्यादिकं उ ! श्यन् १।, लषः ५।, घे ७।, ( हि ) रे ७।, वा १।, ॥ १२३ ॥

तथेति । खात् आकाशात् च्युतं भं नक्षत्रं यादृक् एति तथा सोऽपि वानरः त्रुटितः अत्रात् अत्र एति आगच्छति कीदृशः अभ्रमः भ्रान्तिरहितः अक्लमः ग्लानिरहितः । लोष्टतोऽपि न त्रस्यति न बिभेति । पक्षे । एतीत्यादिकमुदाहरणवाक्यम् । तथा १।, त्रसः ५।, ( अपि । ) त्रुटितः ५।, भ्रमः ५।, भ्रासः ५।, क्लमः ५।, १२४ ॥

## व्याकरणम् ।

क्लमोऽपि दीर्घ आचमः । क्लम आचमश्च दीर्घः स्यादपि । आक्लामम् ॥ १२२ ॥
श्यन् लषो घे हि रे वा । लषः श्यन् स्यात् वा रे परे कर्त्तर्य्येव । लष्यति ॥ १२३ ॥
तथा त्रसोऽपि त्रुटितो भ्रमो भ्रासस्तथा क्लमः । एभ्योऽपि श्यन् स्यात् । त्रस्यति ॥१२४

विक्रस्यतेऽद एत्याति विक्रमः स समोऽयसः ।
तथायसो वायुधन्तं नाक्रामेदिति मन्यते ॥ १२५ ॥

कृषीवलः बालकमुखादिति श्रुत्वा सक्रोधमाह । तदस्तु ।

प्रशपेऽपि क्रमो दीर्घस्तथास्यातिपराक्रमः ।
यथा नश्येत् करिष्ये तत् यथाक्रामेत् पुनर्न सः ॥ १२६ ॥

ततस्तेन कृषीवलेन यथा स वानरः क्षीयात् तथैव विनियोजितः कोऽपि व्याधस्तस्मिन्नेव कानने दिग्धं शरं धनुषि सन्धाय अलक्षितोऽतिष्ठत् । तदेवं दृष्ट्वा एकनीड़ः सत्वरं स्वनीड़मागत्य लोमशं प्रति । सखे ! अद्य त्वया तत् क्षेत्रं न गन्तव्यम् । अपि च ।

अद्यानीतस्त्वया दीर्घोऽरये च स्फुटकर्कटः ।
प्रसवो दृश्यतामेको भयमीया न तत् कपेः ॥ १२७ ॥

---

विक्रेति । स वानरः अदः क्षेत्रं एत्य आगत्य विक्रस्यते । कीदृशः अतिविक्रमः अयसो लौहस्य समः । अयसो लौहस्य आयुधं शस्त्रमपि तं वानरं नाक्रामेदिति मन्यते । पक्षे । अतिवीत्यादिकं ज्ञं । अतिवि इति विं पक्षिणमतिक्रान्तमिति तत्तथा । क्रमः ५।, सः १।, समः ५।, यसः ५।, ( तथा ) आयसः ५।, ( वा १।, ) ॥ १२५ ॥

प्रशप इति । प्रशपेऽपि शपथमपि करोमि अस्य वानरस्य दीर्घःक्रमः अतिशयाक्रमणं तथातिपराक्रमो यथा नश्येत् तत् करिष्ये यथा येन प्रकारेण स वानरः पुनर्नाक्रामेत् । पक्षे । प्रश इति शयितस्य मं । शेषः ज्ञं ॥ १२६ ॥

अद्येति । अद्य त्वया आनीतः एकः स्फुटकर्कटः प्रसवः एकं कर्कटीसम्बन्धिफलं अरये शवये दृश्यताम् । तत् कपेः सकाशात् भयं न ईयाः न प्राप्स्यसि । दीर्घः १।, अरये ७।, अपः ६।, ॥ १२७ ॥

व्याकरणम् ।

क्रमः स समो यसस्तथा यसो वा । क्रमः सं यसः आयसश्च स श्वन् वा स्यात् । विक्रस्यते ॥ १२५ ॥

सोऽपि क्रमो दीर्घः । क्रमो दीर्घः स्यात् परस्मै पदे अपि परे । आक्रामेत् ॥ १२६ ॥

दीर्घोऽर येऽपः । अजन्तस्य दीर्घः स्यात् अरे ये परे । ईयाः ॥ १२७ ॥

साध्वसं मागमो गच्छ शितिकण्ठं स्मरन् सकृत् ।
यं स्मृत्वोपान्तकमपि गच्छन्नैति भयं नरः ॥ १२८ ॥
जिघ्र घ्राणगविल्वं यत् जिघ्रतो नाशुभं क्वचित् ।
एतत्तु ज्ञो जनो जानात्यज्ञो जानाति नैव तत् ॥ १२९ ॥
( लोमश एकनौड़ं प्रति । )
भवन् ! सहच्छत्वर्त्ति र्मे देहो नाद्यापि ऋच्छति ।
नगस्थस्तिष्ठ यावन्न आतिष्ठामि निजं गृहम् ॥ १३० ॥

साध्वसमिति । साध्वसं भयं मागमः न प्राप्नुहि सकृदेकवारं शितिकण्ठं शिवं स्मरन् सन् गच्छ । यं शिवं स्मृत्वा उपान्तकं अन्तकस्य यमस्य समीपमपि गच्छन् नरो भयं नैति न प्राप्नोति । पद्ये । साध्वसम्मा इति साधुना असम्मानितानां सम्बोधनम् । कण्ठेत्यादिकं उं । गमः ६।, गच्छ १।, शिति ७।, ॥ १२८ ॥

जिघ्रेति घ्राणगविल्वं नासिकागतविल्वपत्रं जिघ्र यत् विल्वं जिघ्रतो जनस्य क्वचिदपि नाशुभम् । एतत्तु ज्ञो बुधो जन एव जानाति अज्ञो जनो नैव । पद्ये । अनगविल्वमिति घ्राणगविल्वमित्यर्थः । नात्यज्ञ इति अत्यज्ञः पुरुष इत्यर्थः । जिघ्र १।, घ्रा १।, ज्ञः ६।, जनः ६।, जा १।, ॥ १२९ ॥

भवन्निति । हे भवन् ! सह ऋच्छतु अर्थात् मया सार्द्धं गच्छतु अद्यापि मे मम देहो शरीरसम्बन्धिनी अर्त्तिः पीड़ा न ऋच्छति न गच्छति । नगस्थो वृक्षस्थः सन् तिष्ठ यावदहं निजं गृहं न आतिष्ठामि अधितिष्ठामि पद्ये । सह इति सहिष्णोः सम्बोधनम् । मदित्यादिकं उं । ऋच्छ १।, (तु) अर्त्तिः १।, स्थः ६।, तिष्ठ १।, ॥ १३० ॥

## व्याकरणम् ।

गमो गच्छ शिति । गच्छन् ॥ १२८ ॥

जिघ्र घ्रा । जिघ्रतः । ज्ञो जनो जा । अनयोर्जा स्यात् शिति । जानाति ॥ १२९ ॥

ऋच्छ तु अर्त्तिः । ऋधातुस्तु ऋच्छ स्यात् । ऋच्छति स्थस्तिष्ठ । स्थाधातोः तिष्ठः स्यात् । आतिष्ठामि ॥ १३० ॥

एकनीड़ः विहस्य एवम्। किन्त्वेवम्। भवांस्तु ह्य आनीतं एकं कर्कटीफलं गृहीत्वा इतो निःसृत्य बलीमुखस्य साम्मुख्य-पथेनावृत्य आगच्छेः यथा स इदं फलं पश्येत्। यदा स एतत् फलं वा बलादपहरिष्यते तदा काकूक्त्या रुदन्नेवं ब्रूयाः।

एतन्मे यच्छतु सदा नय मोदेन किङ्करैः।
गर्भिण्या दोहदमिदं लोभमत्र नियच्छ तत्॥ १२१॥

यदा स चैत्रं द्रष्टुमिच्छेत् तदा एवं ब्रूयाः।

विप्रसीद सदोमध्ये न वाच्यं यदि मे श्रुतः।
चैत्रमुन्मूलयिष्यन्ति पुरा चैत्रौ विषीदति॥ १२२॥

यदि स प्रतिज्ञाय एकाकी एव चैत्रं गच्छेत् तदा अकाम इव दूरे स्थित्वा चैत्रं दर्शयिष्यसि इति। अथ लोमशोऽपि तथाकरोत्। बलीमुखोऽपि तस्मात् फलमाजहार। लोमशोऽपि एकनीड़ेन यथोपदिष्टं तथैवावदत्। तत् श्रुत्वा बलीमुखस्तं प्रति। एकाकी अहमेव चैत्रं गमिष्यामि। अथ दूरतस्थित्वा लोमशः चैत्रं दर्शयन्नाह।

---

एतदिति। एतत् फलं मे मह्यं यच्छतु ददातु भवानिति शेषः। किङ्करैर्दासैः करणभूतैः मोदेन हर्षेणैव सदा आनय चैत्रादिति शेषः। इदं फलं गर्भिण्या दोहदं अभिलषितभक्ष्यं तत् तस्मात् अत्र लोभं नियच्छ संयतं कुरु इत्यर्थः। पक्षे। एतन्मे सकाशात् शृणु इति शेषः। मदेनेत्यादिकं छं। यच्छ १।, (तु) सदानयमः ६।, ॥१२१॥

विप्रेति। विशेषेण प्रसीद सभामध्ये न वाच्यं यत् यस्मात् इमे वानराः श्रुतः सन्तः चैत्रमुन्मूलयिष्यन्ति पुरा उत्तरकाले च चैत्रौ विषीदति। विषादं प्राप्स्यति। श्रुत इति शृधातोः क्विपि रूपम्। पक्षे। विप्रेति सं। मध्य इत्यादिकं उं। सीद १।, सदः ६।, ॥१२२॥

व्याकरणम्।

यच्छ तु सदानयमः। दानसहितस्य यमो यच्छ स्यात्। नियच्छ॥ १२१॥

सीद सदः। विषीदति॥ १२२॥

नु ! वालिसदृश: पश्य तदिदं चेत्रमुत्तमम् ।
गच्छ भुङ्क्ष्व मितं शस्यं यावत् चेत्री न पश्यति ॥ १३३ ॥

अथ वलीमुखस्तत् चेत्रमगात् । अथ व्याधः ।

इच्छत्विषुरसौ कीश: वक्षःशोणितमद्य ते ।
इच्छ स्वर्गं त्वमप्याशु चेत्री भवतु विज्वरः ॥ १३४ ॥

भवत्कायेधमाधमतु मत्सर: पश्यतोहरः ।
धमन् कृषीवलस्यास्य दुःखं तीक्ष्णं वलीमुख ! ॥ १३५ ॥

इत्युक्त्वा स वाणं मुमोच। वानरस्तेन विद्धः पपात। एकनीड़स्तं प्रति ।

अहो कुञ्जरदेशीय ! शदस्तथाप: पिव किं भूशय्यायां अवशीयसे ॥ १३६ ॥

---

नुवालीति । नु भो: वालिसदृशस्त्वं वाली वानरविशेषस्तत् सदृशस्त्वं तदिदमुत्तमम् चेत्रं पश्य मितं परिमितं शस्यं फलं भुङ्क्ष्व । पद्यं । नु भोः वालिस इति वानरस्य सम्बोधनम् । दृश: ६।, पश्य १।, ॥ १३३ ॥

इच्छत्विति । हे कीश ! अद्य ते तव वक्षःशोणितं असौ इषुर्व्याण इच्छतु त्वमपि आशु शीघ्रं स्वर्गं इच्छ चेत्री कृषीवलो विज्वरो भवतु । इच्छ १।, (तु) इषुः १।, असौ १।, ॥ १३४ ॥

भवदिति । मत्सरो मम वाण: पश्यतोहरः स्वर्णकारः कृषीवलस्य दुःखं तीक्ष्णं दुःखरूपं लौहं धमन् सन् भवत्कायेधः तव शरीररूपं काष्ठं आधमतु । पद्यं । भवत्काये इति उत्पद्यमानशरीरायाः सम्बोधनम् । धा १।, धम १।, ॥ १३५ ॥

अहो इति । हे कुञ्जरदेशीय ! हस्तितुल्य ! शदो गतिशीलः सन् अपो जलं पिव । पद्यं । कुञ्जरदे ! इति हस्तिदावाः सं । भव इति च सं । शीय १।, शद: ६।, (यथा) पः ६।, पिव १।, ॥ १३६ ॥

व्याकरणम् ।

दृश: पश्य: । पश्यति ॥ १३३ ॥ इच्छत्विषुरसौ । इच्छ ॥ १३४ ॥

धा धम । धमतु ॥ १३५ ॥

शीव शदस्तथा पः पिव । अवशीयसे ॥ १३६ ॥

अथैकनीड़: स्वनीड़मागत्य लोमशं प्रति।

यं संस्मरन् वेपसेऽरिम् यम: सन्नस्य चाद्य तम्।
विदधे येन सोऽरिस्तेऽयंसीत् वैरानुबन्धत: ॥ १३७ ॥
येन नमितोऽपि न तमनंसी: ॥ १३८ ॥

अनु काक: तत्वृत्तान्तं कथयामास सर्व्वे वानरास्तं साधुसाध्विति।

इति नाव्यपरिशिष्टनाम नाटके सप्तमरालुग्रल्लासे सुबन्धुशिष्ययो: संवादे प्रथमोऽध्याय:।

---

यमिति। यं अरिं संस्मरन् सन् वेपसे कम्पसे अद्य सन् साधुर्यम: अस्यारेस्तद् विदधे। येन हेतुना ते तव सोऽरिर्व्वैरानुबन्धत: प्रभावात् अयंसीत् उपरतोऽभवत्। पद्ये। यमिति उपरतस्य, संस्मरन्निति स्मरत:, वे इति पक्षिण: सम्बोधनम्। अद्येत्यादिकं उं। पसे: ६।, इम् १। यम: ५।, सन् १।, अस्य ६।, ( च ) ॥ १३७ ॥

येनेति। येन वलीमुखेन त्वं नमितोऽपि तं वलीमुखं न अनंसी: न प्रणतवान् स: अरि: वैरानुबन्धत: अयंसीदिति पूर्व्वेणान्वय:। पद्ये। येनेति यायी: प्रभोश्च सम्बोधनम्। नमित: ५।, (अपि ) १३८ ॥

### व्याकरणम्।

पसेरिम् यम: सन्नस्य च। यम इम् स्यात् पसे: तस्य च सन्। अयंसीत् ॥ १३७ ॥

नमितोऽपि। अनंसी: ॥ १३८ ॥

( सुबन्धुः नृपं प्रति । )

रमातोपि बलाद्वापि उच्छ्रिताः परहिंसकाः ।
अरंसिषुरजय्या ये उपायेनैव ते हताः ॥ १ ॥
विश्वासं न जिगीषौ विषयेऽपि सन्‌षष्ठेऽजेर्गिरिशस्य ।
योगिनोऽपि सत आरात् क्रूरः कामो धृतिं सुजिगाय ॥२॥
हे षोढः कः सेवते वा सुखस्वापं स यत् खलः ।
श्रीरस्य नङ्क्ष्यति कथमिति चिन्ताज्वरो सदा ॥ ३ ॥

---

रमेति । रमातः सम्पत्तितः बलाद्वा बलवीर्य्येण वा ये परहिंसकाः अजय्या जेतुमशक्या उच्छ्रिता उन्नताः सन्तः अरंसिषुः चिक्रीडुः ते जनाः उपायेनैव हताः । रमातः ५।, ( अपि १ ) ॥ १ ॥

विश्वेति । षष्ठेपि विषये देशे सन् वर्त्तमानः जिगीषौ जने विश्वासं न अजेः न प्राप्नुयाः । आरात् दूरे सतो वर्त्तमानस्य योगिनो गिरिशस्य क्रूरः कामो धृतिं धैर्य्यं सुजिगाय सुखेन जितवान् । पक्षे । पूर्व्वापरभागौ उं । विषये ७।, ( अपि ) सन्—षष्ठे ७।, जेः ६।, गिः १।, ॥ २ ॥

हेषेति । हेषोढः हेषं वहतीति हेषोढः अर्थात् विद्वेषी को वा जनः सुखस्वापं सुखेन निद्रां सेवते । यत् यस्मात स खलः अस्य जनस्य श्रीः कथं नङ्क्ष्यति इति चिन्ताज्वरी सदा अस्ति । पक्षे । हे इति हयोः सम्बोधनं । षः ६।, ढः ६।, कः १।, से ७।, ॥ ३ ॥

व्याकरणम् ।

रमातोपि । रम आदन्ताच्च इम् सन् स्यात् । अरंसिषुः । १ ॥

विषयेपि सन्—षष्ठे जेर्गिः । षष्ठविभक्तौ सनि च जेर्गिः स्यात् । जिगीषौ । जिगाय । २ ॥

षो ढः कः से । नङ्क्ष्यति । ३ ॥

यो नान्यतोता रुषितोऽरिस्त्वा तस्य नरस्य हि ।
द्वेष्टारञ्च न पश्यामि तं रोष्टा तविताऽपि कः ॥ ४ ॥
श्रोतव्यमेतद्धरणीट् सह्योऽलुभोऽरिषस्तथा ।
वसस्तुतः शुक्भृतस्तु वस्तारो न यथा प्रजाः ॥ ५ ॥
यदा विपक्षः सद्वृत्तः श्रीप्रतापैर्यशो महः ।
भरिता वीक्ष्य तद्दूनो न शोक्तासि क्षणं स्मरन् ॥ ६ ॥

योनेति । यो जनो न अन्यस्य तोता न हिंसकः अरुषितः रोषरहितः तस्य नरस्य अरिं द्वेष्टारञ्च न पश्यामि रोष्टा सन् को जनस्तं जनं तविता हिंसां करिष्यति अपि तु न कोपीत्यर्थः । पक्षे । पूर्व्वापरभागौ ज्ञं । रुषितोः ५।, इम् १।, वा १।, तस्य ६।, नरस्य ६।, ॥ ४ ॥

श्रोतव्यमिति । एतत् श्रोतव्यं । हे धरणीट् ! राजन् ! सह्यः सहिष्णुः अलुभो लोभरहितः अरिषः हिंसारहितः सन् स्तुतः प्रशंसितः सन् तथा तेन प्रकारेण वस वासं कुरु । यथा येन प्रकारेण प्रजाः शुक्भृतः अर्थात् शोकार्त्ताः सत्यः न वस्तारः न वासं करिष्यन्ति । पक्षे । हे धरणि ! धारणशीले ! एतत् श्रोतव्यमिति तु शिष्यावधानार्थं । इट् १।, सह्यः ५।, लुभः ५।, रिषः ५।, ( तथा ) वसः ५।, तुदः ५।, शुक्-भृतः ५।, ( च१ ) ॥ ५ ॥

यदेति । विपक्षो जनः श्रीप्रतापैर्यदा सद्वृत्तः साधुवृत्तिशाली स्यात् यशो महश्च तेजश्च भरिता धारयिष्यति तत् वीक्ष्य दूनो दुःखितः सन् न शोक्तासि शोकं न करिष्यसि । किं कुर्व्वन् क्षणं समयं स्मरन् समयं प्रतीक्षमाण इत्यर्थः । पक्षे । सूत्रस्य ज्ञं । ६ ॥

व्याकरणम् ।

रुषितोरिस्त्वा तस्य नरस्य । रुषस्तोर्थ परस्य रभिन्नस्य तस्य इम् वा स्यात् । तोता, रोष्टा, तविता ॥ ४ ॥

इट् सह्योलुभो रिषस्तथा वसस्तुतः शुक्भृतश्च । एभ्यः परस्य करस्य तस्य इम् वा स्यात् । वस्तारः । ५ ॥

भरिता, शोक्तासि ॥ ६ ॥

स्तविताऽसि तदाऽमित्रं सोढ़ास्यस्य च तन्महः ।
नैषितासि तदा द्वन्द्वं न लोब्धास्यस्य सम्पदि ॥ ७ ॥
वसितासि प्रतीच्याहर्यदा भावी व्यसन्यसौ ।
जेतुमेष्टासि तं तर्हि रोषितासि च तं बलात् ॥ ८ ॥
( शृणु सुमन्त्रनाम राजा । )
सदाश्लिषो गुणी सत्य आश्लेषे विषये सति ।
पञ्चमे द्रविडेऽस्तित्स्म नाश्लिक्षत् यस्तु नास्तिकम् ॥ ९ ॥

---

स्तवितेति । तदा तस्मिन् काले शत्रोः सद्वृत्तिदशायां अमित्रं शत्रुं स्तवितासि स्तवं करिष्यसि अस्य शत्रोर्महश्च तेजश्च सोढ़ासि सहिष्णुर्भविष्यसि तदा तस्मिन् समये द्वन्द्वं विवादं न एषितासि नेच्छां करिष्यसि अस्य शत्रोः सम्पदि न लोब्धासि लोभं न करिष्यसि । पद्ये । सूत्रस्य ऌं । ७ ॥

वसीति । अहर्दिनं प्रतीच्य वसितासि वासं करिष्यसि । यदा असौ शत्रुः व्यसनी अष्टादशव्यसनयुक्तो भावी तर्हि तदानीं तं शत्रुं जेतुं एष्टासि इच्छां करिष्यसि । "तदुक्तं । तदा यायाद्रिपोर्व्वैरं व्यसने चोत्थिते रिपोरिति" । रोषितासि हिंसां करिष्यसि । पद्ये । सूत्रस्य ऌं । ८ ॥

सदेति । पञ्चमे द्रविडे आश्लेषे एकदेशसम्बन्धे सति साधौ विषये देशे अस्तिस्म आसीत् । यो राजा नास्तिकं न अश्लिक्षत् आलिङ्गनं न चकार । कीदृशः सदाश्लिषः सतः साधोराश्लिषः संसर्गकर्त्ता गुणी गुणवान् सत्यः सत्यविशिष्टः । सदा ७।, श्लिषः ५।, गुणी १।, सत्यः १।, आश्लेषे ७।, विषये ७।, सति ७।, पञ्चमे७, ॥ ९ ॥

व्याकरणम् ।

स्तवितासि, सोढ़ासि, एषितासि, लोब्धासि ॥ ७ ॥

वसितासि, एष्टासि, रोषितासि ॥ ८ ॥

सदाश्लिषो गुणी सत्य आश्लेषे विषये सति पञ्चमे । परन्तु पञ्चमविभक्तौ ज्ञानविषये सति श्लिषधातोर्नित्यं अगुणो सप्रत्ययः स्यात् आलिङ्गनार्थे । अश्लिक्षत् । ९ ॥

सदैव सदुपान्तेचो निर्मोहात् शान्ततो दृशः ।
त्रिकालस्याप्तविद्यो योऽमिचद्वाक्सुधया जगत् ॥ १० ॥
केषान्ततस्त्वेष्टलाभो नाभवत् पृथिवीपतेः ।
नाक्रचत् कस्य वा चेतः प्रियवाग्गुणशीलतः ॥ ११ ॥

अथ, राज्ञस्तस्य सभायां द्रविड़ेश्वरप्रेरितो वार्त्तावहो लिपिं समर्पयति । यथा ।

नृवरोजभ्भसि गुणिनि श्रयतेऽच्चषः
स्पृशि त्वपच हृपोऽस्पृषोऽपि स्पृपो भवति ।

---

सदेति । स कीदृशः सदैव सदुपान्तेचः सतां उपान्ते समीपे चरतीति स तथा । शान्ततः शान्तात् शान्तिरसप्रधानात् आप्तविद्यः शान्तात् कीदृशात् निर्मोहात मोहरहितात् त्रिकालस्य दृशः त्रिकालज्ञात् । दृक् ज्ञाने ज्ञातरि त्रिष्विल्यनुशासनात् । यद्वा त्रिकालस्य द्रष्टुः । यो राजा वाक्सुधया जगत् अमिचत् सिसेच । (सदा) (एव) सदुपान्तेचः ५।, अनिमः ५।, ह्वान्तात् ५।, शान्ततः ५।, अदृशः ५।, ॥ १० ॥

केषामिति । ततस्तस्मात् पृथिवीपतेः सकाशात् केषां इष्टलाभश्च न अभवत् अपि तु सर्व्वेषामेव । स राजा प्रियवाक्येन गुणेन शीलेन सद्वृत्तेन च कस्य चेतो न अक्रचत् न आकर्षणं चक्रे । पचे । के इति सुखविशिष्टायाः सं । शेषः ङ । षान्ततः ५।, (च) ॥ ११ ॥

### व्याकरणम् ।

सदैव सदुपान्तेचोनिर्मोह्वात् शान्ततोऽदृशः । सत् वर्त्तमान उपान्ते अन्तसमीपे इत् यस्य तादृशात् अनिमो ह्वान्तात् शान्ताच्च दृशवर्ज्जात् अगुणो स-प्रत्ययः स्यात् पञ्चमे परे । अमिचत् । १० ॥

षान्तश्च । तादृशषान्तादपि स्यात् । अक्रचत् । ११ ॥

क्वचित् भवान् नृपतीन् विजिगीषुस्तत्
याचे त्वां स्रष्टारं राज्यं युद्धं वा ॥ १२ ॥
मदाऽस्रजो दृशो वारि येषां क्षुद्रमहीभुजाम्।
तेऽद्य द्रक्ष्यन्ति तेऽश्रूणि स्रक्ष्यन्ति स्वास्रु नन्दिजम् ॥ १३ ॥

अथ सुमन्त्रो राजा पत्रार्थमवगत्य मन्त्रिभिः संमन्त्र्य प्रत्युत्तरं निलेख। यथा।

नाशि त्ये जातु वाञ्छन्ति न सुखं दुःखमिश्रितम्।
राज्यादिजं मनो येषां ध्येये नित्यसुखे चखौ ॥ १४ ॥

---

नृवरेति। हे नृवर! गुणिनि गुणिजने वजभसि ददासि इति श्रूयते। कीदृशः स्रशि दानविषये अक्षषः अकातरः त्वपश्च त्वक्षश्च क्वचिदपि समये भवान् दृपो दर्पितो अस्रषोपि अश्रान्तोपि सन् नृपतीन् विजिगीषुर्जेतुमिच्छुः सन् स्तपो गमनशीलो भवति इत्यपि श्रूयते इति पूर्व्वेणान्वयः। तत् तस्मात् स्रष्टारं दातारं त्वां राज्यं युद्धम्वा याचे। स्रशनं प्रतिपादनमिति कोषात् सृशधातोर्दानार्थकत्वं। पत्रे। नृन् वाति गच्छतीति नृव इति यायीः सं। भवानित्यादिकं उ॑, रः १।, अच् १।, भसि ७।, श्रूयते ८।, क्षषः ६।, स्रशि-त्वपः ६।, गुणिनि ७।, (च) दृपः ६।, स्रषः ६।, स्तपः ६।, भवति ८।, क्वचित् ७।, ॥१२॥

मदेति। येषां क्षुद्रमहीभुजां राज्ञां दृशो वारि चक्षुषो जलं अस्रजः सृष्टिं कृतवानसि ते महीभुजः तव अश्रूणि अद्य द्रक्ष्यन्ति नन्दिजं नन्दिरानन्दस्तेन जनितं स्वास्रु स्वकीयं नेत्राम्बु अर्थात् आनन्दास्रु स्रक्ष्यन्ति। मदा ७।, स्रजः ६।, दृशः ६।, (च) ॥१३॥

नाशीति। नाशि धननाशे राज्यादिजं राज्यादिजन्यं सुखं दुःखमिश्रितमिति जातु कदाचिदपि त्ये ते जनाः न वाञ्छन्ति। येषां जनानां ध्येये ध्यानविषये नित्य-सुखे नित्यसुखस्वरूपे मनश्चित्तं चखौ स्थिरमासीत्। चखाविति खे स्थैर्य्ये इत्यस्य रूपं पत्रे। न इति क्षुद्रस्य सं। अशिति ७।, एत् १।, आ १।, ॥ १४ ॥

व्याकरणम्।

रोऽच्भसि गुणिनि श्रूयते क्षसृशित्वपश्च दृपो स्रषोपि स्तपो भवति क्वचित्! क्षादीनां अच् रः स्यात् गुणिसंज्ञके भसि परे क्वचित् अर्थात् विकल्पेन। स्रष्टारं। १२॥

मदा स्रजो दृशश्च। अनयोरच् रः स्यान्नित्यं। द्रक्ष्यन्ति, स्रक्ष्यन्ति। १३॥

आशित्येजा। औरेच आ स्यात् अशिति। ध्येये, चखौ। १४॥

ततो राजर्षे! योगिनस्तव क्लेशसाध्यं नोपयुज्यते। अपि च।

शूरेण वादन्ततयोस्तद्बाह्वोरन्तरं गतः।
न कुर्य्यात् दुर्बलो जातु यो दधौ मतिमुत्तमाम्॥ १५॥

ततो बलवता भवता सार्द्धं मम विवादो न युज्यते। किन्त्वेवमपि।

उ स्यान्नाशो मृधे राज्ञां शस्तः स्वाराज्यसिद्धये।
के वाग्ुः क्षत्रिया युद्धात् भीतिं नरकसाधनीम्॥ १६॥

ततो युद्धान्न बिभेमि। अपि च।

शूरे नरे गुणिन्यच्यात् क्षितिर्यद्वीरवल्लभा।
आ न भोज्या यन्नृपेन्द्राः केऽपि तां न चिरं दधुः॥ १७॥

शूरेणेति। दुर्बलो जनः जातु कदाचिदपि शूरेण सह वादं विवादं न कुर्य्यात् किम्भूतः ततयोर्व्विस्तृतयोस्तद्बाह्वोस्तस्य शूरस्य भुजयोरन्तरं मध्ये गतः। अर्थात् दुर्बलो राजा शूरेण क्रोड़ीकृत इव आस्ते स तेन वादं न कुर्य्यादिति भावः। यो जनः उत्तमां मतिं बुद्धिं दधौ। पचे। शूरे इति शूरायाः सं। न १।, आदन्ततः ५।, ओः १।, ॥ १५॥

उस्यादिति। उ भोः मृधे युद्धे राज्ञां नाशो मृत्युः स्वाराज्यसिद्धये स्वर्गरूपराज्यसिद्धये शस्तः प्रशस्तः स्यात्। के वा क्षत्रिया नरकसाधनीं युद्धात् भीतिं अगुः प्राप्तवन्तः अपि तु न कोऽपीत्यर्थः। पचे। मृधे इत्यादिकं उं। उसि ७।, आत् १।, नाशः १।, ॥ १६॥

शूर इति। गुणिनि गुणयुक्ते शूरे वीरे नरे पुरुषे क्षितिः पृथिवी अच्यात् गम्यात्। यत् यस्मात् सा क्षितिः वीरवल्लभा वीरभार्य्या इति सापि न भोज्या न भोकयोग्या। यत् यस्मात् केपि नृपेन्द्रास्तां क्षितिं चिरं न दधुः। पचे। शूरे इति बलवत्याः सं। न १। रे ७।, अगुणिनि ७।, अचि ७।, आत् १।, क्षितिः १।, ॥ १७॥

व्याकरणम्।

णप् आदन्ततः ओः। आदन्तात् णप् ओः स्यात्। दधौ। १५॥

उस्यान्नाशः। आकारस्य नाशः स्यादुसि परे। अगुः। १६॥

नरे गुणिन्यच्यात् क्षितिः। अगुणे अचि परे धोः आतोलोपः स्यात् नतु रे। दधुः॥ १७॥

तथेमे चिरसञ्चिताः कोषा अपि दत्तभुक्तफला
इति न दधे तान् प्रति शोकम्॥ १८॥

अपि च। यथार्थानुभवविहीना इह खलु क्रोधलोभमदमत्सर-विषमयसरसि अवगाहमानाः सुखमनुभवन्ति नहि तैर्भवताप-हरेऽमृतमयप्रवाहे दृष्यतेऽपि वगाहामोदस्तिष्ठति सोप्यन्तस्थाने ईरय वरे गुणमयेऽसत्ये मनस्तस्मात् राजन्! किं परवित्ते मन आधीयते भवता॥ १९॥ अन्यच्च।

दिवाष्टमविभक्तौ ये ए राजन्! शाकपाचकाः।
तेषां देहाः किं न पुष्टाः स्थेयासुः किं हविर्भृताः॥ २०॥

तथेति। कोषा धनसमूहाः। तथा १।, (इम् एचि) इमेचि ७।, ॥ १८॥

यथार्थेति। यथार्थानुभवविहीना जना इह संसारे क्रोधलोभमदमत्सरस्वरूपं यद्विषं तन्मयं तत्स्वरूपं यत् सरः सरसी तत्र अवगाहमानाः सन्तः सुखं अनुभवन्ति। एतेन संसारस्य विषमयसरोवरतुल्यत्वमुक्तं। तैर्जनैर्भवतापहरे संसारतापनाशके अमृत-मयप्रवाहे वगाहामोदः अवगाहजनित आमोदो नदृश्यतेपि। ननु सोऽमृतमय-प्रवाहः क दृश्यत आह। सोपि अमृतमयप्रवाहोपि अन्तःस्थाने हृन्मध्यस्थाने तिष्ठति। तस्माद्धेतोः सत्ये सत्यस्वरूपे गुणमये गुणस्वरूपे वरे सर्व्वश्रेष्ठे मनः ईरय नियोजय। ह अवधारणे। पूर्व्वापरभागौ उं। दृष्यते ८।, पिव-गा हा मः ६।, दः ६।, तिष्ठति.सः ६।, (अपि) अन्तस्थाने ७।, ईः १।, (अयप् अरे) अयवरे ७।, अगुणमये ७।, ऽसत्ये ७।, ॥१९॥

दिवेति। ए राजन्! हे राजन्! दिवसस्य अष्टमभागे नराः शाकपाचकाः तेषां देहाः शरीराणि किं पुष्टा न भवन्ति हविर्भृताः घृतेन पुष्टास्ते देहाः किं स्थेयासुः स्थास्यन्ति। पक्षे। दिव इति क्रीडायुक्तस्य सं। आजन्निति सम्यक् जायमानस्य सं। अष्टमविभक्तौ ७।, ये: १।, एः १।, । २०॥

व्याकरणम्।

तथेमेचि। इमि एचि च परे तथैव स्यात्। दधे। १८॥

दृष्यते पिवगाहामोदस्तिष्ठतिसोप्यन्तस्थाने ईरयवरे अगुणमये ह्रस-त्ये। पिवादी-नामन्तस्थाने ईः स्यात् यप्भिन्नरभिन्न अगुणह्रसप्रत्यये परे। आधीयते॥। १९॥

अष्टमविभक्तौ ये एः। पिवादीनामन्तस्थाने एः स्यात् अष्टमस्य ये परे। स्थेयासुः॥२०॥

जाताख्य: स्याद्यस्य वादे रिपुरप्यौपदेशिकम् ।
यदाम्नायात् स तत् ध्येयात् ना ख्येयादतथाविधे ॥ २१ ॥

अत: सदुपदेशार्थं वृद्धा: सेवनीया: । यथा ।

ऋतोऽरि: स्यात् क्षत्रियाणां नाशो नाशक एव वा ।
म्रियुस्तदर्थं किं व्यर्थं क्षुद्रा: सम्बान्धबान्धवा: ॥ २२ ॥
तथाश्रय किलात्मीयान् ध्रियन्ते ते यथा सुखै: ।
यदर्थं सम्पद: किन्तान् घातयित्वा सुखी वसे: ॥ २३ ॥

जातेति । यस्य जनस्य वादे वचने जाताख्य: जाता आख्या श्रद्धा यस्य स तथा तादृश: स्यात् स जन: रिपुरपि औपदेशिकं उपदेशाय हितं यत् आम्नायात् कथयिष्यति स तत् ध्येयात् तदेव चिन्तयेत् अतथाविधे अनुपदेशिके न ख्येयात् । पक्षे । जात इति सं । रिपुरित्यादिकं उ' । अस्य: ६।, स्याद्यस्य ६।, वा १।, आत् १।, ए: १।, ॥ २१ ॥

ऋत इति । ऋत: प्रदीप्त: अरि: शत्रु: क्षत्रियाणां नाशो नाशक एव वा भवति तदर्थं कस्य क्षत्रियस्य निमित्तं क्षुद्रा: सम्बन्धिबान्धवा: किं व्यर्थं कथं निरर्थकं म्रियु: मरिष्यन्ति । ऋत: ६।, रि: १।, स्यात् ८।, ॥ २२ ॥

तथेति । तथा तेन प्रकारेण आत्मीयान् आश्रय भीजय यथा येन प्रकारेण ते आत्मीया: सुखैर्ध्रियन्ते तिष्ठन्ति यदर्थं येषां प्रयोजनाय सम्पद:, तान् घातयित्वा किं कथं सुखी सन् वसे: वासं कुर्य्या: । किलेत्यागमवार्त्तायाम् । पक्षे । ल इति द्वन्द्वस्य सं । आत्मीयेत्यादिकं उ' । एषामेकवाक्यता च यथाकथञ्चित् कार्य्या । तथा १।, श्र यकि ७।, ॥ २३ ॥

व्याकरणम् ।

अस्य: स्याद्यस्य वादे: । स्यावर्ज्जस्य संयोगाद्यस्य आत् ए: स्यात् वा अष्टमस्य ये परे आम्नायात्, धेयात्, आख्येयात् । २१ ॥

ऋतो रि: स्यात् । अष्टमस्य ये इत्यनुवर्त्तते । म्रियु: ॥ २२ ॥

तथा श्र यकि । ध्रियन्ते । २३ ॥

( अपि च ) भद्रासनातपत्रादि विभवोऽपि नृपाणां यावच्छुभादृष्टं
ध्रियते स तु तेषां पुनः समयान्तरे उत्पन्नेऽघे द्रुतः सुतोऽङ्ग !
स्वयमेवेति न हि तद्भावयतोऽपि मेऽश्रूणि असुस्रुवन् ॥ २४ ॥

अशिश्रियत् धरणिचः कं श्रितश्च नभश्चरः ।
यं स ईशोऽचकमत यत्तदेव भविष्यति ॥ २५ ॥

( यतः । ) वर्त्तिष्ये सदबाधेऽटोऽध्वन्यर्दित उतापि न ।
हनिष्याम्यप्रतिबलान् नार्दिदन् ये च मां पुरा ॥ २६ ॥

---

भद्रेति । भद्रासनं सिंहासनं आतपत्रं छत्र तद्रूपो विभवश्च यावत् शुभादृष्टं शुभादृष्ट-पर्य्यन्तं ध्रियते तिष्ठति धृञ्ङ्स्थिताविल्यस्य रूपं । समयान्तरे कालान्तरे तेषां नृपाणां अघे पापे व्यसने वा उत्पन्ने सति हे अङ्ग ! स हि स च सिंहासनादिविभवः स्वयमेव द्रुतः शीघ्रगः सन् सुतश्चलितो भवेत् । इति भावयतश्चिन्तयतः मे मम अश्रूणि नहि असुस्रुवन् अपि तु अपतन्नेव । पक्षे । समय इति सम्यक् शुभावहविधिभाजः सम्बोधनं । भद्रासनेत्यादिकं पूर्व्वसूत्रीयं उ' । ग इति गणेशस्य सं । अन्यत् उ' । अन्त—रे ७।, उत्पन्ने ७।, घे ७।, भवेत् ८।, द्रुतः ५।, सुतः ५।, अङ् १।, ॥ २४ ॥

अशीति । धरण्यां चरतीति धरणिचः मनुष्यादिः कं जलं श्रयतीति कंश्रितो मत्स्यादिः नभश्चरो वायसादिः यं ईश्वरं अशिश्रियत् आश्रितवान् स ईशः यत् अचकमत इच्छतिस्म तदेव भविष्यति । पक्षे । धर इति धारकस्य सम्बोधनं । शेषः उ' । णिचः ५।, कम श्रितः ५।, ( च ) ॥ २५ ॥

वर्त्तीति । सदबाधे सदां गन्तॄणां नास्ति बाधा दुःखं यस्मिन् तादृशे अध्वनि पथि अटः गच्छन् सन् वर्त्तिष्ये उत भोः अर्दितोपि निर्यातितोपि अप्रतिबलान् अतुल्य-बलान् न हनिष्यामि ये च जनाः पुरा पूर्व्वं मां न आर्दिदन् नापीडयन् । पक्षे । सद इति गमनशीलस्य सं । वर्त्तिष्ये इति पूर्व्वसूत्रीयोदाहरणम् । वा १।, घेटः ५।, ध्वन्यर्द्दितः ५।, ॥ २६ ॥

व्याकरणम् ।

अन्त-रे उत्पन्ने घे भवेत् द्रुतः सुतोऽङ् । द्रु स्रोरङ् स्यात् कर्त्तरि अन्यरसंज्ञके परे भयात् पञ्चमविभक्तौ । असुस्रुवन् । २४ ॥

णिचः कम् श्रितश्च । णिजन्तकमृश्रिभ्योपि अङ् स्यात् । अचकमत । २५ ॥

वा घेटो ध्वन्यर्दितः । घेट ध्वनि अर्दिभ्योऽङ् वा स्यात् । आर्द्दिदन् । २६ ॥

तदस्तु वाग्जालेनालम्। इदन्त्ववधेयम्। आवयोरेकतरस्यैव राज्यलाभः फलं तदर्थं क्षुद्राः कियन्तः स्वजना म्रियन्ताम्। अतो मन्वादिपुण्यदिने आगमिष्यते प्रतिरूपायार्थिने अतिथये तुभ्यं गदायुद्धं दास्यामि तदङ्कं वीरपानस्वादधमिति जानीहि ॥ २७ ॥

अस्य प्रत्युत्तरलिपिमपि याचे। सुबन्धुः। अथ वार्त्तावह एवं लिपिं गृहीत्वा प्रस्थाय कलिङ्गराजाय तल्लिपिमर्पयति स्म। अथ कलिङ्गः।

विदन् स वीर्य्यभाक् ख्यातो वचोऽस्य लिपितस्तथा।
ह्रासिक्तोऽभूत् शुचिरिव हविषाख्यदिदं वचः ॥ २८ ॥

रे दूत! स किं मम प्रतिबलः? एवं वक्तोऽनया मां प्रति अख्यत्। तद्भवतु।

आवयोरिति। वीरपानं युयुत्सूनां दृष्टपानं वीरपानन्तु यत्पानं वृत्ते भाविनि वारणे इत्यमरः। अदधं अपिबमित्यर्थः ॥ २७ ॥

विदन्निति। ख्यातो विख्यातो वीर्य्यवान् स कलिङ्गः लिपितः अस्य राज्ञः तथा वचस्तादृक् वाक्यं विदन् जानन् सन् ह्रासिक्तः ह्रा स्पर्द्धा तया आसिक्त आविष्टोऽभूत्। क इव हविषा शुचिरग्निरिव इदं वच आख्यत् उवाच। पक्षे। विदन्निति ज्ञानिनः सं। सवीर्य्यम इति वीर्य्यसहितदीप्तिमतः सं। अभूदित्यादिकं उं। अक् १।, ख्यातः ५।, वचः ५।, अस्य लिपितः ५।, (तथा) ह्रासिक्तः ५।, ॥ २८ ॥

व्याकरणम्।

अक्ख्यातो वचोऽस्य लिपितस्तथा ह्रासिक्तः। ख्या, वच, अस, लिप, ह्वेञ्, सिचेभ्योऽक् स्यात् अन्तरसंज्ञके परे। आख्यत्। २८ ॥

आरत् तस्याशुभो घस्रः स्याद्वा लिप्यादितस्तु मे ।
कोऽर्थो यदह्वतैवं स नाशयिष्यामि तस्य सः ॥ २९ ॥

तस्मात् संसप्तकाः सज्जीभवन्तु अद्यैव प्रस्थास्यामि शरा मे चिरं पिपासवः सन्ति । मन्त्री । दूतसमक्षं राजानं प्रति ।

तादृक् ऋतो गुणः स्याच्चेत् तस्यैवं शस्यते वचः ।
यो नादर्शत् भवद्वीर्य्यं स एवं वक्तुमर्हति ॥ ३० ॥
यत्कीर्त्तयो दिग्दिगन्तमसरन् रिपवोऽपि ते ।
यद्राज्यदुर्गतामार्षीदब्धिः प्रतिबलोऽस्य कः ॥ ३१ ॥

आरदिति । तस्य नृपस्य अशुभो घस्रो दिनं आरत् आगतः लिप्यादितो वा प्रत्युत्तरलिपितो वा मे मम कोऽर्थः किं प्रयोजनं स्यात् । स राजा एवं उक्तक्रमेण यदह्वत यत् स्पर्द्धां कृतवान् तस्य नृपस्य तन्नाशयिष्यामि । पक्षे । अशुभोघ इति अशुभसमूहविशिष्टस्य सं । कोऽर्थ्यादिकं उं । सः ५।, स्यात् ८।, वा १।, लिप्यादितः ५।, ( तु ) मे ७।, ॥ २९ ॥

संसप्तकाः प्रतिज्ञाय युद्धादनिवर्त्तिनः । तादृगिति । चेत् यदि तादृक् उक्तानुरूपः ऋतः मदीयो गुणः स्यात् तदा तस्य जनस्य एवं उक्तरूपं वचः शस्यते यो जनो भवद्वीर्य्यं नादर्शत् स एव जनः एवं वक्तुमर्हति । पक्षे । ता इति चौराणां सं । शेषः उदाहरणवाक्यं । इक्-ऋतः ५ । गुणः १।, स्यात् ८।, ॥ ३० ॥

यदिति । यस्य कीर्त्तयो रिपवोपि दिग्दिगन्तं असरन् प्रस्थिताः अब्धिः समुद्रो यस्य नृपस्य राज्यस्य दुर्गतां जलदुर्गरूपतां आर्षीत् प्राप । एतेन आसमुद्रमस्य राज्यमित्युक्तं । अस्य जनस्य कः प्रतिबलोऽस्तीत्यन्वयः ॥ पक्षे । सूतस्य उदाहरणम् । ३१ ॥

व्याकरणम् ।

सः स्याद्वा लिप्यादितस्तु मे । सुपूर्व्यां वा स्यात् लिपादिभ्यस्तु मे वा स्यात् । अह्वत । २९ ॥

इक् ऋतो गुणः स्यात् । अक् अनुवर्त्तते । अदर्शत् । ३० ॥

असरन्, आर्षीत् । ३१ ॥

यथा तपसि लुक् साधो ! वारिजानां श्रियस्तथा ।
तवारिवनितावक्त्रनलिनश्रीरसान्नृप ! ॥ ३२ ॥
घ्रातश्छातोऽप्येणतोको हिंस्यते न मृगादनैः ।
यस्य दण्डभयात् योऽच्छात् हिंस्यान् तस्य समोऽस्ति कः ॥ ३३ ॥
ईदृशस्य ते दुर्बलेषु रोषो न युज्यते । यतः ।
महाबल ! स्याद्यस्यर्त्तौ गुणोऽगुणरयेऽपि च ।
अर्त्तेर्लेशं स नो दत्ते यत्तेनर्त्तिः सदार्य्यते ॥ ३४ ॥

यथेति ॥ हे साधो ! तपसि शिशिरसमये यथा वारिजानां पद्मानां श्रियो लुक् नाशो भवति तथा तवारिवनितानां वक्त्रनलिनश्रीर्मुखपद्मश्रीः असात् नष्टा अभवत् पक्षे । यथा त इति यथार्थस्य सं । अरिजानामित्यादिकं उं । प-सि १ । लुक् १।, सा-ध: ६।, वा १।, ॥ ३२ ॥

घ्रात इति । छातो दुर्ब्बलः एणतोको हरिणशिशुः घ्रातोपि घ्राणेन्द्रियविषयोपि मृगादनैः व्याघ्रैः यस्य दण्डभयात् नो हिंस्यते न हन्यते यो अरीन् हिंस्यान् अच्छात् छिनत्तिस्म तस्य समः कोऽस्ति । घ्रात: ५।, छात: ५।, ( अपि । ) ॥ ३३ ॥

महेति । हे महाबल ! यस्य जनस्य ऋतः प्रदीप्तो गुणः सन्धिविग्रहादिस्वरूपो गुणः स्यात् स जनः अगुणरये च अगुणो गुणरहितो योऽरिः शत्रुः तस्मै अपि अर्त्तेः पीडायाः लेशमपि लवमपि न दत्ते यत् यस्मात् तेन गुणहीनशत्रुणा सदैव अर्त्तिः पीडा अर्य्यते प्राप्यते । तथा च दीप्तगुणयुक्तस्य राज्ञो गुणहीनशत्रुः सदैव दुःखी भवति तस्मै दुःखदानं न युज्यते इति भावः । पक्षे । महाबलेति सं । शेषः उं । स्याद्यस्य ६।, ऋतः ६।, गुण: १।, अगुणर-ये ७।, ( अपि ) ( च ) अर्त्तः ६।, ॥ ३४ ॥

व्याकरणम् ।

पसि लुक् साधो वा । सौ धेश्च परजातपरस्मैपदविहित—सि लुक् स्यात् वा । असात् । ३२ ॥

घ्रातश्छातोपि । आभ्यामपि । पे सि लुक् स्यात् । अच्छात् । ३३ ॥

स्याद्यस्यर्त्तौ गुणोऽगुणरयेपि च अर्त्तेः । संयोगादृदन्तस्य अर्त्तेश्च गुणः स्यात् अगुणे यभिन्नये परे । अपिकारोऽनुक्तसमुच्चये । अर्य्यते । ३४ ॥

तथावेहि परे षष्ठे विषयेऽपि तिरोहिताः ।
वसन्ति भूमिपा आरुर्युयुत्सां के त्वया सह ॥ ३५ ॥

अतो मौढ्यात् स युयुत्सति ।

राज्ञि साद्य कुरेतस्मिन् परे त्वय्यस्ति सुस्थिरा ।
नलाद्या यां स्थिरयितुं बहुधैवोपचस्करुः ॥ ३६ ॥

किन्तु राजन् ! नीतिविदामेष धर्म्मः । तथाहि ।

क्षीणे परे समुत्पन्नेऽघे तु नुः श्रुत इष्यते ।
सताजिश्च गुणी नैवं वध मा शृणुयाद्रिपोः ॥ ३७ ॥

तथेति । तथा अवेहि एवमपि जानीहीत्यर्थः । परे रिपवो भूमिपा नृपाः षष्ठे विषयेपि षष्ठराज्यरूपदेशेपि तिरोहिताः लुक्कायिता वसन्ति के भूमिपाः त्वया सह युयुत्सां युद्धेच्छां आरुः प्राप्तवन्तः अपि तु न कोपि । तथा १।, अवेहि ८।, परे ७।, षष्ठे ७।, विषये ७।, ( अपि ) ॥ ३५ ॥

राज्ञीति । परे श्रेष्ठे एतस्मिन् पुरोवर्त्तिनि त्वयि राज्ञि राजनि सा कुः सा पृथ्वी अद्य सुस्थिरा अस्ति नलाद्या नलप्रभृतयो राजानो यां पृथिवीं स्थिरयितुं स्थिरीकर्त्तुं बहुधैव उपचस्करुः यत्नं कृतवन्तः । पद्ये । राज्ञीति राजमहिष्याः सं । शेषः उं । साद्य-कुः ६।, एतस्मिन् ७।, परे ७।, ॥ ३६ ॥

क्षीण इति । परे शत्रौ क्षीणे दुर्बले सति नुः पुरुषस्य समुत्पन्ने जाते अघे विपदि श्रुते सति सता पण्डितेन आजिर्युद्धं इष्यतेपि न । गुणी जनः एवं रिपोः एतादृशं अर्थोत्वधं न आशृणुयात् न प्रतिजानीयात् न प्रतिज्ञां कुर्य्यादितियावत् । पद्ये । क्षीणप इति सं । रे ७।, समुत्पन्ने ७।, घे ७।, ( तु ) नुः १।, श्रुतः ५।, इष्यते ८।, सता ३।, जिः १।, ( च ) गुणी १।, न १।, ॥ ३७ ॥

व्याकरणम् ।

तथावेहि परे षष्ठे विषयेपि । तथा षष्ठाख्यातेपि परत्र ज्ञानगोचरे सति जानीहि । आरुः ॥ ३५ ॥

साद्यकुरेतस्मिन् परे । सकारादिकृधातोः एतस्मिन् परे अर्थात् निर्गुणषष्ठाख्याते परे गुणः स्यात् । उपचस्करुः । ३६ ॥

रे समुत्पन्ने घे तु नुः श्रुत इष्यते सता जिश्च गुणी न । रे परत्र समुत्पन्ने सति श्रुधातोः नुः पण्डितेन इष्यते जिश्च स च श्रुनं गुणी घे तु कर्त्तव्येव । आशृणुयात् ॥३७॥

(अपि च।) अस्य नूत्पद्यते ना शं क्वापि वे मे क्रुधादयः।
यं वशीचक्रुरिति तु श्रुम्मः स्मानुभवाम च ॥ ३८ ॥

परन्तु गदायुद्धार्थं तेन निमन्त्रितोऽसि तदेव विधेयं प्रत्युत्तरञ्च लेख्यम्। अथ तत् श्रुत्वा द्रविड़ेश्वरस्तथाऽकरोत्। अथ राजा सुमन्त्रः प्रत्युत्तरलिपितः सर्वमवगत्य सेनापतिं प्रति। सम्वर्त्तक! किं विधेयम्। स राजानं प्रति।

रणे मृतस्तु नाथस्य भविष्याम्यनृणो ततः।
जेतापि वा पोषणं यत् चकर्थाश्चेश्चिरं नृप! ॥ ३९ ॥
तत् योत्स्ये हं बलव्रतः साद्य कुश्चार्त्तितो भवेत्।
यथा मुक्ता तत् करिष्ये यामारिथ पितामहात् ॥ ४० ॥

अस्येति। इमे क्रुधादयः क्रोधादयः यं जनं वशीचक्रुः नु भो अस्य जनस्य क्वापि वा कुत्रापि वा शं कल्याणं ना उत्पद्यते। अत्र नाशब्दो निषेधार्थकः। इति तु वयं श्रुम्मःस्म अनुभवाम च। पद्ये। क्रुधादय इत्यादिकं। उं। (नु-उत्) अस्य-नूत् १।, पद्यते ८।, नाशं २।, क्व ७।, (अपि) वे ७।, मे ७।, । ३८ ॥

रण इति। रणे युद्धे मृतो जेतापि वा ततः कर्म्मणः नाथस्य प्रभोः अनृणो ऋण-रहितो भविष्यामि। हे नृप! यत् यस्मात् चिरमन्नैः पोषणं चकर्थ कृतवानसि। पद्ये। रण इति शब्दायमानस्य सं। इम् १।, ऋतस्य ६।, ना १।, थस्य ६।, ॥ ३९ ॥

तदिति। तत् तस्मात् बलव्रतः सेनाव्रतः सन् अहं योत्स्ये सा कुश्च पृथिव्यपि आर्त्तितः अयोग्यस्वामिहस्तपतनजनितात् दुःखात् यथा येन प्रकारेण मुक्ता भवेत् तत् तथा करिष्ये यां पृथिवीं पितामहात् आरिथ प्राप्तवान्। अर्थात् बहुकालीनं राज्यमिदं तव। पद्ये। बल इति बलवतः सं। तत्योत्स्येहमित्यादिकं पूर्ब्बपूर्व्वसूत्रोयोदाहरण-वाक्यत्वेन सार्थकं। व्रतः ५।, साद्यकुः ५।, (च) आर्त्तितः ५।, भवेत् ८।, ॥ ४० ॥

व्याकरणम्।

अस्य नूत् पद्यते नाशंक्वापि वे मे। असंयुक्तनोरुकारो लोपं प्राप्नोति वा वे मे परे श्रुम्मः ॥ ३८ ॥

इम्तस्य ना थस्य। ऋदन्तात् ममस्य इम् ना स्यात्। चकर्थ ॥ ३९ ॥

व्रतः साद्यकुश्चार्त्तितो भवेत्। व्र सकारादिक—अर्त्तिभ्यस्तस्य इम् स्यात्। आरिथ।४०॥

राजा। अये ! सम्वर्त्तक ! वाक्पल्लवेन मम श्रुती परिष्करिष्य किन्तु स महारथो महाबलस्तत्तेन सम्मुखयुद्धं न युज्यते। सेनापतिः। राजन् ! मैवम्।

नु वेपसेऽरिम् सुस्तौति धुतश्चेतीत्स्यते किमु।

अरासीर्युद्धवैमुख्यं मा क्लैव्यं गच्छ भूमिप ! ॥ ४१ ॥

राजा तं प्रति।

ज्ञातवान्नास्यस्य हन ऋत ईशं नहीत्स्यते।

स हनिष्यति तं दृप्तं माञ्चाशोकं करिष्यति ॥ ४२ ॥

अत उपायेनैव हन्तव्यः सोऽतिक्रूरः। अथ सुमन्त्रः रङ्गस्थलीं निर्म्माय तस्मिन् बृहत्प्रासादकुटीरे मुकुरकवाटपिहितद्वारे अयस्कान्तमणिभिश्चण्डिकाप्रतिमां महाकायां महोदरीं विततास्यां दन्तुरामतिभयानकां निर्म्माय संस्थापयामास। अथ यथोक्तदिने

नु इति। नु भोः नृपः ! वेपसे कम्पसे अरिं शत्रुं सुस्तौति प्रशंसति भवानितिशेषः। धुतश्च चञ्चलश्च इति ईत्स्यते नु भोः किं युद्धवैमुख्यं अरासीः प्राप्तवानसि तस्मात् वैक्लव्यं व्याकुलीभावं मा गच्छ न प्राप्नुहि। पक्षे। नु वे इति गरुड़स्य सं। पसेः ६।, इम् १।, सु स्तौति धुतः ५। ( च ) ईत्स्यते ८।, ॥ ४१ ॥

ज्ञातेति। त्वं ज्ञातवान् नासि ईशं ऋते ईश्वरं विना अस्य शत्रोर्हनः हन्ता न ईत्स्यते। स ईशसं दृप्तं दर्पान्वितं हनिष्यति माञ्च अशोकं दुःखरहितं करिष्यति। पक्षे। ज्ञातवान् इति भिष्यावधानार्थं। ईशं ईशं प्रतीत्यर्थः। स्यस्य ६।, हनऋतः ५।, ॥ ४२ ॥

व्याकरणम्।

प-सेरिम् सु स्तौति धुतश्चेतीत्स्यते। सुस्तुधुभ्यः परस्मै पदे सेरिम् स्यात् इतीत्स्यते। अरासीः। ४१ ॥

स्यस्य हन-ऋतः। हनऋदन्ताच्च स्यस्य इम् स्यात्। हनिष्यति। करिष्यति ॥ ४२ ॥

आगतं द्रविड़ेश्वरं उपसृत्य हस्ते गृहीत्वा प्रतिपूज्य सिंहासने चोपवेश्य सुमन्त्रो राजा तं प्रति । राजन् ! अद्याहं धन्योऽस्मि ।

सदागमो मे सोमार्हात् वापि यागात् वरो मतः ।
तापशान्तिं जिगमिषोः सत्सङ्गान्नापरोऽगदः ॥ ४३ ॥
वीर ! ओष्ठाऽदूरगुणे समायाते ममाश्रयम् ।
त्वय्यर्पिते रणातिथ्ये पूर्य्यात् मेऽद्य मनोरथः ॥ ४४ ॥
अन्यतो भवतीराप्तिर्नर्त्ते शौर्य्यादतो रणात् ।
न बिभेमि मृतोऽप्यस्मिन् वतीर्थ्यां स्वर्गभूपतिः ॥ ४५ ॥
गुणो यः षष्ठ आख्यातोऽत्राजिर्नाम्ना महीभृताम् ।

सदेति । सदागमः सतां साधूनां आगमनं सोमार्हात् सोमो यज्ञाङ्गद्रव्यविशेषः तमर्हतीति स तथा तादृशात् मे मम यागादपि वा वरः श्रेष्ठो मतोऽभिमतः । तापशान्तिं जिगमिषोः प्राप्तिमिच्छोर्जनस्य सत्सङ्गादपरोऽन्योऽगदः औषधं न अस्तीतिशेषः । सदा ७, गमः ५, मे ७, सः १, मार्हात् ५, ( तु ) ( वा ) । ४३ ॥

वीरेति । ममाश्रमं समायाते वीरे त्वयि रणातिथ्ये अर्पिते दत्ते सति अद्य मे मम मनोरथः पूर्य्यात् । कीदृशे त्वयि ओष्ठादूरगुणे ओष्ठयोरदूरौ गुणौ यस्य तादृशे । अर्थात् तव गुणानुकीर्त्तनं सर्व्वदैव मुखे आस्ते इतिभावः । पक्षे । वौ इति पाश्चिद्वयस्य सं । रः ६, ओष्ठात् ५, ऊर् १, अगुणे ७, ॥ ४४ ॥

अन्यत इति । शौर्य्यादृते शौर्य्यं विना अन्यतः इराप्तिः इरा पृथिवी तस्या आप्तिः प्राप्तिर्न भवति अतः कारणात् रणात् न बिभेमि । अस्मिन् रणे मृतेपि स्वर्गभूपतिः अवतीर्थ्यां अवतीर्णो भविष्यामि । अन्यतः ५, भवति ८, ईराप्तिः १, ॥ ४५ ॥

गुण इति । नाम्ना आजिः यः षष्ठो गुणः अर्थात् युद्धरूपो महीभृतां आख्यातः

व्याकरणम् ।

सदागमो मे सोमार्हात् वा । गमो नित्यं स इम् स्यात मयोग्यात् वा । जिगमिषोः । ४३ ॥

स ओष्ठादूरगुणे । ऋकारस्य ओष्ठवर्णात् परस्य ऊर् स्यादगुणे । पूर्य्यात् । ४४ ॥

अन्यतो भवतीराप्तिः । ओष्ठवर्णादन्यस्मात् परस्य ऋकारस्य ईर् प्राप्तिः स्यात् अगुणे परे । वतीर्थ्यां । ४५ ॥

स्वर्ग्यं यशस्यमाहुस्तं ये तेरुः शास्त्रवारिधिम् ॥ ४६ ॥

(एतच्छ्रावेति ।) स्वीया हृतोऽपि वा गौरवशाली मतियुक् बली ।

न तरीष्यसि युद्धाब्धिं विना मदशुभोदयम् ॥ ४७ ॥

तद्भवतु । गच्छतु भवान् ।

विल्वविटपसीम्ना षष्ठीम् तथाष्टमीम् वाटीमन्तरा

श्रीमन्महाविद्यावाट्यां रङ्गस्थल्यां महापीठे देव्या सम्मुख एव ।

महायुद्धातिथ्यं वरिषीष्ठास्तत्रैव तेऽहं वितरीष्यामि ॥ ४८ ॥

कथितः मुनिभिरितिशेषः । तं गुणं स्वर्ग्यं स्वर्गाय हितं यशस्यं यशसे हितं आहुः ये जनाः शास्त्रसमुद्रं तेरुः ते आहुरित्यन्वयः । पद्ये । आजीत्यादिकं छं । गुणः १।, यः १।, आख्यातः १।, अत्र ७।, ॥ ४६ ॥

स्वीयेति । मदशुभोदयं मम अशुभस्य उदयं विना त्वं स्वीयाहृतोपि आत्मीयैराहृतोपि । गौरवशाली अपि मतियुक् बुद्धिमानपि बली अपि युद्धाब्धिं युद्धसमुद्रं न तरीष्यसि । पद्ये । स्वीया इति सम्बोधनं । अतियुगित्यादिकं छं । हृतः ५।, (अपि) वा १।, गौरवशाली १।, इम् १।,॥४७॥

विल्वेति । विल्ववनसीम्ना गच्छतु । षष्ठीं तथाष्टमीम् वाटीं अन्तरा मध्ये श्रीमन्महाविद्याया वाट्यामित्यन्वयः । तथाच सप्तम्यां वाट्यामित्यर्थः । वरिषीष्ठाः याचिष्यसे वितरीष्यामि दास्यामि । पद्ये । गच्छतु भवान् विल्वविट इति बुद्ध्याह्वकस्य विट इति धूर्तस्य सं । गच्छतु जानातु इत्यवधारणार्थं । (पसि-इम्) पसीम् १।, ना १।, (षष्ठी इम्) षष्ठीम् १।, तथा १।, (अष्टमी इम्) अष्टमीम् १।, । ४८ ॥

व्याकरणम् ।

गुणो यः षष्ठ आख्यातोऽत्र । यः षष्ठ आख्यातः अस्मिन् परे ऋकारस्य गुणः स्यात् अगुणे इत्यनुवर्त्तते । तेरुः । ४६ ॥

हृतोपि वा गौरवशालीम् । हृङो हृञः अपिकारात् ऋतश्च इम् दीर्घो भवति वा । तरीष्यसि । ४७ ॥

पसीम्ना षष्ठीम् तथाष्टमीम् । परस्मैपदसम्बन्धी इम् तथा षष्ठाष्टमाख्यातसम्बन्धी इम् दीर्घो न स्यात् वरिषीष्ठाः । ४८ ॥

इति तौ तत्र जग्मतुः। अथ सुमन्त्रः। तत्र मुकुरकवाट-पिहितद्वारकुटीरान्तरस्थां तां मणिप्रतिमां दर्शयन्नाह। राजन्नेषैव चण्डी अस्य राज्यस्येश्वरी अस्या आज्ञयैव सिंहासनमधितिष्ठामि अस्याः प्रसादमृते नान्योऽधिकर्त्तुमर्हति प्रसन्नयाऽनयाऽनुगृहीतश्चेत् भवानपि अधिकरिष्यसि। तद्भवतु विलम्बेनालम्।

गदेयं गृह्यतामङ्गेष्वङ्गो दंशोऽपि नो भवेत्।
लोपो धर्म्मस्यातिथयेऽदत्तेऽघञ्च परिष्वजेत् ॥ ४९ ॥

इत्युक्त्वा द्रविड़राजाय लौहमयगदाकवचौ समर्पयति स्म।

तेन सञ्जयिना ताम्रगदाकवचमाददे।
आसन्नाकर्षमणिना नाकर्षः प्रसजेत् यथा ॥ ५० ॥

गदेति। हे ष्वङ्ग! इयं गदा गृह्यतां अङ्गेषु दंशोऽपि कवचमपि गृह्यतां अतिथये युद्धातिथये अदत्ते सति अर्थात् गदाकवचयोरदाने नोऽस्माकं धर्म्मस्य लोपो भवेत् अघञ्च पापमपि परिष्वजेत् आलिङ्गेत् मामिति शेषः। पक्षे! गदेयं गृह्यतामङ्गे इति हे गदे-भाषणशीले! अङ्ग मनसि अयमर्थो गृह्यतामित्यर्थः। ष्वङ्गः ६।, दंशः ६।, अपि ७।, नः ६।, भवेत् ८।, लोपः १।, । ४९ ॥

तेनेति। सञ्जयिना सम्यक्जयिना तेन नृपेन ताम्रमयं गदाकवचं आददे गृहीतवान् यथा येन प्रकारेण आसन्नाकर्षमणिना आसन्नो निकटगामी य आकर्षमणिः अयस्कान्तमणिस्तेनाकर्षो न प्रसजेत्। पक्षे। इना इत्यादिकं तु इना कामेन। तेन ३।, सञ्जः ६।, । ५० ॥

व्याकरणम्।

ष्वङ्गो दंशोऽपि नो भवेत् लोपः। ष्वङ्गदंशयोर्नस्य लोपः स्यादपि परे। परिष्वजेत्। ४९ ॥

तेन सञ्जः। सञ्जोऽपि तथा। प्रसजेत्। ५० ॥

सुमन्त्रः । राजन् ! युद्धातिथ्यं गृहाण । किन्तु ।

क्वचिदपि जयति जितः सन्निम्नो भवति समुन्नतः कदापि ।
सुधिय इति तितिचन्ते शीतोष्णमिव रागद्वेषौ ॥ ५१ ॥

अथ स्वगुप्तश्चकितः सन्निम्नोच्चगतिं गतः ।
भ्राम्यन् मिथोऽजुगुप्सं सत् युयुधे स तथाऽपरः ॥ ५२ ॥

सुमन्त्रः मणिप्रतिमां प्रति ।

अद्य सङ्गत ईशानि ! दानिमानिवधस्तु मे ।
यथा भवेन्न पापाय मीमांसस्व तथाम्बिके ! ॥ ५३ ॥

क्वचिदिति । क्वचिदपि समये जितोपि सन् जयति निम्नोपि कदाचित् समुन्नतो भवति । इति हेतोः सुधियः शीतोष्णमिव रागद्वेषौ तितिचन्ते सहन्ते । पचे । क्वचिदपि जय इति जयशीलस्य सं । तिजितः ५।, सन् १।, इम् १।, नो १।, भवति ८।, । ५१ ॥

अथेति । अथानन्तरं स सुमन्त्रः तथा अपरो द्रविड़राजश्च मिथः परस्परं अजुगुप्सं अनिन्दितं यथा स्यात् तथा सत् साधु युयुधे । किम्भूतः स्वगुप्तः स्वेनैवात्मना गुप्तो रचितः चकितः आशङ्कितः परस्परमाघाताशङ्कित इत्यर्थः । निम्नोच्चगतिं गतः सन् भ्राम्यन् । पचे । स्व इति आत्मीयस्य सं । उच्चगतिमित्यादिकं उं । गुप्तः ५।, ( च ) कितः ५।, सन् १।, इम् १।, न १।, ॥ ५२ ॥

अद्येति । हे ईशानि ! अद्य संल्पतः युद्धात् दानिनां मानिनाञ्च वधो मे मम यथा पापाय न भवेत् । हे अम्बिके ! तथा मीमांसस्व विचारय । पचे । अद्यसन्

व्याकरणम् ।

तिजितः सन्निम्नो भवति । तिजिः सन् स्यात् तस्य च इम् न स्यात् । तितिचन्ते । ५१ ॥

गुप्तश्च कितः सन्निम । गुपः कितश्च सन् स्यात् तस्य इम् न स्यात् । अजुगुप्सं । ५२ ॥

द्रविड़ेश्वरः सुमन्त्रं प्रति ।

स नो धवो द्विरपि विवक्षतीह यः
स नो भिषक् द्विरपि चिकित्सतीह यः ।
स नो सुधीर्द्विरपि बुभुत्सतेऽत्र यः
स नो बली द्विरपि जिघांसतीह यः ॥ ५४ ॥

पर ! यङ्कोऽपि वीरस्त्वामाहन्तुं नाशकद्रणे ।
तं त्वां रणेऽस्मिन् हन्म्यद्य स्वेष्टं सास्मर्य्यतामिति ॥ ५५ ॥

यदावगूर्य्य स महतीं गदां बली
जिघांसयाऽभिमुखमगादयोमणेः ।

इति कस्यचित् सं । मे इति सख्याः सं । अन्यम् उं । (खि अतः) स्यतः ६।, ई १।, ग्रानि-दानि मानि वधः ६।, (तु) ॥ ५३ ॥

स इति । स जनो धवो नरो न य इह संसारे द्विरपि विवक्षति वक्तुमिच्छति । स जनो भिषक् वैद्यो न य इह द्विरपि चिकित्सति । स जनः सुधीर्न य इह द्विरपि बुभुत्सते । बोद्धुमिच्छति ! स जनो बली बलवान् न य इह रणे द्विरपि जिघांसति हन्तुमिच्छति । सनः १।।।, धवः १।।, द्विः १।, (अपि) ॥ ५४ ॥

परेति । हे पर ! कोपि वीरः यं त्वां रणे आहन्तुं नाशकत् तं त्वां अस्मिन् रणे अद्य हन्मि इह समये स्वेष्टं सास्मर्य्यतां पुनः पुनः स्मर । पद्यं । वीर इत्यादिकं उं । परयङ्कः १।, (अपि) ॥ ५५ ॥

यदेति । बली बलवान् स द्राविड़ः जिघांसया हन्तुमिच्छया महतीं गदामवगूर्य्य

व्याकरणम् ॥

स्यत ई ग्रानि-दानि-मानि वधस्तु । ग्रान दान मान-वधः स्वेरवर्णस्य ईच । मीमांसस्व । ५३ ॥

सनो धवो द्विरपि । सनन्ता धुसंज्ञाः स्युः तेषां द्विर्भावश्च स्यात् । विवक्षति, चिकित्सति, बुभुत्सते, जिघांसति । ५४ ॥

परयङ्कोपि । परे यङ् यस्य सोपि धुसंज्ञः स्यात् तस्यापि द्विर्भावः स्यात् । सास्मर्य्यताम् । ५५ ॥

तदा स्वयं तदररमाशु प्रासरत्
सकौशलं विनिहितमच्छमौकुरम् ॥ ५६ ॥
तदैव तन्मणिप्रतिमा विकृष्य तं
ससङ्कटं सगदमुपागतं जवात् ।
उपानयत् गगनपथेन धीवरो
यथा झषं वड़िशविविद्धतालुकम् ॥ ५७ ॥
तथा जवादलगदसौ रणाङ्गनात्
तदश्मनिर्म्मितप्रतिमातनौ यथा ।
तदाहतावयव इयाय चूर्णतां
ममार च स्वपरजनस्य पश्यतः ॥ ५८ ॥

आघाताय उत्तोल्य यदा यस्मिन् समये अयोमणेः अयस्कान्तमणेः अर्थात् अयस्कान्त-मणिनिर्म्मितप्रतिमाया अभिमुखं सम्मुखे अगात् गतवान् तदा अच्छमौकुरं निर्म्मल-मुकुरमयं तत् अररं तत् कवाटं ( कवाटमररमित्यमरः । ) स्वयं आशु शीघ्रं प्रासरत् प्रसारितं बभूव । कीदृशं सकौशलं यथा स्यात् तथा निहितं स्थापितं । श्लोकेऽस्मिन् व्याकरणपद्धी नास्ति । एवं उत्तरत्र श्लोकद्वये । ५६ ॥

तदेति । तन्मणिप्रतिमा तदैव तस्मिन्नेव समये उपागतं समीपमागतं तं द्राविड़ं ससङ्कटं कवचेन सह वर्त्तमानं सगदं गदया सह वर्त्तमानं विकृष्य आकृष्य जवात् वेगेन गगनपथेन उपानयत् । क इव यथा धीवरः कैवर्त्तः वड़िशविविद्धतालुकं वड़िशेन विविद्धा तालुका यस्य तादृशं झषं मत्स्यं जवात् गगनपथेन उपानयति तथेत्यर्थः । ५७ ॥

तथेति । असौ द्राविड़ो रणाङ्गनात् युद्धस्थानात् तदश्मनिर्म्मितप्रतिमातनौ तस्याः पाषाणनिर्म्मितप्रतिमायास्तनौ शरीरे तथा तेनैव प्रकारेण जवात् वेगेन लग्नोऽभवत् यथा येन प्रकारेण तया प्रतिमया आहता अवयवा यस्य ईदृशः सन् चूर्णतां इयाय प्राप्तवान् । पश्यतः स्वपरजनस्य अनादृत्य ममार च । ५८ ॥

तत् दृष्ट्वा द्राविड़सेना चित्रार्पितेवासीत्। अथ सुमन्त्र उच्चैराह।

नार्च्चयित्वा प्रणम्यैनां विषये मे पिवत्यपि।
सागरान्तरदुर्गेऽर्णः पूर्व्ववन्नो धवादिमः॥ ५९॥

सुमन्त्रस्य सेनापतिराह। अहो शृण्वन्तु भटाः।

नः स्वामी ना नित्यशान्तनशो हि नु हनोपि नः।
दुर्व्वलानां प्रमीणाति स परं गर्व्विणां मदम्॥ ६०॥

किन्त्वस्य द्रविड़राजस्य युद्धमृत्युरपि प्रशस्यते। यतः।

वीरवंशजनिर्यः स्यात् गदाद्यन्तस्तु तस्य नो।

---

नार्च्चेति। मम विषये मम राज्ये एनां देवतां नार्च्चयित्वा अप्रणम्यापि धवादिमो मनुष्यादिः अर्णोपि जलमपि पूर्व्ववत् न पिवति विषये कीदृशे सागरान्तरदुर्गे सागरः समुद्र एव अन्तरदुर्गः सीमाभूतदुर्गः गड़ इति प्रसिद्धो जलदुर्गो यस्य स तथा तस्मिन्। पक्षे। सागर इति सं। पूर्व्वभागः उं। अन्तरदुर्गः ५।, णः १।, पूर्व्ववत् १।, नः १।, धवादिमः १।,।५९॥

नस्वामीति। नः अस्माकं स्वामी ना पुरुषः नित्यशान्तनशो न नित्यं सर्व्वदा यः शान्तः तस्य नशो नाशको न। नु भोः दुर्व्वलानां हनोपि हन्तापि न। स राजा परं केवलं गर्व्विणां मदं अहङ्कारं प्रमीणाति हन्ति। पक्षे। नस्वा इति अस्मीयानां सम्बोधनं। (मिना आनि-त्य) मिनानित्यशान्तनशः ६।, हिनु हनः ६।, (अपि) नः ६।,॥ ६०॥

वीरेति। वीरवंशे जनिरुत्पत्तिर्य्यस्य एतादृशो यः स्यात् तस्य जनस्य गदाद्यन्तः

व्याकरणम्।

अन्तरदुर्गेर्णः पूर्व्ववन्नो धवादिमः। अन्तरो दुर्व्वर्जगेश्च परो धातुसम्बन्धीय आदिभूतो नो णः स्यात् पूर्व्ववत् प्रागुक्तवत् णविधिहेतौ सतीत्यर्थः। प्रणम्य।५९।

मिनानित्यशान्तनशो हिनु हनोपि नः। मीनातेः आनिप्रत्ययस्य शान्तनशो हिनोतेर्हनश्च नो णः स्यात्। प्रमीणाति।६०।

भवेत् प्रशंसितो नापि स्वर्गाय प्रणिगद्यते ॥ ६१ ॥

पुनर्द्राविड़भटान् प्रति । रे क्षुद्राः पलायध्वं पलायध्वमिति । (सुबन्धुर्नृपं प्रति ।) अथ द्रविड़राजभटास्तां प्रतिमां दन्तुरामतिविततास्यां लोलरसनां भक्षणाय प्रणिपतन्तीमिव वीक्ष्य,

केचिदिह वा प्राशंमामावहन्तो द्रा नद्यादावपि निपतन्तो गदन्तश्च निश्चयस्तस्य नो वा कर्त्तुं शक्यते यत्र गते प्राणानां रक्षेति प्रणिययुः ॥ ६२ ॥

इति सप्तमराजोल्लासे द्वितीयोऽध्यायः ।

गदादिः रोगादिस्तेन अन्तो नाशो न प्रशंसितो भवेत् नापि स्वर्गाय प्रणिगद्यते पण्डितैरितिशेषः । वीरस्य रोगादिना मरणं स्वर्गाय न कथ्यते इत्यर्थः । पक्षे । वीरवंशज इति सम्बोधनं । निः १।, यः १।, स्यात् ८।, गदाद्यन्तः १।, (तु) तस्य ६।, नः ६।, भवेत् ८।, ॥ ६१ ॥

केचिदिति । इह समरे केचिद्वा प्राशंसां प्रा भक्षणं तदाशङ्कामावहन्तो द्राः पलायिताः । केचिद्वा नद्यादावपि निपतन्तः सन्तः प्रणिययुः । यत्र गते यस्मिन् स्थाने गते सति प्राणानां रक्षा तस्य स्थानस्य निश्चयं कर्त्तुं नो वा शक्यते इति वदन्तः केचिद्वा प्रणिययुः । पक्षे । पूर्व्वभागस्तथा यस्तस्येति परभाग उदाहरणवाक्यं । चि दिह वा प्रा शम् सा-मा-वहन्तः १।, द्रा नद-या वपि-इनि-पतन्तः १।, गदन्तः १।, (च) निः १।, ॥ ६२ ॥

व्याकरणम् ।

निर्यः स्यात् गदाद्यन्तस्तु तस्य नो भवेत् । गदादिधात्वन्तस्तु यो निः स्यात् तस्यापि नो णः स्यात् । प्रणिगद्यते । ६१ ॥

चि दिह वा प्रमा शम् सा मा वहन्तः द्रा नद या वपि इनि पतन्तः गदन्तश्च निः । एतेषां नेरपि णः स्यात् । पतन्त इति प्रकृतिभ्रमनिरासार्थं न तस्य दः । सूत्रे वेदवदितिन्यायाच्च । प्रणिययुः । ६२ ॥

सुबन्धुः।

य: परस्याऽभिष्टुतेन गुणेन यशसा श्रिया।
न तुषत्वमवाप्नोति उपसर्गयुतस्तु स:॥ १॥
हितैषिन्! विषुव क्रोधं क्रूरोऽसौ हार्द्दमेव यत्।
स्वहृद्सोऽपि सुवति सोऽस्तु भो विषितस्तव॥ २॥
पश्य सर्व्वहरित् स्वञ्जोऽयङ्कस्य च सिचो नहि।
सुधयेन्दुस्तेन विष्णुपदेऽसौ परिषष्वजे॥ ३॥

---

य इति। यो जन: परस्य अभिष्टुतेन प्रशंसया गुणेन यशसा श्रिया सम्पत्त्या च तुषत्वं तुष्टिं न अवाप्नोति स एव जन: उपसर्गयुत: रोगविशेषयुक्त:। तदसहिष्णुत्वेन पीड़ितत्वात्। तुष इति कृ गृह्णा प्रीजुष: को दुहो घङ् चेति सूत्रेण कर्त्तरि कप्रत्यये सिद्धम्। तस्य भाव: तुषत्वं तुष्टिरिति यावत्। पक्षे। सत् इत्यन्त पूर्व्वभाग उं। षत्वं २, अवाप्नोति ८।, (उपसर्ग इ उत) उपसर्गयुत: ५॥, स्तु-स: १।, ॥ १॥

हितैषिन्निति। हे हितैषिन्! आत्मनो हितकांक्षिन्! क्रोधं विषुव क्षिप त्यजेति यावत्। विषुवेति सुश्र विक्षेपे इत्यस्य रूपं। यत् यस्मात् असौ क्रूर: क्रोध: स्वहृद्सोऽपि आत्मनो हृदि मनसि वासी अपि हार्द्दमेव सुहृद्भावमेव सुवति त्यजति भो:! स क्रोधस्तव विषितो नष्टोऽस्तु अर्थात् स त्वां नाशयतु। पक्षे। स्व इति आत्मीयस्य ह्रद इति प्राणवायो: सम्बोधनं। पूर्व्वभाग: उं। स: १।, (अपि) सुवति-सो स्तुभ: ६।, ॥२॥

पश्येति। अङ्ग: हे राजन्! सर्व्वहरितसु सर्व्वदिक्षु पश्य अयं इन्दुश्चन्द्र: सुधया कस्य सिचोऽभिषेक्ता नहि अपि तु सर्व्वस्यैव। तेन कर्म्मणा असौ चन्द्र: विष्णुपदे परिषष्वजे सर्व्वतोभावेन सङ्गी अभवत्। पक्षे। सर्व्वहरिदिति सर्व्वदिशामधिपते: सं। पश्य जानीहीत्यर्थ:। नहीत्यादिकं उं। स्वञ्ज: ६।, अयङ्कस्य ६।, सिच: ६।, ॥ ३॥

व्याकरणम्।

षत्वमवाप्नोति उपसर्गयुतस्तु स:। प्रादुपसर्गाणां युत: इकार उकारात् पर: स्तुधातुसम्बन्धीय: स: षत्वमाप्नोति। अभिष्टुतेन॥ १॥

सोऽपि सुवति सो स्तुभ:। सु सो स्तुभां सोऽपि षत्वमाप्नोति। विषुव। विषित:॥ २॥

स्वञ्जोऽयङ्कस्य सिच:। स्वञ्जो यङ्वर्ज्जसिचश्च सोऽपि षत्वमाप्नोति। परिषष्वजे॥ ३॥

राजा सुबन्धुं प्रति। उपाध्याय! राज्यार्द्धं ते दक्षिणां दातुमिच्छामि। स तं प्रति। मैवं।

त्याज्यो लोभो यदर्थोऽतिपुनोत्यर्ज्जनपालयोः।
अवस्थयोर्द्वयोः स्याच्चेदप्यस्यान्तः सुनोति सः॥ ४॥

(अपि च।) श्रियोऽप्राप्तौ त्वस्य सङ्गो धनलोभः स सम्पदि।
अविषह्यः पश्य तर्कुः कुक्षिपूर्त्तौ भ्रमत्यति॥ ५॥

देवसेवो विनीतस्य परितः परिषेवते।

त्याज्येति। लोभस्त्याज्यः यत् यस्मात् अर्थो धनं अर्ज्जनपालयोः उपार्ज्जने पालने च द्वयोरेवावस्थयोः अतिपुणोति अतिपीड़यति चेदपि यद्यपि अस्य अर्थस्य अन्तो नाशः स्यात् तदा सोऽर्थनाशः सुनोति पीड़यति। पक्षे। चेदित्यन्त पूर्व्वभागः उं। (अपि) अस्यान्तः १।, सुनोति-सः १।, ॥ ४॥

श्रिय इति। श्रियः सम्पदः अप्राप्तौ अप्राप्तावस्थायां अस्य पुरुषस्य धनलोभः सङ्गो भवति सम्पदि सम्पदवस्थायां स धनलोभः अविसह्यः अत्यसह्यः। पश्य एतदेव पश्य तर्कुः सूत्रकर्त्तनशलाका (टेकु इति प्रसिद्धः) सूत्रेण स्वोदरपूर्त्तिदशायां अतिभ्राम्यति अतिशयं भ्रमति। पक्षे। श्रियोऽप्राप्तौ इति अश्रीप्राप्तयोः सं। धनेत्यादिकं उं। अप्राप्तौत्वस्य ६।, सङ्गः ६।, ॥ ५॥

देवेति। देवसेवको विनीतोपि जनः परितः सर्व्वत्र चिरक्षणं चिरकालं शुभं

व्याकरणम्।

अप्यस्यान्तः सुनोति सः। असंयोगान्तः सुनोतेः सोपि फलमाप्नोति॥ ४॥

अप्राप्तौत्वस्य सङ्गः। अप्राप्तं औत्वं येन तादृशस्य सङ्गधातोः सोऽपि फलमाप्नोति। अविषह्यः॥ ५॥

सेवो विनीतस्य परितः। विश निश तौ विनी इतस्य आभ्यां परस्य परितः परिभ्रन्दास सेवः सोऽपि फलमाप्नोति। परिषेवते॥ ६॥

शुभं चिरक्षणं भोगी दुर्जनोऽन्ते विषीदति ॥ ६ ॥

अतो मोहमूलं धनं नातिप्रयोजनकं । अपि च मरिष्यामीति धीः सदा जागर्त्तीति समयोचितमेव कर्म्मोपयुज्यते । अत एवोक्तम् ।

क्वापि सोऽन्तरितो मास्तु मरिष्यामीति प्रत्ययः ।
व्यषीदन् यं विना मूढ़ा मोहेर्षामत्सरादिभिः ॥ ७ ॥

अहो पश्यैवम् ।

उत्थानविप्रसञ्ज्ञादेर्हिरुक्तेश्च बिभेति यः ।
नितष्ठौ नैव सोप्येवं मरिष्यामीति मुग्धधीः ॥ ८ ॥

परिषेवते भुंक्ते । भोगी दुर्जनः अन्ते परिणामे विषीदति । पद्ये । दैव इति सं । सेवः ६।, विनीतः ५॥, ( च ) परितः ५।, ॥ ६ ॥

क्वापीति । सः अहं मरिष्यामीति प्रत्ययः एतज्ज्ञानं क्वापि कदाचिदपि अन्तरितो विच्छिन्नो माऽस्तु यं प्रत्ययं विना लोभेर्षामदमत्सरादिभिः मूढ़ा विषयमुग्धा जना व्यषीदन् अवसादं प्राप्ताः । पद्ये । मरिष्यामीत्यादिकं उ' । क्व ७।, ( अपि ) सः १।, अन्तरितः १।, अमा ३।, अस्तु ८।, ॥ ७ ॥

उत्थानेति । उत्थानविप्रसञ्ज्ञादेः शय्यादित उत्थानसम्भावनादितो यो जनः बिभेति हिरुक्तेश्च दौर्व्वल्यादिना हिवारं वाक्यप्रयोगादपि यो बिभेति अर्थात् वार्द्धक्यदशायां उत्थानसम्भावनायां हिर्व्वाक्यप्रयोगादपि यो भीतो भवति सोऽपि विषयविमुग्धधीर्जनः अहं मरिष्यामीति इत्येवं नैव नितष्ठौ निष्ठां कृतवान् । पद्ये । उत्थानविप्रेति उत्थितविप्रस्य सम्बोधनं । सञ्ज्ञादेः ६।, हिरुक्तेः ६।, ( च ) ॥ ८ ॥

व्याकरणम् ।

क्वापि सोऽन्तरितोऽमास्तु । क्वचिदपि अमा व्यवहितः सोऽपि तथास्तु । व्यषीदन् ॥ ७ ॥

सञ्ज्ञादेर्हिरुक्तेश्च । हिरुक्तानामपि सञ्ज्ञादीनां सः षलमाप्नोति । नितष्ठौ ॥ ८ ॥

तज्ज्ञानन्तु सत्सङ्गात् जायते । तदुक्तं बुधैः !

न निषीदति यो नीचैरज्ञोऽप्यज्ञैरसाधुभिः ।

ससङ्ग न प्रतिसदः स्थः सोऽपि सत्प्रतिष्ठितः ॥ ९ ॥

इति सप्तमरावुल्लासे तृतीयोऽध्यायः ।

---

नेति । अज्ञोऽपि अल्पविद्योऽपि यो जनो नीचैः सङ्ग न निषीदति न उपविशति अज्ञैर्मूर्खैरसाधुभिश्च सङ्ग न ससङ्ग न संसर्गं कृतवान् प्रतिसदःस्थः प्रतिसभां तिष्ठति सोऽपि जनः सत्प्रतिष्ठितः साधुभिः प्रतिष्ठितो भवति । पद्यं । पूर्व्वपरभागौ उदाहरणवाक्यं । सङ्ग-न प्रतिसदः ६।, स्थः ६।, सः १।, ( अपि ) ॥ ९ ॥

व्याकरणम् ।

सङ्ग-न प्रतिसदः स्थः सोऽपि । एषामपि सोऽपि फलमाप्नोति । सत्प्रतिष्ठितः ॥९॥

इति पवत्पादः ।

(सुबन्धुः।) ब्रह्मस्वापहरसमोऽधर्म्मो नास्ति ब्राह्मणोपकारसमो धर्म्मोऽपि नास्ति तदहं कथयामि। श्रूयताम्। आर्य्यावर्त्तविषये धर्म्मपालनामा कश्चित् शिलवृत्तिर्ब्राह्मण एकदा केदारे धान्यकणिशमुच्चिन्वन् प्रमादात् एकैकशः क्षेत्रे निपतितानि यानि धान्यानि कियन्ति तान्यप्युदचिनोत्। अथ तद्वीक्ष्य तद्वृत्त्युपजीविनोऽपरे सहचारिणो ब्राह्मणाः स्वीयान् प्रति। हत हत वैधर्म्म्याचरणे दोषं जानन्नपि किमसौ स्वधर्म्ममतीत्य परेषां वृत्तिमपजहार। धिगमुं विप्रम्।

सदाऽधर्म्मं जुगुप्सामो यं स नोऽनुपमं धवम्।
आयात् किं शिल्यसौ यस्मात् उञ्छाजीवं पनायति॥ १॥

अनन्तरं ते धर्म्मपालं प्रति। भवता भद्रं नाचरितं। यत् परेषां जीविकामपह्नुतवान्।

धीमन्नवेखिरस्येत् सञ्चेत् परत्र भुजिस्पृहाम्।

सदिति। यं अधर्म्मं सदा जुगुप्सामः निन्दामः सोऽधर्म्मोऽस्माकं शिलवृत्तीनां मध्ये अनुपमं उपमारहितं धवं मनुष्यं किं आयात् किं प्राप्तवान् यत् यस्मादसौ शिली शिलवृत्तिः उञ्छाजीवं उञ्छो उञ्छवृत्तिस्तस्य आजीवं जीविकां पनायति ईहते। क्षेत्रादिषु अङ्गुलिभ्यां एकैकधान्यादिगुडकोच्चयनं उञ्छः। मञ्जर्य्यात्मकधान्यादेरुच्चयनं शिलः। पचे। पूर्व्वापरभागौ ङ। सनः ५।, (अनु) पमं १।, धवं १।, आयात् ५। (किं ३।)॥ १॥

धीमन्निति। हे धीमन्! अवेखिः जानीयाः अवेखिरिति ङ्खगताविल्यस्य रूपं। सन् पण्डितः चेत् यदि परत्र परलोके भुजिस्पृहां भोजनेच्छां अस्येत् त्यजेत् तदा

व्याकरणम्।

सनोऽनुपमं धवं आयात् किं। धातुसम्बन्धीयं पं अस्य सनन्तादनुप्रयुज्यते। आयप्रत्ययान्तात् विकल्पेन। जुगुप्समानः, पनायति। सनः पमे धीर्वोत्यायात्। मुं।॥ १॥

तदा विधर्म्मोपात्तान्नं जिघत्सत्वाशुत्वमिक्षत् ॥ २ ॥

भवान् ज्ञानी किं? परलोकं किं न पश्यति अलौकिकज्ञाने ज्ञानमेव चक्षुः ।

माऽस्तु सच्चिन्मणेर्लोपोऽनन्तादित्येन दीप्यते ।
पुरस्ताद्दीप्यते विश्वं प्रज्ञयानन्दयन्तया ॥ ३ ॥

अतोऽहमुपदिशामि ।

परस्वास्पृहयालुः सन् सहिष्णुर्दुःखमागतम् ।
नन्दयन्तस्तनुभृतां स्तनयित्नुरिवोत्सुकः ॥ ४ ॥
स्पृहयाय्यः परश्रीणां परार्त्तिं गणयन् स्ववत् ।

---

आशुत्वमिक्षत् विधर्म्मोपात्तान्नं विधर्म्मेणोपार्जितान्नं जिघत्सतु अत्तुमिच्छतु । पचे । धीमन्नवे इति बुद्धिमत्यचिरणः सं । भुजीत्यादिकं ञं । एकवाक्यता तु कथञ्चित् कार्य्या । खेः ६।, अस्य ६।, इत् १।, सन् १।, ( चेत् ) परत्र ७।, ॥ २ ॥

नेति । सच्चिन्मणेः सतां यां चित् ज्ञानं सैव मणिस्तस्य लोपो माऽस्तु अनन्ता पृथिवी आदित्येन सूर्य्येण दीप्यते प्रज्ञया कारणभूतया विश्वं जगत् पुरस्तात् सम्मुखे दीप्यते प्रज्ञया किम्भूतया आनन्दयन्तया आनन्दजनिकया । पचे । सच्चिन्मेति सज्ज्ञानयुक्तस्य सं । मास्तु लक्ष्मीरस्तु एतत्तु शिष्यस्याशीर्वचः । शेषः ञं । णेः ६।, लोपः १।, अनन्तादित्ये ७।, ॥ ३ ॥

परेति । स्तनयित्नुर्मेघः स इव उत्सुकः स्वयमुद्युक्तः सन् तनुभृतां शरीरिणां नन्दयन्तः । पचे । पूर्वसूत्रस्य ञं । ४।, स्पृहेति । परार्त्तिं परपीड़ां स्ववत् स्वस्येव गणयन् ।

व्याकरणम् ।

खेरस्येत् सन् चेत् परत्र । खेरवर्णस्य इः स्यात् यदि परत्र सन् स्यात् । जिघत्सतु ॥ २ ॥

णेर्लोपोऽनन्तादित्ये । णेर्लोपः स्यात् अन्तप्रत्ययादिभिन्नप्रत्यये परे । नन्दयन्तया ॥ ३ ॥

स्पृहयालुः, सहिष्णुः, नन्दयन्तः, स्तनयित्नुः ॥ ४ ॥

यस्तेऽर्त्तिं कामयाञ्चक्रे तमन्यो नाशयिष्यति ॥ ५ ॥
न तं पीड़यितासि त्वमेवं चरतु निर्भयः।
एवं यो वेत्ति मतिमान् स दुःखैर्नाभिभूयते ॥ ६ ॥

भवतु यत् कृतं तत् कृतमेवेति एतादृक् प्रवृत्तिर्भूयो माभूत्। इति स्वस्वगृहं ययुः। अथैतत् श्रुत्वा ग्रामीणाः कियन्तः कर्णेजपाः उञ्छवृत्त्युपजीविनो ब्राह्मणानुपसृत्य तान् प्रति। अहो धर्म्मपालोऽद्यात्मनो धर्म्मपालत्वं व्यतीचकार।

यस्तं पणायते रागी तं स एव पणायतु।
नाहं स यत् परं लिङ्गी परवृत्त्यपहारकः ॥ ७ ॥

इत्युक्ता उच्चैर्जहसुः। यतः खलानामिदमेव स्वभावः।

अपि श्रुते पराङ्केऽणौ स्वयुङ् भवति नर्दितः।

---

यस्ते तव आर्त्तिं पीड़ां कामयाञ्चक्रे इच्छति स्म अन्यो जनः तं नाशयिष्यति। पद्ये। सूत्रस्य च। ॥ ५ ॥

नतमिति। तं जनं न पीड़यितासि तस्य पीड़ां न जनयिष्यसि अन्यत् सुगमम्। पद्ये। सूत्रस्य च। ॥ ६ ॥

यस्तमिति। यो जनो रागी अनुरागयुक्तः तं धर्मपालं पणायते स्तौति प्रशंसतीति यावत् स एव जनस्तं धर्मपालं पणायतु स्तौतु नाहं स्तौमीत्यर्थः। यत् यस्मात् स जनः परं केवलं लिङ्गी कपटवेशधारी। अत्र हेतुमाह परवृत्त्यपहारकः। पद्ये। सूत्रस्य च। अपीति। अणौ अपि सूक्ष्मेऽपि पराङ्के परेषां कलङ्के चौर्य्याद्यपवादे श्रुते सति खलः पिशुनो जनः स्वयुङ् स्वैरालापयुक्तः सन् नर्दितः आनन्दितो भवति। का इव घृते मक्षिकेव। तत् श्रुतौ परापवादस्य श्रवणे माधीकमध्वं नेच्छत यूयमिति शेषः।

व्याकरणम्।

स्पृहयाय्यः, गणयन्, कामयाञ्चक्रे ॥ ५ ॥

पीड़यितासि ॥ ६ ॥

पणायते, पणायतु ॥ ७ ॥

खल: क्षते मक्षिकेवाचीकमध्वं न तत् श्रुतौ ॥ ८ ॥

पुन: कर्णे जपा: । उञ्छवृत्तीनां भवतां वृत्तिं स यदपहरति तत् युज्यते । यत: ।

न शास्त्यग्लोपि नो वक्ति पिता तल्लोमभुक् प्रिय: ।

राज्ञाऽशशासत् सामन्ता नाडुढौकत् भयञ्च तम् ॥ ९ ॥

( अपि च । ) सङ्गतायनभागे खे: कार्य्यं यत् सम्मतं भवेत् ।

तद्विधेयं लघौ मैत्रीं माचीकमत वाऽस्वकम् ॥ १० ॥

---

पक्षे । अपीति अन्यच्च शरीरमित्यर्थ: । खलेत्यादिकं उ॰ । श्रुते ७।, पराङ्गे ७।, णौ ७।, स्व: १।, उङ् १।, भवति ८।, न १।, ऋदित: ६।, ॥ ८ ॥

न शास्तीति । अग्लोपि अग्लानोऽपि पिता तल्लोमभुक् तस्य स्वपुत्रस्य चौर्य्यलब्धधन-भुक् सन् न तं शास्ति न वा वक्ति । सामन्तो ग्रामीण: प्रधानमनुष्योऽपि राज्ञा द्वारा न अशशासत् न शासनं कृतवान् तं जनं भयञ्च भयमपि नाडुढौकत् नाप्रापयत् । न १।, शास्त्यग्लोपिन: ६।, वक्ति ८।, ॥ ९ ॥

सदिति । सद्भि: साधुभिर्गम्यते यत्र तत् सङ्गतं तादृशं यदयनं पन्थास्तद्भाक् तदाश्रित: सन् एखे: गच्छे: यत् कार्य्यं सम्मतं सतां सद्भिर्मतं भवेत् तद्विधेयं करणीयं लघौ क्षुद्रे जने मैत्रीं माचीकमत न स्पृहय अस्वकं स्वस्य आत्मन: इदं इति स्वकं न स्वकं अस्वकं परकीयवस्त्विति यावत् । तथाहि परधनादिकमस्वा माचीकमत । पचे । सङ्गतायनभाक् ए ! इति सं। खे: ६।, कार्य्यं १।, यत् १।, सम्मतं १।, भवेत् ८।, तत् २।, विधेयं २।, लघौ ७।, ॥ १० ॥

व्याकरणम् ।

श्रुते पराङ्गे णौ स्वयुङ् भवति न ऋदित: । परं अङ् यस्य स पराङ्गस्तस्मिन् णौ परे उङ: स्व: ह्रस्व: स्यात् नतु ऋदित: । अचीकमध्वं ॥ ८ ॥

न शास्त्यग्लोपिनो वक्ति । शासोऽग्लोपिनोऽपि धातोर्न तत् वक्ति । अशशासत् । अडुढौकत् ॥ ९ ॥

खे: कार्य्यं यत् सम्मतं भवेत् तद्विधेयं लघौ । खेर्यत् कार्य्यं सनि विहितं भवेत् लघौ लघुधात्वक्षरे परे णाङि परे खेस्तत् कार्य्यं विधेयं । अचीकमत । ॥ १० ॥

यदेवं शासितुं पूर्व्वं चकमे न पिता सुतम्।
वैधर्म्यं कामयाञ्चक्रे स एवं पैत्रदोषतः॥ ११॥

अतोऽसौ दमनीयः। इति तदर्थं युष्माभिः राजनि अभियोगः कर्त्तव्यः अन्यथा स लिङ्गी सर्व्वमपहरिष्यति। युष्मानपि लोकाः कापुरुषं कथयिष्यन्ति तदभियोगार्थं गच्छन्तु।

उञ्छजीविनस्तं प्रति। मैवं।

लघोर्हसादिखेर्दीर्घतापं व्यर्थमनोरथः।
ब्रह्मदण्डं स राजर्षिर्नाचीकमत जात्वपि॥ १२॥

स तं प्रति। मैवं।

लोपो विधीयते यो वोऽयाचितस्यान्धसो भुजाम्।
तेनाजीवस्य तेनोत्थ आधिर्नास्फास्त मे हृदि॥ १३॥

यदिति। पिता सुतं पुत्रं पूर्व्वं पूर्व्वकाले एवं उक्तप्रकारेण शासितुं यत्न चकमे इच्छां नाकरोत् एवं पैत्रदोषतः सुतो धर्म्मपालो वैधर्म्यं कामयाञ्चक्रे॥ ११।

लघोरिति। व्यर्थमनोरथाङ्गितोः लघोर्नीचजनस्य हसात् उपहासात् दीर्घतापं इखेः प्राप्नुयाः। अत्र हेतुमाह। स राजर्षिर्जात्वपि कदाचिदपि ब्रह्मदण्डं नाचीकमत न वाञ्छितवान्। पचे। आपमित्यादिकं उ। आपं प्रापमित्यर्थः। घोः ६।, हसादिखेः ६।, दीर्घता १।,॥ १२॥

लोप इति। तेन धर्म्मपालेन द्विजेन वो युष्माकं आजीवस्य जीविकाया यो लोप उच्छेदो विधीयते क्रियते तेनोत्थस्तेन जात आधिर्म्मानसीव्यथा मे मम हृदि नास्फास्त न वर्द्धितवान् अपि तु तथैव। कीदृशां युष्माकं अयाचितस्य अन्धस्य अन्नस्य भुजां

## व्याकरणम्।

यण्ङि किं? चकमे॥ ११॥

घोर्हसादिखेर्दीर्घता। हसादिधातोः खेर्लघोर्दीर्घता स्यात्। अचीकमत॥ १२॥

लोपो विधीयते यो वोऽयाचि। यत्रयोर्लोपः स्यात् अच् यकारभिन्नप्रत्यये परे। अस्फास्त॥ १३॥

अतोऽभियोगः आवश्यकः। राजा च दुर्जने दण्डधरोऽवश्यं तं दण्डयिष्यति। दृष्टञ्च।

योऽघोऽजनि पुरो नास्य नृपेणागम इष्यते।
बुधो जनोऽपि तनयादौ वाऽघेऽबोधि तं मृतम् ॥ १४ ॥

यतः। प्यायो दीप्तः पूर एष स्याद्देशप्लवने क्षमः।
अदीपि यस्मिन् नो सेतुः पूरवेगं निवारयन् ॥ १५ ॥

अतो राज्ञां शासनमेव दुर्हृदां यथेष्टाचरणनिवारणे हेतुः। उत्कोचोपजीविनस्तं प्रति। परस्य दुःखमुत्पादयितुं न वयमभियोक्ष्यामः यतः।

---

भोजिनां। पक्षे। तस्येत्यादिकं ज्ञं। लोपः १।, विधीयते ८।, यः ६।, वः ६।, अयाचि ७।, ॥ १३ ॥

य इति। यो जनः अघः पापी अजनि जातः नृपेण पुरः सम्मुखभागे अस्य पापिन आगमो नेष्यते। बुधो जनोऽपि पण्डितोऽपि तनयादौ पुत्रादौ अघे पापिनि सति तं तनयादिकं मृतं अबोधि मृतत्वेनैव ज्ञातवान्। पक्षे। नृपेति सं। पूर्व्वापरभागो ज्ञं। इणागमः १।, इष्यते ८।, बुधः ५।, जनः ५।, ( अपि ) तनः ६।, आदौ ७।, वा १।, घें ७', ॥ १४ ॥

प्याय इति। एष पूरो जलप्रवाहः दीप्तः प्रदीप्तः प्यायो वृद्धिमापन्नः सन् देशप्लवने क्षमः शक्तः स्यात् यस्मिन् देशे पूरवेगं जलप्रवाहवेगं निवारयन् सन् सेतुर्मर्यादोऽपि न दीप्यतेस्म। प्यायः ५।, दीप्तः ५।, पूरः ५।, एषः १।, स्यात् ८।, ॥ १५ ॥

व्याकरणम्।

इणागम इष्यते बुधो जनोऽपि तन आदौ वा घे। बुधजनाभ्यां तन आदौ इणागमः स्यात् वा घे। अजनि, अबोधि ॥ १४ ॥

प्यायो दीप्तः पूर एष स्यात्। एभ्योऽपि एष विधिः स्यात्। अदीपि ॥ १५ ॥

सदापदः स च पदं योऽभियोक्ता परस्य यत् ।
अस्योदपादि तत्पीड़ा चिन्तैव सततज्वरः ॥ १६ ॥

( अन्यच्च ) ।

जीवातोर्हन्त नो लोपोऽग्रेग्रण स्थितिमता यदि ।
अकारि तद्भोक्ष्यते च धातैवाध्येति तत् फलम् ॥ १७ ॥

ब्राह्मणस्य दुःखमुत्पादयितुमस्माभिर्न युज्यते । उक्तञ्च ।

ओखिर्द्युतोऽजिरात्तस्य यो विप्राश्रूण्यपातयत् ।
को दिद्युते ब्रह्मकोपानलदग्धो हतायतिः ॥ १८ ॥

सदेति । यो जनः परस्य अभियोक्ता अभियोगकर्त्ता स तु जनः सदा सर्व्वदैव आपदो विपदः पदं आश्रयः । यत् यस्मात् अस्य अभियोगकर्त्तुस्तत्पीड़ाचिन्तैव तस्य परस्य पीड़नचिन्तनरूप एव सततज्वरः सततनामाज्वरः उदपादि उत्पन्नोऽभूदित्यन्वयः । पचे । पदमित्यादिकं ज्ञ । सदा ७।, पदः ६।, सः १।, ( च ) ॥ १६ ॥

जीवातोरिति । हन्त खेदे स्थितिमता मर्य्यादावता अग्रेग्रण श्रेष्ठेन जनेन यदि नोऽस्माकं जीवातोर्जीवनौषधस्य लोप उच्छेदोऽकारि तत् तदा भोक्ष्यते च भोगमपि करिष्यते । धातैव विधातैव तत्फलं अध्येति चिन्तयति । पचे । जीवातोर्हि इति कस्यचित् सं । अग्रेग्रण इत्यत्र खपरशसि विसर्गस्य लोपः । तनः ६।, लोपः १।, अग्रेग्रणः ६ ।, ॥ १७ ॥

ओखिरिति ) यो जनो विप्राणां अश्रूणि नेत्रजलानि अपातयत् तस्य जनस्य अजिरात् चत्वरात् द्युतः शीघ्रगामी सन् ओखिर्गन्ता । को जनो हतायतिः हतपरलोकः ब्रह्मकोपानलदग्धः सन् दिद्युते अदीपि अपि तु न कोऽपि । पचे । आत्मसंत्यादिकं ज्ञ । खिः ६।, द्युतः ६।, जिः १।, ॥ १८ ॥

व्याकरणम् ।

सदा पदः स तु । पदधातोः सदा तन इणागमः स्यात् । उदपादि ॥ १६ ॥

तनो लोपोऽग्रेग्रणः । अग्रे भव इण् यस्य तादृशस्य तनः लोपः स्यात् । अकारि ॥ १७ ॥

खेर्द्युतो जिः । द्युतः खेर्जि स्यात् । दिद्युते ॥ १८ ॥

( अपि च । ) अपि स्वापे रतिः सन्धिर्व्वाभियोक्तुर्नश्यति ।
परानिष्टोपायचिन्तोद्वेगी कोऽर्थी सुषुप्सति ॥ १९ ॥

कर्णजपाः । मैवं । स पापः पारे समुद्रं निर्व्वासोऽर्हः । यत इयं राजनीतिः प्रचरति ।

यो रोचते धर्म्मवृद्भ्यः पेयः स्यः सन्नपीष्यते ।
स हेम्नो दानपात्रं सन् राज्ञां वर्त्स्यत्यलं सुखी ॥ २० ॥
यः पापो द्वेष्टि तांस्तेषां वृत्तिं वा हरते बलात् ।
स तु वर्त्तिष्यते राज्ञो दण्ड्यो द्वीपेऽर्णवान्तरे ॥ २१ ॥

अपीति । अभियोक्तुः अभियोगकर्त्तुर्जनस्य स्वापेऽपि शयनेऽपि रतिरनुरागः सन्धिर्व्वा अवकाशो वा नश्यति । अत्र हेतुमाह । कोऽर्थी अभियोक्ता परेषामनिष्टोपायचिन्तया उद्वेगविशिष्टः सन् सुषुप्सति निद्रातुमिच्छति । पद्ये । रतीत्यादिकं उं । ( अपि ) स्वापेः ६।, ॥ १९ ॥

य इति । यो जनो धर्म्मवृद्भ्यः धर्म्मेण स्वधर्म्मेण वर्त्तन्ते ये ते धर्म्मवृतः तेभ्यो रोचते अनुरागी भवति स्यः सन् स साधुः पेयः पालनीयः सन् इष्यते नृपेणेति शेषः । अर्थात् नृपस्य स पालनीयो भवति । स्य इति त्यद्शब्दस्य रूपं । स जनो राज्ञां हेम्नः स्वर्णस्य दानपात्रं सन् अलमत्यर्थं सुखी सन् वर्त्स्यते । पद्ये । धर्म्म इति पुण्यवतः सं । यो रोचते इति रुचधातोरूपदर्शनं दानेत्यादिकं उं । वृद्भ्यः ५॥, पे ७।, यः १।, स्यः सन् १।, ( अपि ) इष्यते ८।, सहेम् १।, नो १।, ॥ २० ॥

यः पाप इति । यः पापः पापी तान् धर्म्मवर्त्तिनो द्वेष्टि बलात् तेषां वृत्तिं वा हरते स तु पापी राज्ञां दण्ड्यः सन् अर्णवान्तरे समुद्रमध्यद्वीपे वर्त्तिष्यते । पद्ये । सूत्रस्य उं ॥ २१ ॥

व्याकरणम् ।

अपि स्वापेः । स्वापेरपि खेर्जिः स्यात् । सुषुप्सति ॥ १९ ॥

वृद्भ्यः पे यः स्य सन्नपीष्यते सहेम् नो । वृतादेः पे य परस्मैपदसम्बन्धीयः स्यः सन् अपि सहेम् सेम् तादृशो नो इष्यते । वर्त्स्यति ॥ २० ॥

मे तु वर्त्तिष्यते ॥ २१ ॥

अन्यच्च। मतोऽन्यत्र तु वासोऽपि नैकग्रामे खलैः सताम्।

तत्रासतां विवत्सास्तु सतां मास्तु विवर्त्तिषा ॥ २२ ॥

उत्क्षवृत्तिनः कर्णेजपान् प्रति। महाशयाः! इदानीं गृहान् प्रतियान्तु अस्माकं कर्मक्षतिर्माभूत्। समयान्तरे एतद्विवेच्यं इत्युक्त्वा तेऽन्तर्दधिरे। अथ सुमत्सरनामा कर्णेजपः स्वगणान् प्रति। अहो ज्ञातं एते व्यवहारभीरवः। तद्भवतु वयमेवाभियोगार्थं गमिष्यामः। अहमर्थी यूयं साक्षिणः। इति ते राजद्वार्य्युपस्थिताः। अथ द्वारपालस्तमभियोगार्थमागतं प्रति।

ओखेरनुक्तिव्यथोऽजिरेऽश्वत्थच्छायमाश्रयेः।

आहूतोऽनु नृपं यायाः कोप्यर्थी नात्र विव्यथे ॥ २३ ॥

मत इति। अन्यत्र तु अन्यस्मिन्नपि ग्रामादौ वासोऽपि मतः प्रशस्तः खलैः सहैकग्रामे सतां साधूनां वासो न मतः इत्यन्वयः। तत्र खलैः सहैकग्रामे असतां विवत्सा वर्त्तनेच्छा अस्तु तत्र सतां विवर्त्तिषा वर्त्तनेच्छा माऽस्तु। पद्ये। अपीत्यादिकं उं। मतः १, अन्यत्र ७, ( तु ) वा १, सः १, ॥ २२ ॥

ओखेरिति। अनुक्तिव्यथ इति उक्तिर्वाक्यं व्यथो भयं तौ उक्तिव्यथौ न स उक्तिव्यथौ यस्य तादृशः सन् अर्थात् निरुक्तिनिर्भयः सन् अजिरे चत्वरे ओखेर्गच्छेः अश्वत्थच्छायं आश्रयेः राजपुरुषैराहूतः सन् नृपमनु राजानमुद्दिश्य यायाः। कोऽपि अर्थी अत्र अश्वत्थच्छायायां न विव्यथे। दुःखी नाभवत्। पद्ये। ओ ए सम्बोधने। सचेत्यादिकं उं। खेः ६।, अनुक्तिव्यथः ६।, जिः १।, ॥ २३ ॥

व्याकरणम्।

मतोऽन्यत्र तु वा सः। आत्मनेपदादन्यत्र तु स इम् वा स्यात्। विवत्सा, विवर्त्तिषा ॥ २२ ॥

खेरनुक्तिव्यथो जिः। अनु पश्चात् अर्थात् अव्यवहितोत्तरे क्तिर्विभक्तिर्यस्य तादृशस्य व्यथधातोः खेर्जिः स्यात्। विव्यथे ॥ २३ ॥

अर्थी एवमिति । उक्तस्थले गतः अपरोऽर्थी तं प्रति ।

व्यसनं जगृहे नु त्वामर्थी वैशम्यतो मतेः ।
ग्रहादीनाश्चैदितो हि स्वपादेश्च यदन्त्यकृत् ॥ २४ ॥

अथ अत्रार्थी कोऽपि नवेति प्रतीहारे णोच्चैरुक्ते अर्थी कर्णजपः राजानमेत्य प्रार्थनापत्रं समर्पयति । पाठकः पठति । तद्यथा । अर्थिनो विज्ञापनमेतत् ।

त्वयि ग्रामति राजेन्द्र ! चतुष्पात् दीप्यते वृषः ।
आसन् सर्व्वाः प्रजाः सुस्थाः न दुःखैः कापि विव्यथे ॥ २५ ॥
नादत्तं जगृहुः कोऽपि नापि जिज्युर्गृहे स्थिताः ।

---

* व्यसनमिति । नु भोः व्यसनं विपत् त्वां जगृहे गृहीतवत् । हि यस्मात् मतेर्बुद्धेर्वैषम्यात् वैपरीत्यात् ग्रहादीनाञ्च वैषम्यात् अर्थी सन् वादी सन् अत्र व्यवहारस्थले ऐत् आगतवान् भवानिति शेषः । ग्रहादीनामिति आदिपदात् समयादेः परिग्रहः । यत् अर्थित्वं स्वपादेरपि निद्रादेरपि अन्तकृत् नाशकृत् । पक्षे । पूर्व्वभाग उं । यदिति यत्नवतः अन्तकृदिति यमस्य सं । ग्रहादीनां ६।॥, ( च ) ( ऐत् इतः ) ऐदितः ६।, ( हि ) स्वपादेः ६।, ( च ) ॥ २४ ॥

त्वयीति । ग्रामति ग्रामनं कुर्व्वति सति । वृषो धर्म्मः । अन्यत् सुगमं ॥ २५ ॥

नादत्तमिति । अदत्तं न जगृहुः अर्थात् कोऽपि अपहरणं न कृतवन्तः । कोऽपि हिज्जाः गृहे स्थिता न जिज्युः जरां न प्रापुः अर्थात् सर्व्व एव पञ्चाशोर्द्धे वनं गच्छन्ति स्म । जिज्युरिति ज्यागि जरायामित्यस्य रूपं । दिग्वधूनां सम्बन्धे अयशोमयी नीलसाटी

व्याकरणम् ।

ग्रहादीनाञ्चैदितो हि स्वपादेश्च । अनुक्तिरित्यनुवर्त्तते समस्तमपि नित्याकाङ्क्षत्वात् । तेन ग्रहादीनां ऐदितः ऐकारानुबन्धधातोः स्वपादेश्च अनुक्तीनामेतेषां खिजि स्यात् । जगृहे ॥ २४ ॥

विव्यथे ॥ २५ ॥

जगृहुः, जिज्युः, ऊयुः ॥ २६ ॥

नीलसाटीं दिग्वधूनां नोयुः केप्ययशोमयीम् ॥ २६ ॥
पराङ्गनादृगिषवो विविधुर्नापि पूरुषम् ।
ऊषुः परार्त्तिं नो केऽपि विविचुः केऽपि नार्थिषु ॥ २७ ॥
के वा न धर्म्मं पप्रच्छुर्वव्रश्चुर्न यमाङ्गयम् ।
के वा नागन्तुकाद्यर्थं बभञ्जुर्मध्यमेऽहनि ॥ २८ ॥
न क्वापि परपर्य्यङ्के सुषुपुः का अपि स्त्रियः ।
केऽपि कस्मा अपि क्वापि ऊचुर्भ्रान्त्यापि नोषतीम् ॥ २९ ॥
के विप्राः सन्ध्ययोर्नेजुरूहुः के बन्ध्यतां दिनम् ।
तपो दानव्रतार्च्चेज्यास्वाध्यायाद्यैर्विनास्थया ॥ ३० ॥

केऽपि न ऊयुः तन्तुसन्ततिक्रियां न कृतवन्तः अर्थात् केऽपि अयशस्विनो नासन् । ऊयुरिति वेञस्तूताविव्यस्य रूपं वेञो वयवेति वयादेशः । पचे । सूत्रस्य उदाहरणम् ॥ २६ ॥

परेति । परस्त्रियो दृगवाणाः पुरुषं न विविधुः । परार्त्तिं परपीडां न ऊषुः नेच्छन्ति स्म । अर्थिषु याचकेषु न विविचुः न व्याजं छलं कृतवन्तः । पचे । सूत्रस्य उ° ॥ २७ ॥

केवेति । आगन्तुकाद्यर्थं अतिथ्यादिनिमित्तं न बभञ्जुः न पाकं कृतवन्तः अपि तु तथा । पचे । सूत्रस्य उ° ॥ २८ ॥

नेति । केऽपि जनाः कस्मै अपि जनाय क्वापि कुत्रापि उषतीं अकल्याणीं वाचं न ऊचुः नोक्तवन्तः । पचे । सूत्रस्य उ° ॥ २९ ॥

के इति । सन्ध्ययोः सायंप्रातर्न ईयुः नेष्टवन्तः के तनास्तपोदानाद्यैर्विना आस्थया स्थित्या दिनं बन्ध्यतां निष्फलतां ऊहुः प्रापितवन्तः ॥ ३० ॥

व्याकरणम् ।

विविधुः, ऊषुः, विविचुः ॥ २७ ॥

पप्रच्छुः, वव्रश्चुः, बभञ्जुः ॥ २८ ॥

सुषुपुः, ऊचुः ॥ २९ ॥

ईजुः, ऊहुः ॥ ३० ॥

नोपुर्व्वीजमुदर्काय नोवुः के दिक्पटं यशः।
वैद्यमाजुहुवः के वा विव्युर्मध्येऽङ्कि गोपुरम् ॥ ३१ ॥
नास्तीत्यूदुः केऽर्थिने वा नोपोषुः के हरेर्दिने।
एवं धर्म्मरताः का वा शुश्रुवुर्न प्रजास्तव ॥ ३२ ॥

किन्तु विल्वपुरग्रामीय धर्म्मपालनामा उञ्छवृत्तिब्राह्मणः शिल-वृत्तीनां वृत्तिमपाहरदित्यतोऽहमर्थी। अलमतिविस्तरेण।

विधीयतां कृपाद्यार्थे सत्कृपः कृप्तवासनः।
परार्त्तिनोदे येनैष सङ्कल्पः स्यान्न मेऽफलः ॥ ३३ ॥

नोपुरिति। उदर्काय उत्तरकालीनफलाय बीजं धर्म्मरूपं न ऊपुः वपनं न कृतवन्तः। गोपुरं पुरद्वारं विव्युः आवृतं चक्रुः ॥ ३१ ॥

नास्तीति। के जना अर्थिने याचकाय नास्तीति ऊदुः उक्तवन्तः हरेर्दिने एका-दश्यां। शुश्रुवुः बभुवुः ॥ ३२ ॥

विधीयतामिति। अद्य अर्थे प्रार्थनाविषये कृपा विधीयतां सत्कृपः सती कृपा यस्य तादृशो जनः परार्त्तिनोदे परदुःखच्छेदे कृप्तवासनः कृप्ता स्थिरा वासना यस्य स तथा। येन हेतुना मे मम एष सङ्कल्पोऽफलो न स्यात्। पक्षे। तवासनेत्यादिकं ज्ञेयं। विधीयतां ८।, कृपाद्यर्थे ७।, असत्कृपः ६।, कृप् १।, ॥ ३३ ॥

व्याकरणम्।

ऊपुः, ऊवुः, आजुहुवुः, विव्युः ॥ ३१ ॥

ऊदुः, उपोषुः, शुश्रुवुः ॥ ३२ ॥

विधीयतां कृपाद्यर्थेऽसत्कृपः कृप्। कृपाद्यर्थे अवर्त्तमानस्य कृपस्थाने कृप् स्यात्। सङ्कल्पः ॥ ३३ ॥

इति मं।

अथ राजा वादिनं प्रति।

वचो वोऽचकितो नादां यद्वोचो लिपेर्मुखात्।
यतोऽभियोगो ग्राह्योऽत्र व्यवहारोक्तरीतितः॥ १॥

तदपि यूयं वेत्थ। एवं श्रुत्वा सुमन्त्रस्तथैव सशपथमभियुंक्ते स्म। (राजा तं प्रति।)

ह्वापतत्स्थानेऽपम इह परवादात् त्वमेव किम्।
नापमत् किं स्वयं वादी ह्रुतवृत्तिः श्लिष्टो द्विजः॥ २॥

(सुमन्त्रो राजानं प्रति।)

प्रज्ञास्थोऽस्य स्थिरमतिरहमेवेति स द्विजः।

वचेति। अचकितः अनाशङ्कितः सन् वो युष्माकं वचो नादां न गृहीतवान् यद्वचो लिपेर्मुखादक्षरमुखात् अवोचः। यतो यस्माद्धेतोः अत्र विचारस्थले व्यवहारोक्तरीतित एव अभियोगः ग्राह्यः। पक्षे। वोच इत्यत्र प्रकृतिभ्रमनिरासार्थं चकारस्य न लकारः। वचः ६।, चकि ७।, ॥ १॥

ह्वापदिति। परवादात् परस्य वादमाश्रित्य आपतत्स्थाने व्यवहाररूपविवादास्पदे किं कथं त्वमेव अपम पतितोऽसि। ह्रुतवृत्तिः ह्रुता वृत्तिर्यस्य स तथा तादृशः श्लिष्टो श्लिष्टवृत्तिर्वादी द्विजः किं कथं न अपमत् न पतितः न आगत इति यावत्। पक्षे। ह्वा इति सं। पत्स्थाने ७।, पम: १।, ॥ २॥

प्रज्ञेति। अस्य ह्रुतवृत्तिब्राह्मणस्य अहमेव प्रज्ञास्थः बुद्धिस्थः प्रत्ययित इति यावत्। कीदृशः स्थिरमतिः स्थिरबुद्धिः इति हेतोः स द्विजो वादे व्यवहारे स्वयमशक्तः सन्

व्याकरणम्।

वचो वोच् अकि। अवोचः॥ १॥

पत्स्थाने पम:। अपमत्॥ २॥

अस्थोऽस्य:। न्यस्यत्॥ ३॥

असमर्थः स्वयं वादे न्यस्यत् प्रतिनिधाय माम् ॥ ३ ॥

राजा मन्त्रिणं प्रति ।

चेदत्राश्वयति स्थाने श्वः प्रत्यर्थी स्वयं द्विजः ।
भद्रं पत्तोप्यद्य माश्वत् नो चेदनु नियोक्ष्यसि ॥ ४ ॥

अथ धर्म्मपालनामा विप्रो लोकमुखात् तद्वार्त्तां श्रुत्वा भयार्त्तस्त्वरमाणः स्वयमेव राजानमुपसृत्य राजन्नभ्युदयोऽस्तु भवतामपरिचितमेवासं किन्त्वधुना स्वकर्म्मणैव परिचायितोऽस्मि । राजा तं प्रति ।

आवासगुह्व योदूरचिरवासी भवान् स किम् ।
परिचेयस्त्वमस्माकं यस्त्वं नाम च गूहसि ॥ ५ ॥

प्रतिनिधाय प्रतिनिधिं कृत्वा मां न्यस्यत् नियुक्तवान् । पचे । प्रञ्च इति सं । अस्थः १।, अस्थः १।, ॥ ३ ॥

चेदिति । चेत् यदि प्रत्यर्थी द्विजः श्वः अनागते परेऽह्नि स्वयमत्र स्थाने आश्वयति आगच्छति तदा भद्रं । पत्तोपि पदातिकोऽपि अद्य माश्वत् मागच्छतु नो चेत् यद्येवं न स्यात् अनु पश्चात् तं पदातिकं नियोक्ष्यसि । पचे । चेदिति चेतनाशतः सं । श्वयतिस्थाने ७।, श्वः १।, ॥ ४ ॥

आवासेति । आवासगूह आवासं वसतिग्रामं गूहति गोपयति यः स तादृशः वसतिग्रामनाम न कथयसीति भावः । यो भवान् दूरचिरनिवासी दूरे चिरं वससीत्यर्थः । स त्वं किं कथं अस्माकं परिचेयः भवे इति शेषः । यस्त्वं नाम च स्वनामापि च गूहसि गोपयसि । पचे । आवास इति वसतः सं । रवासी अग्निवासीत्यर्थः । गुहः ६।, ओत् १।, ऊः १।, अचि ७।, ॥ ५ ॥

व्याकरणम् ।

श्वयतिस्थाने श्वः । माश्वत् ॥ ४ ॥

गुह्वयोदूरचि ॥ गुह ओत् ऊः स्यादचि परे । गूहसि ॥ ५ ॥

विप्रः । सोऽहं विल्वपुरनिवासी धर्म्मपालनामा दुरात्मा उञ्छवृत्तिर्ब्राह्मणः प्रत्यर्थी स्वयमागतोऽस्मि । राजा तं प्रति । ज्ञातोऽसीति । ब्रह्मन् ! ब्राह्मणवृत्त्यपहारे ईदृशीं मतिं कस्त्वां निनाय ।

विप्रः ।

वोढ़ा प्रवृत्तेर्यो ह्वन्नो नीतानां मोहसागरे ।
ममतोढ़े स हि वढोऽदो बुधोऽपीति मन्यते ॥ ६ ॥

इदन्तु चिन्तयतो मम हृत् प्रसीदति तद्यथा ।

दुष्कृतिं नोऽभियुंक्ते तेऽग्रतो यो वा जनः स नः ।
अनया पततां किन्न जायादुद्धरणे सखा ॥ ७ ॥

अतो मां पापानुरूपं दण्डय । यतः ।

वोढ़ेति । यः अर्थादीश्वरः मोहसागरे नीतानां प्रापितानां ह्वन्नः हृदयस्थः सन् प्रवृत्तेः सदसत्प्रवृत्तेर्व्वोढ़ा प्रापकः । सदसत् कर्म्मसु ईश्वरः प्रवर्त्तयतीत्यर्थः । स हि स एव ईश्वरः अदो बुधोऽपि एतद्बोधस्यापि वढः प्रापकः । बुध इति बुधधातोः क्विपि रूपं । तथा च ईश्वर एव ममैतत् दुर्बुद्धेः प्रापकः । मोहसागरे कीदृशे ममतोढ़े ममतावहे ममताप्रवाहे इति यावत् । पक्षे । मम त इत्यन्तपूर्व्वभागः ष' । मम तः मम विस्तारकः । ढ़े ७।, सहिवढः ६।, अत् १।, ओ १।, ॥ ६ ॥

दुष्कृतिमिति । यो वा जनः यः कोऽपि जनः ते तव अग्रतः सम्मुखे नोऽस्माकं दुष्कृतिं पापं अभियुंक्ते अभियोगं करोति स जनः अनया दुष्कृत्या पततां पातित्यं भजतां नोऽस्माकं उद्धरणे उद्धारविषये किं सखा न जायात् न भविता अपि तु स तथैव । पक्षे । पूर्व्वभागः पूर्व्वापरसूत्रीयोदाहरणत्वेन सार्थकं । अग्रतो यः ६।, वा १, जनः ६।, सनः ६।, अनः ६।, आः १।, ॥ ७ ॥

व्याकरणम् ।

ढे सहि वढोऽत् ओ । सहवढोरकारस्य ओ स्यात् ढे परे । वोढ़ा ॥ ६ ॥

अग्रतो यो वा जनः सनः अन् आ । यकारस्य अग्रे स्थितस्य जनः सनश्च अनस्थाने आस्यात् वा ॥ ७ ॥

खननोऽपि नृपां दण्डः सापराधागसां स तत् ।
खायान्ममागो द्रोर्मूलं जन्यात् यन्नोत्तरे फले ॥ ८ ॥
समुज्झसि सदा वित्तमिह दुःखनिवारणम् ।
धत्से जातदयो दण्डं परत्रार्त्तिनिवारणम् ॥ ९ ॥

राजा मैवं । यतः ।

क्षारोपस्वेदनिर्णोदात् वासः शुद्धिरहो मसिः ।
इमं विना ऋतः किन्तु वासः पर्य्यह्नुत क्वचित् ॥ १० ॥

---

खनेति । नृपां राज्ञां दण्डोऽपि सापराधानां जनानां आगसां पापानां खननः उन्मूलकः तत् तस्मात् स दण्डो ममागोद्रोर्मूलं आगः पापं तद्रूपो यो द्रुमस्तस्य मूलं खायात् । येन हेतुना उत्तरे उत्तरकाले फले न जन्यात् आगोद्रुम इति शेषः । पक्षे । नृपामित्यादिकं उं नृपामिति नृपाशब्दस्य षष्ठीबहुवचनेन निष्पन्नं विश्वपाशब्दवत् । खननः ६।, ( अपि ) ॥ ८ ॥

समिति । इह काले दुःखनिवारणं वित्तं धनं सदा समुज्झसि अर्त्तिनिवारणं पीड़ानिवारकं दण्डं जातदयो जाता दया यस्य तादृशः सन् धत्से । पक्षे । समुदिति हर्षयुक्तस्य सं । वित्तमित्यादिकं उं । झसि ७।, सदा ७।, ॥ ९ ॥

क्षारेति । क्षारजलोपस्वेदसहितात् निर्णोदादेव प्रक्षारादेव वासःशुद्धिर्वस्त्रस्य मलक्षयो भवति इति शेषः । अहो आश्चर्य्ये इमं क्षारोपस्वेदसहितनिर्णोदं विना ऋतः प्रदीप्तो मसिः कालीतिख्यातमलः क्वचित् कुत्रापि नु भोः किं वासो वस्त्रं पर्य्यह्नुत परित्यक्तवान् अपि तु नेत्यर्थः । पक्षे । पूर्व्वापरभागः उदाहरणघटित-वाक्यत्वेन सार्थकः । म-सिः १।, इमं २।, ( विना ) ऋतः ५', क्वित् १, ॥ १० ॥

## व्याकरणम् ।

खननोपि । खनोऽनोपि आ स्यात् वा यकारस्यागतः । खायात्, जन्यात् ॥ ८ ॥

झसि सदा । झसि परे एषां अनस्थाने आस्यान्नित्यं । जातः ॥ ९ ॥

म-सिः इमं विना ऋतः क्वित् । इम् व्यतिरिक्तः आत्मनेपदविहितः सिः ऋदन्तात् कित् स्यात् । पर्य्यह्नुत ॥ १० ॥

तद्वत् तपोदानयज्ञैर्व्विना न पापक्षयो भवतीति तस्मात् तपश्चरतु।

क्षपीष्ट तेऽघं किन्नामासीश्च वंशे तपस्यताम्।
भवांश्च तादृक् पापं तत् संहृषीष्ठास्तपोबलात्॥ ११॥

यतः। उपान्ते कोऽपि पङ्को न स्थातुमिष्टे तपस्यताम्।
ब्राह्मणानां मृग इव व्याघ्रस्येवेत्यबुद्ध न॥ १२॥

ब्रह्मवृत्तिहरणं तद्वर्णवधजन्यपापं जनयतीति शुद्ध्यर्थं द्वादशवार्षिकं व्रतं तीर्थसेवनं वा विधेयम्। विप्रः। राजन्! अशक्यमेवैतत्। यतः। मयि चत्वरात् बहिरपि निर्याते मम पिता मामेवं व्याह्वत्।

ह्विस्तातेति त्वयाहूतस्तिष्ठामि चकितः पुरः।

---

क्षपीति। नाम सम्भावनायां अघं पापं ते तव किं क्षपीष्ट किं करिष्यति। तपस्यतां तपस्विनां वंशे आसीश्च उत्पन्नोसि भवानपि तादृक् तपस्वी तत् तस्मात् तपोबलात् पापं संहृषीष्ठाः संहारं करिष्यसि। पथ्ये। पूर्व्वापरभागौ उं। (कित् नामा) किन्नामा ११, सीः ११, (च १)॥ ११॥

उपान्त इति। तपस्यतां ब्राह्मणानां उपान्ते समीपे कोऽपि पङ्कः पापं स्थातुं न इष्टे न शक्तो भवति व्याघ्रस्य समीपे मृग इव न अबुद्ध न ज्ञातवान् भवानिति शेषः। उपान्तिकः ६।, (अपि)॥ १२॥

ह्विरिति। त्वया ह्विर्द्विवारं तात इति शब्देन आहूतः सन् चकितो भीतः सन्

व्याकरणम्।

किन्नामा सीश्च। ऋतः परः अनिम् सीश्च अर्थात् अष्टमविभक्तेः सीश्च कित् नामा स्यात्। क्षपीष्ट, क्षपीष्ठाः॥ ११॥

उपान्ते कोऽपि। उपान्ते अन्तसमीपे इक् यस्य तादृशधातोरपि आत्मनेपदविहितोऽनिम् सिः सीश्च कित् संज्ञः स्यात्। अबुद्ध॥ १२॥

ऐदितोऽजिरतोऽप्यारात् स भवानुषितश्चिरम् ॥ १३ ॥
स्वपादेरप्यवसरो नास्ति मे समयेऽन्ययोः।
पित्रोः संसेवमानस्य किमन्यत् तुभ्यमुच्यते ॥ १४ ॥
तपोजपव्रतार्च्चेज्या स्वाध्यायास्तीर्थसेवनम्।
सर्व्वं ममान्ययोः पित्रोर्व्वरिवस्यैव केवलम् ॥ १५ ॥
मच्चक्षुर्गच्छति स्नाति वस्ते च यजतेऽश्नाति।
भुंक्ते पिबति तातो मे मां विना सुप्यते परम् ॥ १६ ॥

तन्नेह चिरं स्थातुं युज्यते। अपि च।

व्यक्तोभूमेऽङ्कानुबन्धे ग्रहादेः प्रातिकूल्यतः।

---

पुरोऽग्रे तिष्ठामि स भवान् इतः अस्मात् अजिरतोऽपि चत्वरादपि आरात् दूरं ऐत् गतवान् चिरं बहुकालं उषितश्च। पद्ये। पूर्व्वापरभागौ छं कितः ६।, पुरः ७। ऐदितः ६।, जिः १।, ॥ १३ ॥

स्वपादेरिति। अन्ययोः पित्रोः सेवमानस्य मे मम समये स्वपादेर्निद्रादेरपि अवसरोऽवकाशो नास्ति अन्यत् किं तुभ्यं उच्यते। स्वपादेः ६।, ( अपि ) ॥ १४ ॥

तप इति। वरिवस्या शुश्रूषा। अन्यत् सुगमम् पद्ये। सूत्रस्य छं ! ॥ १५।

मच्चक्षुरिति। मे मम तातः पिता मच्चक्षुः अहमेव चक्षुर्यस्य स तथा तादृशः सन्

व्याकरणम्।

कितः पुर ऐदितो जिः। कित् संज्ञकाग्रे स्थितस्य ऐकारानुबन्धस्य धातोर्जिः स्यात्। आहृतः। उषितः ॥ १३ ॥

स्वपादेरपि। कितः पुरतः स्वपादेरपि जिः स्यात्। उच्यते ॥ १४ ॥

इज्या ॥ १५ ॥

सुप्यते ॥ १६ ॥

तावत् तेऽव्यवहार्य्याः स्युर्यावन्नोशन्ति निष्कृतिम् ॥ १७ ॥

अतो राजन् ! विलम्बेनालं शीघ्रं मम निष्कृतिं विधेहि । तत् श्रुत्वा राजा आत्मगतं । हा कष्टं । सप्रकाशं ।

आजुहाव क्वचिद्वादे न विप्रं प्रतिवादिनम् ।

भियाहमपि किं प्रह्वो दिदरिद्रेश स यत् सरुट् ॥ १८ ॥

विप्रः राजानं प्रति । यदा तु ।

तज्ज्ञेषु धर्म्मप्रच्छायावान्नो दृष्टिमितः स तु ।

---

गच्छति स्नाति वस्ते वस्त्रं परिदधाति । मां विना परं केवलं सुप्यते । तेनेति शेषः । पचे । सूत्रस्य उं । व्यक्तीति । यङ्हादेः प्रातिकूल्यतः प्रतिकूलभावात् अङ्गानुबन्धे अङ्गः चौर्य्यापवादादिः अनुबन्धः कामादिजन्यगुणविशेषः तस्मिन् व्यक्तीभूते सति बहुजनैर्ज्ञाते सति ते दुष्टजनाः तावत्कालं अव्यवहार्य्याः स्युः यावत्कालं निष्कृतिं प्रायश्चित्तं न उशन्ति न वाञ्छन्ति । व्यक्तीभूते ७।, ङानुबन्धे ७।, यङ्हादेः ६।, ॥ १७ ॥

आजुहावेति । अहं भिया भयेन प्रतिवादिनं कमपि विप्रं क्वचिदपि विवादे न आजुहाव आह्वानं न कृतवानस्मि । कीदृशोहं प्रह्वः स्वभावतो नम्रः विप्रेषु प्रणत इत्यर्थः । यत् यस्मात् स विप्रः दिदरिद्रेश दिवारकथितेऽपि सरुट् सरोषो भवतीति शेषः । पचे । कम्प इति वेपमानस्य सं । अन्यत् उं । यदिति यवत: सरुडिति सक्रोधस्य सम्बोधनं । ह्वः ६।, दिदरिद्रेः ६।, ( ष ) सः १।, ॥ १८ ॥

तज्ज्ञेष्विति । ये जनाः अर्थसंश्रयान् वक्ष्यन्ति तज्ज्ञेषु तादृशेषु शेषु

व्याकरणम् ।

व्यक्तीभूतेङानुबन्धे यङ्हादेः । ङकारककारानुबन्धे परत्र व्यक्तीभूते सति यङ्हादेर्जिः स्यात् । उशन्ति ॥ १७ ॥

ह्री दिदरिद्रेश सः । दिदरिद्रस्यापि ह्रेङः स जिः स्यात् । आजुहाव ॥ १८ ॥

षष्ठाख्याते दिवाभागे वव्रशुर्य्येऽर्थसंशयान् ॥ १९ ॥

तर्ह्येवाहमिहागतोऽस्मि। मम पिता आसन्ध्यं धर्म्मपृट् समयं नयिष्यतीति न सायमिह स्थातुं शक्नोमि। राजन्! किं चिरयसि। राजा तं प्रति।

"वपनं द्रविणादानं स्थानान्निर्य्यापनञ्चेति" विप्राणां दण्ड: तत् त्रितयमपि त्वयि न सम्भवति। यत:। वपनात् व्रतभङ्ग: द्रविणाभावात् तदसम्भव: निर्य्यापणात् पित्रोर्व्वैरिवस्याहानिस्तेन च तयो: प्राणवियोग: इति तव दममेव न पश्यामि। विप्र:। राजन्! ममैकमवयवं छिनत्तु एष हि ब्रह्मस्वापहारकस्य दण्ड:। एतत् श्रुत्वा राजा द्वौ कर्णौ पाणिभ्यामाच्छाद्य। मैवं ब्रह्मन्।

अताड्या अच्छेद्या वोऽवयवा: ॥ २० ॥

धर्म्मज्ञेषु अर्थात् तादृशधर्म्मशास्त्रज्ञप्रकाशात् षष्ठाख्याते षष्ठयामार्द्धे दिवाभागे स तु मम पिता धर्म्मप्रच्छाद्यवान् धर्म्मप्रच्छाद्यं धर्म्मजिज्ञासादि आदिपदात् इतिहासादिस्तद्वान् तद्युक्त: नोऽस्माकं दृष्टिं दर्शनं इत: प्राप्त:। दर्शनविषयोऽभूदित्यर्थ:। पक्षे। तज्ज्ञेषु धर्म्म इति प्रसिद्धपण्डितानां मध्ये धर्म्मयुक्तस्य सम्बोधनं। प्रच्छाद्यवां ६॥, नो १।, दृष्टिं २।, इत: १।, स: १।, (तु) षष्ठाख्याते ७।, ॥ १९ ॥

अताड्या इति। वो युष्माकं अवयवा अताड्या अताडनीया:। पक्षे। अताड्या इति सं। व: ६।, वय १।, वा १।, ॥ २० ॥

व्याकरणम्।

प्रच्छाद्यवां नो दृष्टिमित: स तु षष्ठाख्याते। प्रच्छत्रयभज्जरेजां षष्ठाख्याते स तु जिर्नोऽस्माकं दृष्टिं न इत: अर्थात् प्रच्छादीनां षष्ठाख्याते जिर्न स्यात्। वव्रशु: ॥ १९ ॥

वो वय वा। वेञो वय वा स्यात् षष्ठाख्याते ॥ २० ॥

विप्रः । अपि च एवं कृते ।

साधुः स्वीयोऽपि विरजन्ननुरक्तोऽपि नो भवेत् ।
तिरोधानं न विरजेत् धर्म्मः श्रीरपि किं मयि ॥ २१ ॥

उक्तञ्च मूर्द्धाभिषिक्तान् प्रति ।

सत् स्थ रे पिशुनान् राज्यकण्टकान् साधुनिन्दकान् ।
घ्नतामपि ब्राह्मणानां स्तुवन्नग्रे निवत्स्यसीति ॥ २२ ॥

ब्रह्मन् ! अत्रेदं युक्तिरुदेति । यथा मत्तो बहुधनानि प्रतिगृह्य तान्येवोपात्तदुरितापनोदाय दण्डविधया किं न मह्यं प्रत्यर्पयसि । यथा ।

साधुरिति । साधुः सज्जनः स्वीयोऽपि आत्मीयोऽपि अनुरक्तोऽपि मयि अनुरक्तोऽपि विरजन् विरक्तः सन् तिरोधानं मत्तोऽन्तर्धानं नो भवेत् न प्राप्नुयात् अपि तु तथेति । भवेदिति भुजप्राप्तौ इत्यस्य रूपं । धर्म्मः श्रीरपि न विरजेत् विरक्तो न भवेत् अपि तु तथेति । पक्षे । पूर्व्वापरभागः ऽ । रक्तः ६।, अपि ७।, नः ६।, भवेत् ८।, तिरोधानं १।, ॥ २१ ॥

सदिति । रे सम्बोधने । पिशुनान् खलान् राज्यकण्टकान् अखिलान् साधुनिन्दकांश्च सत् साधु यथा स्यात् तथा स्थ नाशयत येति षोधनाशे इत्यस्य रूपं । घ्नतामपि हन्तुमिच्छतामपि ब्राह्मणानां अग्रे स्तुवन् सन् निवत्स्यसि स्थास्यसीति । पक्षे । पिशुनेत्यादीनां कथञ्चिदेकवाक्यता कार्य्या । स ६।, त् १।, सि ७।, भरे ७।, ॥ २२ ॥

व्याकरणम् ।

रक्तोऽपि नो भवेत् तिरोधानं । विरजन् ॥ २१ ॥
सत् स्थरे । सस्य त स्थादरे से परे । निवत्स्यसि ॥ २२ ॥

इति मिश्राध्यायः ।

उपात्तस्यैनसः स्याल्लुगङ्गणोऽपोऽप्सु प्रयच्छताम् ।
समुद्दिश्य पितॄन् देवानस्तीयं चातुरी श्रुतेः ॥ १ ॥

विप्रः । देव ! युज्यत एवैवं यद्यहमप्रतियाही न स्यां । राजा सत्यमेतत् भवानुञ्छवृत्तिः । विप्रः । राजन् ! किं चिरयसे ।

अघं धामप्रविष्टाहिं विदन्मे दण्डमुद्यतः ।
समुज्झ सोऽहिः स्याद्धिस्थाश्चेन्मां विद्धि निपातितम् ॥ २ ॥

राजा विप्रं प्रति ।

बाह्वोर्बलं समाश्रित्य तीर्थ्या दुरितपल्वलम् ।
विप्रैतज्जप सावित्रीं जुहुध्यावर्त्तय श्रुतिम् ॥ ३ ॥

---

उपात्तेति । देवान् पितॄन् समुद्दिश्य अप्सु जले अङ्गणो जलात् अपो जलं उपादाय तत् प्रयच्छतां ददतां जनानां उपात्तस्य सञ्चितस्य एनसः पापस्य लुक् अपनयनं स्यात् श्रुतेर्वेदस्य इयं चातुरी चतुरता अस्ति । पक्षे । तस्यैनस उपादिति प्रसिद्धस्य पापिनः समीपगतस्य सम्बोधनं । लुक् १।, अङ्गः ५॥, अपः ६।, ॥ १ ॥

अघमिति । मे मम अघं पापं धामप्रविष्टाहिं शरीरप्रविष्टसर्पं विदन् जानन् उद्यतः उद्योगी सन् दण्डं समुज्झ त्यज देहीति यावत् । सोऽहिः स सर्पश्चेत् यदि स्थाः स्यात् स्थितिमान् स्यात् तदा मां निपातितं विद्धि जानीहीति । निपातितमिति भाविनि भूतवदुपचारात् । पक्षे । समुदिति सहर्षस्य सं । विदन्निति पूर्व्वसूत्रीयो-दाहरणं । झसः ५।, हिः १।, स्यात् ८।, धिः १।, ॥ २ ॥

बाह्वोरिति । एतद्दुरितपल्वलं एतत् पापरूपमल्पं सरः तीर्थ्याः तरीतासि । श्रुतिं वेदं आवर्त्तय पुनः पुनः पठ । पक्षे । वाकारः समुच्चये । ह्वोः ५।, (अपि) हिः १।, धिः १।, स्यात् ८।, ॥ ३ ॥

व्याकरणम् ।

लुगङ्गणोऽपः । अदादेरपो लुक् स्यात् । अस्ति ॥ १ ॥

झसो हिः स्यात् धिः । विद्धि ॥ २ ॥

वा ह्वोः । ह्वोरपि हिर्धिः स्यात् । अत्र वाकारः समुच्चयार्थकः । जुहुधि ॥ ३ ॥

किं दण्डमर्थयसे। विप्रः। राजन्! मैवं ब्रह्मस्वापहरणजन्य-दुरितस्य विना राजदण्डं न क्षयः। राजा तं प्रति। ब्रह्मन्निदं वा किं विप्रस्य दैहिको दण्ड इति दण्डेन पापक्षय इति ब्रह्मस्वापहरण-जन्यदुरितस्य दण्डेनैव शुद्धिरिति च न श्रुतचरमस्माभिः। विप्रः। राजन्! श्रूयतां भारतीया कथा। देवयटनामा विप्रः स्वाग्रजस्य वेदश्रवसो मुनेराश्रममुपगम्य क्षुत्पिपासार्त्तः तदाश्रमोत्पन्नानि कोलफलानि भोक्तुमुद्यत आत्मगतं। एतत्कोलस्वामिनो ममाग्रज-स्याऽननुमत्या एतत् फलं भोक्तुं न युज्यते। अपि च।

यदि स्योरमदस्थल्यामुपेत्यैवं ब्रवीति माम्।
किं कोलानि भवानादत् वक्ष्ये तं किमहं तदा॥ ४॥

(अपि च।)

यशोमानितयोर्लोपो ह्यसतो निन्दकर्म्मणा।
कस्याचकात् सत्सभायां मुखं निन्दितकर्म्मणः॥ ५॥

---

यदीति। स्यः स मुनिः अदःस्थल्यां अस्मिन् स्थाने अरं शीघ्रं यथा स्यात् तथा उपेत्य आगत्य यदि मां एवं ब्रवीति भवान् किं कथं कोलानि फलानि आदत् तदाहं तं मुनिं किं वक्ष्ये। पक्षे। य इति वायोः सं। स्यस्यामित्यादिकं उं। दिस्योः ६॥, अम् १।, अदः ५।, ॥ ४॥

यश इति। सतः साधोः निन्दितकर्म्मणा यशोमानितयोः कीर्त्तिमानयोर्लोपः भवतीति शेषः। ह्यकारोऽवधारणे। निन्दितकर्म्मणः कस्य जनस्य सत्सभायां मुखं अचकात् दीप्यते स्म। अपि तु न कस्यापीति। पक्षे। यश इति यशस्विनः सं। अमानि ८।, तयोः ६॥, लोपः १।, ह्यसतः ५।, ॥ ५॥

व्याकरणम्।

दिस्योरम् अदः। अदः परयोर्दिस्योरम् स्यात्। आदत्॥ ४॥

अमानि तयोर्लोपो ह्यसतः। ह्यसात् परयोस्तयोर्दिस्योर्लोपः स्यात्। अचकात्॥ ५॥

यद्वैतत् भक्षणमपि युज्यते । यतः ।

मन्यतेऽदो घसादेशोऽलन्तस्यास्ति घसार्थिषु ।
यमिनोऽप्यतिथौज्यार्थं वास्तौ प्रतिनिधिः फलौ ॥ ६ ॥

अतस्तस्य मुनेः प्रतिनिधिभूतोऽसौ फलौ वृक्षोऽतिथये ददाति । तस्मात् ।

यामार्द्धे पञ्चमाख्यातेऽदो घसि स्यान्न पातकम् ।
मय्याश्रमेऽतिथौ प्राप्ते इति कोलानि सोऽघसत् ॥ ७ ॥

अथ देवयट् । कोलानि भुक्त्वा आत्मगतं । हत हत न मया भद्रमाचरितं । अदत्तस्योपादानं अतिथीनामपि श्रेयसे न भवति । इदमपि ज्ञातमासीत् ।

मन्यतेऽप्युत्तरेऽवश्चेत् सन्नपीह तदापि च ।

---

मन्यत इति । तस्य अग्रजस्य अलमत्यर्थं घसार्थिषु भोजनार्थिषु अदो घसादेशोऽस्य फलस्य भोजनादेशोऽस्ति इति मन्यते । हि यस्मात् यमिनो मुनेर्वास्तौ वास्तुभूमौ फलौ वृक्षोऽतिथौज्यार्थं अतिथिपूजनार्थं प्रतिनिधिः । मन्यते ८।, अदः ६।, घसादेशः १।, ( अल् अन्तस्य ) अलन्तस्य ६।, अस्ति ८।, ॥ ६ ॥

यामेति । मयि अदो घसि सति अदः फलं घसति भुंक्ते इति अदोघस् तस्मिन् । घस इति लृघसौ अद्ये इत्यस्य रूपं । तथा च । मयि एतत् फलं भुक्तवति सति पातकं न स्यात् । अत्र हेतुगर्भविशेषणमाह । मयि कीदृशि पञ्चमाख्याते यामार्द्धे आश्रमप्राप्ते अतिथौ इति विविच्य स विप्रः कोलान्यघसत् । पचे । यामार्द्धे इति अर्द्धसंयततायाः सं । पञ्चमाख्याते ७।, अदः ६।, घसि १।, स्यात् ८।, ॥ ७ ॥

मन्यत इति । इह संसारे सन्नपि पण्डितोऽपि चेत् यदि उत्तरे उत्तरकाले अवं

व्याकरणम् ।

मन्यतेऽदो घसादेशोऽलन्तस्यास्ति । अलन्तस्य अदधातोः स्थाने घसादेशोऽस्ति इति मन्यते बुधैः । घसार्द्धिषु ॥ ६ ॥

पञ्चमाख्याते अदो घसि स्यात् । अघसत् ॥ ७ ॥

घासं न ह्वातुं शक्नोति किं मीनोऽज्ञोऽपराध्यति ॥ ८ ॥

अथ स एवं आश्रमिणं ज्येष्ठं प्रति आक्षिपति।

अहो षष्ठविभक्तौ वा दिवैवं स स्मरत्यपि।

नाश्रमी स्वाश्रमे को वा आगात् नाद जघास वा ॥ ९ ॥

अथ वेदश्रवाः स्वाश्रममागत्य स्वानुजं भ्रातरं ददर्श।

अथैनमेतमनुजं प्रणतं पादयोर्मुनिः।

आलिङ्ग्याशीर्भिरासिच्य साश्रुनेत्र उवाच तम् ॥ १० ॥

तात! बहुकालोत्तरं दृष्टोऽसि। भवतु सर्व्वं श्रोष्यामि कथयिष्यामि च।

सम्प्रति। विदातोनुरभावेन न लब्धं पाद्यमासनम्।

त्वमत्रागा इत्यविदुर्नापि मत्प्रतिवासिनः ॥ ११ ॥

---

पापं मन्यतेऽपि स पण्डितः तदापि घासं अर्थादुपस्थितं भक्ष्यं ह्वातुं त्यक्तुं न शक्नोति। अज्ञोऽबोधो मीनो मत्स्यः किमपराध्यति अपराधी भवति। मन्यते ८।, (अपि) उत्तरे ७।, घञ् १।, (चेत्) सन् १।, (अपि) इह ७।, तदा ७।, (अपि) सः १।, ॥ ८ ॥

अहो इति। अहो आश्चर्य्यं दिवा अह्नः षष्ठविभक्तौ वा षष्ठभागेऽपि स आश्रमी अग्रजः एवं वत्यसार्थं न स्मरत्यपि स्मरणमपि न करोति को वा जनः स्वाश्रमे आगात् आगतः को वा न आद न भुक्तवान् को वा जघास। पक्षे। अहो इति सम्बोधने। षष्ठविभक्तौ ७।, वा १।, ॥ ९ ॥

अथेति। एतं आगतं। अन्यत् सुगमम् ॥ १० ॥

विदेति। हे विद! ज्ञानिन्! अतोऽस्मिन् मम गृहे नुर्मनुष्यस्य अभावेन पाद्यमासनं न लब्धं त्वयेति शेषः। त्वं अत्र स्थाने आगाः आगतवानसि इति मत्प्रतिवासिनोऽपि न अविदुः न ज्ञातवन्तः। (वित् आतः) विदातः ५।, अन् १।, उस् १।, ॥ ११ ॥

व्याकरणम्।

मन्यतेऽप्युत्तरे घञ् चेत् सन्नपीह तदापि सः। यदि उत्तरे घञ्, सन्, अपि स्यात् तदापि स घसादेश इह स्थाने मन्यते। घासं। ॥ ८ ॥

षष्ठविभक्तौ वा। जघास, आद ॥ ९ ॥ १० ॥

विदातोऽन् उस्। वित्तेरादन्ताञ्च परः अन् उस् स्यात् वानुवर्त्तते। अविदुः ॥ ११ ॥

भ्रातस्त्वामवजानामि इति तु न मनीकरोतु । यतः ।

द्विषोऽपि यद्यागच्छेयुराश्रमं येऽद्विषुः सदा ।

मित्रवत् तेऽपि पूज्याः स्युर्दुर्लभः सोदरागमः ॥ १२ ॥

तद्भवतु । मध्याह्ने किं भवन्तोऽप्सुराश्रमे गृहमेधिनः ।

यदि नाप्सान् तदा भ्रातरद्धि वेलातिवर्त्तते ॥ १३ ॥

स तं प्रति ।

क्षुद्बाधया जघासाहं कीलानि भवदाश्रमे ।

पतितानि स्वयं यानि भवन्तस्तत्तु नाविदन् ॥ १४ ॥

तत् श्रुत्वा मुनिरनुजं प्रति । आः किमाचरितं ब्रह्मस्वमपहृतं भवता । यमधर्म्मं धर्म्मविदोऽद्विषन् स एवाद्य त्वामाशिश्रियत् ।

पङ्क्तीभोयपि लोपनं भवति नेमोम्नस्त्रयीयोगयोः

सावित्रीं जपतो द्विजाय ददतः सन्ध्ये उभे जुह्वतः ।

द्विष इति । द्विषोऽपि शत्रवोऽपि यदि आश्रमं आगच्छेयुः ये जनाः सदा अद्विषुः । तेऽपि द्विषोऽद्विषो मित्रवत् पूज्याः स्युः । द्विषः ६१, ( अपि ) ॥ १२ ॥

मध्याह्न इति । गृहमेधिनो गृहस्थस्य आश्रमे मध्याह्नसमये भवन्तः किमप्सुः भक्षितवन्तः यदि तु न अप्सान् न भक्षितवन्तः तदा हे भ्रातः ! अद्धि भुङ्क्ष्व, वेला अतिवर्त्तते अतिशयिनी भवति । पद्ये । सूत्रस्य ष ॥ १३ ॥

क्षुदिति । क्षुद्बाधया क्षुधापीड़या भवदाश्रमे कीलानि अहं अघास भक्षितवान् । यानि कीलानि स्वयं पतितानि । न अविदन् न ज्ञातवन्तः । पद्ये । सूत्रस्य ष ॥ १४ ॥

पङ्क्ष इति । त्रयीयोगयोः त्रयी वेदः योगो यमनियमादिस्तयोः म्नः अभ्यासशीलस्य

## व्याकरणम् ।

द्विषोऽपि । द्विषधातोरपि अन् उस् स्यात् वा । अद्विषुः ॥ १२ ॥

अप्सुः, अप्सान् ॥ १३ ॥

अविदन्, अद्विषन् ॥ १४ ॥

ब्रह्मस्वं प्रणयात् छलादपि बलात् भुक्तावगत्य द्विजो
राज्ञां दण्डमृते न शुध्यति जपैर्दानैर्व्रतैरध्वरैः ॥ १५ ॥
अहो लोभहतप्रज्ञ! धर्म्मं चेत् त्वं समुज्झसि।
अपि निर्गुण एनं किं रक्षेत् योऽवगतो न तम्॥ १६ ॥
एवं वनितनाद्यस्य स्वाग्रजस्य मुखात्ततम्।

उभे सन्ध्ये सायं प्रातर्जुह्वतश्च जनस्य नेमोऽपि सर्व्वोऽपि पङ्कः पापं लोपनं नाशं भवति प्राप्नोति। भोः सम्बोधने। अत्र विसर्गस्य अचि परे यकारः। अपिशब्दस्य नेम इत्यत्र सम्बन्धः नेमशब्दः सर्व्वार्थे इति लोपद्मा:। म इति न्नाभ्यासे इत्यस्य क्विपि रूपं। भवतीति भूञ प्राप्तौ इत्यस्य रूपं। द्विजोऽवगत्य ज्ञात्वा प्रणयादिभिर्ब्रह्मस्वं भुक्त्वा राज्ञां दण्डं ऋते विना जपादिभिर्न शुध्यति। पक्षे। पङ्कोभ ङ इति पङ्केन वृतस्य सम्बोधनं। त्रयीत्यादिकं ङं। यपि ७।, लोपनं १।, भवति ८।, (न इभ) नेमः ६।, म्नः ६।, ॥ १५ ॥

अहो इति। अहो हे लोभहतप्रज्ञ! लोभेन हता नष्टा प्रज्ञा बुद्धिर्यस्य सः तादृशश्चेत् यदि त्वमपि धर्म्मं समुज्झसि त्यजसि तदा निर्गुणो जनः किं कथं एनं धर्म्मं रक्षेत् यो जनस्तं धर्म्मं न अवगतो ज्ञातवान्। अत्र अपिकारस्य त्वमित्यत्रान्वयः। पक्षे। पूर्व्वापरभागौ ङं। समुदिति हर्षयुक्तस्य सं। झसि ७।, (अपि) निर्गुणे ७।, ॥ १६ ॥

एवमिति। तेन द्विजेन स्वाग्रजस्य स्वज्येष्ठस्य मुखात् ततं विस्तृतं एवं उक्तरूपं श्रुत्वा इत्थमनेन प्रकारेण अन्वतप्त अनुतापः अतः स्वाग्रजस्य कीदृशस्य वनितनाद्यस्य

व्याकरणम्।

यपि लोपनं भवति नेमो म्नः। अनिमौ धातोर्मकारनकारयोर्लोपः स्यात् यपि। अवगत्य ॥ १५ ॥

झसि अपि निर्गुणे। हत, अवगत ॥ १६ ॥

श्रुत्वान्वतप्त तेनेत्थं लोभमोहौ हतोऽद्य माम् ॥ १७ ॥

अथ साश्रुनेत्रः स्वाग्रजस्य चरणे पतित आह। गुरो! ममापराधं क्षमस्व दीर्घंतापांश्च शमय। स तं प्रति।

अस्ति स ह्येधितान् तापान् शमयिष्यति यस्तव।
राजा दण्डधरः शासत् तमेधि शरणं गतः॥ १८ ॥
अवेहि ना शास्ति सोधिराट् धर्म्मेण मह्लीमिमाम्!
वक्ष्यसे तमुपेत्यैवं शाधि मामपराधिनम्॥ १९ ॥

स तं प्रति। अधुनैव राजानं गच्छामि भवन्तमेवं याचे।

---

वनी वानप्रस्थः तस्य यस्तनो विस्तारः समूहस्तस्य भाष्यस्य शेषस्य केन प्रकारेण अन्वतप्त इत्याह। अद्य मां लोभमोहौ हतः हननं कुरुतः। एवं १', वनित-भाष्यस्य ६।, ॥ १७ ॥

अस्तीति। यो जनस्तव एधितान् वर्द्धितान् तापान् शमयिष्यति स हि स तु राजा अस्ति। स कीदृशः इत्याह। दण्डधरः सन् शासत् शासनं कुर्व्वन्। तं राजानं शरणं गतः एधि भव इत्यन्वयः। पचे। तानित्यादिकं उ'। अस्ति १।, स-हि १।, एधि १।, ॥ १८ ॥

अवेहीति। अवेहि जानीहि सोऽधिराट् अधीश्वरो ना पुरुषः धर्म्मेण इमां मह्लीं शास्ति तं पुरुषमुपेत्य एवं वक्ष्यमाणं वक्ष्यसे। किं वक्ष्यसे इत्याह। मां अपराधिनं शाधि शासनं कुरु। पचे। अवे इति मूर्य्यस्य सं। हिना ३।, शास्ति-सः ६।, धि १।, ॥ १९ ॥

व्याकरणम्।

एवं यनितनाष्यस्य। यमतनादेरप्येवं। तत, हतः॥ १७ ॥

अस्ति सहि एधि। हिसहितं अस्ति एधि स्यात्। एधि॥ १८ ॥

हिना शास्ति सोधि। हियुक्तस्य शास्तिसम्बन्धि सकारस्य धिः स्यात्। शाधि॥ १९ ॥

निर्म्मोह ! नो जहिहि नाऽबोधाः केऽनपराधिनः ।
सन्ति पुत्राः पितुस्तत् त्वं क्रोधं जहि गुरो ! मयि ॥ २० ॥
अनवध्यन्तरेऽहन्ते रागात् ध्यायाम्यदः पदम् ।
तत्पुण्यैरिष्टलोकं मे व्यवधीन्माऽप्यदोऽशुभम् ॥ २१ ॥

स स्वानुजं प्रति ।

अलष्टमेऽपि यामार्द्धे गच्छाद्यैवात्मशुद्धये ।
अद्यैव वध्यात् तेऽघं राट् सद्यः शुद्धिर्यतः स्मृता ॥ २२ ॥

अथ देवयाट् राजद्वारमुपगम्य द्वारपालं प्रति । भोः अहमर्थी द्वार्य्युपस्थितः राजानमावेदय । स तं प्रति । नैगमिकोयमत्र वर्त्तते अमुं प्रयातु । अथ स तमुपसृत्य । भो नैगमिक ! राजानमुपसृत्य इत्यावेदय ।

---

निर्म्मोहेति । हे निर्म्मोह ! मोहरहित नोऽस्मान् न जहिहि न त्यज । जहिहीति ओ हाक लट् त्यागे इत्यस्य रूपं । अबोधा बोधरहिताः पुत्राः के पितुरनपराधिनः सन्ति अपि तु न केपि । तत् तस्मात् हे गुरो ! त्वं मयि क्रोधं जहि नाशय । पद्ये । निर्म्म उ इति निरूपमस्य सं । हनः ६।, जहि १।, हिना ३।, ॥ २० ॥

अनेति । अहं अनवधि अर्थात् सर्व्वदा अन्तरे अन्तरात्मनि ते तव अदः पदं इदं चरणं रागादनुरागात् ध्यायामि तत्पुण्यैः अदोऽशुभं पापं मे मम इष्टलोकं स्वर्गादिकं माव्यवधीत् न व्याहन्तु । पद्ये । अन इति प्राणिनः सं । वधि १।, अन्तरे ७।, हन्तेः ६।, ॥ २१ ॥

अलेति । हे अल् ! समर्थ ! अद्यैव अष्टमेऽपि यामार्द्धे आत्मशुद्धये गच्छ । राट् राजा ते तव अघं पापं अद्यैव वध्यात् यतो यस्माद्धेतोः सद्यः शुद्धिः प्रायश्चित्तं स्मृता विहिता मुनिभिरिति शेषः । ( अल् अष्टमे ) अलष्टमे ७।, ( अपि ) ॥ २२ ॥

व्याकरणम् ।

हनो जहि हिना । हियुक्तस्य हनो जहि स्यात् । जहि ॥ २० ॥
वध्यन्त रे हन्तेः । हन्तेर्वधि स्यात् अन्तभूते रे परे । व्यवधीत् ॥ २१ ॥
अलमष्टमेऽपि । अषि परे अष्टमे च परे हन्तेर्वधि स्यात् । वध्यात् २१ ॥

स्वैनोवधाय द्वार्य्यस्त्यौखितोऽघोऽङ्गो द्विजात्मजः ।
याचते मदघं राजन् ! जिघांस विधिनाशिवति ॥ २३ ॥

नैगमिकस्त्वं प्रति । नाथ समय इदानीं राजा रहः शेते ।

यद्युत्तरेणानुबन्धोऽवद्य तद्वद्विभाव्यते ।
तदापि वल्लभो नेयात् घाते शक्तं प्रभुं रहः ॥ २४ ॥

क्ष्माभृत् स्वपिति रहस्यऽद्विधव उदेति वृद्धिमितो रोषोऽस्य ।
निपतेत् कतमपि चेत्तत् श्रुतिमिति तदन्तिकं यौति न कोपीह ॥ २५ ॥

---

स्वैन इति । हे अङ्ग राजन् ! अघः पापी द्विजात्मजः स्वैनोवधाय स्वस्य एनसो दुरितस्य वधाय नाशार्थम् औखितः आगतः सन् द्वारि अस्ति हे राजन् ! मदघं मम पापं विधिना विध्यनुसारेण आशु शीघ्रं जिघांस हन्तुमिच्छ इति याचते । पक्षे । औस सम्बोधने । पूर्व्वभागः पूर्वोयोदाहरणवाक्यम् । खितः ५।, घः १।, हः ६।, ॥ २३ ॥

यद्यीति । यदि उत्तरे उत्तरकाले अनुबन्धो दोषोत्पादस्तद्वत् तथा अवद्य व्यसनस्य विभाव्यते सम्भाव्यते तदा वल्लभोऽपि प्रियजनोऽपि रहःस्थितं प्रभुं नाथं नेयात् न गम्यात् । प्रभुं कीदृशं घाते शक्तं हनने क्षमम् । ( यदि ) उत्तरे ७।, अानुबन्धः १।, घञ १।, ( च ) तद्वत् १।, विभाव्यते ८।, तदा ७।, ( अपि ) । २४ ॥

क्ष्माभृदिति । क्ष्माभृत् राजा रहसि स्वपिति शेते । कीदृशे रहसि अद्विधवे न स्तो द्वौ धवौ मनुष्यौ यत्र तादृशे । अस्य राज्ञः वृद्धिमितः वृद्धिं प्राप्तः सन् रोषः क्रोध उदेति उत्पद्यते । कुत इत्याह चेत् यदि कतमपि पाचिशब्दोऽपि तत् श्रुतिं तस्य राज्ञः कर्णं निपतेत् गच्छेत् इति हेतोः इह समये कोऽपि जनस्तदन्तिकं तस्य समीपे न यौति न गच्छति । पक्षे । क्ष्माभृतस्य इति राज्ञ आत्मीयस्य सं ॥ २५ ॥

## व्याकरणम् ।

खितौ घो हः । खेः परस्य हनो हस्य घः स्यात् । वधाय, जिघांस ॥ २३ ॥

यद्युत्तरेणानुबन्धो घञ च तद्वत् विभाव्यते तदापि । णकारानुबन्धो घञच् यदि परे दृश्यते तदापि हनो हस्य घः स्यात् । घाते ॥ २४ ॥

पिति रहसि अद्विधव उदेति वृद्धिं । अविरलधातुसम्बन्धी उत् वृद्धिं एति । यौति ॥ २५ ॥

अथ स विप्रः । राजन् ! ब्राह्मणोऽहमर्थी द्वारि दण्डायमान आसे इति उच्चैरुराव । राजा तत् श्रुत्वा सत्वरं तत्रागत्य प्रणम्य ब्रह्मन् ! किमर्थयसे इत्याह । विप्रः ।

इनोऽयाच्यगुणेनेष्टं भवान् प्रक्तो मयार्थिना ।
निर्यन्त्यघानि मत् येन विधेहि त्वं तथाश्विति ॥ २६ ॥

अन्तरे गा ममाधाय मागाः कार्पण्यमीश ! यत् ।
यत् यस्येष्टं भवेत् तस्याकर्त्ता राड् स्यादनिष्टकृत् । इति ॥२७॥

राजा विप्रं प्रति । को भवान् कुतोऽसि किमर्थयसे इति । विप्रः । देवयान्नामा विप्रोऽहं गुरोर्वेदश्रवसो मुनेराश्रमात् तदुपदेशेनैव दण्डेन पापनोदनार्थमिहागतोऽस्मीति । राजा आत्मगतं हा किं कष्टं । अनु विप्रं प्रति । स मुनिर्म्ममापि गुरुः । तदस्तु यद्येवं तदा !

---

इन इति । अगुणेन गुणविरुद्धदोषवता अर्थिना मया इनः प्रभुर्भवान् इष्टमभीष्टं अयाचि याचितः भवान् कीदृशः प्रक्तः याचितदाने समर्थः । किमिष्टमित्याह । येन प्रकारेण मत् मत्तः अघानि पापानि निर्यन्ति निर्गच्छन्ति त्वं तथा आशु शीघ्रं विधेहि इति इष्टमित्यन्वयः । पत्रे । नेष्टमित्यादिवां छ । इनः [illegible] १।, अयि ७।, अगुणे ७।, ॥ २६ ॥

अन्तरेति । मम गाः वाक्यानि अन्तरे अन्तरात्मनि आधाय हे ईश ! कार्पण्यं मागाः न प्राप्नुहि । यत यस्मात् यस्य जनस्य यदेवेष्टमभीष्टं स्यात् तस्याकर्त्ता राट् राजा तस्य अनिष्टकृत् स्यात् । अन्तरे ७।, गाः १।, ॥ २७ ॥

व्याकरणम् ।

इनो य अयि अगुणे । अगुणे अयि परे इनो य स्यात् । निर्यन्ति ॥ २६ ॥

अन्त-रे गा । अन्तभूतरे परे इनो गा स्यात् । अगाः ॥ २७ ॥

ब्रह्मन्नैखीत् गुरुरनु किन्न्वत्र भवता स्मरन् ।
विपदो मे यदाप्तस्य स्थैर्य्यमीयतुरक्षिणी ॥ २८ ॥

ब्रह्मन् ! तवार्थनायामितिकर्त्तव्यतामूढोऽस्मि । परन्तु अद्य नायं समयः यतः ।

दिवाष्टमविभक्तौ येनोपसर्गात् कृताशनः ।
ग्लायामि तत् क्षमस्वाद्य श्व ईयासं हितं गुरुम् ॥ २९ ॥

गुरुरिहेत्य यदेव विधास्यति तमेव विधिमन्वियासमिति क्षमस्व । विप्रः । नैवं । यथाविधि स्वयमेव विधत्स्व । राजा तं प्रति ।

एवमग्रेण वादि मा नव ! विदो वातिवादिमानव स्तूयते न विज्ञैः ॥ ३० ॥

ब्रह्मन्निति । हे ब्रह्मन् ! मे मम गुरुः विपदः स्मरन् सन् भवता अनु सह नु भोः किं कथं अत्र न ऐखीत् न आगतवान् । यदाप्तस्य यां विपदं प्राप्तस्य मम अक्षिणी चक्षुषी स्थैर्य्यं ईयतुः प्रापतुः । पक्षे । ब्रह्मन् ऐ इति ब्राह्मणस्य सं । नु सं । ( खि इत् ) खीत् १।, गुरुः १।, अनुकित् १।, ॥ २८ ॥

दिवेति । अहं कृताशनः कृतभोजनः सन् येन हेतुना दिवाष्टमविभक्तौ दिवसस्याष्टमयामार्द्धे उपसर्गात् अवसादादिरूपरोगविशेषात् ग्लायामि शरीरग्लानिं भजामि तत् तस्मात् अद्य क्षमस्व । श्वः परदिने हितं गुरुं ईयासं प्राप्स्यामि । पक्षे । दिव इति द्युतिमतः सं । अष्टमविभक्तौ ७।, ये ७।, न १।, उपसर्गात् ५।, ॥ २९ ॥

एवमिति । हे नव नव्य ! अग्रेण श्रेष्ठेन एवं मावादि माकथ्यतां । अतिवादिमानवः अतिशयवदनशीलो मनुष्यः विदो वा पण्डितो वा न स्तूयते न प्रशस्यते । पक्षे ।

व्याकरणम् ।

खीत् गुरुरनुकित् । अनुपश्चात् कित् यस्य तादृशस्य इनधातोः खेरिकारो गुरुः स्यात् । ईयतुः ॥ २८ ॥

अष्टमविभक्तौ ये नोपसर्गात् । यकारस्वरूपायां अष्टमविभक्तौ इन इकारः गुरुः स्यात् उपसर्गात् न स्यात् । ईयासं । अन्वियासं ॥ २९ ॥

विप्रः। राजन्! आस्तेः कालमपेक्षते इति श्रुतिरस्ति परन्तु विना राजदण्डं नापराधात् शुद्धिरस्तीति राजा मामसं प्रियमपि सद्यो दण्डयेत् तदेवास्य हितं तदेवं पश्य।

स्वदेहेऽपि स्वानुरक्तौ विदः काम्वा न यातनाम्।
अदात् शुद्धै यर्हि विदाम्बभूवैनं रुजास्पदम्॥ ३१॥

राजा। सत्यं किन्तु सर्वमेव समयमपेक्षते।

तदिदं वेत्तु व्यवहारान् यामार्द्धे तृतीये तद्विदः करोत्यनुप्रयुज्यतेऽपि वा दण्डादि धीमन्!॥ ३२॥

---

अपेर इति शेषायाः सं। स्तूयते न बुधैरिति विधेः प्रशंसार्थं। (णप् आदिमा) णबादिमाः १॥, नव १॥, विदः ६।, वा १।, (तिप् आदिमा) तिबादिमाः १॥, नव १॥, ॥ ३०॥

स्वदेह इति। विदः पण्डितः स्वानुरक्तौ स्वस्यात्मनोऽनुरक्तिरनुरागो यस्मिन् तादृशे स्वदेहेऽपि आत्मीये शरीरेऽपि शुद्धै शुद्धिनिमित्तं काम्वा कामपि वा यातनां दाहच्छेदादिरूपातिपीड़ां न अदात् अपि तु तथा कदा अदादित्याह। यर्हि यस्मिन् काले एनं देहं रुजास्पदं रोगास्पदं विदाम्बभूव ज्ञातवान्। पक्षे। स्वदे-हे इति धनदामवत्याः सं। स्व इति आत्मीयस्य सं। न यातनामित्यादिकं उ। अनुरक्तौ ७।, विदः ५।, काम् १।, वा १।, ॥ ३१॥

तदिदमिति। वेत्तु जानातु भवानिति शेषः। तद्विदो व्यवहारविदोऽर्थात् राजा तृतीये यामार्द्धे व्यवहारान् विचारादिराजकर्माणि करोति अनुपश्चात् दण्डाद्यपि वा

व्याकरणम्।

णबादिमा नव विदो वा तिबादिमा नव। विदः परे स्थितास्तिबाद्या नव (णप् आद्याः) णबाद्या नव स्युः॥ ३०॥

अनुरक्तौ विदः काम्वा। रस्य रसंज्ञकस्य पश्चादिति अनुरं तादृशि क्तौ विभक्तौ अर्थात् षष्ठविभक्तौ विदः काम् वा स्यात्। विदाम्बभूव॥ ३१॥

तृतीये तत् विदः करोत्यनुप्रयुज्यतेऽपि वा। विदधातोस्तत् काम् स्यात् करोत्यनुप्रयुज्यते तृतीयविभक्तौ वा। वेत्तु॥ ३२॥

तस्मात् समयं प्रतीचस्व । किमेतेन वा ।

विदाङ्करोत्विति गुरुः पिता तापोपशान्तये ।

शक्तो मन्त्रो वाशु वीच्य तेऽब्वत् तन्मुखतः स्रुतः ॥ ३३ ॥

तस्मात् गुरुं तद्दत्तं ब्रह्माचरमपि स्मरतु येन संसारतापशान्तिर्भवतीति ब्रह्मन् ! किं बिभेसि । सम्प्रति सायंसन्ध्यासमयो वर्त्तते तदद्य प्रतियातु मद्दैव गुरुणा श्व आयास्यसीत्युक्त्वा राजा अन्तःपुरं गतः । विप्रोऽपि स्वातुराश्रमं । अथ परदिने वेदश्रवाः प्रातः कृताह्निकः सानुजो राजानमुपययौ । राजापि गुरुमागतं यथाविधि पुरस्कृतं साञ्जलिराह ।

कृपां कुरुष्व सच्चक्रादूरे वर्त्तिनि निर्गुणे ।

शिष्ये मयि यथा लोपो विपदोऽस्यास्तथा कुरु ॥ ३४ ॥

प्रयुज्यते । पद्ये । यामाईइत्यन्तपूर्वभागः उं । दण्डादिधीमन्निति सं । तवौर्ये ७।, सत् १।, विदः ५।, करोति १।, अनुप्रयुज्यते ८।, च १।, ( अपि ) वा १।, ॥ ३२ ॥

विदामिति । इति तु विदाङ्करोतु जानातु भवानिति शेषः । गुरुः पिता तन्मुखतः श्रुतौ मन्त्रो वा मन्त्रोऽपि वा अब्वत् जलवत् जलमिव आशु यथा स्यात् तथा तापोपशान्तये शक्तो वीच्यते ज्ञायते । अत्र वाशब्दोऽपिकारार्थकः । पद्ये । मन्त्रो वेत्यन्तपूर्वभागः उं । श्रुत इति । श्रोतृणां सं । शुप् १।, ईच्यते ८।, तन्मुखतः ५।, ॥ ३३ ॥

कृपामिति । निर्गुणे मयि शिष्ये कृपां कुरु । कीदृशे सच्चक्रादूरे सतां साधूनां चक्रस्य समूहस्य दूरवर्त्तिनि । यथा येन प्रकारेण अस्या विपदो लोपः स्यात् तथा कुरु । पद्ये । सच्चेत्यन्तपूर्वभागः शिष्येत्यादिकपरभागस्य उं । ( क्व अत् ) क्वत् १।, उः १।, रे ७।, वर्त्तिनि ७।, निर्गुणे ७।, ॥ ३४ ॥

व्याकरणम् ।

शुप् ईच्यते तन्मुखतः तनमुखतस्तनादेः शुप् ईच्यते स च अप् वत् पूर्व्वोक्तशप इव अर्थात् रे परे कर्त्तरि स्यात् । विदाङ्करोतु ॥ ३३ ॥

क्वदूरे वर्त्तिनि निर्गुणे । क्व अत् उः स्यात् अगुण रे इत्तिमति सति । कुरुष्व, कुरु ॥ ३४ ॥

( मुनिस्तं प्रति । )

यामार्द्धे च चतुर्थे वा दधौ सौरोऽत्यसह्यताम् ।
प्रतापस्तव सोऽरीणां सदेति त्वन्त्ववेर्न तत् ॥ ३५ ॥

एतादृशस्य ते का विपदस्ति । अपि च ।

जन्यस्य नाशो नामास्त्यतोऽपि द्रे कत इत्यभीः ।
प्रसन्नो यस्य च गुरुर्विपदस्तस्य सन्ति न ॥ ३६ ॥

( अपि च । )

सोऽपि सेतु स्फुरति ते निस्तारे विपदम्बुधेः ।
धर्म्मसेतूपहान्नापि व्यतिषे त्वद्विपत् कुतः ॥ ३७ ॥

---

यामेति । चतुर्थे यामार्द्धे एव सौरः प्रतापः सूर्य्यसम्बन्धी प्रतापः अत्यसह्यतां दधौ तव प्रतापः अरीणां शत्रूणां सदा असह्यतां दधौ । त्वन्तु इति न अवेः न ज्ञातवानसि अर्थात् स्वप्रतापं न जानासीत्यर्थः । पक्षे । यामार्द्धे च इति यामार्द्धचरस्य सं । असह्य-त्यादिकं उ । चतुर्थे ७।, वा १।, दधौ १॥, सौ ७।, रः १।, ॥ ३५ ॥

अन्येति । अतोऽस्मिन् संसारे नाम सम्भावनायां जन्यस्य विपदादेर्नाशोऽस्ति इति हेतोः अभीः निर्भयः सन् यो जनो द्रेकतेऽपि उत्साहयुक्तोऽपि भवति तस्य विपदो न सन्ति । पक्षे । जन्यस्येति पुनर्जन्मोज्झितस्य सं । कत इति सुखादित्यर्थः । नाशः १।, न १।, अमा ३।, अस्त्यतः ६।, अपिद्रे ७।, ॥ ३६ ॥

सोऽपीति । सोऽपि प्रसन्नो गुरुरपि विपदम्बुधेर्निस्तारविषये सेतुः स्फुरति धर्म-सेतूपहान् पापिष्ठान् नापि व्यतिषे न पापिष्ठसजातीयकर्म कुरुषे । सः ६।, ( अपि ) से ७।, ( तु ) स्फुरति ८।, ॥ ३७ ॥

व्याकरणम् ।

चतुर्थे वा दधौ सौ रः । दधौ रः स्यातां चतुर्थे सौ परे । अवेः ॥ ३५ ॥

नाशो नामास्त्यतोऽपि द्रे । अस्तेरकारस्य नाशः स्यात् अपिति रे परे नामा अमा योगे न स्यात् । सन्ति ॥ ३६ ॥

सोऽपि से तु स्फुरति । अपि द्रे से तु असेः सकारस्यापि लोपः स्फुरति ज्ञानविषयो भवति । व्यतिषे ॥ ३७ ॥

अतस्ते का विपत्। राजा मुनिं प्रति। यस्यार्चनं विपदो नाशाय स एवाद्य दण्डमर्थ्यते इतोऽपि किं विपदस्ति। मुनिस्तं प्रति। तदकरणे विपत्सम्भावनेति। राजा। गुरो! परिहासोक्ति-रियमिति मम प्रतिभाति। यतः।

भूररे मा ब्रह्मणोऽङ्गे प्रहर्त्ता कुसुमैरपि।
घ्नतोऽपि यस्य कोपाग्नौ शलभोऽभूत् कुलं ममेति ॥ २८ ॥

भगवन्नाथा श्रूयते। मुनिः। राजानं विना दण्डयिता द्वितीयो न बभूवेति ब्राह्मणमपराधिनं तत्शुद्ध्यै लोकस्थितये च यदि भवान् न दण्डयति तदा कस्तं दण्डयेत्। अतः कालातिपातो माभूत्। यतः।

कृतागसोऽमृजो शुद्धिरतो गुणिनि पण्डिते।
प्रख्याप्य सद्य आत्मानं मार्ष्टि पापी यथाविधि ॥ २९ ॥

भूरेति। अरे! घ्नतोऽपि आघातं कुर्वतोऽपि ब्रह्मणो ब्राह्मणस्य अङ्गे कुसुमैरपि प्रहर्त्ता माभूः। यस्य ब्राह्मणस्य कोपाग्नौ मम कुलं शलभोऽभूत्। भूः १।, अरे ७।, ॥ २८ ॥

कृतेति। कृतागसः कृतस्यापराधस्य अमृजो अमार्ज्जनात् शुद्धेरकरणात् शुद्धिर्भव-तीति शेषः। अतः कारणात् पापी जनः गुणिनि अग्निहोत्रादिगुणयुक्ते पण्डिते प्रख्याप्य यथाविधि सद्य आत्मानं मार्ष्टि मृज्यात् शोधयेदिति यावत्। मार्ष्टीति विध्यर्थे तिप् दध्ना जुहोतीतिवत्। पक्षे। कृतागस इति अपराधिनः सं। पण्डितेत्यादिकं च। मृजः ६।, शुद्धिः १।, अतः ५।, गुणिनि ७।, ॥ २९ ॥

## व्याकरणम्।

भूररे। अस्तेर्भूः स्यादरे। अभूत्। बभूव ॥ २८ ॥

मृजो वृद्धिरतो गुणिनि। मृजो वृद्धिः स्यात् अचोऽन्त्यात् मृजधातोरुत्तरे गुणिसंज्ञके प्रत्यये सति। मार्ष्टि ॥ २९ ॥

अगुणेऽवाचि हृद्घादौ सन्तः कुर्व्वन्त्यनुग्रहम् ।
अशक्त्या यथा ते मार्ज्जन्ति स्वमितेषां विधिः स हि ॥ ४० ॥

राजा । गुरो ! असम्भवविषयोक्तिरियमिति मे प्रतिभाति । यतः ।

रुग्भ्यः कार्य्यसङ्गस्य रुद्धो यमिममिच्छति ।
अगदं विप्रपद्रेणुं शीर्षिणि नातः स रोदिति ॥ ४१ ॥

तस्य ब्राह्मणस्य दैहिको दण्डो मन्तः कथं निर्व्वहति । मुनिः शिष्यं प्रति । श्रूयताम् ।

दण्डरूपीश्वरो राज्ञां व्यवहारेषु वर्त्तते ।
निपतेत् स कृतागःसु प्राणितीदं ततो जगत् ॥ ४२ ॥

---

अगुण इति । अवाचि मूके हृद्घादौ च अगुणे गुणविरुद्धो यो दोषः पापं तदपि सन्तः पण्डिताः अनुग्रहं कुर्वन्ति । ते मूकादयः शक्त्या स्वशक्त्यनुसारेण यथा येन प्रकारेण स्वमात्मानं मार्ज्जन्ति शोधयन्ति तेषां स एव विधिः । पक्षे । हृद्घादावित्यादिकं ज्ञ । अगुणे ७।, वा १।, अचि ७।, ॥ ४० ॥

रुग्भ्य इति । कार्य्यसङ्गस्य कार्य्यं अवश्यकर्त्तव्यं यत् वेधस्नानादि तत्सङ्गस्य रुद्भ्यः प्रतिबन्धकीभूताभ्यो रुग्भ्यः रोगेभ्यः अर्थात् तन्निवृत्तये इमं विप्रपद्रेणुं विप्रपदधूलिं अगदं औषधं शीर्षिणि मस्तके यो जन इच्छति स जनः अतो रुग्भ्यः न रोदिति । अत्र रुग्भ्योऽगद इत्यत्र मशकाय धूम इतिवत् तादर्थ्ये चतुर्थी । पक्षे । रुग्भ्यः कार्य्यस इति रोगप्रयुक्तलुप्तकार्य्यस्य सम्बोधनं । इसस्य ६।, रुद्भ्यः ५॥, अयः ६।, इमं २।, इच्छति ८।, ॥ ४१ ॥

दण्डेति । राज्ञां व्यवहारेषु मन्वाद्युक्तराजकार्य्येषु ईश्वरो दण्डरूपी सन् वर्त्तते ।

व्याकरणम् ।

अगुणे वाचि । अगुणे अचि परे ऋतो वृद्धिः स्यात् वा । मार्जन्ति ॥ ४० ॥

इसस्य रुद्भ्योऽय इममिच्छति । रुदादेः परस्य अयस्य इसस्य रस्य इममिच्छति बुध इति शेषः । रोदिति ॥ ४१ ॥

प्रवर्त्तते तदादिष्टे प्रतिषिद्धान्निवर्त्तते ।
लोको दण्डभयादेव श्वसितीदं ततो जगत् ॥ ४३ ॥

स ईश्वर इह लोके राज्ञा दण्डयति परलोके च स्वयमेवेति यदि दण्डभयं न स्यात् तदा क्रूराचारविहारमये जगति न कोऽपि प्राण्यात् । तस्मात् राजन् ! निःशङ्कममुं कृतागसं दण्डय ।

यो विधिर्व्विधिनाऽवादि स्थोरम्पार्थिव ! पाल्यताम् ।
येन रोदत् प्रजा माऽस्म येन रोदीत् भवानपि ॥ ४४ ॥
अस्याघान्तो विधेयोऽहिरुक्तेरत्सरतस्तव ।
उक्तादण्डेनैतदर्थं दण्डं बिभ्रति यन्नृपाः ॥ ४५ ॥

स दण्डरूपीश्वरः कृतागःसु अपराधिषु निपतेत् । ततः कारणात् इदं जगत् प्राणिति जीवति । पत्ते ॥ सूत्रस्य उं ॥ ४२ ॥

प्रवर्त्तत इति । दण्डभयादेव लोकस्तदादिष्टे दण्डरूपीश्वरस्य आदिष्टे कर्म्मणि प्रवर्त्तते । प्रतिषिद्धात् कर्म्मणो निवर्त्तते । ततः कारणात् जगत् श्वसिति जीवति । पत्ते । सूत्रस्य उं ॥ ४३ ॥

य इति । विधिना ईश्वरेण यो विधिः अवादि उक्तः हे पार्थिव ! स्थः स विधिः अरं शीघ्रं पाल्यतां येन विधिपालनेन प्रजा माऽस्मरोदत् न रोदितु भवानपि यथा येन माऽस्म रोदीत् न रुद्यात् । यः १।, विधि १।, विधिना ३।, वा १।, दिस्रोः ६॥, अम् १।, ॥ ४४ ॥

अस्येति । अस्यापराधिनः अघान्तोऽघस्य पापस्य अन्तो नाशः उक्तादण्डेन तव विधेयः कर्त्तव्यः । कीदृशस्य तव अहिरुक्तेः न स्तो हे उक्ती यस्य तादृशस्य सतः । अत्सरतः छद्मगतिरहितस्य सतः । अत्सरत इति त्सरछद्मगतौ इत्यस्य शत्प्रत्यये सिद्धं । पत्ते ।

व्याकरणम् ।

प्राणिति ॥ ४२ ॥ श्वसिति ॥ ४३ ॥

यो विधिर्विधिना वा दिस्रोरम् । रुदादेर्दिस्रोरम् स्यात् यो विधिर्विधिना सूत्रेण विकल्पेन विहित इत्यर्थः । अरोदत्, अरोदीत् ॥ ४४ ॥

अन्तो विधेयो हिरुक्तेरत् । हिरुक्तात् परोऽन्तः अत् विधेयः बिभ्रति ॥ ४५ ॥

तत्र च ब्रह्मस्वापहर्त्तुर्बाहुच्छेदो युज्यते। अथ स राजा विधिवाक्यस्याधीनतया अपराधिनस्तस्य देवयाज्ञामकविप्रस्य बाहू चिच्छेद। अथ स मुनिरनुजं प्रति।

मुक्तोऽसि रे! गुणयुतेनसा सन् या विनिद्रिताः।
अजागरुस्तवाद्यैता ब्रह्मवर्चसशक्तयः॥ ४६॥

इदानीं श्वेतवाहिन्यां नद्यां गच्छ तत्र स्नानात् तव बाहू भविष्यतः। अथ देवयाट् गुरुवाक्यात् तथाकृतवतः पुनर्बाहू बभूवतुः। राजन्! तस्मात् ममापि तथैव दण्डः कार्य्यः। यतः।

सदाऽधर्म्मरता लोकास्तेषु दण्डधरो नृपः।
देवद्रुङ्ङ्ति जागर्त्त्यृतो नाधर्म्मांश्च जाग्रति॥ ४७॥

राजा। आः क्रूरधर्म्मा क्षत्रियो यत् ब्राह्मणस्य बाहू चिच्छेद। धर्म्मपालः। सत्यं। अपराधिनां दण्डस्यावश्यकतया दण्डस्य राजधर्म्मत्वेन च अनन्यगतिकत्वात् क्षत्रियस्य तथाचरणम्।

चस्याघ इति चेपणीयव्यसनषतः सम्बोधनं। अस्तः १।, विधिय: १।, छिदक्तिः ५।, अत् १।, ॥ ४५॥

मुक्तइति। रे गुणयुत! अग्निहोत्रादिगुणयुक्त! एनसा पापेन मुक्तोऽसि तव या ब्रह्मवर्चसशक्तयः विनिद्रिताः कुण्ठा आसन् ता अद्य अजागरुः दीप्ता बभूवुः। पच्चे। मुक्त इति छत इति च सं। उसि ७।, रै ७।, गुणः १।, ॥ ४६॥

सदेति। हे देवद्राङ्! लोकाः सदा अधर्मरता इति हेतोः नृपो दण्डधरः सन् ऋतः प्रदीप्तः सन् जागर्त्ति अधर्म्मांश्च न जाग्रति। ङिति ७।, (जागर्सि ऋतः) जागर्त्त्यृतः ६।, न १।, ॥ ४७॥

व्याकरणम्।

उसि रै गुणः। विकृतस्य उसि परे गुणः स्यात्। अजागरुः॥ ४६॥

ङिति जागर्त्त्यृतो न। ङिति परे जागर्त्तेः ऋकारस्य गुणो न स्यात्। जाग्रति॥४७॥

सद्गणस्यपि च वीणीव वीणामीशोऽत्र वेदवाक्।
प्रवर्त्तयति वैधेषु पुरुषान् तत्र जाग्रवीन् ॥ ४८ ॥

इति श्रद्दधाना वैधं क्रूरकर्माण्याचरन्ति। राजा। भक्तास्तथाचरन्तु अहन्तु न भक्तः यतः।

तदा पदन्तत् पथ्यस्येत् ह्वा को भीतश्च वाहसः।
अपि द्रोह्यग्रतो ज्ञानगोचरो यदि जायते ॥ ४९ ॥

सद्गेति। हे सद्गण! सद्भिः साधुभिर्गण्यते यः स तथा हे साधो इत्यर्थः। अपि च अन्यच्चेत्यर्थः। अत्र संसारे वेदवाक् वेद एव विधिरेव वाक् यस्य तादृशः सन् ईश ईश्वरः वैधेषु विधिबोधितेषु कर्म्मसु पुरुषान् प्रवर्त्तयति। किम्भूतान् तत्र वैधेषु जाग्रवीन् प्रबुद्धान् प्रवर्त्तमानानिति यावत्। क इव वीणी वीणामिव यथा वीणावादको स्वरप्रपञ्चे वीणां प्रवर्त्तयति तथेत्यर्थः। पक्षे। सद्गस्यिति सं। श्लेषः उ॑। अपि ७।, ( च ) ( वि·इन्·इव ) वीणि ७।, ( इव ) ॥ ४८ ॥

तदेति। वाहसः अजगरः द्रोही अनिष्टकारी व्याघ्रादिरपि अग्रतोऽग्रे यदि ज्ञानगोचरो बुद्धिविषयो जायते ह्वा विषादे तदा को जनः अभीतः सन् तत्पथे पदं चरणं अस्येत् क्षिपेत्। अपि तु न कोऽपीत्यर्थः। पक्षे। तत्पथे इत्यन्तभागः तत्स्थानं प्रति गमनशीलायाः सं। अस्य ६।, इत् १।, ह्वाकः ६।, ( भी·ईतः ) भीतः ६।, ( च ) ( वा१ ) हसः १।, अपिद्रः १।, ( हि ) अग्रतः ७।, ज्ञानगोचरः १।, ( यदि १ ) जायते ८।, ॥ ४९ ॥

व्याकरणम्।

अपि च वीणीव। यथा वी इणि च तथा अपि च जागर्त्तेर्गुणो न स्यात् जाग्रवीन् ॥ ४८ ॥

अस्येत् ह्वाको भीतश्च वा हसः अपिद्रो हि अग्रतो ज्ञानगोचरो यदि जायते ह्वाकोऽवर्णस्य भियः इतश्च ईकारस्य च इत् स्यात् वा अपिद्रे इते परतो ज्ञानगोचरे सति। अग्रतः परतः शास्त्रे तृणवत् व्यवहारात् ॥ ४९ ॥

इदमपि चिन्त्यं ।

> दृग्दरिद्रः सदा दुःखी पिता माता च ते त्वयि ।
> जातेऽजिरादहिस्तौ तु बिभितो जह्रितोऽश्रु च ॥ ५० ॥

इति त्वयैवोक्तं ।

> तपस्यतोऽस्ति नासाध्यं पित्रोः सेवाप्यलं तपः ।
> तदेवाचर नो येन त्वया तातो दरिद्रियात् ॥ ५१ ॥
> एतत्तपोगुणेनातो लोपः कार्य्यस्त्वयैनसः ।
> पुनन्ति किं पातकिनो नात्मानं पितृसेवनात् ॥ ५२ ॥
> विप्रातोऽपि हे स्त एव पापनट्श्रेयसी इति ।
> प्रयोजने इति बुधाः के वा श्रद्दधतीह न ॥ ५३ ॥

दृगिति । ते तव पिता दृग्दरिद्रः चक्षुषा हीनः इति सदा दुःखी तव माता च तादृशी । त्वयि चत्वरात् अजिरात् बहिरपि याते गते सति तौ तु पितरौ बिभितः भयं प्राप्नुतः अश्रु च नेत्रजलमपि जह्रितः त्यजतः । पद्ये । दृगिति आतुः सं । दुःखीत्यादिकं छं । दरिद्रः ६।, सदा १।, ॥ ५० ॥

तपेति । तपस्यतस्तपस्यां कुर्वतो जनस्य असाध्यं नास्ति पित्रोः सेवा च अलमतिशयं तपः तदेव पित्रोः सेवारूपं तपः आचर येन कर्मणा तव तातस्त्वया न दरिद्रियात् त्वया विहीनो न भवेत् । पद्ये । सूत्रस्य उदाहरणम् ॥ ५१ ॥

एतदिति । अतः कारणात् एतत्तपोगुणेन पितृसेवाख्यं यत्तपस्तद्रूपगुणेन त्वया एनसः पापस्य लोपः कार्य्यः । पातकिनो जनाः पितृसेवनात् किमात्मानं न पुनन्ति पवित्रीकुर्वन्ति । पद्ये । एतत्तप इति सं । शेषः छं । अगुणे ७।, नातः ६।, लोपः १।, कार्य्यः १।, ॥ ५२ ॥

विप्रेति । हे विप्र अतोऽपि पित्रोः सेवातोऽपि पापनट्श्रेयसी पापक्षयधर्म्मौ इति

व्याकरणम् ।

दरिद्रः सदा । दरिद्रातेरुक्तविधिर्नित्यं स्यात् । बिभितः, जह्रितः ॥ ५० ॥

दरिद्रियात् ॥ ५१ ॥

अगुणे नातो लोपः कार्य्यः । श्नाप्रत्ययस्य आतो लोपः कार्य्यः अगुण । पुनन्ति ॥५२॥

आ ईहसेऽदस्तयोश्च कृते किन्न हितं तपः ।
यन्नेष्टं प्रतिबध्नीयात् पित्रोर्जीवं तदीहसे ॥ ५४ ॥

एतत्ते मतिवैपरीत्यमिति जानीयाः । यतो हस्तपादाद्येकावयवव्याघाते योगक्षेमसाधनस्य पित्रोः सेवाया अपि व्याघातस्तेन च तयोरन्धयोः प्राणवियोग इति । धर्मपालः । राजन् ! ममैकं चक्षुरुत्पाटय येन ममाप्यामेकस्मिन् चक्षुषि स्थितेऽपि न योगक्षेमव्याघातो न वान्धयोः पित्रोः सेवाहानिः । एतत् श्रुत्वा राजा अश्रुपूर्णाक्षः सगद्गदमाह ।

दूराती विहितः शासः* सम्मुखे कोऽपि देहिनः ।
दण्डो नाकारि विप्राणां नाशासं कर्हिचिन्मुनिम् ॥ ५५ ॥

हे प्रयोजने पुरुषार्थौ त्त एव भवत एव इति हेतोः के बुधाः इह पितृसेवायाः न श्रद्दधति अपि तु सर्व एव । पद्ये । विप्रेति सं । त्त एवेत्यादिकं उं । आतः ६।, (अपि) हेः ३।, ॥ ५३ ॥

आईहेति । तयोश्च पापक्षयश्रेयसोऽपि कृते निमित्तं अदः एतदुक्तं हितं तपः किं न ईहसे न वाञ्छसि । नेष्टं अनिष्टं यत् बाहुच्छेदरूपं कर्म्म पित्रोर्जीवं जीवनं प्रतिबध्नीयात् प्रतिबन्धं कुर्य्यात् तत् कर्म्म ईहसे इच्छसि । पद्ये । कृते इत्यादिकं उं । आ १।, इ १।, हसे ७।, अदः ६।, तयोः ६॥, (च) ॥ ५४ ॥

दूरेति । ब्राह्मणानां शासः शासनं दूराती वाक्यतो विहितः अर्थात् अपराधिनां विप्राणां वाग्दण्ड एव विहितो मयेति शेषः । सम्मुखे आत्मनोऽग्रे एवं देहिनः कोऽपि

व्याकरणम् ।

आतोऽपि हेः । हिरुक्तस्यातोऽपि लोपः कार्य्यः अगुणे श्रद्दधति ॥ ५३ ॥

आ ईहसेऽदस्तयोश्च । अत्र चकारस्तुकारार्थे अस्य च हसे इत्यन्वयः । तेन अगुणे हसे तु तयोः श्नाप्रत्ययद्विरुक्तयोः आ ई स्यात् न तु दः । अकारोऽत्र नञर्थकः । बध्नीयात् ॥ ५४ ॥

दूराती विहितः शासः सम्मुखेऽकोपि । अकः सम्मुखे स्थितस्य शासोऽकारस्येर्विहितः । अपिकारात् प्रागुक्तस्य अगुणहसस्य समुच्चयः । अशासं ॥ ५५ ॥

( अपि च । )

स्वेन शुद्धस्य वा ग्रासः क्वौतुवत् ब्रह्मचारिणः ।
विप्राशीः श्रेयसी यस्य राज्ञः किं स्यात् स विप्रशीः ॥ ५६ ॥

( तद्भवतु । )

दिवादौ सत् सुखं माऽस्तु निरयोपि वरं मम ।
विप्रोपकारात् तं कुर्य्यां यदर्थे मेऽचकात्तनुः ॥ ५७ ॥

ब्रह्मन् ! निजपातकं मयि समर्प्य गृहाण् प्रतियातु तवादर्शनेन पितरौ विषीदतः ।

स्वबाहुदामेन तपोव्रताद्यै-
र्भोगेन वाऽसौ तव दोषपङ्कः ।

दण्डौ माकारि मयेति शेषः । तथा कञ्चिदपि मुनिं तपस्विनं न अग्रासं । इरा भूवाक्-सुराप्सु स्यादित्यमरः । पत्ते । दैहिकेत्यादिकं उं । इः १।, आतः ६।, विद्धितः १।, ग्रासः ६।, सम्मुखे ७।, अकः ६।, ( अपि १।, ) ॥ ५५ ॥

स्वेनेति । स्वेन आत्मनैव शुद्धस्य ब्रह्मचारिणः क्व वा कुत्र वा क्वौतुवत् विड़ालस्येव ग्रासः ग्रासनं दण्ड इति यावत् अस्तीति शेषः । यस्य राज्ञो विप्राशीर्ब्राह्मणाशीर्वचनं श्रेयसे क्षेमाय भवति स राजा किं कथं विप्रशीः विप्रं शास्तीति स तथा । भवेदिति शेषः । पत्ते । स्वेनेति आत्मीयजनप्रभोः सं । वदिति वक्तुः सं । शुद्धस्य ६।, ( वा १। ) ग्रासः ६।, क्वौ ७।१, ( तु ) ॥ ५६ ॥

दिवेति । दिवादौ स्वर्गादौ सत्सुखं नित्यसुखं मम माऽस्तु विप्रोपकारात् मम निरयोऽपि वरं तं विप्रोपकारं कुर्य्यां । यदर्थं विप्रोपकारार्थं मम तनुः अचकात् दीप्तिमवाप । पत्ते । सुखेत्यादिकं उं । ( दिप् आदौ ) दिवादौ ७।, स १।, त् १।, ॥ ५७ ॥

व्याकरणम् ।

शुद्धस्य वा ग्रासः क्वौ तु । वाकारोऽत्र अकारार्थे । तेन क्वौ तु केवलस्य । ग्रास आग्रासच आतः इः स्यात् । आशीः, विप्रशीः ॥ ५६ ॥

दिवादौ सत् । दिपः सम्मुखे सस्य त स्यात् । अचकात् ॥ ५७ ॥

गन्ता क्षयं नाच विकल्पलेशो
मुक्तोऽचकास्त्वं द्विज ! पापतोऽस्मात् ॥ ५८ ॥

एतत् श्रुत्वा स द्विजः यथाविधिविधानेन राज्ञे सदक्षिणं निज-पापं विसृज्य गृहं प्रतिजगाम ।

इति सप्तमरात्रुल्लासे चतुर्थोऽध्यायः ।

खेति ।; असौ तव दीप्तपङ्कः प्रदीप्तः पापं स्वबाहुदानेन आत्मबाहुच्छेदेन तपसा प्राय-श्चित्तात्मकव्रतेन भोगेन वा क्षयं नाशं गन्ता गमिष्यति । अत्र विषये विकल्पलेशो नास्ति हे द्विज ! अस्मात् पापतो मुक्तोऽचकाः दीप्यसे स्म । पचे । स्वबाहुदादिनेत्यादिकं उदा-हरणवाक्यं । वा १, सौ ७, ॥ ५८ ॥

व्याकरणम् ।

चाऽसौ । दिपः सन्निकृष्टसौ परे सस्य तः स्यात् वा । अचकाः ॥ ५८ ॥

---

अथ राजा सर्व्वजित् शिष्यांश्च सुबन्धुं प्रति। ब्रह्मन्नेतदद्भुतं श्रुतं ततः स राजा किमकरोत्। सुबन्धुस्तान् प्रति। श्रूयतां।

तुन्दिलो मलिनः खर्व्वो दूषिकाविललोचनः।
पुरुषोऽचचकासत् स्वं सभायां नृपतेः पुरः॥ १॥

राजा तं पुरुषं प्रति।

त्वं कोऽचकात् भोः पुरुष! क्षणादच्छिगतः सताम्।
भवस्यच्छिगतोऽकस्मादिति त्वां ज्ञातुमुत्सहे॥ २॥

पुरुषो राजानं प्रति।

अवेहि रे गुणः श्रीधोः पानब्रह्मवधादिजात्।
अतिश्रेतेऽत्र यः पङ्कः सोऽहं ब्रह्मस्वहारजः॥ ३॥

तुन्दीति। सभायां नृपतेः पुरोऽग्रे पुरुषः स्वमात्मानं अचचकासत् प्रकाशयामास। कीदृशः तुन्दिलो बृहत्कुक्षिः दूषिका नेत्रमलं तेन आविले लोचने यस्य स तथा। पक्षे। सूत्रस्य उदाहरणं॥ १॥

त्वमिति। भोः पुरुष! कस्त्वं अचकात् दीप्यसे च त्वं नोऽस्माकं अच्छिगतः दृष्टि-गोचरः सन् अकस्मात् क्षणात् अच्छिगतो नेत्री भवसि इति हेतोस्त्वां ज्ञातुमुत्साहयुक्तो भवामि। पक्षे। सूत्रस्य उ॰॥ २।

अवेहीति। अत्र संसारे यः पाप्मा यत् पापं श्रीधीर्मदिरायाः पानब्रह्मवधादिजात् पापात् अतिश्रेते अधिको भवति सोऽहं ब्रह्मस्वहारजं ब्रह्मस्वहरणसम्भूतः अगुणः गुण-विरुद्धः दोष इत्यर्थः पापमिति यावत्। रे! इत्यवेहि जानीहि। पक्षे। पानेत्यादिकं उ॰। ( अवेहि न, ) रे ७।, गुणः १।, श्रीधीः ६।, ॥ ३॥

व्याकरणम्।

अचचकासत्॥ १॥

अचकात्॥ २॥

अवेहि रे गुणः श्रीधीः। रे परे श्रीङ धातोर्गुणः स्यात् इत्यवेहि। अतिश्रेते॥ ३॥

अनन्तरं । शुक्लः शुक्लाम्बरधरः स्मितशोभिमुखाम्बुजः ।
पुरुषो दृष्टशे राज्ञाऽनुशयानोऽनुनास्तिकान् ॥ ४ ॥

राजा तं पुरुषं प्रति ।

कोऽस्यसेचनक त्वं भोस्त्वां दृष्ट्वा हृत् प्रसीदति ।
अतिशेषे त्वमिह मे प्राणेभ्योपीत्युदेति धीः ॥ ५ ॥

पुरुषो राजानं प्रति ।

राजन् ! गृहाण मान्तीरम् विपदामतिशेरते ।
येऽश्वमेधादिधर्म्मास्तेषूप विप्रोपकारजः ॥ ६ ॥

अथ स पापपुरुषं दृष्ट्वा तं प्रति । कस्त्वमिति । स तं प्रति ।

विदः क्वचित् सम्विदते नास्तिका वञ्चकास्तु माम् ।
संविद्रते सर्व्वं एवाऽधुनाऽजानात् नृपोप्यसौ ॥ ७ ॥

शुक्ल इति । अनुनास्तिकान् नास्तिकान् प्रति अनुशयानो दीर्घद्वेषं दधत् अन्यत् सुगमं अनुशयो दीर्घद्वेषानुतापयोरित्यमरः । पद्ये । सूत्रस्य उं ॥ ४ ॥

कोऽसीति । हे असेचनक ! त्वं कोऽसि ! इह समये मे मम प्राणेभ्योऽपि अतिशेषे अधिको भवसि इति धीर्बुद्धिरुदेति । पद्ये । सूत्र उं ॥ ५ ॥

राजन्निति । हे राजन् ! विपदां तीरं नाशकं मां गृहाण जानीहि । तीरमिति तुरीयङ् हिंसे इत्यस्मात् अस्तिरूपं । येऽश्वमेधादिधर्म्मा अतिशेरते अर्थात् धर्मेषु मध्ये श्रेष्ठा भवन्ति तेषु धर्मेषु उप अधिकोऽहं विप्रोपकारजः ब्राह्मणोपकारसम्भूतः । पद्ये । राजन्निति सं । विपदित्यादिकं उं । ( गृहाण प्ना, ) मान्तः ६।, रम् १।, ॥ ६ ॥

विद इति । विदो ज्ञानिनः क्वचित् मां संविदते जानन्ति नास्तिका वञ्चकास्तु मां सर्व्वं एव संविद्रते जानन्ति अधुना असौ राजापि मां अजानात् ज्ञातवान् । विदः ५।, क्वचित् १।, ॥ ७ ॥

व्याकरणम् ।

अनुशयानः ॥ ४ ॥

अतिशेषे ॥ ५ ॥

गृहाण मान्तो रम् । शीङः परस्य मस्यान्तो रम् स्यात् । अतिशेरते ॥ ६ ॥

विदः क्वचित् । विदः परस्य मस्यान्तो रम् वा स्यात् । संविदते, संविद्रते ॥ ७ ॥

धर्म्मः पापपुरुषं प्रति। आः पाप ! त्वं केनात्रानीतोऽसि मम भोग्यं शरीरं वाञ्छसि इतो दूरं निःसर। स तं प्रति।

इङ्गन्तरेऽस्य वत्स्यामि त्वयैव सह कोऽपि नौ।
विरोधोऽस्तीत्यसौ वेत्ति योऽध्यगीष्ट श्रुतं नृपः॥ ८॥
वेदान्ते चेति तर्कादावध्येष्टासौ नृपो न किम्।
धर्म्माधर्म्मौ निवसत एकात्मन्यविरोधिनौ॥ ९॥
तस्मात्। मिथो वत्स्यावोऽनुरक्तौ सदा गामा विरोधिताम्।
अस्यात्मबोधादध्यात्मशास्त्रं योऽधिजगे नृपः॥ १०॥

---

इङ्गीति। अस्य नृपस्य अन्तरे अन्तरात्मनि इङ्गी सञ्चारी सन् त्वयैव सह वत्स्यामि। ननु परस्परं विरोधिनोः कथमेकत्र सहवाससम्भव इत्यत आह। नौ आवयोः कोऽपि विरोधो नास्ति इति असौ राजा वेत्ति जानाति यो नृपः श्रुतं शास्त्रम् अध्यगीष्ट अधीतवान्। इङ्गीति इगि गतौ इत्यस्य णिनि सिद्धम्। इङ् १।, गी १।, अन्तरे ७।,॥ ८॥

वेदेति। असौ नृपो वेदान्ते तर्कादौ च किं इति न अध्यैष्ट किन्तदित्याह। एकस्मिन् आत्मनि धर्म्माधर्म्मौ अविरोधिनौ सन्तौ निवसतः। वेद ८।, अन्ते ७।, (च) इति २।,॥ ९॥

मिथ इति। सदा सर्व्वस्मिन् काले मिथः परस्परं अनुरक्तौ सन्तौ वत्स्यावः अस्य नृपस्य आ आत्मबोधात् आत्मज्ञानपर्य्यन्तं विरोधितां मागाः न प्राप्नुहि ननु अस्यात्मबोधो भविष्यतीति कथं जानासि इत्यत आह। यो नृपोऽध्यात्मशास्त्रं अधिजगे अधीतवान्। पद्ये। वत्स्याव इति वसधातोरुदाहरणं। अनुरक्तौ ७।, सदा ७।, गाः १।,॥ १०॥

व्याकरणम्।

इङ्गन्तरे। इङो गौ स्यात् अन्तभूते रे परे। वाऽनुवर्त्तते। अध्यगीष्ट॥ ८॥

वेदान्ते चेति। अन्ते तिष्ठतीति अन्तस्थाद्यमाख्याते च अर्थात् धौविभक्तौ परे इङो गौ स्यादिति वेद। अध्यैष्ट॥ ९॥

अनुरक्तौ सदा गाः। रस्य पश्चादिति अनुरं ताद्यमक्तौ विभक्तौ सदा इङो गाः स्यात्। अधिजगे॥ १०॥

अपि च। त्वद्वाण्यन्वङ् स नो स्तुत्वाहत्य जयाह यं नृपः।

एनमेतद्वारयितुं किं पुरा माध्यजीगपः॥ ११॥

राजा तु नैवं वक्तुमर्हति। यतः।

नह्येतादृक् धवमुखस्य विरक्तिः प्रशस्यते।

यद्धवीयमुखान्ते च स्फूर्त्तिमेति श्रुतिः सदा॥ १२॥

अथ धर्म्मः पापपुरुषं प्रति।

यस्य दीव्यदयस्याग्रेऽरोदो नो बोध! तन्त्वमुम्।

त्वदिति। नृपो यं जनं स्तुत्वा प्रशंस्य आहत्य च जयाह स जनस्त्वद्वाण्यन्वङ् तद्वा-ण्यास्तव वचनस्य अन्वङ् अनुगतो नो न इत्यर्थः। अर्थात् स तव वचनं न शृणोति। एतद्वारयितुं मम यद्वचं वारयितुं पुरा पूर्व्वकाले एनं राजानं किं कथं अध्यजीगपः अध्यापयितुमिच्छसि। अन्वगन्वचमनुग इत्यमरः। पचे। आदिति भोक्तुः सं। तु इत्यादिकं ज्ञं। वा १।, ण्यन्वङ्सनोः ७।, ( तु १।, )॥ ११॥

नह्रीति। एतादृक् धवमुखस्य एतादृशमनुष्यप्रधानस्य विरक्तिर्नहि प्रशस्यते यद्ध-वीयमुखान्ते यत्पुरुषीयमुखावयवे श्रुतिर्व्वेदः सदा स्फूर्त्तिमेति प्राप्नोति। अत्र अन्त-शब्दोऽवयवार्थकः। दशान्तः पट इतिवत्। पतिशाखिनराधवा इत्यमरः। नहि १।, एतादृक्धवमुखस्य ६।, विरक्तिः १।, प्रशस्यते ८।, यद्धवीयमुखान्ते ७।, अचः ६।, स्फूर्त्तिं २।, एति ८।, श्रुतिः १।, सदा १।,॥ १२॥

यस्येति। यस्य नृपस्य अग्रे त्वं अरोदः कीदृशस्य दीव्यदयस्य दीव्यन् द्युतिमान् अयः शुभावहदैवं यस्य तादृशस्य। हे नोबोध! अबोध! तममुं तु स्प्रष्टुं नार्हसि न शक्तो भवसि

## व्याकरणम्।

वाण्यन्वङ्सनोस्तु। चेः पश्चादर्त्ति अङ्सनोस्तु वा स्यात्। अध्यजीगपः॥ ११॥

नह्येतादृक्धवमुखस्य विरक्तिः प्रशस्यते यद्धवीयमुखान्तेऽच स्फूर्त्तिमेति श्रुतिः सदा। तादृशधातुसम्बन्धीयस्य मुखस्याद्यस्य सदा विरक्तिर्न स्यात् यद्धातुसम्बन्धीये मुखान्ते आद्यन्ते अचः श्रुतिः स्फूर्त्तिमेति दीप्यते॥ १२॥

स्प्रष्टुं नार्हसि बाहुभ्यामुर्णुनावाहमेव यम् ॥ १३ ॥

अपि च । ज्ञो यं स्तवीति यो धर्म्मसहस्रस्य पितः स्तुतः ।

वेच्छतीमं भवान् स्प्रष्टुं पाप ! स्तौमि यमप्यहम् ॥ १४ ॥

अन्यच्च । उपेत्य भीतो रक्षार्थं रौति वन्यो मृगोऽपि तु ।

हत यङ्करुणोपेतं तवीसि हतमर्हितुम् ॥ १५ ॥

पापपुरुषः । अहो राजा धर्म्मतो मां स्वीकृत्य अधुना किं त्यक्तुमिच्छति । तदपि वा भद्रं । यतः ।

---

यं राजानं अहमेव बाहुभ्यां उर्णुनाव आच्छादितवान् । पक्षे । यस्य दौर्व्यदिति वायोर्दौर्व्यतकुलस्य सं । अध इति अपोषकस्य सं । श्रेषः उं । अयस्याग्रे ७, रः १, दः १, नः १, वः १, ॥ १३ ॥

ज्ञ इति । ज्ञः पण्डितः यं स्तवीति यश्च धर्म्मसहस्रस्य पितः आश्रयः धर्म्मसहस्रेण पीयते गम्यते यत्र स तथा । पिपिश गतौ इत्यस्मादधिकरणे क्तः । तद्योगे सहस्रस्येति कर्त्तरि षष्ठी । स्तुतः प्रशंसितः । हे पाप ! भवान् इमं वा इममपि स्प्रष्टुमिच्छति । अहमपि यं स्तौमि प्रशंसामि । पक्षे । धर्म्मस इति धर्म्मप्राप्तस्य सं । सहस्रस्य ६।, पितः ६।, स्तुतः ५।, वा १।, इच्छति ८।, ईमं २।, ॥ १४ ॥

उपेति । हत खेदे । वन्यो मृगोऽपि भीतः सन् करुणोपेतं दयायुक्तं यं नृपं उपेत्य रक्षार्थं रौति तं नृपं अर्हितुं गन्तुं पीड़यितुं वा इह सभायां तवीषि वर्त्तसे । पक्षे । अपेतं अपगतमित्यर्थः । पूर्व्वापरभागः उं । अपि ७, तु हतयङ्करुणः ५।, ॥ १५ ॥

व्याकरणम् ।

अयस्याग्रे रो दो नो वो । नास्ति यो यकारो यत्र तादृशसंयोगस्य अग्रे स्थितस्य रस्य दस्य नस्य वस्य च द्विरुक्तिर्न स्यात् । उर्णुनाव ॥ १३ ॥

सहस्रस्य पितः स्तुतो वेच्छतीमम् । स्तुधातोः पितो ङसो रस्य ईमं वा इच्छति । स्तवीति, स्तौमि ॥ १४ ॥

अपि तु हतयङ्करुणः । हतो लुप्तो यङ् यस्मात् स हतयङः तुश्च हतयङश्च रुश्चेति तुहतयङ्करुणः तस्मादपि ईमभिच्छति । रौति, तवीषि ॥ १५ ॥

नित्यं ब्रूत स्फुटं वृद्धाः स्वीकृतं यो जिहासति।
प्रतिश्रुत्य च नो दत्ते तं ब्रवीति न आस्पदम्॥ १६॥

अत उभयथापि ममाश्रयोऽसौ मम हस्तं मोचयितुं नार्हति।

धर्मः पापपुरुषं प्रति।

ब्रूषेऽलं यत् वचो जातोत्साहः पञ्चति वादिषु।
अनुरक्तेः पञ्चते वा हृद्यं शुश्रूषवे बुधः॥ १७॥

अयन्तु राजा न किमपि वक्ति न वा त्वद्वचः शुश्रूषुः अतो वृथा ते वाक्प्रपञ्चः। पापपुरुषः राजन्! पूर्व्वावासात् मामुदस्तीचकृषे।

नित्यमिति। वृद्धाःपण्डिताः स्फुटं यथा स्यात् तथा नित्यं ब्रूत पुनःपुनर्व्वदन्तीत्यर्थः मुहुरर्थे त। किं वदन्तीत्याह। योजनः स्वीकृतं जिहासति प्रतिश्रुत्य च न दत्ते तं जनं नोऽस्माकं आस्पदं स्थानं ब्रवीति मन्वादिरिति शेषः। नित्यं १।, ब्रूत: ५।, ॥१६॥

ब्रूषे इति। अलं व्यर्थं ब्रूषे तव वाक्प्रबन्धो वृथेत्यर्थः। यत् यस्मात् वादिषु वक्तृषु वादिनां समीपे इत्यर्थः अनुरक्तेः अनुरागात् वचो वाक्यं पञ्चति विस्तारयति। बुधः पण्डितः शुश्रूषवे जनाय वा हृद्यं मनोगतं पञ्चते व्यक्तीकरोति। तथाच अयं न प्रत्युत्तरवादी न वा शुश्रूषुरतस्त्वं वृथा वाचं प्रपञ्चयसीति भावः। अत्र पचिक् ततौ इति चुरादिधातोः पञ्चकततौ इत्येवोक्तावेवेष्टसिद्धौ इदनुबन्धकरणं इदनुबन्धचुरादेः ञेरनित्यत्वज्ञापनार्थम्। एतदेव अकिकृत्तचषोत्यत्र स्फुटीकृतं कामधेनुटीकायां वोपदेवेन। सिद्धे नित्यञिअन्तत्वात् नित्यनुमत्वे किमामिदित्। णिचोऽनित्यत्वबोधार्थं न दृष्टो लुक्विधिः क्वचिदिति। तस्मात् पचिधातोर्ञेरनित्यत्वात् पञ्चतीति सिद्धम्। पञ्चते इति पचिङ् व्यक्तीकरणे इत्यस्य रूपम्। पचे। ब्रूषे इत्यादिकं ज। आह: १।, पञ्चतिवादिषु ७॥, अनु-रक्तेः ६।, पञ्च १॥, ते १॥, वा १।, ॥ १७॥

व्याकरणम्।

नित्यं ब्रूत:। ब्रुवो नित्यमोमभिच्छति पिद्वले। ब्रवीति॥ १६॥

आह: पञ्चतिवादिषु अनुरक्तेः पञ्च ते वा। पञ्चतिवादिषु ब्रुवः आहो था स्यात् तै पञ्च तिवाद्याः अनुरक्तेः रस्य अनु पयादिति अनुरं तादृशक्तेर्विभक्तेः पञ्च स्युः ब्रूषे॥ १७॥

तथेहयाही राजन् ! मामाहूय चकर्षेऽतिथिम् ।
नात्थाऽधुना जड़ इवार्थिने मे पदमात्मनः ॥ १८ ॥
तद्भवतु । बलान्नेष्ये वशे त्वाऽद्य स्वाधिकारप्रवर्त्तिनम् ।
श्वासो मे शोषयेत् धर्म्मं यो मामाहोषतीं मदात् ॥ १९ ॥
धर्म्मः आः पाप ! मर्त्तुकामोऽसि इतः प्रयाहि ।
वचोऽरे शृणु मे पाप ! मावोचः पुनरीदृशम् ।
आहोपुरुषिकां मुञ्च वध्यस्त्वं श्रेयसो मम ॥ २० ॥
याहीत्यपि धिक्कृतोऽसौ ट्रेकतेऽहो महोरगम् ।
हन्तुं जुहोति यः श्वासाऽनले हव्यैर्महागजैः ॥ २१ ॥

---

तथेति । तथा अन्यच्चेत्यर्थः । अहो आश्चर्य्यं हे नृप ! ईहया आत्मेच्छया मां आहूय अतिथिं चकर्षे कृतवानसि अधुना आत्मनः पदं स्थानं अर्थिने याचकाय मे मह्यं जड़ इव नात्थ न वाक्प्रयोगं करोषि । पद्ये । राजन्नित्यादिकं उं । त १।, थे ७।, इः ६।, आहः ६।, ॥ १८ ॥

बलादिति । स्वस्यात्मनोऽधिकारे प्रवर्त्तिनं त्वा त्वां बलात् वशे नेष्ये मम निश्वासो धर्म्मं शोषयेत् यो धर्म्मो मदादहङ्कारात् मां उषतीं अकल्याणीं गिरं आह । पद्ये । सूत्रस्य उं ॥ १९ ॥

वच इति । अरे पाप ! मम वचः शृणु ईदृशं पुनर्मावोचः न ब्रूहि । आहोपुरुषिकां आत्मोत्साहं मुञ्च त्यज । श्रेयसो धर्म्मस्य मम त्वं वध्यः । वचः १।, अरे ७।, ॥२०॥

याहीति । इतः स्थानात् प्रयाहि इति धिक्कृतोऽपि असौ दुर्जनः अहो आश्चर्य्यं महोरगं हन्तुं ट्रेकते उत्साही भवति यो महोरगः श्वासानले निश्वासाग्नौ हव्यैर्हवनीयैः हव्यरूपैर्महागजैर्जुहोति । असौ पुमान् दुर्जनोऽपीति कोपः । पद्ये । याहीति याधातो-

व्याकरणम् ।

तथे इ आहः । आहो इस्य त स्यात् थे परे । आत्थ ॥ १८ ॥

आह ॥ १९ ॥

वचोऽरे । ब्रुवो वचः स्यात् अरे परे । अवोचः ॥ २० ॥

तदेवं शृणु ।

आसीदवाच्यगुणयुत् बहुधोरुतपोऽन्वितः ।
कश्चिन्नित्यं जुह्वति ये विप्रास्तेषां वरो द्विजः ॥ २२ ॥
एकदा जुह्वतं सायं महाव्याघ्रो जघान तम् ।
योऽयं प्रायेण तद्राष्ट्रं व्याघ्रो निन्ये यमक्षयम् ॥ २३ ॥

तस्य पुत्रोऽतिबलवान् विधुनामातिसाहसी आसीत् ।

पिप्रत् धेनुं पशुहस्तः स विप्रः सम्मुखेऽख्यदित् ।
रे क्रूरा त्वां निहत्यमद्य पितृशोक इयर्त्त्विति ॥ २४ ॥

रूपदर्शनम् । कातेह इति सुखिलेनेच्छावानित्यर्थः । द्विरुक्तः १।, ( लि इत् ) लीत् १।, रे ७।, ॥ २१ ॥

आसीदिति । कश्चित् द्विजः आसीत् कीदृशः अवाच्यगुणयुत् अनिर्व्वचनीयगुणयुक्तः सत्त्वगुणयुक्त इति यावत् । बहुधा बहुविधं उरु महत् यत्तपस्तदन्वितस्तद्युक्तः । ये विप्रा नित्यं अर्थात् सायं प्रातर्जुह्वति तेषामपि वरः श्रेष्ठः । पद्ये । अव इति रचकस्य सं आसीदिति पूर्वोदाहरणं उ सम्बोधने । अचि ७।, अगुणे ७।, उत् १।, व १।, हुधोः ६।, ॥ २२ ॥

एकदेति । तं ब्राह्मणम् । योऽयं व्याघ्रः तद्राष्ट्रं यमक्षयं यमालयं निन्ये प्रापयामास । पद्ये । सुवस्य उं ॥ २३ ॥

पिप्रदिति । स विप्रः पशुहस्तो धेनुं पिप्रत् पालयन् सम्मुखे इत् गतः सन् इति अख्यत् उक्तवान् । किमुक्तवान् तदाह । रे क्रूर ! अद्य त्वां हत्वा पितृशोक इयर्त्तु गच्छतु इति अख्यदित्यन्वयः । पद्ये । सवीति पश्चियुक्तहत्वमूलस्य सं । पूर्व्वापरभागी उं । प्रः ६।, सम्मुखे ७।, ( खि अत् ) ख्यत् १।, इत् १।, ॥ २४ ॥

व्याकरणम् ।

द्विरुक्तोलीद्रे । लिकारानुबन्धधातुर्द्विरुक्तः स्यात् रे परे । जुहोति ॥ २१ ॥

अचि अगुणे उत् व हुधोः हुधातोरुकारो व स्यात् अगुणे अचि परे । जुह्वति ॥ २२ ॥

जुह्वतम् ॥ २३ ॥

प्रः सम्मुखे ख्यत् इत् । पृ ऋधातोः सम्मुखे खिरकारस्य इत् स्यात् रे परे । सूत्रत्वात् पुंस्त्वं । इयर्त्तु ॥ २४ ॥

तथाऽभ्रादेः श्रुतो नैवं निस्वनस्त्वं बिभर्षि यम् ।
पश्चायं पशुर्मेऽद्य निस्वनं त्वां विधास्यति ॥ २५ ॥

एवं कृते प्रजानां महोपकारः स्यात् । व्याघ्रः विप्रं प्रति ।

अवश्यमन्तको लोप्योऽरये हा कस्तितिक्षते ।
किन्त्विदानीं न मय्यस्त्वं जह्या धर्म्मं विरचिषुः ॥ २६ ॥
स नाशकत् यदोदन्यापरिम्लानो नखीतये ।
निजां रेभां समास्थाय वेवेष्टिस्म तया दिशः ॥ २७ ॥

तथेति । अभ्रादेर्मेघादेस्तथा तादृक् निःस्वनः शब्दो नैव श्रुतः यं निस्वनं बिभर्षि धारयसि । पशु मे मम अयं पशुः अद्य त्वां निःस्वनं शब्दरहितं विधास्यति करिष्यति अर्थात् हनिष्यति । तथा १।, भ्रादेः ६।, श्रुतः १।, ॥ २५ ॥

अवश्यमिति । अन्तयति नाशयतीति अन्तकः शत्रुः सोऽवश्यं लोप्यः नाश्यः हा खेदे अरये शत्रवे को जनः तितिक्षते क्षमां करोति । किन्तु धर्म्मं विरचुः रचितुमिच्छुः सन् इदानीं मयि अस्त्वं न जह्याः न त्यज । पक्षे । अवश्यमिदं जानीहीति शिष्याव-धानार्थम् । तितिक्षत इत्यादिकं ऊ । अन्तकः १।, लोप्यः १।, रये ७।, हाकः ६।, ॥ २६ ॥

स इति । स नखी व्याघ्रः उदन्यापरिम्लानः उदन्या पिपासा तया विषण्णः सन् इतये गमनाय यदा नाशकत् तदा निजामात्मीयां रेभां रुतं आस्थाय आश्रित्य तया रेभया दिशः वेवेष्टिस्म व्याप्नोतिस्म । रेभामिति । रेभृशब्दे इत्यस्मात् गुरुमत्वादप्रत्यये सिद्धम् । पक्षे । पूर्व्वभागः शकधातोरुदाहरणत्वेन सार्थकम् । भामित्यादिकं ऊ । (खि इतः) खीतः ६।, ए १।, निजां ६॥।, रै ७।, ॥ २७ ॥

व्याकरणम् ।

तथा भ्रादेः श्रुतः । भ्रमाङ हाङामपि श्रुतौ विधिः स्यात् । बिभर्षि ॥ २५ ॥
अन्तको लोप्यो रये हाकः । हाकोऽन्तो लोप्यः स्यात् रस्य ये परे । जह्याः ॥ २६ ॥
खीत ए निजां रै । निजां खेरिकारस्य ए स्यात् रै । वेवेष्टि ॥ २७ ॥

( अनन्तरं )।

मैवं विधेहीति वदन्तमग्रतस्तृषा विषीदन्तमसौ द्विजो बली ।
स्वपर्शुना राम इवार्ज्जुनं रुषा पितुर्रिपुं तं विदधे द्विधाऽहित: ॥२८

ततस्तथाऽदादेतस्य रसनां सोऽतिरोषत: ।
मुखं व्यादेहि मत्तातं भुङ्क्ष्वेति मुहुरीरयन् ॥ २९ ॥

तत् श्रुत्वा राजा सानुक्रोशम् ।

हा दयादिगुणो नास्यान्तरे मेने द्विजन्मन: ।
यत् तृषा म्रियमाणस्यादितासून् शरणैषिण: ॥ ३० ॥

---

मैवमिति । स बली द्विजो रुषा क्रोधेन तं व्याघ्रं पितृरिपुं पर्शुना कुठारेण द्विधा विदधे अकरोत् । कीदृश: अहित: शत्रु: तं कीदृशं एवं माविधेऽहि इति अग्रत: सम्मुखे वदन्तम् । तृषा तृष्णया विषीदन्तम् । क इव अर्ज्जुनं कार्त्यवीर्य्यार्ज्जुनं परशुराम इव । यथा परशुराम: पितृशत्रुमर्ज्जुनं जघान तथेत्यर्थ: । पक्षे । पूर्व्वभाग: ष्ठं । धे १।, द्विधा १।, हित: ७।, ॥ २८ ॥

तत इति । तदनन्तरं स विप्र: एतस्य व्याघ्रस्य तथा रसनां जिह्वां अदात् अच्छिनत् । किं कुर्व्वन् मुखं व्यादेहि प्रसारं कुरु मत्तातं मम पितरं भुङ्क्ष्व इति मुहुरीरयन् वदन् । पक्षे । ततस्तदनन्तरम् । तथा १।, दा १।, दे १।, ॥ २९ ॥

हेति । हा विषादे अस्य द्विजन्मनो ब्राह्मणस्य अन्तरे अन्तरात्मनि दयादिगुणो नास्तीति शेष: । इति अहं मेने ज्ञातवान् । यत् यस्मात् तृषा तृष्णया म्रियमाणस्य अस्य व्याघ्रस्य शरणैषिण: शरणागतस्य असून् प्राणान् आदित जग्राह । पक्षे । हा इति गतिशीलस्य सं । द: ६।, आत् १।, इ: १।, गुण: १।, न १।, अस्य ६।, अन्तरे ७।, मे ७।, ॥ ३० ॥

व्याकरणम् ।

धे द्विधा हित: । द्विरुक्तो धाधातुर्धे स्यात् हौ । हित इति सप्तम्यास्तस् । विधेहि ॥ २८ ॥

तथा दा दे । तथा दा द्विरुक्तो दाधातुर्दे स्यात् हौ परे । व्यादेहि ॥ २९ ॥

द आत् इर्गुणो नास्यान्तरे मे । दासंज्ञकस्य आत: इ: स्यात् अन्तभूते रे परे। आत्मने पदे तस्य गुणो न स्यात् । आदित ॥ ३० ॥

तद्भवतु अलं तदनुशयेन ततः स विप्रः किमकरोत् । धर्म्म आह । राजन् ! शृणोतु ।

समस्थित वयस्थोऽसौ द्विजस्तत्रैव सत्वरम् ।
दूतो याम्यो वैष्णवश्च युगपत् तमवास्थित ॥ ३१ ॥

अथ यमदूतो विष्णुदूतं प्रति ।

भवतां नाधिकारोऽस्मिन् विप्रे पापिनि निर्द्दये ।
प्रपन्नं योऽवधीत् व्याघ्रं म्रियमाणं पिपासया ॥ ३२ ॥

विष्णुदूतस्तं प्रति । मैवम् ।

परोपकृतये यत्तु विधत्ते कर्म्म गर्हितम् ।
तत्कर्म्मजो बली धर्म्मो हन्ति तज्जमघं लघु ॥ ३३ ॥

अतस्तत्पापमस्य नास्ति ।

महोपकारं लोकानां विदधातिस्म तद्वधः ।
अयं तत्कर्म्मजैः पुण्यैर्व्विष्णुसालोक्यमर्हति ॥ ३४ ॥

समस्थितेति । असौ द्विजो वयस्थो युवैव समस्थित मृत इत्यर्थः । तत्रैव समग्रे सत्वरं शीघ्रं यथा स्यात् तथा याम्यो यमसम्बन्धीयो वैष्णवो विष्णुसम्बन्धीयश्च दूतस्तं विप्रं युगपत् अवास्थित प्राप्तवान् । पद्ये । वय इति पश्चिमः मं । स्थः ६।, असौ १।, ॥३१॥

भवेति । प्रपन्नं शरणागतम् । अन्यत् सुगमम् । अत्र व्याकरणपद्यो नास्ति ॥३२॥

परेति । यत्तु कर्म्म परोपकाराय विधत्ते करोति तज्जं तत्कर्म्मजन्यं लघु अघं पापं तत्कर्म्मजो धर्मो बली बलवान् हन्ति नाशयति । पद्ये । पूर्व्वसूत्रस्य छं ॥ ३३ ॥

महोपकारमिति । तद्वधः व्याघ्रवधः । अयं ब्राह्मणः । अन्यत् सुगमम् । पद्ये । सूत्रस्य छं ॥ ३४ ॥

व्याकरणम् ।

स्थोऽसौ । स्थाधातोरपि असौ विधिः स्यात् । अवास्थित ॥ ३१ ॥ ३२ ॥

विधत्ते ॥ ३३ ॥

अन्तलोपे किं विदधाति । एतत्तु परसूत्रीयोदाहरणम् ॥ ३४ ॥

इति तं विष्णुलोकं निन्ये । अथ सर्व्वजिदादयः शिष्याः सुबन्धु प्रति । गुरो ! ।

तृष्णाकुलवतां त्वद्वाक्सुधास्वादोयमाशु नः ।
आनन्दानन्त्यधोऽदोऽधस्तथेरयति मुक्तिवत् ॥ ३५ ॥
ततो धर्म्मः किमकरोदभिधत्तां तथा भवान् ।
धत्त्वा विरक्तिं मास्मात्र दीने हि सदयो महान् ॥ ३६ ॥

इति सप्तमीरात्युल्लासे सर्व्वजित्सुबन्धुसम्वादे पञ्चमोऽध्यायः ।

तृष्णेति । अयं त्वद्वाक्सुधास्वादः तववाक्यरूपा या सुधा तस्याः आस्वादः पानं तृष्णाकुलवतां तृष्णा विषयस्पृहा तस्याः कुलं समूहस्तद्वतां नोऽस्माकं अदस्तृष्णाकुलं अधो नीचं तथा ईरयति प्रेषयति नाशयतीति यावत् । कीदृशः आनन्दानन्त्यधः आनन्दानां आनन्त्यं समूहस्तत् दधाति पुष्णातीति स तथा । किमिव मुक्तिवत् । यथा मुक्तिः आनन्दानन्त्यपोषका सती विषयस्पृहां वारयति तथेत्यर्थः । पचे । पूर्व्वापरभागौ पूर्व्वपरसूत्रीयोदाहरणवाक्यत्वेन स्वार्थकौ । आनन्द इति आनन्दजनकस्य सं । रय इति वेगवानिवाचरतीत्यर्थः । अनन्त्यधः ६।, दः ६।, धः १।, तथे ७।, ॥ ३५ ॥

तत इति । अभिधत्तां कथय । अत्र वाक्प्रबन्धे विरक्तिं भावयित्वा विरक्ततां माभारय.। हि यस्मात् महान् जनो दीने सदयः । पचे । सूत्रस्य चं ॥ ३६ ॥

व्याकरणम् ।

अनन्त्यधो दो धस्तथे । नास्ति अन्त्यो यस्य तादृशस्य धाधातोः अर्थात् लुप्तान्तस्य दकारस्य धः स्यात् तथयोः परयोः । एतस्योदाहरणं पूर्व्वश्लोके दर्शितं विदधातीति ॥३५॥

अभिधत्तां, धत्वाः ॥ ३६ ॥

इति पदादिसंग्रहः ।

अथ सुबन्धुः शिष्यान् प्रति । श्रूयतां धर्म्माधर्म्मयोर्व्विचेष्टितम् ।

अथ धर्म्मः पापपुरुषं प्रति सक्रोधम् ।

तुदसि त्वं दुष्कृतिनो देहिनोऽरेऽघ उत्तरे ।
भवेच्छिदस्तुदां योऽन्यस्त्वया साकं स नेक्षितः ॥ १ ॥

शृणु रे नापकारात् परोऽधर्म्मः । अतः ।

दिवां यन्मन्यते धीरैः प्रतीकं जायते यतः ।
परानिष्टं वैधमपि न तत् कर्म्म समाचरेत् ॥ २ ॥

अत्रोदाहरणम् । कलिङ्गदेशे सुनन्दनामा वणिक् दस्युपीड़ितः स्वजनान् प्रत्याह ।

अहो नुदंश्यतेऽसुभ्योप्यर्थः प्रियतमो गुरुः ।
प्राणबाधं प्रतिश्रुत्य यच्चिनोति धनं नरः ॥ ३ ॥

तुदसीति । अरे अघ ! पाप ! त्वं दुष्कृतिनो देहिनस्तुदसि पीड़यसि उत्तरे उत्तरकाले योऽन्योजनः त्वया साकं त्वया सहैव तुदां तत्पीड़नां छिद् छेत्ता भवेत् स जनो नेक्षितः न दृष्टः । त्वयेति शेषः । रे ७।, घे ७।, उत्तरे ७।, भवेत् ८।, शित् १।, श: १।, तुदां ६॥।, ॥ १ ॥

दिवामिति । धीरैः पण्डितैर्यत् कर्म्म दिवां स्वर्गाणां प्रतीकं प्रतिकूलं मन्यते अर्थात् यत् कर्म्म स्वर्गस्य व्याघातजनकं मन्यते यतो यस्मात् कर्म्मणः परानिष्टं जायते वैधमपि विधिबोधितमपि तत् कर्म्म न समाचरेत् । दिवां ६॥।, यन् १।, मन्यते ८।, धीरैः ३॥।, ॥२॥

अहो इति । अहो आश्चर्य्यं नुर्म्मनुष्यस्य असुभ्योऽपि प्राणेभ्योऽपि अर्थो धनं प्रियः गुरुश्च दृश्यते । यत् यस्मात् प्राणबाधं प्राणनाशं प्रतिश्रुत्य अङ्गीकृत्य नरो धनं चिनोति

## व्याकरणम् ।

रेघ उत्तरे भवेत् शित् अस्तुदां । तुदादीनां उत्तरे शित् अकारानुबन्धः अ: स्यात् रे परे कर्त्तरि । तुदसि ॥ १ ॥

दिवां यन् मन्यते धीरैः । दिवादीनामुत्तरे शित् यन् मन्यते धीरैः । जायते ॥ २ ॥

तदस्माकं धनमादाय पलायनं युज्यते। तदधुनैव श्रीहरिं शिवञ्च स्मृत्वा निर्गच्छन्तु । यतः ।

चक्र्यादेर्नामतो विघ्नाः सर्वे नश्यन्ति तत्क्षणात् ।
इति जानाति यो विद्वान् न स विघ्नेन लिप्यते ॥ ४ ॥
अन्तिकाचः स नोरुद्धाऽद्य तस्कर इमां पुरीम् ।
हर्त्ताऽसुभिः स्वं तदितो गच्छ यावत् रुणद्धि न ॥ ५ ॥
श्रीसम्पदस्तस्य न स्यात् लोपोऽपि द्रेकते सदा ।
यः साहसी विपन्नोऽपि न रुन्धन्ति तमापदः ॥ ६ ॥

सञ्चयं करोति उपार्ज्जयतीति यावत् । पचे। चक्री इति सम्बोधने। अपीत्यादिकं ज्ञ । नुः १।, दृश्यते ८।, सुभ्यः ५॥, ॥ ३ ॥

चक्रीति। चक्री विष्णुः आदिपदात् शिवादीनां परिग्रहः तेषां नामतः नामस्मरणात् सर्व्वे विघ्नाः क्षणान्नश्यन्ति। अन्यत् सुगमम्। क्र्यादेः ५।, ना १।, मतः १।, ॥ ४ ॥

अन्तिकेति। स तस्करोऽद्य नोऽस्माकं इमां पुरीं रुद्धा असुभिः प्राणैः सह स्वं धनं हर्त्ता हरिष्यति। स कीदृशः अन्तिकाचः अन्तिके समीपे अचति गच्छतीति अन्तिकाचः निकटस्थित इत्यर्थः। तत् तस्मात् गच्छ यावत् पुरीं न रुणद्धि। पचे। कर इत्यादिकं ज्ञ । अन्तिकाचः ५।, सः १।, नः १।, ( रुध् धु आद्यतः ) रुद्धाद्यतः ५।, ॥ ५ ॥

श्रीति। तस्य जनस्य श्रीसम्पदो लोपोऽपि न स्यात् यो जनो विपन्नोऽपि विपद्ग्रस्तोऽपि साहसी सन् सदा द्रेकते उत्साहयुक्तो भवति तं जनमापदोऽपि न रुन्धन्ति ।

## व्याकरणम् ।

नुर्दृश्यते सुभ्यः। स्वादेः श्नित् नुः स्यात् थे रे। चिनोति ॥ ३ ॥

क्र्यादेर्ना मतः। क्र्यादेः श्नित् ना स्यात् थे रे। जानाति ॥ ४ ॥

अन्तिकाचः स नो रुद्धाद्यतः। रुध् आद्यतः रुधधातुप्रभृतिभ्यः श्नित् नः स्यात् स च नः अन्तिकाचः अन्त्यादचः परे स्यात् थे रे। रुणद्धि ॥ ५ ॥

तदिह उत्साहयुक्तेन भवितव्यम् । वृद्धस्तत्पिता तं प्रति ।

सुञ्चार्थान् यत्कृते नो भीर्नास्ति भीर्नोऽद्य तन्मुचाम् ।
नु ! मागमोऽन्तकस्यैवालयेऽमुञ्चन् धनस्पृहाम् ॥ ७ ॥
समुज्झसि नश्यो मूलं धनञ्चेत् दस्युयाचितम् ।
सुखं स्वप्स्यसि निःशङ्कं न चेदेवं विनङ्क्ष्यसि ॥ ८ ॥

अथ सुनन्दो वृद्धवाक्ये अश्रद्दधानो धनमादाय सगणो निशि निश्चक्राम । धर्म्मः पुनः पापं प्रति ।

वाच्य ! रे ! तत्परे लब्धो रब्धोरुतपसो मुनेः ।
देवकस्याश्रमस्तेन लम्भिताच्चिमहोत्सवः ॥ ९ ॥

---

पद्ये । श्रीसम्पद इति श्रीरूपसम्पदयुक्तानां सं । कृते इति सुखविस्तारिकायाः सं । तस्य ६।, नस्य ६।, अल्लोपः १।, अपिद्रे ७।, ॥ ६ ॥

मुञ्चेति । अर्थान् धनानि मुञ्च त्यज यत्कृते यन्निमित्तं नोऽस्माकं भीर्भयं अद्य तन्मुचां अर्थत्यागिनां नोऽस्माकं भीर्नास्ति । नु भोः ! धनस्पृहां अमुञ्चन् सन् अन्तकस्य यमस्यालये मागच्छ । पद्ये । पूर्व्वापरभागौ उदाहरणवाक्यम् । मुचां ६॥, नुमागमः १।, अन्तकस्य ६।, ए ७।, ॥ ७ ॥

समुज्झसीति । चेत् यदि दस्युभिर्याचितं अतएव नश्यो नाशस्य मूलं कारणं धनं चेत् यदि समुज्झसि त्यजसि । अन्यत् सुगमम् । पद्ये । समुच् इति श्वस्यचित् सं । झसि ७।, नशः ६।, ॥ ८ ॥

वाच्येति । रे वाच्य गर्हित ! तत्परे तेन वणिजा देवकस्य मुनेराश्रमो लब्धः । मुनेः कीदृशस्य रब्धोरुतपसः । रब्धं आरब्धं उरु महत्तपो येन स तथा तस्य । आश्रमः

व्याकरणम् ।

तस्य नस्याल्लोपोऽपिद्रे । तस्य नस्य अतोऽकारस्य लोपः स्यादपिति रे परे । कुर्व्वन्ति ॥ ६ ॥

मुचां नुमागमोऽन्तकस्यै । मुचादीनां अन्त्यवर्णस्य नुमागमः स्यात् ए अप्रत्यये परे । मुञ्च । अमुञ्चन् ॥ ७ ॥

झसि नशः । नशधातोरन्त्यस्य नुमागमः स्यात् झसि परे । विनङ्क्ष्यसि ॥ ८ ॥

अथ सर्व्वर्त्तवगुण ऋच्छः षष्ठेऽर्द्धयामके।
तवत्यो राम आराम आनर्च्छेऽनुज्ञया मुनेः॥ १०॥

अथ दस्यव इतस्ततस्तं मृगयमानास्तं मुनिमानर्च्छुः। अथ मुनिस्तान् प्रति।

के यूयं कुत आयाताः किमर्थमिह ऋच्छनम्।
दस्यवो वयमत्रैकं धनिनं मृगयामहे॥ ११॥

मुनिस्तान् प्रति।

पश्यामि जातसंरम्भानिव वो वीजमत्र किम्।
अदत्वा स्वीकृतानर्थान् कृपणा यत् पलायिताः॥ १२॥

कीदृशः लम्भिताचिमहोत्सवः। लम्भितः प्रापितोऽच्चोर्महोत्सवः प्रीतिर्येन स तथा। पचे। व इति वकणस्य उ इति च सं। शेषः उं। अचि ७।, परे ७।, अतत्परे ७।, लभधोः ६।, रभधोः ६।, ॥ ८॥

अथेति। अथ अनन्तरं षष्ठेऽर्द्धयामके दिवाषष्ठवेलायां रामो रमणीयस्तवत्यस्तदाश्रमोद्भवः आराम उपवनं मुनेरनुज्ञया आनर्च्छे प्राप्तः तेनेति शेषः। कीदृशः सर्व्वर्त्तवगुणऋच्छः सकलऋतुसम्बन्धिगुणप्राप्तः। पचे। सर्व्वर्त्तव इति सर्व्वऋतुसमुद्भूतस्य सं। गुणः १।, ऋच्छः ६।, षष्ठे ७।, ॥ १०॥

केयूयमिति। अस्य श्लोकस्य पूर्व्वभागः प्रश्नः परभागः उत्तरम्। अस्यार्थः सुगमः। पचे। सूत्रस्य उं॥ ११॥

पश्यामीति। जातसंरम्भान् जातक्रोधानिव वो युष्मान् पश्यामि अत्र किं वीजमिति प्रश्नः। परभागोऽस्योत्तरम्। पचे। सूत्रस्य उं॥ १२॥

व्याकरणम्।

अचि परे अतत्परे लभ्भो रभ्भोः। लभधातोरभधातोश्च अन्त्यस्य नुमागमः स्यात् रभिन्ने रपरविभक्तिभिन्ने च अचि परे। लम्भित॥ ८॥

गुण ऋच्छः षष्ठे। ऋच्छो गुणः स्यात् षष्ठाख्याते। आनर्च्छे॥ १०॥

आनर्च्छुः। ऋच्छनं॥ ११॥

संरम्भ॥ १२॥

अस्य कृपणस्य धने ममाप्यधिकारोऽस्ति । मुनिः । क्रोधो युज्यत एव ।

अदत्तस्वीकृतवसुम् प्रत्युपेतस्य हिंसने ।
क्रोधोऽस्तूपस्किरतु वा तं कोऽलं तन्निवारणे ॥ १३ ॥

किन्त्वेवं । भवेत् च्छेद उपात्तस्य दुरितस्य कथं ततः ।
उपस्किरसि यद्गीतान् धनलोभान्निरागसः ॥ १४ ॥
असद्गण्क्षिति पश्यामि गुणवृद्धी कुटामुभे ।
परेषां वुटनायैव दीर्घं गुणि धनुर्यथा ॥ १५ ॥

अदत्तेति । अदत्तं स्वीकृतं वसु धनं येन एतादृशं जनं प्रति हिंसने हिंसनार्थं उपेतस्य समीपमागतस्य जनस्य क्रोधोऽस्तु तं जनं उपस्किरतु वा छिनत्तु वा तन्निवारणे को जनः अलं समर्थः । पक्षे । अदत्तस्वीकृतव इति अदत्तस्वीकृतस्य वरुणस्य सं । सुम् १।, प्रत्युपेतस्य ६।, हिंसने ७।, क्रः ६।, धोः ६।, ॥ १३ ॥

भवेदिति । ततस्तस्मात् कर्म्मणः उपात्तस्य दुरितस्य कथं छेदो भवेत् यत् यस्मात् धनलोभात् निरागसो निरपराधान् उपस्किरसि लुनासि । भवेत् ८।, छेदे ७।, उपात् ५।, तस्य ६।, ॥१४॥

असदिति । हे असद्गण् ! असत्सु मध्ये गणनीय ! इत्यहं पश्यामि किं तदित्याह । कुटां कुटिलानां गुणवृद्धी उभे अपि परेषां वुटनायैव । यथा दीर्घं सज्यं ज्यायुक्तं धनुस्तथेत्यर्थः । पक्षे । असत्गण् इतिसं । क्षिति ७।, पश्यामि ८।, गुणवृद्धी २॥, कुटां ६॥, उभे २॥, ॥ १५ ॥

व्याकरणम् ।

सुम् प्रत्युपेतस्य हिंसने क्रो धोः । प्रत्युपाभ्यामन्वितस्य पश्चात् गतस्य कृधातोः सुम् स्यात् हिंसायां । उपस्किरतु ॥ १३ ॥

भवेत् छेदे उपात् तस्य । उपात् परस्य तस्य कृधातोः सुम् स्यात् छेदार्थे । उपस्किरसि ॥ १४ ॥

क्षिति पश्यामि गुणवृद्धी कुटामुभे क्षित्येव नान्यत्र । वुटनाय ॥ १५ ॥

(चौराः सस्मितं ।) चौरा धर्म्मं न शृण्वन्ति लोकशास्त्रमिदं मुने ! ।

न वेत्सि तेन नो धर्म्मं वक्तुं पुस्फोर ते मुखम् ॥ १६ ॥

उत्तरे दृश्यतेऽघञ्चेत्तदप्येते कुकर्म्मणः ।

निवर्त्तन्ते नहि स्फोरोऽघस्य कस्यापि चाक्षुषे ॥ १७ ॥

अतोऽस्माकं नीतिधर्मयोरुपदेशो दूरे आस्तां इदानीं वद तवा-श्रमे कश्चिद्वनी आगतो न वेति । मुनिरात्मगतं । हा कष्टं किमत्र विधेयं मिथ्योक्तौ पापं सत्योक्तौ तु एषामाश्रितानां प्राणवियोगः । क्षणं पुनर्विभाव्य भवतु वा ।

म्रियन्त एते चेत् सत्यात् करणीयं किमस्ति तत् ।

सत्यव्रतस्य यत् सत्यमृत इष्टं ममेह न ॥ १८ ॥

---

चौरा इति । धर्मकथां चौरा न शृण्वन्ति इतिलौकिकशास्त्रं न त्वं वेत्सि न जानासि तेन हेतुना नोऽस्माकं धर्मं वक्तुं ते तव मुखं पुस्फोर स्फूर्त्तिमाप । पद्ये । सूत्रस्य उं ॥ १६ ॥

उत्तर इति । उत्तरे अवैधकर्माचरणस्योत्तरकाले चेत् यदि अघं पापं दृश्यते तदपि तस्मादपि एते जनाः कुकर्म्मणो निवर्त्तन्ते । हि यस्मात् कस्यापि जनस्य चाक्षुषे चाक्षुषप्रत्यक्षे अघस्य पापस्य स्फोरः स्फूर्त्तिर्नहि अभवदितिशेषः । तथा च पापस्य प्रत्यक्षं कस्यापि नाभवत् तस्यातीन्द्रियत्वादितिभावः । उत्तरे ७, दृश्यते ८, घञ् १, ( चेत् ) ( तदपि ) एते १, ॥ १७ ॥

म्रियन्त इति । चेत् यदि सत्यात् सत्यवाक्यात् एते वणिजो म्रियन्ते तत् तदा किं करणीयमस्ति यत् यस्मात् सत्यव्रतस्य मे मम सत्यं ऋते विना इष्टं अभिलसितं न अस्तीति-शेषः । पद्ये । सत्य इति सत्ययुक्तस्य हन इति धातुकस्य सम्बोधनं । ऋतः ५, इष्टं १, मं १, ए ७, ॥ १८ ॥

व्याकरणम् ।

पुस्फोर ॥ १६ ॥

उत्तरे दृश्यते घञ् चेत् तदप्येते । एते गुणवृद्धी । स्फोरः ॥ १७ ॥

ऋत इष्टं ममे । मृङ्धातोर्म्मि आत्मने पदं इष्टे ए अप्रत्यये परे । म्रियन्ते ॥ १८ ॥

मुनिः पुनरपि तान् प्रति ।

दिवाष्टमविभक्तौ च पञ्चमे वा तथांशके ।
न किं शाकभुजो देहः पुष्टः किं सोऽम्रत क्षुधा ॥ १९ ॥
परान्निहत्य तद्रिक्थैराहृतैर्ये सुखार्थिनः ।
आत्मदेहं प्रपुष्णन्ति म्रियेरन् किन्नु ते नहि ॥ २० ॥

इति विविच्य निषिद्धकर्म्मणो निवर्त्तस्व। चौरास्तं प्रति सस्मितं।
मुने ! स्मरसि न वा ।

दस्युधर्म्मा नाद्यतनः सत्येऽपि मुनिवंशजः ।
मरिष्यामीति बुद्धापि वाल्मीकिर्दस्युतां गत इति ॥ २१ ॥

अतो धर्म्मपाठो विरमतु । यत् पृष्टं तस्योत्तरं युज्यते । अथ

दिवेति । दिवा दिवसस्य अष्टमविभक्तौ च सन्ध्यासमयेऽपि पञ्चमे वा अंशके भागे शाकभुजः शाकमात्रभोजिनो देहः किं न पुष्टः किम्वा स क्षुधा क्षुद्बाधया अम्रत मरणं प्राप्तः । पद्ये । दिवेति क्रीड़ायुक्तस्य सं । अंशके इत्यादिकमुदाहरणवाक्यं । अष्टमविभक्तौ ७।, पञ्चमे ७।, ( वा ) तथा १।, ॥ १९ ॥

परानिति । सुखार्थिनो ये जनाः परान् निहत्य तद्रिक्थैसाद्धनैराहृतैरात्मदेहं पुष्णन्ति नु भोः ते जनाः किं नहि म्रियेरन् न मरिष्यन्ति । पद्ये । सूत्रस्य उदाहरणं ॥ २० ॥

दस्युधर्म्मा इति । दस्युधर्म्मा न अद्यतनः अद्यजातो न सत्येऽपि युगे मुनिवंशजो वाल्मीकिर्म्मरिष्यामीति बुद्धापि ज्ञात्वापि दस्युतां गतः । पद्ये । सूत्रस्य उदाहरणं ॥ २१ ॥

व्याकरणम् ।

अष्टमविभक्तौ पञ्चमे वा तथा । वा समुच्चयार्थकः । तथेति भक्तौ मे स्यादित्यर्थः ।
अम्रत ॥ १९ ॥

म्रियेरन् ॥ २० ॥

एष किं मरिष्यामि ॥ २१ ॥

मुनिः कष्टेनोक्तवान् मदाश्रमे स आगत इति। अथ दस्युवस्तत्र प्राप्तं वणिजं सगणं हत्वा धनमादाय प्रस्थिताः।

अथो ममार स मुनिः काले तस्य महात्मनः।
सत्येनापि परानिष्टजननान्निरयोऽभवत्॥ २२॥

अथ पापपुरुषो धर्म्मं प्रति। महाशय! इदानीं मम का गतिः। अथ स पापपुरुषो धर्म्मशास्त्रपाठकानां वाक्यात् स्त्रीजलादिकमशिश्रियत्।

इति सप्तमीरात्रुल्लासे षष्ठोऽध्यायः॥

---

अथो इति। अथो अनन्तरं स मुनिः काले ममार मरणं प्राप्तः। परेषामनिष्टजननात् सत्येनापि सत्यवाक्यकथनादपि तस्य महात्मनो निरयोऽभवत्। पथ्ये। सूत्रस्थं॥ २२॥

व्याकरणम्।

ममार॥ २२॥

शिष्याः सुबन्धुं प्रति। गुरो! पापस्य स्त्रीजलाद्याश्रये किं वीजं ?। स तान् प्रति। शिष्याः शृण्वन्तु। पुरा देवराजो बृहस्पतिं प्रति।

कर्त्तुं दीव्यति सौभाग्यव्रतं देवी फलार्थिनी।
किन्तूपवस्तुं त्रसति तत्र त्रस्याम्यहं पुनः॥ १॥

अतस्तत् प्रतिनिधिना भवता उपवस्तव्यम्। गुरुर्म्मैवम्। नाहं परार्थमुपवस्तुं शक्तः यतो मम पिता मां प्रत्येवमुक्तवान्।

ओरे! ये लोपमिच्छन्ति स्वीयावश्यककर्म्मणाम्।
विक्रीणन्तूपवासन्ते स्वां स्यन्त्वनशनात् तनुम्॥ २॥

इन्द्रः गुरो! मैवम्।

स्वो गुरुः स्यात् शमादेश निधानं यः स एव हि।
अन्तःपुरात्रिंजाहं स्यात् चित्तं यत्नः प्रशाम्यति॥ ३॥

कर्त्तुमिति। देवी राजमहिषी अर्थात् शची फलार्थिनी सती सौभाग्यव्रतं कर्त्तुं दीव्यति इच्छति किन्तु उपवस्तुं उपवासं कर्त्तुं त्रसति बिभेति तत्र तस्या उपवासे अहं पुनस्त्रस्यामि अहमपि बिभेमि। पद्ये। उदाहरणमात्रं॥ १॥

ओरे इति। ओरे इति नीचसम्बोधने ये जनाः स्वीयावश्यककर्म्मणां आत्मनः अवश्यकरणीयोपवासादिकर्म्मणां लोपमिच्छन्ति ते जनाः उपवासं विक्रीणन्तु अर्थात् दक्षिणामादाय परार्थमुपवसन्तु स्वां आत्मीयां तनुं शरीरं अनशनात् स्यन्तु वा नाशयन्तु वा। ओः ६।, रे ७।, ये ७।, लोपं २।, इच्छन्ति ८॥, ॥ २॥

स्व इति। यो जनः स्व आत्मीयः गुरुश्च स्यात् शमादेश शमोऽन्तरिन्द्रियनिग्रहः आदिपदात् दमादेः परिग्रहः दमो वाह्येन्द्रियनिग्रहः तेषां निधानं आश्रयश्च यः स्यात्

व्याकरणम्।

दीव्यति। त्रस्यति। त्रस्यामि॥ १॥

ओ रे ये लोपमिच्छन्ति। रसंज्ञके ये परे ओकारस्य लोपमिच्छन्ति। स्यन्तु॥ २॥

अतो भवानेव तत्तत् क्रियार्हो नान्यः । यतः ।

मिदो गुणस्तनोर्यूनोऽदान्तस्य स्मितयुक् वचः ।
स्वभावतश्चला दृष्टिः स्त्रीणां दृक् येन मेद्यति ॥ ४ ॥

तस्मादजितेन्द्रियाणां तरुणानाञ्च पुरोधसां नैतत् कर्म्म गुरुस्तं प्रति ।

सधवाया नह्यनशी नेशादेशोऽस्ति वा किल ।
स्त्रिया व्रतविधौ यस्या धवोऽनेशत्तया विना ॥ ५ ॥
यन्नार्य्याः पतिसेवैव यज्ञव्रततपोऽर्च्चनम् ।

स एव नोऽस्माकं अन्तःपुरस्य यत् आर्त्विज्यं पौरहित्यं तदर्हस्तद्योग्यः स्यात् यत् यस्मात् नोऽस्माकं चित्तं प्रशाम्यति । स्वः १।, गुरुः १।, स्यात् ८।, प्रमादेः ६।, ॥ ३ ॥

मिद इति । यूनो जनस्य तनोः शरीरस्य गुणः शुक्रादिगुणः मिदः स्निग्धः मिद इति मिदधातोरिगुपधत्वात् कप्रत्यये सिद्ध । अदान्तस्य अजितेन्द्रियस्य वचः स्मितयुक् ईषद्धास्ययुक्तं दृष्टिश्च स्वभावतएव चला चञ्चला येन हेतुना स्त्रीणां दृक् दृष्टिर्मेद्यति स्निग्धा भवति । तथाच यूनां स्वभावात् स्निग्धशरीरगुणादिकं स्त्रीणां विकारहेतुरित्यर्थः । मिदः ६।, गुणः १।, ॥ ४ ॥

सधवेति । सधवायाः स्त्रियाः अनशः अनशनं नह्नि नास्तीत्यर्थः । यस्याः स्त्रिया धवो भर्त्ता अनेशत् ममार तया विना स्त्रियाः व्रतविधौ ईशादेशो वा ईश्वरस्यादेशोऽपि नास्ति । पचे । सधवायानह्य इति सधवाया बन्धनार्हस्य सम्बोधनं ॥ लइति इन्द्रस्य सम्बोधनं । नशः ६।, नेशादेशः १।, अस्ति ८।, वा १।, अकि ७।, ॥ ५ ॥

व्याकरणम् ।

स्वो गुरुः स्यात् प्रमादेः । प्रमादे ह्रस्वो गुरुः स्यात् रे ये । प्रशाम्यति ॥ ३ ॥

मिदो गुणः । मेद्यति ॥ ४ ॥

नशो नेशादेशोऽस्ति वाऽकि । नशः स्थाने नेशादेशः स्यात् वा अकि लुङि । अनेशत् ॥ ५ ॥

माप्राणिशत् पतिस्तस्याः सा हि पत्युस्तपःफलम् ॥ ६ ॥

अतः स्त्रीणामनशनव्रतमेव नास्तीति कुतस्तत्प्रतिनिधिः सम्भवति। अपि च।

भूयात् देव्या व्रतस्थायाः पतिसेवाच्चतिस्ततः।
पत्युः स्यातां क्लेशरोषौ नंष्टा सौभाग्यमेव तत् ॥ ७ ॥

अतोऽहमुदर्कदर्शी देवीं व्रताचरणविधौ निवारयामि यतः।

हितकृत्योत्तरेणानुबन्धोऽघञ्चेति मन्यते।
चेत् स्वो जनो द्येत् तत् कर्म तज्जन्योऽनुशयो न यत् ॥ ८ ॥
तथा फलत्युत्तरेणोपि वीजे भूमिरुर्व्वरा।
तत् प्राक् ब्रवीम्युदर्कोपलब्धिर्य्येन्न तवाजनि ॥ ९ ॥

---

यन्नार्य्या इति। यस्या नार्य्याः पतिसेवैव व्रतादिकं तस्याः पतिः माप्राणिशत् न नश्यतु। हि यस्मात् सा स्त्री पत्युस्तपसः फलं। पद्ये। सूत्रस्य उं ॥ ६ ॥

भूयादिति। देव्या राजमहिष्याः शच्या इति यावत्। ताभ्यां पतिक्लेशरोषाभ्यां सौभाग्यमेव नंष्टा नङ्क्ष्यति। तथा च सौभाग्यार्थं व्रतकरणात् सौभाग्यमेव नङ्क्ष्यतीत्यर्थः। पद्ये। सूत्रस्य उदाहरणमात्रं ॥ ७ ॥

हितेति। हितकृत् स्व आत्मीयो जनः चेत् यदि उत्तरेण उत्तरकाले अनुबन्धो दोषः अघञ्च व्यसनञ्च भवेदितिशेषः इति मन्यते जानाति तदा तत् कर्म द्येत् छिन्द्यात् वारयेदिति यावत्। यत् यस्मात् तज्जन्यस्तत्कर्म्मजन्योऽनुशयोऽनुतापो न भवेदितिशेषः। दोषोत्पादेऽनुबन्धः स्यादित्यमरः। पद्ये। हित इति सम्बोधने। कृत् १।, (च) उत्तरे ७।, णानुबन्धः १।, घञ् १।, (च) इति १।, मन्यते ८।, ( चेत् ) स्वः १।, जनः ६।, ॥ ८ ॥

तथेति। तथा अन्यच्चेत्यर्थः। वीजे उपि उप्ते सति उत्तरेण उत्तरकाले उर्व्वरा भूमिरिव फलति फलं जनयति तत् तस्मात् प्राक् पूर्व्वमेव ब्रवीमि उपदिशामि यत् यस्मात् तव उदर्कोपलब्धिः उत्तरकालीनफलोपलब्धिर्न अभवत्। उदर्कः फलमुत्तर-

व्याकरणम्।

प्राणशत् ॥ ६ ॥ नंष्टा ॥ ७ ॥

कृद्योत्तरेणानुबन्धो घञ् चेति मन्यते चेत् स्वो जनः। चेत् यदि उत्तरे परत णकारानुबन्धः कृत्प्रत्ययो घञ च इति मन्यते तदा जनधातोः स्वः स्यात्। तज्जन्यः ॥ ८ ॥

तथाऽवधश्चरेः कर्म्म दूरदृग्भिः सुमन्त्रितम्।
जातं शत्रुवधाद्यं यत् केवलं तत् सुमन्त्रणात्॥ १०॥

अतो महद्वचसा देवीं व्रताचरणात् निवर्त्तय। इन्द्रः। हितमेतत् किन्तु सा स्वतन्त्रा हितं न शृणोति स्वाभिमतमेवाचरति मनसि यदुदियाय सा तत् करिष्यत्येव नहि ब्रह्मणापि तद्वारयितुं शक्यते तदेवं जानामि।

अतिमानात् प्रणशिता स्त्रीयो मानोऽतिगर्व्वितः।
गर्व्वः प्रणंष्टा सा नैतत् वेत्ति सौन्दर्य्यगर्व्विता॥ ११॥
एवं सहे ममोरस्था मामुपालभतेपि सा।
मानिन्यभिमतासिद्धौ नैति मानोपि वा शमम्॥ १२॥

---

मित्यमरः। पचे। वीजे इत्यादिकं च। तथा १।, फलति ८।, ( उत्तर इण ) उत्तरेणः ६।, ( अपि )॥ ६॥

तथेति। तथा अवधः अवदधानः सन् दूरदृग्भिर्दूरदर्शिभिः पण्डितैः सुमन्त्रितं कर्म्म चरेः कुर्य्याः। यत् शत्रुवधाद्यं कर्म्म शत्रुवधादिकं कर्म्म जातं भूतं तत् केवलं सुमन्त्रणाज्जातं। तथा १।, वधः ६।,॥ १०॥

अतीति। प्रणशिता नङ्क्षतीत्यर्थः। सा शची सौन्दर्य्यगर्व्विता सती एतन्न वेत्ति जानाति। पचे। सूत्रस्य च॥ ११॥

एवमिति। सा देवी अभिमतस्य असिद्धौ सत्यां मानिनी सती मम उरस्थापि मम वक्षसि स्थितापि मां उपालभते सनिन्दं भर्त्सते। मानोपि वा शमं शान्तिं नैति न प्राप्नोति एवं सहे सहिष्णुरहं॥ एवं १।, ( सह इम् ) सहेमम: ६।,॥ १२॥

व्याकरणम्।

तथा फलत्युत्तरेणोपि। उत्तरे इण् यस्य स उत्तरेण् तादृशस्यापि जनस्तथा फलति फलीभूतः स्वः स्यादित्यर्थः। अजनि॥ ६॥

तथा वधः। वधधातोरप्येवं। वधाद्यं॥ १०॥

प्रणशिता। प्रणंष्टा॥ ११॥

एवं सहेमम:। इमा सह वर्त्तते इति सहेम् तादृशस्य अमनस्य एवं भवति। शमं॥ १२॥

नहि कमया च मोदयति वाचा स्तोतुकाममपि माम् ॥१३॥

( तन्मयैवं विनिश्चितम् । )

यस्यायममी विश्रमो यमी वाऽरण्यं वा

तस्य पुरुषस्य नान्यथा विश्रामः ॥ १४ ॥

तद्भवतु विधातृलिपौ यदस्ति तद्भविष्यत्येवेति अन्यवाग्विश्रमो भवतु इदानीं मय्यनुग्रहं वितन्वता भवता तत्प्रतिनिधित्वेनोपवस्तव्यम् । गुरुः । नाहं शक्त इति पुरैव सकृदुक्तं तदलमाम्रेडितेन । इन्द्रः । उपवासात् यो न बिभेति तादृगेव पुरोहितो वरणीयः । इदानीं भवतो गृहे भक्ष्यमस्तीति कियत्कालं विश्राम्यतु । गुरुः । एवं भवतु ।

नहीति । स्तोतुकामामपि मां कमया च कोमलयापि वाचा वाक्येन नहि मोदयति । आनन्दयति । नहि १। कम: ६।, आचम: ६।, ॥ १३ ॥

यस्येति । यस्य जनस्य अयं अम: रोगसमं दुःखं तस्य पुरुषस्य यमी वा अरण्यं वा विश्रमः विश्रामस्थलं । अयं १।, अम: ६।, विश्रम ६।, यम: ६।, ( वा १। ) ॥ १४ ॥०॥

व्याकरणम् ।

नहि कम आचमः । अनयोः स्त्री न स्यात् । स्तोतुकामं ॥ १३ ॥

अयं अमी विश्रमी यमी वा । एषामयं विधिर्वा स्यात् । विश्रामः ॥ १४ ॥०॥

इति दिवाद्यध्यायः ।

नमो मे वाचेऽस्तु स नः कियत्पादान्तरं गतान् ।
गृहीता सादरं मूर्ध्नि यो रत्नं सञ्चिकीर्षति ॥ १ ॥
तथा भवेद्वा यष्ठोऽङ्कि धाता भाले लिलेख यत् ।
दिनं प्रति द्विजः को वा दिनभक्ष्यं चिकाय न ॥ २ ॥
(अपि च ।) जड़ायपि मे स्तुवन्तः सम्ममायैवाभीष्टं साधयिष्यति ॥३॥
एष च भवत्यलं खलं विना गुणिनि गुण-
प्रकाशने यो नामासीत् गुणिनं कदापि ॥ ४ ॥

नम इति । वाचे सरस्वत्यै मे मम नमोऽस्तु कियत्पदान्तरं गतान् नोऽस्मान् स जनः सादरं यथा स्यात् तथा मूर्ध्नि मस्तके गृहीता यो जनो रत्नं रत्नभूतं स्वजात्युत्कृष्टं सञ्चिकीर्षति सञ्चेतुमिच्छति । जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते इति कोषः । पक्षे । नमो मे इति मङ्गलार्थं । वा १।, चेः ६।, (तु) सनः ६।, कि १।, ॥ १ ॥

तथेति । न चिकाय न सञ्चयमकरोदित्यर्थः । अन्यत् सुगमं । तथा १।, भवेत् ८।, वा १।, षष्ठे ७।, ॥ २ ॥

जड़ा इति । जड़ा अपि अज्ञा जना अपि स्तुवन्तः सन्तः संमाय एव सम्मानं कृत्वैव मम अभीष्टं साधयिष्यति । पक्षे । ज इति वेगवतः सम्बोधनं । ड़ा १।, यपि ७।, मः ६।, ॥ ३ ॥

एष इति । एष च एषोपि जनः अर्थादहं खलं जनं विहाय गुणिनि गुणप्रकाशने अलं समर्थो भवति । यो गुणी गुणिनं कदापि न अमासीत् न असम्मानं कृतवान् । एषः १।, (च) भवति ८।, अल २।, खल २।, (विना १) गुणिनि ७।, ॥ ४ ॥

व्याकरणम् ।

वा चेस्तु सनः कि । सनन्तस्य चिधातोस्तु कि स्यात् वा । सञ्चिकीर्षति ॥ १ ॥

तथा भवेद्वा षष्ठे । षष्ठसंज्ञकाख्याते तथैव स्याद्वा । चिकाय ॥ २ ॥

ड़ा यपि मेः । मिधातोर्डा स्यात् यपि । संमाय ॥ ३ ॥

एष च भवत्यलं खलं विना गुणिनि । खल-अल-भिन्ने गुणिप्रत्यये च एष विधिर्भवेत् । अमासीत् ॥ ४ ॥

(तद्भवतु।) कालियो वाऽघनामा वा येनाहिर्दमितः पुरा।
सोऽपि ब्राह्मणाहिविषतः सवंशो विलयं गतः॥ ५॥

त्वन्तु ब्राह्मणाहिविषान्न बिभेषीति निष्क्रान्तः। अथ इन्द्रः शचीं प्रति। अद्य गुरुर्मामवजानन् आर्त्विज्यं त्यक्त्वा गतः। अपिच।

स नो वृतोऽपि भवतीम्वासीमस्योरुतेजसः।
पदमाद्रियते तत्तं वुवूर्षामि न ते व्रते॥ ६॥
(भवतु।) क्षुधर्त्तस्तु स एवं यदुपवस्तुं व्रतादिषु।
न शक्नोतीति को वेह आर्त्विज्ये वरिषीष्टतम्॥ ७॥

कालीति। कालियोऽहिः सर्पः अघनामा अहिश्च येन दमितः सोपि विष्णुः ब्राह्मणरूपसर्पविषात् विलयं विनाशं गतः प्राप्तवान्। पक्षे। का इति सूर्य्याणां सं। लियः ६।, वा १।, ॥ ५॥

सन इति। स गुरुर्वृतोपि पौरहित्ये कृतवरणोपि भवतीम्वा त्वामपि नो आद्रियते आदरं न करोति अन्यास्तु नाद्रियत एवेत्यर्थः। सः कीदृशः असीमस्य सीमारहितस्य उरुतेजसः अतिशयतेजसः पदं आश्रयः। तत् तस्मात् तं गुरुं ते तव व्रते न वुवूर्षामि वरणं कर्त्तुं नेच्छामि। पक्षे। उ सम्बोधने। सनः ६।, वृतः ५।, (अपि) भवति ८, इम् १।, वा १।, सीमस्योः ६॥, ॥ ६॥

क्षुधेति। स गुरुः एवमेतादृक् क्षुधर्त्तः क्षुधा क्षुधया ऋतः पीड़ितः। क्षुधेति तृतीयैकवचनान्तं अतौ न ऋतौ वृद्धिः। यत् यस्मात् व्रतादिषु उपवस्तुं न शक्नोति इति हेतोः को वा जनः इह काले आर्त्विज्ये पौरहित्ये तं गुरुं वरिषीष्ट। वृञ्
वृत्यामित्यस्य रूपं। पक्षे। क्षुध इति क्षुधाविशिष्टस्य सं। ऋतः ५।, (च) स १।, एवं १।, ॥ ७॥

व्याकरणम्।

लियो वा। लीधातोर्ड वा स्यात्। विलयं॥ ५॥

सनो वृतोपि भवतीम् वा सीमस्योः। वृधातोः सनः इम् वा स्यात् सीविभक्तेरात्मनेपदस्थितसेश्च। अपिरिह अनुक्तसमुच्चयार्थः। वुवूर्षामि॥ ६॥

ऋतश्च स एवं। ऋदन्तधातोरपि स एवं विधिः। वरिषीष्ट॥ ७।

दृश्यतेऽस्याद्यर्त्तं एनमाश्रयो नाभिमानिनः ।
यत्रैष्यति स तत्रैव स्वशीलं स्तरिषीष्ट न ॥ ८ ॥

तद्भवतु तव तु सौभाग्यव्रतेनालम् । यतः ।

न साद्य कुरु सौभाग्यव्रतं या सुभगासि मे ।
भावात् संस्करिषीष्ठाः स्वमङ्गं तद्धि व्रतं तव ॥ ९ ॥

दृश्यत इति । अस्य अभिमानिनो गुरोः अद्य एनं जनं ऋते अर्थात् मां विना आश्रयो न दृश्यते स गुरुः यत्र एष्यति यास्यति तत्रैव स्वशीलं न स्तरिषीष्ट न विस्तारं करिष्यति अपि तु करिष्यत्येव । दृश्यते ८।, स्याद्यर्त्तः ६।, ॥ ८ ॥

न सेति । सा त्वं अद्य सौभाग्यव्रतं न कुरु या त्वं भावात् स्वभावत एव मे मम सुभगासि स्वं स्वीयं अङ्गं संस्करिषीष्ठा अङ्गसंस्कारं करिष्यसि तद्धि तदेव तव व्रतं अर्थात् तेनैवाहं तुष्यामीति सौभाग्य फलकव्रतस्य प्रयोजनं नास्तीतिभावः । पद्ये । उ इति अं । न १।, साद्यकुः ६।, ॥ ९ ॥

व्याकरणम् ।

दृश्यते स्याद्यर्त्तः । संयोगादि ऋदन्तस्यापि दृश्यते । स्तरिषीष्ट ॥ ८ ॥

न साद्यकुः । सकारादिकृधातोर्न स्यात् । संस्करिषीष्ठाः ॥ ९ ॥

इति स्वाद्यध्यायः ॥

यदि ते व्रतमावश्यकं तदा तदर्थं विश्वरूपं पौरहित्याय वरयितुमिच्छामि। शची। स तु आत्मीयो वा परो वा आप्तो नाप्तो वा साधुरसाधुर्वा कथं जानासि। इन्द्रः।

अविगीतो वीक्ष्यते स्वो नात्येवाप्तोऽपि वीक्ष्यते।
न वातिसाधुर्यत्शीलं मादृशानां पुनाति हृत्॥ १॥

(तदेवं पश्य।) क्वचिद्वा दृश्यतेऽब्दोऽन्तः स्वच्छामृतमयः क्वचित्।
शिलावज्रमयस्तत्र कोऽपि श्रीणाति सत् सदा॥ २॥
नु! हसान्नानद्धो देशे सुखं स्वपिति कोऽपि न।
गृहाणेदं वचः सत्यं किन्तु भीर्नास्ति जाग्रतः॥ ३॥

अवीति। अविगीतोऽनिन्दितः स्व आत्मीयो न वा आप्तः प्रत्ययितोऽपि वीक्ष्यते न वा अतिसाधुर्वीक्ष्यते यत्शीलं यस्य जनस्य सद्वृत्तिः स्वभावो वा मादृशां हृन्मनः पुनाति पवित्रीकरोति प्रसन्नं करोतीति यावत्। पद्ये। अवीति पञ्चित्रीमनदीकूलस्य सं। (गि इत्) गीतः ६।, वीक्ष्यते ८।, स्वः १।, नात्ये ७।, ॥ १॥

क्वचिदिति। अब्दो मेघः स्वच्छामृतमयः अभ्यन्तरे निर्म्मलामृतमयः क्वचिद्वा कदापि वा वीक्ष्यते क्वचिच्च शिलावज्रमयो वीक्ष्यते तत् तस्मात् कोऽपि जनः सत् साधु यथा स्यात् तथा श्रीणाति वर्त्तनशीलो भवति। क्वचित् ७।, वा १।, दृश्यते ८।, ॥ २॥

नुहसादिति। नु भोः कोऽपि जनो हसात् हास्यं प्राप्य अर्थात् हर्षं प्राप्य अनद्धो नास्ति अद्धिः शत्रुः खलो हिंस्रो वा यत्र तादृशे देशे न सुखं स्वपिति इदं वचः सत्यं गृहाण जानीहि। किन्तु जाग्रतो जनस्य अर्थात् सावधानस्य भीर्भयं नास्ति। पद्ये। नु सम्बोधने। हसात् ५।, ना १।, आन १।, द्धौ ७।, ॥ ३॥

व्याकरणम्।

गीतो वीक्ष्यते स्वो नात्ये। गीकारेतो धातोर्ङ्स्वो दृश्यते ना—प्रत्यये परे। पुनाति॥ १॥

क्वचित् वा दृश्यते। श्रीणाति॥ २॥

हसान्नानद्धौ। हसात् परो ना आन स्यात् द्धौ परे। गृहाण॥ ३॥

इदानीं गुरुर्मां प्रति न प्रसन्नः इति पौरहित्यं न कामयते । यतः ।

गुरुर्ग्रहो दृश्यतके षष्ठस्थाने म इत्यलम् ।
प्रातिकूल्यं ग्रहीतासौ यावत् वर्षं समाप्यते ॥ ४ ॥

---

गुर्व्विति । गुरुरुद्दृश्यति: ग्रहः मे मम षष्ठस्थाने दृश्यते इतिहेतोः यावता कालेन वर्षं समाप्यते तावत् अलं अत्यर्थं प्रातिकूल्यं प्रतिकूलतां ग्रहीता । गुरुः १।, ग्रहः ६।, दृश्यतके ८।, अषष्ठस्थानेमः ६।, ॥ ४ ॥

व्याकरणम् ।

गुरुर्ग्रहो दृश्यतके षष्ठस्थानेमः । ग्रहधातोः षष्ठसंख्यकाख्यातभिन्नप्रत्ययस्थाने जातस्य इमो दीर्घः स्यात् । ग्रहीता ॥ ४ ॥

इति कालाध्यायः ।

अथ इन्द्रः विश्वरूपमसुरदौहित्रं पौरहित्याय वव्रे ।

अथ दैत्या अन्वरुन्धन् विश्वरूपस्य मातरम् ।
त्वत्सुतो नः स्वबन्धुभ्यो यज्ञभागं ददात्विति ॥ १ ॥
सापि पैत्रहितार्थाय पुत्रमन्वरुणत् भवान् ।
यज्ञभागबुभुक्षुभ्यो मत्पितृभ्यो जुहोत्विति ॥ २ ॥

अथ अदितिः स्वपयोव्रते विश्वरूपं पुरोहितं उपांशुमन्त्रेण दैत्येभ्यो जुह्वतं ज्ञात्वा द्रुतमागत्य सक्रोधमिन्द्रं प्रति ।

स्वपिति च रहसि तृहो नो नेहेति सुत ! जानाति भवानद्य ।
सदैव तृंहन्त्यसुराः सम्प्रति तृणेढि भवत्पुरोहितोऽपि ॥ ३ ॥

अथेति । अथानन्तरं दैत्या विश्वरूपस्य मातरं अन्वरुन्धन् अनुरोधं कृतवन्तः । किं तत् तदाह । त्वत्सुतस्तव पुत्रः बन्धुभ्यो नोऽस्मभ्यो यज्ञभागं ददातु इति अन्वरुन्धन् इति अन्वयः । पद्ये । रुधादेरुदाहरणं ॥ १ ॥

सापीति । सापि विश्वरूपस्य मातापि पितुर्हितार्थाय पुत्रं विश्वरूपं अन्वरुणत् अनुरोधं कृतवती । किं तत् तदाह । यज्ञभागबुभुक्षुभ्यो मत्पितृभ्यो जुहोतु इति अन्वरुणत् । पद्ये । रुं ॥ २ ॥

स्वपीति । हे सुत ! इह संसारे अद्य नोऽस्माकं तृहो हिंसको न नास्तीति भवान् जानाति रहसि निर्जने स्वपिति च निद्राति च । असुराः सदैव तृंहन्ति हिंसां कुर्वन्ति सम्प्रति भवत्पुरोहितोपि तव पुरोधा अपि तृणेढि हिंसां करोति । पद्ये । स्व इति आत्मीयस्य सं । पिति ७।, रहसि ७।, तृहः ६।, नः ६।, ने १।, ॥ ३ ॥

व्याकरणम् ।

अन्वरुन्धन् ॥ १ ॥ अन्वरुणत् ॥ २ ॥

पिति रहसि तृहो नो नै । पकारानुबन्धे रसंज्ञकहसे परे तृहधातोर्मस्य ने स्यात् । तृणेढि, तृंहन्ति ॥ ३ ॥

इति रुधाद्यध्यायः ।

इन्द्रः ससम्भ्रमं मातः! किन्तत्। सा तं प्रति। शृणु तव पुरोधा अतिवेगादेवं ब्रवीति।

अर्णोति चरणोपान्ते को गुणो नोऽपि वा ऋतः।
किं दिग्विलासिनीकर्णपूरतामो घृणोति न ॥ १ ॥

इत्यादि। हत हत।

किं कुर्म्मः कस्य वा ब्रूमो व्रतस्योपस्थितस्य मे।
लोपः क्रतोऽपि ये वेह हितं कुर्य्युर्न वेद्मि तान् ॥ २ ॥
यज्ञभागबुभुक्षुभ्यो दैत्येभ्योऽपि जुहोति सः।
ऋत्विक् मम व्रते तत् त्वं कुर्य्यास्तस्य यथाविधि ॥ ३ ॥

---

अर्णोतीति। को जनो नोऽस्माकं चरणोपान्ते पदसमीपे अर्णोति आगन्तुं शक्नोति। ऋतः प्रदीप्तो गुणोपि वा नोऽस्माकं दिक्रूपा या विलासिनी तस्याः कर्णपूरतां प्राप्तः सन् किं न घृणोति न दीप्यते अपि तु तथा। घृणोतीति घृणदुञ् दीप्तौ इत्यस्य रूपं। पक्षे। चरण इति गमनशीलस्य सं। उपान्तिकः ६।, गुणः १।, नो १।, (अपि) वा १।, ऋतः ६।, ॥ १ ॥

किमिति। मे मम उपस्थितस्य व्रतस्य लोपोपि क्रतः तेन पुरोधसेतिशेषः। ये वा जना इह एतद्विषये हितं कुर्य्युस्तान् न वेद्मि जानामि। पक्षे। किं कुर्म्म इत्यादिकं उदाहरणवाक्यं। उपः ६।, स्थितस्य ६।, मे ७।, लोपः १।, क्रतः १।, (अपि) ये ७।, वे ७।, ॥ २ ॥

यज्ञेति। अस्यार्थः सुगमः। पक्षे। सूत्रस्य उं ॥ ३ ॥

व्याकरणम्।

उपान्तिको गुणो नोपि वा ऋतः। उपान्तस्थितस्य इको गुणो न स्यात् उपि परे। उपान्तस्थितस्य ऋतो वा स्यात्। अर्णोति, घृणोति ॥ १ ॥

उपः स्थितस्य मे लोपः क्रतोऽपि ये वे। क्रधातोः परे स्थितस्य उपो लोपः स्यात् मे परे ये वे च परे। कुर्म्मः, कुर्य्युः ॥ २ ॥

कुर्य्याः ॥ ३ ॥

पश्यामि चेत् तं गतासुम् परितस्तस्य सीदतः ।
बान्धवान् वा तर्हि परिष्करोमि स्वं न चान्यथा ॥ ४ ॥
समोऽपि गुरुणा नासौ संस्कर्त्ता नापि ते ततः ।
भूषाद्यर्थं उपात्तं किं दौप्तमस्त्रमुपस्कृत ॥ ५ ॥

अथ इन्द्रो मातृवचसा क्रोधेन विश्वरूपस्य मस्तकं चिच्छेद । अथ मूर्त्तिमतो ब्रह्महत्याजनितपापात् धावतो भिया इन्द्रः पलायितः ॥

पश्यामीति । चेत् यदि तं पुरोधसं गतासुं मृतं पश्यामि परितः सर्व्वदिक्षु विषीदतस्तस्य बान्धवांश्च पश्यामि तदा स्वं आत्मानं परिष्करोमि अलङ्कारं परिदधामि अन्यथा न अर्थात् यद्येवं न स्यात् तदा भूषणं न गृह्णामीत्यर्थः । सुम् १।, परितः ६।, तस्य ६।, ॥ ४ ॥

सम इति । असौ पुरोधा विश्वरूपो न गुरुणा बृहस्पतिना समः नापि ते तव संस्कर्त्ता ततस्तस्मात् दौप्तमस्त्रं किं भूषाद्यर्थं उपात्तं गृहीतं । तथा च तं जहि तस्य हनने पापं नास्तीतिभावः । समः ५।, ( अपि ) भूषाद्यर्थं ७।, उपात् ५।, ॥ ५ ॥

व्याकरणम् ।

सुम् परितस्तस्य । परिपूर्व्वकस्य तस्य कृधातोः सुम् स्यात् । परिष्करोमि ॥ ४ ॥
समोपि संपरतोपि । संस्कर्त्ता । भूषाद्यर्थं उपात् । उपस्कृत ॥ ५ ॥

इति तमाद्यध्यायः ।

अधुना मणिजन्तस्य भूषणं नहि शोभते।
यः पङ्किलोऽभूदेवं स विभाव्यालङ्कृतिं जहौ॥ १॥
स्तेनः स तत् पाणिचस्वा मन्यते चकितो धुतः।
स्वार्थेऽनलं ब्रह्मसरोऽन्तःस्थः स्वमवधीरयन्॥ २॥

ब्रह्महत्यापापपुरुषोऽपि मानससरस्तीरे इन्द्रमेव चिन्तयन् तस्थौ। अथ विश्वरूपजननी इति: शोचन्ती पतिं प्रति।

पिता स्वार्थं साधयिष्यन् तत्क्रियायां सुतस्य मे।
नालं भिया प्रेरणार्थे भवतिस्म धुतः स च॥ ३॥

अधुनेति। स इन्द्रः एवं विभाव्य अलङ्कृतिं जहौ त्यक्तवान्। किं विभाव्य इत्याह यो जनः पङ्किलः पापलिप्तोभूत् तस्य जनस्य अधुना पापवर्त्तमाने मणिजं मणिघटितं भूषणं न शोभते इति विभाव्य इत्यन्वयः। पक्षे। अइति विष्णोः सं। भूषणेत्यादिक-मुदाहरणवाक्यं। धुनाम ११, णिजन्तस्य ६१,॥ १॥

स्तेन इति। स इन्द्रः चकितः सभयो धुतः कम्पितः सन् तदेनस्तत्पापं पाणिचं वा पाणिगतमिव मन्यतेस्म। किं कुर्व्वन् स्वार्थे अनलं असमर्थः सन् ब्रह्मसरोऽन्तःस्थः मानससरोमध्यस्थः सन् स्वं आत्मानं अवधीरयन् अवजानन्। पक्षे। एनः स इति पापनाशकस्य सं। तत्पाइति तत्पालकस्य सं। णिचं २१, (वा) मन्यते ८१, (च) कितः ५१, धुतः ५१, स्वार्थे ७१,॥ २॥

पितेति। स्वार्थं साधयिष्यन् मम पिता तत्क्रियायां असुरोद्देश्यकहवनक्रियायां मे मम सुतस्य प्रेरणार्थे नियोजनार्थे भिया नालं न समर्थोऽभवत्। स च पिता भिया धुतः कम्पितश्च भवतिस्म। पक्षे। पितेत्यादिकमुदाहरणवाक्यत्वेन सार्थकं। प्रेरणार्थे ७१, भवतिस्म ८१, धुतः ५, स ११, (च)॥ ३॥

व्याकरणम्।

धुनाम णिजन्तस्य। णिजन्तस्य धुसंज्ञा स्यात्। विभाव्य॥ १॥

णिचस्वा मन्यते च कितो धुतः स्वार्थे। किती धातोः स्वार्थे नित्यं णिचं मन्यते। कश्चित् वा च मन्यते इत्यर्थः। अवधीरयन्॥ २॥

प्रेरणार्थे भवतिस्म धुतः स च। धीः प्रेरणार्थे स च णिच् भवति। साधयिष्यन्॥३॥

इति तातो विनीतो मां तस्मिन् कार्य्ये न्ययोजयत्।
तत्र दोषमविज्ञाय सुतं स्वं तदचीकथम्॥ ४॥
यद्यहमुदर्कमज्ञास्यं तदा कदापि न तत्पुत्रायाऽकथयिष्यम्।
न मे तदाधेर्लोपः स्यात् योप्यस्य ह्यसतोऽश्निति।
मुखाब्जमैचत सक्तत् स नो विगणयिष्यति॥ ५॥

अथ मुनिः पत्नीं प्रति।

धृतेर्वाण्यङुत्तरेऽख्यत् गणधातोरहो मुनिः।
यदासुरायाजुह्वोत् स आपदं तह्र्यजीगणम्॥ ६॥

---

इतीति। इति हेतोः। अन्यत् सुगमम्। पक्षे। सूत्रस्य च॥ ४॥

नेति। मे मम तदाधिस्तन्मानसव्यथाया लोपो न स्यात्। किं तत्। यो जनो ह्यसतोऽस्य पुत्रस्य अश्निति शुक्लवर्णं मुखाब्जं सक्तत् ऐचत स जनस्तत्र विगणयिष्यति विचारिष्यति। पक्षे। नमेतदाधेरिति तदाधेर्नताया: सं। लोपः १।, स्यात् ८।, यः ६।, (अपि) अस्य ६।, ह्यसतः ५।, अश्निति ७।,॥ ५॥

धृतेरिति। धृतिर्विश्वरूपस्य जननी तस्या वाण्यङ् वाणीं मानयन् वाणीं अञ्चतीति वाण्यङ् तादृशः सन् अत उत्तरे तद्वाक्यानन्तरं रहो रहसि मुनिर्विश्वरूपस्य पिता गणधा बहुधा अख्यत् कथितवान्। किमख्यदित्याह स मे पुत्रः यदा असुराय असुरमुद्दिश्य अजुहोत् तदैव विपदं अजीगणं गणितवानहं। पक्षे धृत इति धृतस्य सं। उ इति च सं। इः १।, वा १।, ण्यङ् १।, उत्तरे ७।, (खि अत्) ख्यत् १।, गणधातोः ६।, ॥ ६॥

व्याकरणम्।

अचीकथं। अकथयिष्यम्॥ ४॥

लोपः स्यात् योऽप्यस्य ह्यसतोऽश्निति। ह्यसात् परस्य यस्य अस्य च लोपः स्यात् अश्निति। विगणयिष्यति॥ ५॥

इर्व्वाण्यङुत्तरे ख्यत् गणधातोः। उत्तरे परत्र णेः परे अङ् यस्य तादृशो यो गणधातोः ख्यत् खेरकारः स इः स्यात्। अजीगणं॥ ६॥

इति चुराद्यध्यायः।

वेद्मीव ऋदुपान्तो वा धातुर्लङ्घयते विधिम् ।
आसन्नमृत्युः पुत्रस्तत् यज्ञे दैत्यानवीवृतत् ॥ १ ॥

( धृतिः पतिं प्रति । )

उपागतेऽद्याङ्ग ! दुःखेऽरङ्क्रामत्याधिरप्यसौ ।
साऽनादृताऽजनि जनिर्यां त्वयाऽददरं सदा ॥ २ ॥
तत् सत्वरस्व स्मर ते रिपुर्येनापि कर्म्मणा ।
नश्येदिति त्वां नाथाद्याऽसस्मरं नापि विस्मरेः ॥ ३ ॥

वेद्मीति । वेद्मि अव जानाम्येव ऋदुपान्तो वा ऋत् मरणं उपान्ते समीपे यस्य तादृशो जन एव धातुर्विधातुर्विधिं लङ्घयते अतिक्रामति इति वेद्मि अवेत्यन्वयः । तत् तस्मात् स पुत्र आसन्नमृत्युः सन् यज्ञे दैत्यान् अवीवृतत् यज्ञभक्तिनोऽकरोदित्यर्थः । पक्षे । एवं वेद्मि जानामि । ऋदुपान्तः १।, वा १।, धातुः १।, ॥ १ ॥

उपागत इति । उपागते प्राप्ते दुःखे अद्य हे अङ्ग ! असावपि आधिर्म्मानसी व्यथा अरमत्यर्थं क्रामति मयि आक्रामतीत्यर्थः । किमाधिरित्याह । सा जनिः पुत्रवधूः अनादृता अजनि अभवत् । यां वधूं त्वया कर्त्रा सदा अददरं त्वत् द्वारा आदरं कृतवतीत्यन्वयः । दुः ६।, खेः ६।, अङ् १।, ॥ २ ॥

तदिति । सत्वरः सन् तत् तत्कर्म स्मर चिन्तय येनापि कर्म्मणा ते तव रिपुरर्थादिन्द्रो नश्येत् । हे नाथ ! अद्य त्वां इति असस्मरं स्मारितवत्यहं नापि तत् विस्मरेः न विस्मरिष्यसि । तत् १।, सत्वरः १।, ( च ) स्मरतेः ६।, ॥ ३ ॥

व्याकरणम् ।

वेद्मि अवं ऋदुपान्तो वा धातुः । चपरे णः परः अङ् यस्य तादृश ऋदुपान्तधातुर्धातुरेव स्यात् । अवीवृतत् ॥ १ ॥

दुःखेरङ् । दृङ धातोः खेरङ् स्यात् । ण्यङि्ङति अर्थवशात् षष्ठ्यन्तोऽनुवर्त्तते । अददरं ॥ २ ॥

तत् सत्वरस्य स्मरतेः । त्वरधातुना सह स्मृधातोरपि तत् स्यात् । अङ्प्रात इत्यनुवर्त्तते । असस्मरं ॥ ३ ॥

मुनिः पत्नीं प्रति। सति! सोऽमृतपः शत्रुः कथं विनङ्क्ष्यति। तदेवं पश्य।

यमपीप्यत् सुधां विष्णुस्तेन च्छिन्नोऽपि सोऽसुरः।
अङ्ग! द्विमूर्त्तिभाक् पापी प्यात्मा भवति चन्द्रतुद्॥ ४॥

अथ विश्वरूपपत्नी शोचन्ती मृतं पतिमुद्दिश्य।

क्लेशमन्वभवो यस्त्वं कठिनत्वान्ममोरसि।
स्वपोऽजिरे श्मशानस्य तं त्वां विधिरसूषुपत्॥ ५॥
नु! स्थाप्या भवती स्वान्ते यदवोचः प्रियेति माम्।
प्रवत्स्यन् तन्मृषा यन्न स्वमृत्यौ मामतिष्ठिपः॥ ६॥

यमिति। विष्णुर्यं असुरं सुधां अपीप्यत् पाययामास तेन विष्णुना च्छिन्नोऽपि सोऽसुरः सैंहिकेयः पापी द्विमूर्त्तिभाक् द्विशरीरः सन् प्यात्मा प्यायते वर्द्धते इति पीः तादृश आत्मा शरीरं यस्य तादृशोऽपि सन् अर्थात् वर्द्धितशरीरः सन् चन्द्रतुद् चन्द्रस्य पीड़ाकारको भवति। पचे। चन्द्रतुदिति सं। अङ्गद्विमूर्त्तिभाक् १।, पा १।, पीप्यात्मा १।, भवति ८।, ॥ ४॥

क्लेशमिति। यस्त्वं ममोरसि स्वपः शयानः सन् कठिनत्वात् क्लेशं अन्वभवः अनुभवं कृतवान् तं त्वां श्मशानस्य अजिरे चत्वरे विधिर्विधाता दैवं वा असूषुपत् शायितवान्। स्वपः ६।, जिः १।, ॥ ५॥

नुस्थाप्येति। नु भोः भवती स्वान्ते स्थाप्या इति यत् हे प्रिय! प्रवत्स्यन् प्रवासं गमिष्यन् मां अवोचः कथितवानसि तन्मृषा मिथ्या यत् यस्मात् स्वमृत्यौ आत्मनो मृत्यौ न मां अतिष्ठिपः न स्थापितवान्। तथाच स्वान्ते स्थाप्येत्यत्र स्वान्तपदं न चित्तवाचकं

व्याकरणम्।

अङ्गद्विमूर्त्तिभाक् पा·पीप्यात्मा भवति। अङ्प्राप्त ङित्वप्राप्त पाधातुः पीप्यात्मकः स्यात्। अपीप्यत्॥ ४॥

स्वपो जिः। अङ्प्राप्त इत्यनुवर्त्तते। असूषुपत्॥ ५॥

पण ! क्ष्मायोऽणौ ह्यपचये विषीदत्यधुनापि मे ।
अहो सर्वस्वापचये कालो न क्ष्मापयत्यसून् ॥ ७ ॥
सदापन्नां शरण्यं त्वां द्वितीयां मां हितामिह ।
संस्थाप्यागाः स्वरिच्छन् किममुत्राप्यद्वितीयताम् ॥ ८ ॥
मृदुर्गुणोपि ते नाथ ! दोषसम्पत्तयेऽभवत् ।
दुषधातोरिव हि हृत् द्यति सोऽर्पितशूलवत् ॥ ९ ॥

किन्तु स्वमृत्युपरमित्यभिप्रेत्य एतदुक्तिः । पद्ये । नु सं ॥ (स्थापि भा) स्थाप्याः ६।, भवति ८।, इः १।, ॥ ६ ॥

पणेति । हे पण ! स्तवनीय ! क्ष्मायो जनः क्ष्मा पृथ्वी तत्र अयते गच्छतीति क्ष्मायो मर्त्यः सः अणौ हि कणमात्रेऽपि अपचये विषीदति अहो आश्चर्य्यं सर्व्वस्वापचयेऽपि कालो मृत्युः अधुनापि मे मम असून् न क्ष्मापयति न कम्पयति । पण् १।, क्ष्मायः ६।, णौ ७।, ॥ ७ ॥

सदेति । अमुत्रापि परलोकेऽपि किं अद्वितीयतां इच्छन् सन् द्वितीयां भार्य्यां मां इह लोके संस्थाप्य स्वः स्वर्गं अगाः यातोसि । कीदृशीं मां सदा त्वां शरण्यं आपन्नां प्राप्तां तथा हितां ॥ सदा ७।, पन् १।, आं ६॥, ॥ ८ ॥

मृदुरिति । हे नाथ ! ते तव मृदुर्गुणोऽपि दुषधातोरिव दोषसम्पत्तये अभवत् । हि यस्मात् स गुणः अर्पितः शूलवत् हृत् हृदयं द्यति छिनत्ति । पद्ये । मृदिति मृत्तिकायाः सं । उः ६।, गुणः १।, (अपि) ॥ ९ ॥

व्याकरणम् ।

स्थाप्या भवती । स्थापिधातोराकारस्य इ स्यात् । अतिष्ठिपः ॥ ६ ॥

पण् क्ष्मायोऽणौ । णौ परे क्ष्मायः पण् स्यात् । क्ष्मापयति ॥ ७ ॥

सदा पन्नां । आं आदन्तानां नित्यं पन् स्यात् णौ परे । संस्थाप्य ॥ ८ ॥

उर्गुणोपि । ऋधातोः पण् स्यात् णौ गुणोऽपि स्यात् । अर्पित ॥ ९ ॥

एवं ह्रियोपि दीनास्मि यस्मां दृष्ट्वैव दूषणम् ।
त्यक्त्वागा दिवमिति लोको मां क्रेपयिष्यति ॥ १० ॥
यन्मान्य: पोऽणौ हि दोषे सकृदेव तितिक्षते ।

( स्तुति: पुन: पतिं प्रति । )

महागसि वधार्हं क: प्रीत्या चीरमपाययत् ॥ ११ ॥
भवेदेश: सोपि नालं तस्य त्राणविनाशयो: ।
यं त्वं क्रुधा वा कृपया साययेर्वापि पालये: ॥ १२ ॥
संमन्यतेऽलन् पातेरिप्यद्रेस्त्वदब्रह्मवर्चसम् ।
चण्डवातो दीप्यतेऽत्र पालयेद्य: स नेक्षित: ॥ १३ ॥

एवमिति । एवं ह्रिय: लज्जाया: अहं दीनास्मि दु:खितास्मि यत् यस्मात् दूषणं दृष्ट्वैव मां त्यक्त्वा एक एव दिवं स्वर्गं अगा: यातोसि इति इत्येवं लोको मां क्रेपयिष्यति त्रापयिष्यति । एवं १।, ह्रिय: ५।, ( अपि ) ॥ १० ॥

यदिति । यत् यस्मात् मान्यो जन: प: पालकस्य अणौ हि सूक्ष्मावपि दोषे सकृदेव तितिक्षते क्षमते महागसि महापराधे वधार्हं वधयोग्यं जनं को जन: चीरं अपाययत् । यत् १।, ( मान्य: १। ) प: ५।, णौ ७।, ॥ ११ ॥

भवेदिति । स प्रसिद्ध ईशोऽपि ईश्वरोऽपि तस्य जनस्य त्राणमारणयो: रक्षणनाशयो: अलं शक्तो न भवेत् यं जनं त्वं क्रुधा कृपया वा साययेः नाशये: पालयेर्वा ॥ भवेत् ८।, वेश: ६।, स: ६।, ( अपि ) ॥ १२ ॥

समिति ॥ सम्मन्यते मयेति मन्यते । किमलदित्याह । त्वदब्रह्मवर्चसं चण्डवातो रिप्यद्रे: अनुरूपपर्व्वतस्य पाते अलन् समर्थ: सन् दीप्यते अत्र विषये य: पालयेत् स जनो

व्याकरणम् ।

एवं ह्रियोपि । क्रीधातोरप्येवं विधि: । क्रेपयिष्यति ॥ १० ॥

यन् मान्य: पोणौ । पातेर्यन् स्यात् णौ । पाययति ॥ ११ ॥

भवेदेश: सोपि । वे: शोपि यन् स्यात् णौ । शायये: ॥ १२ ॥

अथ मुनिः सक्रोधम् ।

अजानन् वा प्रियः शच्या बलं मेऽहितमाचरत् ।
तत्तत्तं बोधयन्नद्य सपत्नान् प्रीणयाम्यहम् ॥ १४ ॥
वध्वोऽपि द्युषदां याश्च ननृतुर्मत्सुते हते ।
धूनयन्त्यः कटिं तद्धृत् शुक्‌दग्धं धूनयाम्यहम् ॥ १५ ॥
सुरसीमन्तिनीराज्ञीङ्क्रियां दितिजवेश्मनि ।
कैङ्करीं कारयिष्यन् विक्रापयिष्यामि भूषणम् ॥ १६ ॥

न ईक्षितः मयेतिशेषः । अर्थादीदृशजनो नास्तीतिभावः । संमन्यते ८।, सन् १।, पातेः ६।, ॥ १३ ॥

अजेति । शच्याः प्रियः शक्रः मे मम बलं अजानन् एव अहितं आचरत् तत् तस्मात् तमिन्द्रं तन्मम बलं बोधयन् सन् अद्याहं सपत्नान् प्रीणयामि । पक्षे । अजा इतिसं । मन् १।, वा १।, प्रियः ६।, ॥ १४ ॥

वध्वेति । या द्युषदां देवानां वध्वोऽपि स्त्रियोऽपि मम सुते हते सति कटिं धूनयन्त्यः सत्यः ननृतुः तद्धृत् तासां हृदयं शुक्‌दग्धं शोकदग्धं सत् अहं धूनयामि कम्पयामि । पक्षे । व इति वरुणस्य सं । ध्वः ६।, ( अपि ) ॥ १५ ॥

सुरेति । सुरसीमन्तिनीनां राज्ञीं श्रेणीं दितिजवेश्मसु कैङ्करीं दास्युचितां क्रियां अर्थात् दासकर्म कारयिष्यन् सन् भूषणं विक्रापयिष्यामि । पक्षे । सुरसीमन्तिनीति सं । रः १।, आः १।, ङीङ्क्रियां ६॥, ॥ १६ ॥

व्याकरणम् ।

संमन्यते सन् पातेः । पालयेत् ॥ १३ ॥

मन् वा प्रियः । प्रीधातोर्नन् स्यात् णौ परे । प्रीणयामि ॥ १४ ॥

ध्वोऽपि । धूञ्धातोरपि नन् स्यात् णौ धूनयन्त्यः ॥ १५ ॥

रराज्ञीङ्क्रियां । जि इङ्क्रीधातूनां इत्वं आ स्यात् । विक्रापयिष्यामि ॥ १६ ॥

भियोऽघात् स्वार्थनिष्पत्तौ मञ्चशायी निवर्त्तते ।
दुष्प्रवृत्तेरुदर्कापत् नाभापयत तन्तु न ॥ १७ ॥
तथाऽस्मि धातोरुतपोयज्ञैस्तन्मृत्युसर्ज्जने ।
यो मृत्युरूपः पुरुष इन्द्रं विस्मापयिष्यते ॥ १८ ॥
भियो वा भीषमूर्त्तेर्यत् पुरुषादमरस्त्रियः ।
पलायमाना विपिने मर्म्मरो भीषयिष्यते ॥ १९ ॥
( सुबन्धुः । ) वृत्रनामानमसुरं ससर्ज्ज समुनिस्ततः ।
क्ष्वेड़याचाट्टहासेनाभाययत् यो जगत्त्रयम् ॥ २० ॥

भियेति । मञ्चशायी पर्य्यङ्कशायी जनः अर्थात् सुखी जनः स्वार्थनिष्पत्तौ स्वप्रयोजननिष्पादनविषये अघात् भियः व्यसनात् भयात् अर्थात् विपद्भयात् दुष्प्रवृत्तेर्निवर्त्तते तन्तु इन्द्रन्तु उदर्कापत् उत्तरकालीनफलीभूता विपत् न अभापयत न भयं जनयतिस्म । भियः ६।, घात् । ५।, स्वार्थनिष्पत्तौ ७।, मं १।, ( च ) ॥ १७ ॥

तथेति । तथा एवमपीत्यर्थः । उरुतपोयज्ञैर्महातपोयज्ञैस्तन्मृत्युसर्जने तस्य इन्द्रस्य मृत्युसृष्टिविषये धाता विधाताऽस्मि यो मृत्युरूपः पुरुषः इन्द्रं विस्मापयिष्यते । पचे । उ सम्बोधने । ( तथा १।, ) स्मिधातोः ६।, ॥ १८ ॥

भिय इति । भीषमूर्त्तेर्भयानकमूर्त्तेर्यत् पुरुषात् यस्मात् मृत्युपुरुषात् भियो वा भयादेव पलायमानाः अमरस्त्रियः विपिने वने मर्म्मरः शुष्कपर्णशब्दोऽपि भीषयिष्यते । भियः ६।, वा १।, भीष् १।, ॥ १९ ॥

वृत्रेति । क्ष्वेड़या सिंहनादेन । अन्यत् सुगमम् ॥ २० ॥

व्याकरणम् ।

भियो घात् स्वार्थनिष्पत्तौ मञ्च । कर्त्तुर्धात्वर्थे निष्पन्ने भियः ङः घा स्यात् मञ्च । अभापयत ॥ १७ ॥

तथा स्मिधातोः । विस्मापयिष्यते ॥ १८ ॥

भियो वा भीष । कर्त्तुर्धात्वर्थनिष्पन्ने भियो भीष वा स्यात् । भीषयिष्यते ॥ १९ ॥

कर्त्तुः किं अट्टहासेन अभाययत् ॥ २० ॥

रूपं बिभ्रत् वारुहः पङ्कजमाली महाबलः ।
पुरुषः स च देवानां चेतस्यारोपद्भयम् ॥ २१ ॥
अथ देवा गुरुमागत्य भीतास्तं प्रति ।
निश्चिताऽविदुषोऽदूर उदितास्य महाविपत् ।
भवानेव गुरू रोषात् दूषयन् यत्तमत्यजत् ॥ २२ ॥
किन्तु गुरूणां भवतामिदमनुचितम् । तद्यथा ।
यदोत्तरेणानुबन्धोऽघश्च स्यात् दृष्टिगोचरः ।

रूपमिति । स च पुरुषो देवानां चेतसि भयमारोपयत् । कीदृशः वारुहोरूपं बिभ्रत् वार्जलं वहतीति क्विपि वारुट् मेघस्तस्यरूपं दधत् कृष्णवर्ण इत्यर्थः पङ्कजमाली पद्ममाली । पक्षे । रूपं बिभ्रदिति सम्बोधनं कजमाली पद्ममाली । केचित्तु वार्वह्-तीति विपि वार्वाट् मेघस्तस्य रूपं बिभ्रदिति व्याचक्रुस्तदसत् वार्वाह इति शब्दस्य षष्ठ्येक-वचने वारुह इति दीर्घोकारयुक्तं भवति इष्टापत्तौ च व्याकरणपद्यार्थासङ्गतिः यद्यपि एतद्ग्रन्थकृता कृष्णानन्देन शब्दप्रकरणे "अनादुःसाध्यकृच्छ्राद्यैरिति श्लोके विश्वभुह इत्युदा-हरणे च ह्रस्व उकारो लिखितस्तदपि भ्रान्तिमूलमिति सुधीभिर्भाव्यम् । वस्तुतस्तु वार्वाह इति शब्दस्य षष्ठ्येकवचने वारौह इति प्रयोगो भवति वाहो वौपाविति सूत्रे दुर्गादासेन तथैव विवृतमित्यनुसन्धेयम् ॥ वा १।, रुह: ६।, पङ् १।, ॥ २१ ॥

निश्चितेति । अस्याविदुषोऽज्ञानस्य अदूरे समीपे उदिता महाविपत् निश्चिता अस्मदादिभिरिति शेषः । यत् यस्मात् गुरुर्भवानेव यं दूषयन् सन् रोषादत्यजत् । पक्षे । निश्चिताविं इति निश्चितमूर्ध्यासाः स्त्रियाः सं । रे सं । दुष: ६।, भीत् १।, ऊः १।, ॥ २२ ॥

यदेति । उत्तरेण क्रियमाणकर्मणा उत्तरकाले अनुबन्धो दोषोत्पादोऽघश्च व्यसनश्च

व्याकरणम् ।

वा रुहः पं । आरोपयत् ॥ २१ ॥
दुषोदूः । दुषेरीत् ऊत् स्यात् । दूषयन् ॥ २२ ॥

तदाह नस्तत्कर्म्मारम्भस्य व्याघातयत् भवान्॥ २३॥

इति अस्मानिव इन्द्रमपि नेदं कथमचीकथत्। भवान् सर्व्वज्ञः कथं वा प्रारम्भं न व्याघातयत्। यतः।

नह्युत्तरेण पिहितं वस्त्वस्ति किमपीह ते।
सर्व्वज्ञस्य गुरोऽज्ञानं जघान तमो भवान्॥ २४॥

गुरुः सत्यमेतत्।

स्वो जनः सत्युत्तरेऽणौ बोधे निपतितेऽशुभे।
प्रियाय कथयेत् सद्यो हितार्थी जनयन् हितम्॥ २५॥
तथैव स्वोऽमितां माध्वीमिव वक्ति हितो गिरम्।
हितां तां विपरीतार्थां घटयत्येव दुर्म्मतिः॥ २६॥

यदा ज्ञानगोचरः स्यात् तदा नोऽस्मान् भवानाह कथितवान् तं कर्म्मारम्भस्य व्याघातयत्। (यदा ७) उत्तरे ७।, (ण अनुबन्धः) णानुबन्धः १।, घञ् १।, (च) स्यात् ८।, दृष्टिगोचरः १।, तदा ७।, हनः ६।, तङ् १।, ॥ २३॥

नहीति। इह जगति उत्तरेण उत्तरकाले किमपि वस्तु अर्थात् भविष्यत् वस्तु किमपि सर्व्वज्ञस्य ते तव पिहितं आच्छादितं अर्थात् ज्ञानगोचरो नह्यस्ति हे गुरो! यत् यस्मात् भवान् अज्ञानं तमो जघान। नहि १।, उत्तरे ७।, अपि ७।, ॥ २४॥

स्व इति। स्व आत्मीयो जनः सति उत्कृष्टे अणौ सूक्ष्मे बोधे अशुभे निपतिते सति अर्थात् प्रियजनस्य अशुभे सूक्ष्मज्ञानगोचरे सति प्रियजनाय कथयेत्॥ स्वः १।, जनः ६।, सति ७।, उत्तरे ७।, णौ ७।, ॥ २५॥

तथेति। स्व आत्मीयो जनः हितस्य अमितामपरिमितां माध्वीमिव अर्थात् प्रियां

व्याकरणम्।

यदोत्तरेणानुबन्धो घञ्च स्यात् ज्ञानगोचरस्तदा हनस्तङ्। यदि उत्तरे णकारानुबन्धो घञ् च ज्ञानविषयः स्यात् तदा हनधातोस्तङ् स्यात्। व्याघातयत्॥ २३॥

नह्युत्तरे ण्यपि। अपि उत्तरे सति तङ् न स्यात्। जघान॥ २४॥

स्वो जनः सत्युत्तरे णौ। जनः स्वः स्यात् णौ परे। जनयन्॥ २५॥

अतोऽलं तस्य हितोपदेशेन । अपि च ।

अमन्तस्यापि शमयेत् को वा द्वेष्टि चिकित्सकम् ।
यो नौषधं कामयतेऽपथ्याशी स्वाहिते रतः ॥ २७ ॥

तद्वदयमपि उपदेष्टारं द्वेष्टि हितं न शृणोति गर्हितमाचरति च तदेवं पश्य ।

भूदेवमारणाद्यर्थं ज्ञः को वा ज्ञपयत्यसिम् ।
न को गुरुं ज्ञपयते प्रियवाक् माननादिभिः ॥ २८ ॥

अत इन्द्रं प्रति नानुरोधः कर्त्तव्यो भवद्भिः । देवा एवमेव । किन्तु ।

कोपि वा वाञ्छति ज्ञोऽमुं नृशंसमवितुं भयात् ।
तथाप्यज्ञं ज्ञीप्समानो धर्म्मं सन् कृपयावति ॥ २९ ॥

गिरं वाणीं तथैव वक्ति दुर्मतिर्दुष्टबुद्धिस्तां हितां वाणीं विपरीतार्थामेव घटयति ॥ तथा १।, ( एव ) स्वः १।, मितां ७।।।, ॥ २६ ॥

अमेति । को वा जनः तस्यापि जनस्य अमं रोगं शमयेत् यो जनः चिकित्सकं द्वेष्टि औषधं न कामयते नेच्छति अपथ्याशी स्वस्य अहिते रतः आसक्तः । अमन्तस्य ६।, ( अपि ) ॥ २७ ॥

भूदेवेति । को वा ज्ञः पण्डितः भूदेवस्य ब्राह्मणस्य मारणाद्यर्थं असिं खड्गं ज्ञपयति सुशाणितं करोति को वा जनः प्रियवाक्यमाननादिभिर्गुरुं न ज्ञपयति न तोषयति अपि तु तथैव । पचे । भूदेवेति सं । मारणाद्यर्थं ७, ज्ञः ६।, ॥ २८ ॥

कोपीति । कोपि वा ज्ञः पण्डितः अमुं नृशंसं क्रूरं भयात् अवितुं रक्षितुं वाञ्छति

व्याकरणम् ।

तथैव स्वो मितां । मितां मकारानुबन्धानां स्वः स्यात् तथैव अर्थात् णौ परे । घटयति ॥ २६ ॥

अमन्तस्यापि । शमयेत् ॥ २७ ॥

मारणाद्यर्थं ज्ञः । ज्ञपयति । ज्ञपयते ॥ २८ ॥

गुरुः । देवाधमो न क्रमया च मोदतेऽस्म वाचापि मां गुरुमिति
नचामयिष्याम्यहं न कदाप्यमुमिति प्रतिज्ञातं मया ।
तथापि सर्व्वेषामुपकारार्थं भवतां प्रियं करिष्यामि ॥ ३० ॥

देवा हृष्टाः । गुरो ! तदा नालं विलम्बेन ।
इन्द्र एवास्य वृत्रस्य हन्तेति त्वं तमापदः ।
मोचयारिं हन्तु सोऽमुं शिष्यास्त्वां त्वरयन्त्यमी ॥ ३१ ॥

अथ गुरुर्देवैः सह मानससरस्तीरं गत्वा तत्र स्थितं पापपुरुषं प्रति ।

तव स्थानं स्त्रीजलद्रु दत्तं तत् त्वं समाश्रय ।
इति स्त्र्यादिषु तं जीवोऽगमयत् पापपूरुषम् ॥ ३२ ॥

अपि तु न कोपि तथापि सन् साधुः क्रपया अज्ञं मूर्खं धर्म्मं शीप्समानः धर्म्मं बोधयन् सन् अवति रक्षति ॥ कः १।, ( अपि ) ( वा ) वाञ्छति ८।, ज्ञः ६।, अमुं २।, ॥२६॥

देवेति । देवाधमो देवानामधमः क्रमया क्रमया वाचापि मां गुरुं न मोदयतेस्म इति हेतोः अमुं इन्द्रं कदापि नचामयिष्यामि न आचमनं करिष्यामि अर्थात् पौरहित्यं न करिष्यामीत्यर्थः । इति मया प्रतिज्ञातं । पद्ये । देवा इति सं । वमः ६।, न १।, क्रमः ६।, आचमः ६।, ॥ ३० ॥

इन्द्रेति । इन्द्र एव अस्य वृत्रस्य हन्ता इति हेतोस्त्वं तं इन्द्रं आपदो मोचय स इन्द्रः अमुं अरिं हन्तु । अमी शिष्यास्त्वां त्वरयन्ति । पद्ये । सूत्रस्य उदाहरणम् ॥ ३१ ॥

तवेति स्त्रीजलद्रु स्त्रीजलवृक्षाः । स्त्र्यादिषु स्त्रीजलवृक्षेषु । पद्ये । सूत्रस्य उं ॥३२॥

व्याकरणम् ।

कोपि वा वाञ्छति ज्ञीऽमुं । कोपि पण्डितः ज्ञाधातोरमुं विधिं विकल्पमिच्छति । ज्ञीप्समानः ॥ २६ ॥

वमो न क्रम आचमः । एषां स्त्री न स्यात् णौ । आचामयिष्यामि ॥ ३० ॥

त्वरयन्ति ॥ ३१ ॥ अगमयत् ॥ ३२ ॥

अथ मुक्तो ब्रह्महत्यापापेनेन्द्रः कृतोत्सवः ।
वज्रेण व्यथयन् वर्षं वृत्रासुरमनाशयत् ॥ २२ ॥

इति महामहोपाध्याय श्रीकृष्णानन्दवाचस्पतिविरचिते
अन्तर्व्याकरण नाट्यपरिशिष्टे सप्तमोऽनुल्लासः
समाप्तः ।

अथेति । वर्षं व्याप्य व्यथयन् पीडयन् । पचे । सुगमं ॥ २२ ॥

इति कविभूषणश्रीअजितनाथन्यायरत्नकृतायां नाट्यपरिशिष्टव्याख्यायां
सप्तमोऽनुल्लासः समाप्तः ॥

व्याकरणम् ।

व्यथयन् ॥ २२ ॥

इति णिजन्ताध्यायः समाप्तः ॥

सैद्धान्तिक आह ।

सन्निच्छायां प्रसक्तायामशक्ये विषयेऽपि तम् ।
यः सिसाधयिषत्येकतानः सिध्यति तस्य सः ॥ १ ॥
जिगीषति प्रतिज्ञानं लोकान् तत्तु स्वगौरवम् ।
हन्तीङ्गमुत्तराचाङ्ग लोकानिष्टान् जिघांसति ॥ २ ॥

तस्मात् दृढ़सङ्कल्पात्मकप्रतिज्ञैव सिद्धौ हेतुः । अत्रैव पद्मपुराणीयमुदाहरन्ति । आसीत् प्रयागे ऋतधामा नाम वैश्याधिपतिः तस्य भार्य्या विरजा नाम पतिव्रता ।

या पत्यावकृताहारे सुव्रता नात्तुमिच्छति ।
जिघत्सतिस्म या देवातिथिप्रजावशेषितम् ॥ ३ ॥

सन्निति । यः सन् उद्योगी पुरुषः अशक्येऽपि विषये इच्छायां प्रसक्तायां सत्यां एकतान एकचित्तः सन् तं विषयं सिसाधयिषति साधयितुमिच्छति तस्य सम्बन्धे स विषयः सिध्यति । उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीरिति भावः । एकतानोऽनन्यवृत्तिरित्यमरः । पक्षे । अशक्येत्यादिकमुदाहरणघटितवाक्यत्वेन सार्थकम् । सन् १।, इच्छायां ७।, ॥ १ ॥

जिगीषतीति । प्रतिज्ञानं सङ्कल्पात्मकः समयः प्रतिज्ञेतियावत् लोकान् जिगीषति जेतुमिच्छति । तत्तु प्रतिज्ञानं इङ्गं चलितं सत् स्वगौरवं हन्ति उत्तरा च उत्तरकाले च इष्टान् अभिलषितान् लोकान् स्वर्गादीन् जिघांसति । चलमिङ्गं चराचरमित्यमरः अङ्ग सम्बोधने । पक्षे । तत्त्वित्यन्तपूर्वभाग उदाहरणवाक्यं स्व इति आत्मीयसम्बोधनम् । ग इति गणेशसम्बोधनं । लोकेत्यादिकमुदाहरणवाक्यं । गौरवं १।, इन्तीङ्गमुत्तराचां ६।।।, ॥ २ ॥

व्याकरणम् ।

सन्निच्छायां प्रसक्तायां । धोः परः सन् स्यादिच्छार्थे । सिसाधयिषति ॥ १ ॥

गौरवं इन्तीङ्गमुत्तराचां । इन्तेः इङ्स्थाने जातगमस्य उत्तरे अच्, यस्य तादृशधातोरपि गुरुत्वं स्यात् । जिगीषति, जिघांसति ॥ २ ॥

पतिं जुहावयिषति या स्वात्मनि च तस्य हि ।
प्रीतिं शिश्राययिषया शुश्रावयिषति व्रतम् ॥ ४ ॥
नास्यां विद्योतमानायां विद्युत् द्योतितुमिच्छति ।
विदिद्योतिषते न स्म क्रियाङ्गो यन्मुखश्रियि ॥ ५ ॥

अथैकदा विविक्ते स्नातोत्थितामार्द्रवसनां तां जाङ्गलिर्नाम व्याधो दृष्ट्वैव मुमोह अनन्तरं सोऽनात्मधैर्य्यः ।

दुद्यूषतिस्मैष तदन्तिकं क्षणं
क्षणं दिधीर्षत्यधृतिस्तदञ्चलम् ।
क्षणं चिकीषत्यपि तत्कुचाम्बुजं
चिचीषतेऽस्या अधरासवं क्षणम् ॥ ६ ॥

---

येति । या सुव्रता पत्यौ अक्तताहारे अकृतभोजने अत्तुं भोक्तुं नेच्छति । या च देवातिथिपूजावशेषितं । जिघत्सति । पचे । सूत्रस्य उं ॥ ३ ॥

पतिमिति । या च पतिं जुहावयिषति स्पर्द्धां कारयितुमैच्छत् । साध्वीत्वस्य पत्युः स्पर्द्धाहेतुत्वात् । या च आत्मनि तस्यैव पत्युः प्रीतिं शिश्राययिषया वर्द्धयितुमिच्छया व्रतं नियमविशेषं शुश्रावयिषति स्म वर्द्धयितुमैच्छत् । पचे । उं ॥ ४ ॥

नास्यामिति । अस्यां विरजायां विद्योतमानायां सत्यां विद्युत् लज्जया द्योतितुं नेच्छति स्म । यन्मुखश्रियि यस्या मुखशोभायां विद्योतमानायां सत्यां अब्जश्चन्द्रोऽपि न विदिद्योतिषते स्म । पचे । उं ॥ ५ ॥

दुद्यूषेति । एष शाकुनिकः क्षणं तदन्तिकं विरजायाः समीपं दुद्यूषतिस्म गन्तुमैच्छत् क्षणं अधृतिः अधैर्य्यः सन् तदञ्चलं तस्या वस्त्राञ्चलं दिधीर्षतिस्म धर्त्तुमैच्छत् क्षणं तत्स्तनपद्मं चिकीषतिस्म चेतुमैच्छत् क्षणं अस्याः अधरासवं चिचीषते स्म सञ्चेतुमैच्छत् । पचे । उं ॥ ६ ॥

### व्याकरणम् ।

अत्तुमिच्छति जिघत् सति ॥ ३ ॥
जुहावयिषति शिश्राययिषया शुश्रावयिषति ॥ ४ ॥
द्योतितुमिच्छति विदिद्योतिषते ॥ ५ ॥
दुद्यूषति, दिधीर्षति, चिकीषति, चिचीषते ॥ ६ ॥

अथ धैर्य्यमास्थाय आत्मगतं। दुःसाध्यसाधने नाधीरेण भवितव्यमुक्तञ्च धीरैः ।

यस्तु सन् जायतेऽनिम्नो गुणस्तत्र भवेद्वृथा ।
या स्वैरविजिहीर्षाया नाङ्कुशः किं तया विदा ॥ ७ ॥

अतः स्थैर्य्यमास्थाय उपायेनैव फलं साधयिष्ये तत्र निधनमपि श्रेयः ।

अथ व्याधो जिगमिषुर्वैश्यपत्न्याः प्रसन्नताम् ।
अपराह्णेऽनयन्नेयमेनामैणमुपायनम् ॥ ८ ॥

विरजा व्याधं प्रति कुतस्त्वं कोऽसीति । व्याधः विन्ध्याटव्या आगतोऽस्मि नाम्ना जाङ्गलिर्जात्या शाकुनिकः । विरजा कियानस्य पणः ? । व्याध उपायनमेतत् । विरजा किमर्थयसे ? । व्याधः भवत्याः प्रसादमेवेति ।

---

यस्त्विति । यस्तु सन् पण्डितः अनिम्नोऽगम्भीरो जायते तत्र गुणो विद्यादिकं वृथा भवेत् । तया विदा विद्यया च किं प्रयोजनमिति शेषः । या विद्या स्वैरविजिहीर्षायाः स्वच्छन्दविहारेच्छाया अङ्कुशो निवारको न स्यात् । पद्ये । वृथेत्यादिकमुदाहरणवाक्यम् । यः १।, (तु) सन् १।, जायते ८।, अनिम् १।, (नो १।) गुणः १।, तत्र ७।, भवेत् ८।, (वृथा) ॥ ७ ॥

अथेति । अथानन्तरं व्याधः वैश्यायाः विरजायाः प्रसन्नतां जिगमिषुः प्राप्तुमिच्छुः सन् अपराह्णे एनां विरजां नेयं प्रापनार्हं ऐणं मृगचर्म्म उपायनं पारितोषिकं अनयत् प्रापयामास । पद्ये । उं ॥ ८ ॥

व्याकरणम् ।

यस्तु सन् जायतेऽनिम्नो गुणस्तत्र भवेत् । यः सन् अनिम् स्यात् तस्मिन् परे गुणो न स्यात् । विजिहीर्षायाः ॥ ७ ॥

जिगमिषुः ॥ ८ ॥

एवं परेद्युरपि स तस्याः प्रीतिं चिकीर्षया ।
पललं मृगशावैकमुपहारमुपाहरत् ॥ ९ ॥

एवमन्वहमपि । अथैकदा विरजा ।

विवक्षुमिव तं स्त्रीयवचःक्षिप्ताचरेक्षणम् ।
वीक्ष्य क्षणं पक्ष्मलाक्षी कामक्षीवमलक्षयत् ॥ १० ॥

विरजा सखीः प्रति । सख्यः ! अस्याभिप्रेतं लक्षितं न वा ? । अथ ताः तस्य आङ्गिकेन सात्त्विकेन च भावेन तस्याभिप्रेतं निश्चित्य आहुः । सखि ! लक्षितं तदधुनैव व्यक्तीकुर्म्मः । तत एका सखी व्याधं प्रति । रे जाङ्गले ! किमुद्विवक्षसि । व्याधः सस्मितमाह हुँमिति । अथ ता उच्चैर्विहस्य ।

अहो भाग्यमहो भाग्यमद्य ते सुदिनं सखि ! ।
पतिं वुवूर्षोः पात्रन्ते स्वयमागात् तपःफलम् ॥ ११ ॥

---

एवमिति । स व्याधः एवमनेन प्रकारेण तस्या विरजायाः प्रीतिं चिकीर्षया कर्त्तुमिच्छया पललं मांसं मृगशावं मृगशिशुञ्च उपहारं पारितोषिकं उपाहरत् ददाविति शेषः । पद्ये । उं ॥ १९ ॥

विवक्षुमिति । सा पक्ष्मलाक्षी सुदृशी विरजा तं व्याधं क्षणं वीक्ष्य दृष्ट्वा कामक्षीवं कामोन्मत्तं अलक्षयत् ज्ञातवतीत्यर्थः । कीदृशं विवक्षुमिव किञ्चित् वाक्यं प्रयोक्तुमिच्छुमिव । स्त्रीयवचसि क्षिप्तं अचरं अचञ्चलं ईक्षणं लोचनं येन तं तथा । पद्ये । उं ॥ १० ॥

अहो इति । हे सखि ! अद्य ते तव सुदिनं यत् यस्मात् पतिं वुवूर्षोः पतिं वरीतुमिच्छन्त्यास्तव तपःफलं तव तपस्यायाः फलीभूतं पात्रं वरः स्वयमागात् आगतवान् । पद्ये । उं ॥ ११ ॥

## व्याकरणम् ।

चिकीर्षया ॥ ९ ॥ विवक्षुं ॥ १० ॥
वुवूर्षोः ॥ ११ ॥

तस्मात् वयमपि तव स्वयम्बरपर्व्वणि निनृत्सामः त्वं किमिति न निनर्त्तिषसि। व्याधं प्रति रे आकुले! अद्यास्माकं परमविनोदः यत् त्वमीदृक् दुर्लभो भामोऽसि इति सर्व्वा एव वयं त्वया विजिहीर्षामः न केवलमसौ। किन्त्वेवं।

गोग्रामाहरणं गवां गृहमृजा काले गवां चारणं
गोदोहः समिदाहृतिः क्वचिदपि चेत्रस्य खाताहृती।
व्रीहीणामवघात इध्मदलनं रथ्याजिरोन्मार्ज्जनं
कन्थास्यूतिकृतिः करीषघटना साध्या मुमूर्षो न वा॥ १२॥

व्याधः एवमिति। अनन्तरमन्वहं स तथाऽकरोत्। रसिकाः मख्यश्च अरे भाम! इयत्कालं कुतोऽगाः क्षणमपि तवादर्शनेन जीवन्मृता वयं क्षणमपि युगायते। इति परिहासमिषात् उपानत् सम्मार्ज्जनी सङ्करधूलि लोष्ट गोमय निष्ठीवन सिङ्घानादीनि तद्गात्रे क्षिपन्ति स तु तदेव प्रसादं मन्यमानस्तदीहया तासामन्तिकमेव प्रीत्या विहरति। अथैका सखी विरजां प्रति।

अबोधेऽनिशमिह दुर्लषितं दुर्ग्रहार्ज्जितम।

गोग्रामेति। गोग्रामाद्दरणं गवार्थे तृणानयनं। गवां गृहमृजा गोशालमार्ज्जना। स्यान्मार्ष्टिर्म्मार्जनं मृजेत्यमरः। समिदाहृतिः काष्ठानयनं चेत्रस्य खाताहृती खननं आवरणञ्च व्रीहीणामवघातः तण्डुलनिष्पत्तिः इध्मानां काष्ठानां दलनं विदारणं रथ्याया अङ्गनस्य च मार्ज्जनं कन्थास्यूतिकृतिः कन्थायाः सीवनकृतिः करीषघटना गोमयशुष्ककरणोपायः हे मुमूर्षो! एताः क्रियाः साध्या न वा त्वयेति शेषः। मुमूर्षो इति साक्षेपसम्बोधनम्॥ १२॥

अबोध इति। इह अबोधे अस्मिन् ज्ञानशून्ये व्याधे दुर्ग्रहार्ज्जितं दुर्बुद्धिजनितं दुर्ल-

व्याकरणम्।

मुमूर्षो॥ १२॥

अहो श्रुतिं ब्रह्मविद्यां शूद्रोऽप्यधिजिगांसते ॥ १३ ॥

अन्या च सस्मितं सखि! तवैतदन्याय्यं अस्य व्यामोहं न प्रतीषिषसि। अपि च।

ओखितो न तुषत्वं सः सत्येष त्वाप्त ईहिते।
अर्थे यो वृत्तिमांस्तस्मिन् तप्ते किन्न सिसिक्षसि ॥ १४ ॥

विरजां सस्मितं काकमुद्दिश्य व्याधं प्रति।

न तथाऽस्तोऽस्तु सोऽस्मिंस्ते लोभस्तुष्टूषितेऽमरैः।
हव्ये रे! काक! विघसे त्वल्लोभोऽस्तो भवेत् यथा ॥ १५ ॥

---

षितं दुर्व्यञ्जितं अनिङ्गं स्थिरं निरस्तितुं न शक्ता वयमिति भावः। अहो आश्चर्यं ब्रह्मविद्यां ब्राह्मणवेद्यां श्रुतिं शूद्रोऽपि अधिजिगांसते अध्येतुमिच्छति। पद्ये। शेष उदाहरणवाक्यं। (अधीष इन् इङ्गम्) अबोधिनेङ्गम् १।, इष्ट ७।, ॥ १३ ॥

ओखीति। तव ईहिते अभिलषिते अर्थे वृत्तिमान् वर्त्तनशीलः सन् यो व्याधः त्वा आप्तः त्वां प्राप्तः हे सति! स एष व्याधः तुषत्वं तुष्टत्वं न ओखितः प्रापितः त्वयेति शेषः उखधातोः प्राप्त्यर्थकत्वात्। तस्मिन् जने तप्ते सति किं कथं न सिसिक्षसि न सेकमिच्छसि। तुषत्वमिति तुष्यतीति तुषः इगुपधात् कः, तस्य भावस्तुषत्वं तुष्टिरिति यावत् अत पदान्ते सन्धेर्विभाषितत्वेन स इत्यस्य न विसर्गलोपः। पद्ये। ओ सम्बोधने। तप्ते इत्यादिकमुदाहरणवाक्यं। खितः ५।, (न तु १।) षत्वं १।, सः १।, सति ७।, षत्वाप्ते ७।, ईहिते ७।, अर्थे ७।, यः १।, वृत्तिमान् १।, तस्मिन् ७।, ॥ १४ ॥

न तथेति। रे काक! यथा विघसे भुक्तावशिष्टे उच्छिष्टे त्वल्लोभस्तव लोभः अस्तः क्षिप्तो भवेत् तथा अमरैर्देवैस्तुष्टूषिते देवानां स्तुतीच्छाविषये अस्मिन् हव्ये ते तव स लोभः

व्याकरणम्।

अबोधेनिङ्गमिष्ट। अज्ञानार्थक इन इङश्च गम् स्यात् इष्ट सनि परे। अधिजिगांसते। अबोधे किं प्रतीषिषसि ॥ १३ ॥

खितो न तु षत्वं सः सत्ये षत्वाप्त ईहिते अर्थे यो वृत्तिमांस्तस्मिन्। खेः परस्य सस्य षत्वं न स्यात् इच्छायामर्थे यो वृत्तिमान् शक्तिमान् तस्मिन् षत्वप्राप्ते सप्रत्यये परे। सिसिक्षसि ॥ १४ ॥

सखी विरजां प्रति सपरिहासं। सखि! अयं किमपराध्यति यतः

सह धरणिचोऽपि सोऽलं त्वन्मुखाब्जसुधीत्सुकं मनो धावि।
न सिसाहयिषति वेगं सुष्वापयिषति यः सदा मनोजम्॥ १६॥

काऽपि शाकुनिकमागतं वीक्ष्य विरजां प्रति।

मुग्धेऽसौ ते नो यज्ञोऽपि भवतीम् गुह एष यत्।
आगात् जिघृक्षुः पाणिं तत् भजैनं चेत् सुतार्थिनी॥ १७॥

अलः चित्री मास्तु मा भवतु। पद्ये। ते इत्यादिकमुदाहरणवाक्यम्। (न १।) (तथा) स्तोः ६।, (तु) सः १।, अस्मिन् ७।, ॥ १५॥

सहेति। यो जनः सदा मनोजं कन्दर्पं सुष्वापयिषति स्वापयितुमिच्छति तथा वेगं सिसाहयिषति धारयितुमिच्छति सोऽपि सहधरणिचः सहिष्णुर्धरणिचरो मर्त्त्यः अर्थात् सोऽपि योगी जनः त्वन्मुखचन्द्रसुधीत्सुकं सत् धावि धावमानं मनः स्वचित्तं प्रति न अलं न समर्थः। अर्थात् त्वां प्रति चञ्चलं मानसं स्वापयितुं तद्वेगं धारयितुञ्च न समर्थः। सहधरणिचः सहः सहिष्णुः धरण्यां चरतीति धरणिचो मर्त्त्यः ततः कर्म्मधारयः। पद्ये। अलमित्यादिकमुदाहरणवाक्यम्। सहधरणिचः ६।, (अपि) सः १।, ॥ १६॥

मुग्धे इति। एष गुहः कार्त्तिकेयः पाणिं जिघृक्षुः पाणिग्रहणेच्छुः सन् यत् भवतीं आगात् प्राप्तः हे मुग्धे! ते तव असौ यज्ञोऽपि न एतत् ज्ञानमपि नास्ति। चेत् यदि सुतार्थिनी पुत्रार्थिनी तदा एनं कार्त्तिकेयं भज कार्त्तिकेयस्य सन्तानदातृत्वात्। पद्ये।

व्याकरणम्।

न तथा स्तोस्तु सोऽस्मिन्। एतादृशे सनि परे स्तुधातोः सस्य तथा न निषेधः। तुष्टूषिते॥ १५॥,

सहधरणिचोऽपि सः। सहधातुरथवा यस्य तादृशस्य अर्थात् सहवर्जितस्य णिजन्तस्यापि सस्य न तथा अर्थात् षत्वं स्यात्। सुष्वापयिषति सिसाहयिषति॥ १६॥

विरजा तां प्रति।

तदाधेः सखि! लोपश्चेत् स न्यङ् मां प्रोज्भ्य सुन्दरि!।
भवतीमनुगृह्णीयात् मित्से ह्रासं तदेव ते॥ १८॥

सा तां प्रति सखि! कथं तवाधिः। यतः।

तवाखिलानां विपदां सखि! लोपोऽपि जायते।
वियोगिनीमा दित्सन्ति रासलीलाः श्वभोजिना॥ १९॥

मुग्धे सौते इति सौत्ये कर्म्मणि मूढ़ाया सम्बोधनं यदित्यादिकमुदाहरणवाक्यम्। न १।, उ ग्रहः ५।, ( अपि ) भवति ८।, इम् १।, गुहः ५।, एषः १।, ॥ १७॥

तदेति। चेत् यदि स न्यङ् स नीचो व्याधः मां प्रोज्भ्य विहाय हे सुन्दरि! भवतीमनुगृह्णीयात् तदेव ते तव ह्रासं मित्से प्रतिदातुमिच्छामि। मित्से इति मेङ् प्रतिदाने इत्यस्य रूपं अत्र आशंसायां क्तौ। हे सखि! तदा आधिः मम मनः पीड़ाया लोपो भवेदिति शेषः। पक्षे॥ तदाधेरिति मनःपीड़ायाः चौरवत् छेत्तुः सम्बोधनम्। प्रोज्भ्येत्यादिकमुदाहरणवाक्यम्। खिलोपः १।, ( च ) इत् १।, सनि ७।, अक् १।, मां ६॥।, ॥ १८॥

तवेति। अयि सखि! तव अखिलानां विपदां लोपो भवति। कुतो लोप इत्यत आह हे वियोगिनि! श्वभोजिना कुक्कुरभोजिना सह रासलीलाः इमा विपदः दित्सन्ति छेत्तुमिच्छन्ति। दित्सन्तीति दोयच्छेदे इत्यस्य रूपं। पक्षे। तव इति वर्त्तनशीलस्य सं। अखिलानां विप इति सकलानां विशेषेण पालकस्य सं। दां ६॥।, सखिलोपः १।, ( अपि ) जायते ८।, वियोगिनि ७।, इमा ३।, ॥ १९॥

व्याकरणम्।

नीयक्षोऽपि भवतीम् गुह एष। उवर्णान्तात् ग्रहश्च सन इम् न स्यात् गुहोऽपि एष विधिः। निघृक्षुः॥ १७॥

खिलोपश्चेत्सन्यङ् मां। नयाणां माधातूनां अक् इत् स्यात् खिलोपश्च सनि परे। मित्से॥ १८॥

दां सखिलोपोऽपि जायते वियोगिनी मा। दासंज्ञकानां अवर्णः खिलोपेन सह इ स्यात् इमा वियुक्ते सनि परे। दित्सन्ति॥ १९॥

विरजा । सखि ! एनं विट्चरमुजं दूरीकरोतु कुलिनाया अयशस्करोऽयं विपदां मूलञ्च । सा । तां प्रति । सखि ! मैवं भृतिशून्योऽयं दास: प्राप्त: महाविनोदश्च एतेन का विपत्सम्भावना ।

पित्सेद्वाऽकारणापच्चेत् सखि ! लोपो भवेदयि ! ।
शक: पतिपदाराधो हिंसने ह्यखिलापद: ॥ २० ॥

विरजा । सखि ! अन्या विपत् मा वा भवतु एषैव महाविपत् । तत् यथा ।

सखीजना: सदाऽमी मे रपितेनामुना परम् ।
बीभत्सरसभूम्यालि ! मित्सन्तीष्टरतौ रतिम् ॥ २१ ॥

तद्भवतु अलं बीभत्सरसेन । पुन: सा सस्मितं सकौतुकं व्याधं प्रति ।

---

पिदिति । चेत् यदि अकारणा कारणशून्या अपि विपत् पित्सेत् वा पतितुमिच्छेत् वा अयि हे सखि ! लोपोऽपि भवेत् तस्य इति शेष: । हि यस्मात् पतिपदो: स्वामिचरणयो: आराध: सेवा अखिलापदो हिंसने शक: शक्त: । अर्थात् पतिव्रताया: कापि विपत् न भवितुमर्हति । पच्चे । चेदित्यन्तमुदाहरणवाक्यम् । अखिलापद इति आपद् समूहस्य सं । सखिलोप: १।, भवेत् ८।, अ: १।, इ १।, शक: ६।, पतिपदाराध: ६।, हिंसने ७।, ॥ २० ॥

सखीति । हे आलि ! सखि ! अमी सखीजना: सदा बीभत्सरसभूम्या बीभत्सरसाम्पदेन अमुना रपितेन वचनेन परं केवलं मे मम इष्टरतौ अभीष्टायामपि रतौ रतिं अनुरागं मित्सन्ति घ्नन्ति मित्सन्तीति मीगिवधे इत्यस्य रूपं । पच्चे । सखीजना: सदा इति सम्बोधनम् । अमुनेत्यादिकमुदाहरणवाक्यम् । मीमे: ६।, ( अपि ) ( तेन १।, ) ॥ २१ ॥

व्याकरणम् ।

सखिलोपो भवेदयि शक: पतिपदाराधो हिंसने । शकपतपदां हिंसार्थराधोऽपि अवर्ण: खिलोपेन सह इ स्यात् आनिमि सनि । पित्सेत् ॥ २० ॥

मीमेरपि तेन । मीम्योरपि तथा स्यात् । तेन अब्दोऽव्ययं तथाऽर्थे । मित्सन्ति ॥ २१ ॥

रे चेदेतल्लभे रभ्यो रपितं मे तदा कुरु।
गङ्गाम्बुन्यत्र मुञ्चासूनिष्टं लिप्सुर्भवान्तरे॥ २२॥
(व्याध:।) वेद भो यौनसम्बन्धमावयोर्निश्चितं यदि।
अधीप्सुर्भवती किन्तत् देहान्तरमपेक्षते॥ २३॥
विरजा सस्मितं।
हा किं कष्टं रेऽज्ञ! पाप! ईरितो यत्र तत् कुरु।
यदीप्ससीष्टं केदानीं ज्ञीप्सति त्वां प्रयोजनम्॥ २४॥

---

रेचेदिति। रे व्याध! चेत् यदि एतल्लभे एतदभीष्टलाभे रभ्य: उत्सुक: त्वमिति शेष: तदा मे मम रपितं कथितं कुरु भवान्तरे शरीरान्तरे इष्टं अभीष्टं लिप्सु: सन् अत्र गङ्गाम्बुनि असून् प्राणान् मुञ्च। पक्षे। रे चेदिति चेतनावलो नौवस्य सं। तमित्यादिकं ज्ञं। एतत् १।, लभे: ६।, रभ्यो: ६।, (अपि)॥ २२॥

वेदेति। भो: यदि आवयो: यौनसम्बन्धं विवाहं भवती निश्चितं वेद जानाति तत् तदा देहान्तरं किं कथं अपेक्षते। कीदृशी भवती अधीप्सुरदाम्भिका। पक्षे। वे इति गरुड़स्य सं। मेत्यादिकं ज्ञं। दभ: ६।, यौ १॥,॥ २३॥

हेति। हा किं कष्टं इति कोपोक्तौ। रे अज्ञ! पाप! यदि इष्टं इप्ससि आप्तुमिच्छसि तदा यत्र कर्म्मणि ईरित: प्रेरित: तदेव कुरु इदानीं का अस्य प्रयोजनं त्वां ज्ञीप्सति ज्ञापयितुमिच्छति। ज्ञाकममारणनिशाने इत्यत्र निशानं ज्ञानप्रेरणमिति रक्षित:। जानातेर्घटादित्वं विभाष्यते इति क्रमदीश्वर:। पक्षे। हा किं कष्टं रे इति कोपोक्ति:। (अप आप) अपाप: ६।, ई: १।,॥ २४॥

व्याकरणम्।

एतल्लभेरभ्योरपि। रभलभधातोश्च एतदेव। लिप्सु:॥ २२॥

दभो यौ। दभोऽवर्णं इ ईच स्यात् खिल्लोपश्च। अधीप्सु:॥ २३॥

अपाप ई:। अप आपयोरवर्णं ई: स्यात् खिल्लोपश्च सनि। ईप्सति, ज्ञीप्सति॥ २४॥

विरजां प्रति सखी ।

वच्मीत्यहं त्वां विदभां हि मन्यते
मनो विलोपो न किमस्य सुन्दरि !
आसीत् त्वयीन्दौ तदसौ मृत: पुन-
र्जिघांस्यते तत् किल पिष्टपेषणम् ॥ २५ ॥

व्याध: विरजां प्रति ।

दयागुणेऽव सेवस्योडुराजमुखि ! भामिनि ! ।
प्राणान् मे मदनो धैर्य्यं दुद्यूषति निरङ्कुश: ॥ २६ ॥
तथाऽच्छो लक्ष्यते प्रस्तेक्षणे ! स्नेहो न ते मयि ।

---

वच्मीति । अहं त्वां इति वच्मि ब्रवीमि हि यस्मात् विदभां विदो ज्ञानी तत्तुल्यां त्वां मन्यते लोक इति शेष: । हे सुन्दरि ! अस्य व्याधस्य त्वयि इन्दौ चन्द्रे किं मनो-विलोपो मनसो लय: किं न आसीत् अपि तु अभवदेव तत् तस्मात् असौ व्याधो मृत एव पुनर्यत् जिघांस्यते त्वयेति शेष: तत् पिष्टपेषणमेव तथाहि मृतस्य मनश्चन्द्रे विलीयते इति श्रुते: त्वयि चन्द्रे अस्य मनसो विलोपात् अयं मृत एव इति भाव: । पक्षे । त्वमि-त्यत्त्वं शिष्यावधानाय । किमित्यादिकं उं । विदभां ६॥, ( हि ) मन्यते ८।, मन: १।, विलोप: १।, न १।, ॥ २५ ॥

दयेति । हे दयागुणे ! हे उडुराजमुखि ! चन्द्रमुखि ! हे भामिनि ! क्रोधशीले ! सेवस्य किङ्करस्य मे मम प्राणान् अव रक्ष । मदन: काम: निरङ्कुश: अनिवार्य्य: सन् मम धैर्य्यं दुद्यूषति जेतुमिच्छति । पक्षे । दय इति सं । उ राजमुखीतिचन्द्रमुख्या: सं । अगुणे ७', वसे ७।, वस्य ६।, उट् १।, ॥ २६ ॥

तथेति । हे प्रस्तेक्षणे ! प्रशस्तनयने ! मयि ते तव अच्छो निर्म्मलतया स्नेह:

व्याकरणम् ।

विदभां हि मन्यते मनो विलोपो न । दम्भिन्नानां मनयोर्लोपो न मन्यते सनि । जिघांस्यते ॥ २५ ॥

अगुणे वसे वस्योट् । दुद्यूषति ॥ २६ ॥

प्रश्नेऽवलम्बसे मौनं दरिद्रासि वचस्यपि ॥ २७ ॥

अथ तद्वचसि अनुत्तरिते सखीजनेषु च मुखमाच्छाद्य हसत्सु शाकुनिकः अवाङ्मुखो दीर्घं निःश्वस्य निश्चक्राम। अथ पथि विवेचयति साधूक्तं प्रियया विरजया यतः।

इष्टौ न तौ तयोर्वाऽवेऽसूनां न दिदिवान् फलम्।
पुमान् यो व्यर्थसमयो यो वा व्यर्थमनोरथः ॥ २८ ॥

अतो मे मनोरथप्रतिज्ञोभयसाधनार्थं गङ्गामरणमेव श्रेय इति निश्चितं दुद्यूषानहम्।

( अपि च ) लोपेऽपि मुहुरर्थस्य यस्येत् मानस्य रक्षणे।
वेवेश्म्यर्थः पुनः प्राप्यो मानो नावर्त्तते हतः ॥ २९ ॥

---

प्रीतिर्न लक्ष्यते न ज्ञायते। अन्यत् सुगमं। पक्षे। ते इत्यादिकं उं। तथा ७।, कः ६।, लक्ष्यते ८।, प्रः १।, ॥ २७ ॥

इष्टाविति। यः पुमान् व्यर्थसमयो व्यर्थप्रतिज्ञः स्यात् यो वा पुरुषो व्यर्थमनोरथोऽसिद्धमनोरथः स्यात् तौ पुरुषौ नेष्टौ नाभिलषितौ तयोः पुरुषयोः असूनां प्राणानां अवे वा रक्षणे वा फलं न दिदिवान् न ज्ञातवानित्यर्थः। दिवधातोर्गत्यर्थकत्वेन ज्ञानार्थकत्वात्। पक्षे। असूनामित्यादिकं उं। इष्टौ १॥, न १।, तौ १॥, तयोः ६॥, ( वा १। ) वे ७।, ॥ २८ ॥

लोपेपीति। अर्थस्य धनस्य लोपेपि नाशेपि मानस्य रक्षणे मुहुः पुनःपुनर्यस्येत् यत्नं कुर्य्यात्। अत्र हेतुमाह। अर्थः पुनः प्राप्यः नष्टमपि धनं पुनः प्राप्यते इत्यर्थः। मानो हतः सन् न आवर्त्तते पुनर्न प्राप्यते इति वेवेश्मि जानामीत्यर्थः विच्छधातोर्गत्यर्थक-

व्याकरणम्।

तथा च्छो लक्ष्यते प्रः। छकारस्य प्रकार आदिश्यते तथा अगुणे वसे इत्यर्थः। प्रश्ने ॥ २७ ॥

इष्टौ न तौ तयोर्व्वा वे। तयोर्मकारछकारयोः अगुणे वकारे परे तौ ऊट्प्रकारौ वा इष्टौ न? वास्त इत्यर्थः। दिदिवान् ॥ २८ ॥

तस्मात् बहुशोऽवमानितस्य मे देहोऽपि निष्फल इत्यपि वेवेक्मि। यच्चोक्तं विरजया गङ्गामरणं तवेष्टसाधनमिति तदपि न मृषा भवितुमर्हति। यतः।

> अपि कौका मृषा वक्ति तथापि कापि मित्रह्नः।
> न तद्वञ्चयते कोऽपि अचद्यूः पणिते यथा ॥ ३० ॥

इति मित्रं मां प्रति तस्या वञ्चना न सम्भवतीति तदुक्तं सत्यं मन्ये। किन्त्वेवं शङ्के गङ्गामुक्तिदेति कथं ममेष्टसिद्धिः स्यात् विमृश्य आः भ्रान्तोऽस्मिफलाभिसन्धानरहितानामेव सा मुक्तिदा न फलं दिद्यूषाणामतो विरजैव मम मुक्तिं प्रतिबध्नाति नात्र सन्देहः। इति तद्वचसि निष्ठया तत्प्राप्तिकामो गङ्गामरणं सङ्कल्प्य गङ्गाया-मवततार। अथ विरजा सखीं प्रति। सखि! कथमद्य स शाकु-निको न दृश्यते अतोऽहमिति मन्ये।

> कामिनाऽमोत्सुणा तेन गाङ्गे देहो मयोदिते।

---

त्वेन ज्ञानार्थकत्वात्। पद्ये। इत् इत्यादिकं उं। लोपे ७।, (अपि) मुहुरर्थस्य ६।, यस्य ६।, ॥ २९ ॥

अपीति। कौका: कुः पृथ्वी ओकः स्थानं यस्येति कौकाः मर्त्यः मृषा मिथ्या अपि वक्ति तथापि कोपि मित्रह्नर्जनस्तत् मित्रं न वञ्चयते अर्थात् मित्रमाहृय कोपि न तत् मित्रं वञ्चयते इति। यथा अचद्यूः अचक्रीड़कः पणिते पणीकृते धने वञ्चयति तथा न वञ्चयतीत्यर्थः। पद्ये। केत्यादिकं उं। (अपि) कौ ७।, ॥ ३० ॥

कामिनेति। अमोत्सुणा मुक्तिमनिच्छुना कामिना कामुकेन तेन व्याधेन गाङ्गे

## व्याकरणम्।

लोपेऽपि मुहुरर्थस्य यस्य। मुहुरर्थकस्य यकारस्य लोपेपि अर्थात् यङ्लोपेपि वकारककारयोरुट्भकारौ वास्तः वसे परे। वेवेक्मि ॥ २९ ॥

अपि कौ। कौ परेऽपि वकारककारयोरुट्भकारौ स्तः। मित्रह्नः अचद्यूः ॥ ३० ॥

मान्यगाढेन वाऽमोचि सखि! मुक् स न्यदर्शि यत्॥ ३१॥

अन्यथा। यो सोऽजिघृक्षत् पाणिं किं सोऽधुना नेत्स्यतेऽग्रहः।

सदा स्वपोऽजिरेऽस्मिन् यो नेह किं स सुषुप्सति॥ ३२॥

अतो भवत्यस्तं अन्वेषयन्तु। अन्यथा कौतुकानभिज्ञः स गङ्गायां प्राणांस्त्यक्ष्यति। विरजां प्रति सखी।

एष प्रश्नोऽपि गृह्येषु व्यग्राभिर्दुर्लभक्षणः।

पिपृच्छिषन्तु रसिकाः कामिन्यः किल कामिनम्॥ ३३॥

---

गङ्गाजले देहो वा अमोचि त्यक्तः। कीदृशेन मयोदिते मम वचसि मान्यं प्रामाण्यं गाढं दृढं यस्य तादृशेन सता इत्यर्थः। हे सखि! यत् यस्मात् स व्याधः मुक् मूढः न्यदर्शि दृष्ट इत्यन्वयः। पक्षे। मान्यगा इति मानिनां सं। अन्यत् स्पं। ढे ७।, न १।, वा १।, मोचि १।, सखि १', मुक् १।, सनि ७', अदर्शि ८।, ॥ ३१॥

य इति। यो व्याधः मे मम पाणिं अजिघृक्षत् ग्रहीतुमैच्छत् सः अग्रहः अबोधः किं कथं अधुना नेत्स्यते। यः सदा अस्मिन् अजिरे स्वपः शयनशीलः स किं कथं इह अजिरे न सुषुप्सति न शयितुमिच्छति। पक्षे। अधुनेत्यन्तमुदाहरणवाक्यं। ए इति सम्बोधनं अस्मिन्नित्यादिकमुदाहरणवाक्यं। ईत्स्यते ८।, ग्रहः ६।, सदा ७।, स्वपः ६।, जिः १।, ॥ ३२॥

एष इति। गृह्येषु गृहकर्म्मसु व्यग्राभिरासक्ताभिः एष प्रश्नोपि जिज्ञासापि दुर्लभक्षणः दुर्लभः क्षणः समयो यस्य स तथा। तथा हि गृहकृत्येषु व्यग्रचित्तानां एतत्

व्याकरणम्।

ढे न वा मोचि सखिमुक् सन्यदर्शि। खिसहितो मुचधातुर्मोचि स्यात् सनि इति अदर्शि। ननु ढे अर्थात् अकर्म्मकद्विरुक्तमुचधातोर्मोच स्यात् सनि परे वा। अमोचुणा ॥ ३१॥

ईत्स्यते ग्रहः सदा स्वपो जिः। ग्रहः स्वपश्च नित्यं जिः स्यात् सनि दृश्यते। अजिघृक्षत् सुषुप्सति॥ ३२॥

अथ शाकुनिकस्तत्काममुद्दिश्य गङ्गायामुनसङ्गमे देहं तत्याज। अथ चतुर्भुजरूपधरं तं विष्णुदूता आगत्य अहो धन्योऽसि सारूप्यमुक्तिमाप्तोऽसि इदानीं तल्लोकं गच्छ। स आह मम सा वल्लभा विरजा क्व?। विष्णुदूता आत्मगतम्। अनन्तरं सानुकम्पम् अहह नारायण! भवतायं वञ्चितः तव मायां को वेद। स्वगणं प्रति।

स्मराख्योऽरिर्विदां ज्ञेयो जये तस्य यतेत यः।
अधो जिजावयिषति मोक्षद्वारं रुणद्धि च ॥ ३४ ॥

अहो अहो पश्य तथापवर्गतोऽयलोऽपि विस्रंसित एष हृद्भुवा।
सालोक्यदासुक्ततनुः पराङ्गनासङ्गप्रसङ्गं प्रविभावयिष्य हि ॥ ३५ ॥

---

प्रच्छस्य अवसरो नास्तीत्यर्थः। रसिकाः कामिन्य एव कामिनं पिपृच्छिषन्तु। पक्षे। म्लछेष्वित्यादिकं ज्ञ॑। एषः १।, प्रच्छः ६।, ( अपि ) ॥ ३३ ॥

स्मरेति। स्मराख्यः कन्दर्पनामा अरिः विदां ज्ञानिनां ज्ञेयः बोद्धव्यः तस्य शत्रोर्जये यतेत यत्नं कुर्वीत। यः कामः ध्रुवः अधो जिजावयिषति अधःपातयितुमिच्छति मोक्षद्वारं रुणद्धि च रोधं करोति च। पक्षे। स्मर इति शिष्यावधानाय तस्येत्यादिकं ज्ञ॑। ज्वोः ६।, इः १।, ( विदां ज्ञेयः ) जः ५।, ए ७।, ॥ ३४ ॥

अहो इति। अहो आश्चर्यं तथा पश्य तदेव पश्य एषः व्याधः सालोक्यदासुक्ततनुः सालोक्यं मुक्तिविशेषस्तत्प्रदा गङ्गा तस्यां मुक्तशरीरः अयलोपि अयः शुभावहो विधिस्तद्भागपि हृद्भुवा कन्दर्पेण अपवर्गतो मोक्षात् विस्रंसितः पातितः। किं कृत्वा पराङ्गनासङ्गप्रसङ्गं प्रविभावविष्य प्रकर्षेण भावयित्वा स्मारयित्वा इत्यर्थः। पक्षे। पश्येत्यन्तं शिष्यावधानाय। अन्यत् ज्ञ॑। तथा १।, पवर्गतः ५।, यलः ५।, ( अपि ) ॥ ३५ ॥

व्याकरणम्।

एष प्रच्छोऽपि। प्रच्छोपि एष विधिः अर्थात् जिः स्यात्। पिपृच्छिषन्तु ॥ ३३ ॥

ज्वोरिर्विदां ज्ञेयो जये। छिद्रवर्णस्य इः स्यात् जकारात् परे अवर्णे परे। जिजावयिषति ॥ ३४ ॥

तथा पवर्गतो यलोऽपि। छिद्रवर्णस्य इः स्यात् पवर्गात् यलाच्च परे अवर्णे परे। प्रविभावयिष्य ॥ ३५ ॥

तद्भवतु एवं चिन्त्यते यद्गङ्गामृतादेहस्य चतुर्भुजरूपधरस्य सारूप्यमुक्तिमाप्तस्य कथं भुवि विजिहीर्षा सम्भवति।

वेदद्रोर्वाऽसंख्यशाखाः फलमिच्छानुरूपकम्।
स हि तद्वेद योऽर्थेऽस्मिन् दिद्रावयिषति ह्यमुम्॥ ३६॥

पुनर्व्याधं प्रति। अहो सिद्धोऽसि मुक्तोऽसि दिव्यं चतुर्भुजधरं नवं शरीरञ्चाप्तोऽसि इदानीं सहसैव स्वर्गं गच्छ। व्याधस्तान् प्रति।

किं मे लभो भवेद्वासहसादिव्युपधावतः।
किन्नवः स्वर्ग्यदेहो मे कुर्य्यान्मुमुदिषोर्भुवि॥ ३७॥

दिव्यपुरुषाः। हत हत तपःफलेन वञ्चितोऽसि इत्युक्त्वा ते जग्मुः। अथ शाकुनिक उच्चैरुरोद। अथ विष्णुरागत्य व्याधं प्रत्याह।

---

वेदेति। वेदद्रोः वेदरूपवृक्षस्य असङ्ख्यशाखाः तस्य फलं वा इच्छानुरूपकं इच्छासदृशं तत्तु स एव वेद जानाति अर्थात् ईश्वर एव जानाति। य ईश्वरः अमुं व्याधं अस्मिन्नर्थे भुवि विहाररूपकार्य्ये दिद्रावयिषति धावयितुमिच्छति। पक्षे। असङ्ख्येत्यादिकं छं। द्रोः ६।, वा १।, ॥ ३६॥

किमिति। सहसा दिवि स्वर्गे उपधावतो गच्छतो मे मम किं लभो वा को लाभो वा भवेत् नवो नूतनः स्वर्ग्यदेहोपि भुवि मुमुदिषोर्मोदितुमिच्छोर्मे किं कुर्य्यात्। पक्षे किं मेल इति किञ्चिन्मेलनस्य सं। स्वर्ग्येत्यादिकं छं। भवेत् ८।, वा १।, स १।, हसादिव्युपधावतः ५।, कित् १।, न १। वः ५।, ॥ ३७॥

व्याकरणम्।

द्रोर्व्वा। द्रुधातोस्तथा वा स्यात्। दिद्रावयिषति॥ ३६॥

भवेद्वा स हसादिव्युपधावतः किन्नवः। उकारेकारोपधात् हसादेर्धातोः परः स सन् कित् वा स्यात् नतु वान्तात्। मुमुदिषोः॥ ३७॥

मारुदो विन्मुषो नित्यं य आसंस्ते पुराऽरयः ।
अहो मुमुषिषन्त्येतेऽमुत्रापि तव शेमुषीम् ॥ ३८ ॥

तद्भवतु । लप्स्यसे तां वरारोहां सारूप्यं प्राप्य तत्पतेः ।
मत्सारूप्यं करस्थं ते त्यक्तुं रुरुदिषत्यलम् ॥ ३९ ॥

अतस्तत्र गच्छ इत्युक्त्वा विष्णुरन्तर्दधे । अथ शाकुनिकः । विष्णुसारूप्ये तिरोहिते वैश्यस्वरूपो भूत्वा विरजाश्रमं चलितः । अथ चिरप्रोषिते ऋतधामवैश्ये वाणिज्यात् प्रत्यागते पुरीं प्रविशति शाकुनिकोऽपि तदैव तत्पुरीं प्राविविक्षत् ।

तावागतौ सवयसौ समवेशभूषौ
तुल्याकृती समगती समकान्तिभावौ ।
बालालिभिर्विविदिषुर्नहि साधिगन्तुं
वैषम्यमण्वपि तयोरशकत् विचित्ता ॥ ४० ॥

---

मेति । मारुदः रोदनं माकुरु पुरा पूर्व्वकाले ते तव विन्मुषः वित् ज्ञानं तन्मुष-स्तदपहारका ये अरयः शत्रवः अर्थात् कामाद्याः नित्यं आसन् अहो आश्चर्य्यं एते अरयः अमुत्रापि परलोकेपि तव शेमुषीं बुद्धिं मुमुषिषन्ति अपहर्त्तुमिच्छन्ति । पद्ये । माइति मानकर्त्तुः सं । य इत्यादिकं उं । रुदविन्मुषः ५।, नित्यं १।, ॥ ३८ ॥

लप्स्यसे इति । तत्पतेस्तस्या विरजायाः पत्युः सारूप्यं समानरूपत्वं प्राप्य तां वरारोहां सुन्दरीं लप्स्यसे किन्तु ते तव करस्थं मत्सारूप्यं मुक्तिविशेषः त्यक्तुं सत् अलं अत्यर्थं रुरुदिषति रोदितुमिच्छति । पद्ये । सूत्रस्य उं ॥ ३९ ॥

ताविति । तौ वैश्यशाकुनिकौ आगतौ सवयसौ समानवयस्कौ सा बाला विरजा आलिभिः सखीभिः सह विविदिषुः ज्ञातुमिच्छुः सती तयोः अण्वपि स्वल्पमपि वैषम्यं वैलक्षण्यं अधिगन्तुं ज्ञातुं नहि अशकत् । पद्ये । सूत्रस्य उं ॥ ४० ॥

व्याकरणम् ।

रुदविन्मुषो नित्यं । रुदविदमुषः परो नित्यं स्यात् । मुमुषिषन्ति ॥ ३८ ॥
रुरुदिषति ॥ ३९ ॥ विविदिषुः ॥ ४० ॥

वैश्योऽपि तत्सर्वं वीक्ष्य आः किमेतत् ।

एषोऽहम्वाऽसावहम्वा सोऽहम्वा नापरोऽप्यहम् ।

स्वप्नो वा विभ्रमो वेति स विट् तस्थौ बुभुत्सया ॥ ४१ ॥

( अनन्तरं ) कस्त्वं त्वं कः कुतोऽसि त्वं त्वं कुतो निःसराश्वितः ।

त्वं निःसरेः कथं नेति तयोरासीत् दिदेविषा ॥ ४२ ॥

अथ विरजा विषीदन्ती नारायणं शरणं जगाम । देव ! एतत् तव माययैव वा ममैव कर्म्मविपाको वा भवतु । मम तु इदानीं मरणमेव श्रेयः ।

सुखैश्वर्य्यभरादिम्वा सम्भोगं नार्थये विभो ! ।

त्वत्पादाब्जेऽचलां भक्तिं परं बिभरिषाम्यहम् ॥ ४३ ॥

---

एष इति । अहं एषोऽस्मि यद्वा असौ अहमस्मि । अहम्वा सोऽहं न । अपरो वा अहमस्मि । असौ स्वप्नो मतिभ्रमो वेति ज्ञात्वा स विट् वैश्यः बुभुत्सया बोद्धुमिच्छया तस्थौ । पथ्ये । उं ॥ ४१ ॥

कइति । कस्त्वं अस्योत्तरं त्वं कः ? त्वं कुतोऽसि अस्योत्तरं त्वं कुतः ? इतः आशु शीघ्रं निःसर अस्योत्तरं त्वं न कथं निःसरेः ? इति तयोर्दिदेविषा जिगीषा आसीत् । पथ्ये । उं ॥ ४२ ॥

सुखेति । हे विभो ! सुखैश्वर्य्यभरादिं सुखातिशयैश्वर्य्यातिशयादिं सम्भोगं वा न प्रार्थये । परं केवलं अचलां भक्तिं बिभरिषामि भर्त्तुमिच्छामि । पथ्ये । सुखैश्वर्य्य इति तद्विशिष्टस्य सं । सम्भोगमित्यादिकं उं । भरात् ५।, इम् १।, वा १।, ॥ ४३ ॥

व्याकरणम् ।

बुभुत्सया ॥ ४१ ॥

दिदेविषा ॥ ४२ ॥

भरादिम्वा । भरतेरिम् वा स्यात् । बिभरिषामि ॥ ४३ ॥

त्वामाश्रितो वा पतितोऽप्युदञ्चति
त्वामाश्रितो नैव पतत्यपि क्वचित् ।
शिश्रीषति त्वां पतनात् बिभेति यः
स एव नो शिश्रयिषत्यनीदृशः ॥ ४४ ॥

मानवीयतनुयुतः सन् ज्ञपर्द्धिदरिद्रोऽपि गृणाति यत् त्वाम् ।
असदृशं त्वयि तद्विभो ! श्रुतिरपि सभयं जिज्ञपयिषति यत् त्वाम् ॥ ४५ ॥

वेदाः स्तुतिं तितनिषन्ति सुरासुराद्या
अप्येवमेव किमु नौमि न वाऽबलाहम् ।

---

त्वामिति । पतितोपि त्वामाश्रितः सन्नेव उदञ्चति उच्छ्रिति त्वामाश्रितो जनः क्वचिदपि नैव पतति । यः पतनात् बिभेति स एव त्वां शिश्रीषति । अनीदृशः पतनाद्भीतो जनः अर्थात् पाषण्डो जनः न त्वां शिश्रयिषति । पद्ये । सम् इति सान्तस्य सं । त्वामित्यस्य वदामीतिशेषः । श्रितः ५।, वा १।, पतितः ५।, (अपि) ॥ ४४ ॥

मानवीति । मनुष्यशरीरयुक्तोपि सन् ज्ञपर्द्धिदरिद्रः ज्ञपः ज्ञानं जानातेर्घटादित्वस्य वैकल्पिकत्वात् । तद्रूपा या ऋद्धिः सम्पत् तद्दरिद्रः ज्ञानरूपसम्पत्शून्य इत्यर्थः एतादृशजनो यत् त्वां गृणाति स्तौति हे विभो ! तत् त्वयि असदृशमेव । यत् यस्मात् श्रुतिरपि सभयं यथा स्यात् तथा त्वां जिज्ञपयिषति स्तौति । पद्ये । मानवीय इति सं । गृणातीत्यादिकं उ' । तनुयुतः ५।, सन् ज्ञपर्द्धि दरिद्रः ५।, (अपि) ॥ ४५ ॥

वेदा इति । वेदाः सुरासुराद्या अपि स्तुतिं तितनिषन्ति विस्तारयितुमिच्छन्ति अबला अहं एवमेव एतादृशमेव किं कथं नु भोः न वा नौमि स्तौमि । ननु अबलायास्तव

## व्याकरणम् ।

श्रितो वा पतितोऽपि । श्रिधातोः पतधातोश्च इम् वा स्यात् । शिश्रयिषति शिश्रीषति ॥ ४४ ॥

तनु युतः सन् ज्ञपर्द्धि दरिद्रोपि । तन यु तन् ज्ञप ऋध दरिद्राभ्यः सन् इम् वा स्यात् । जिज्ञपयिषति ॥ ४५ ॥

यत्त्वत्पदाब्जमहिमार्णवपारयाने
नाथाऽबला हि सकलाः सबला न केऽपि ॥ ४६ ॥
या निःसृता विधिमुखात् स्तुतिवाक् स्रवन्ती
निम्नोत्तरा प्रतिपदाऽमृतवाहिनी च ।
युष्मत्पदाब्जमहिमाम्बुनिधिं दविष्ठं
सम्भित्सुरप्यहह साप्यशकन्न गन्तुम् ॥ ४७ ॥
हे कृष्ण ! हे द्रुपदजाम्बर ! दीनबन्धो !
हे पाण्डवेय विपदर्णव सेतुबन्ध ! ।
हे कृष्ण ! हासुरहृतश्रुतिभीतिहारिन् !
हे कृष्ण ! मामव गजेन्द्रसमुद्दिधीर्षो ! ॥ ४८ ॥

---

का शक्तिरित्यत आह । हे नाथ ! यत् यस्मात् तव पादाब्जमहिमार्णवपारगमने सकला एव अबला असमर्थाः । केऽपि न सबला न समर्थाः । पद्ये । सूत्रस्थ उं ॥ ४६ ॥

येति । या स्तुतिवाक् स्रवन्ती अर्थात् श्रुतिरूपा तव स्तुतिवाक्यनदी विधिमुखात् निःसृता । कीदृशी निम्नोत्तरा निम्नानां गभीराणां मध्ये श्रेष्ठा । प्रतिपदं प्रतिस्थानं स्तुतिपक्षे प्रतिपदं प्रतिवाक्यं अमृतवाहिनी । सम्भित्सुरपि सिन्धुसङ्गममिच्छुरपि दविष्ठं अतिदूरस्थं तव पदाब्जमहिमाम्बुनिधिं गन्तुं सा न अशकत् । अहह अद्भुते स्रवन्ती निम्नगापगा इत्यमरः । पद्ये । उं ॥ ४७ ॥

हे कृष्णेति । हे द्रुपदजायाः द्रौपद्या वस्त्रस्वरूप ! असुरैर्हृता याः श्रुतयस्तासां भीतिहारिन् ! गजेन्द्रं उद्दिधीर्षो उद्धर्तुमिच्छो ! हे कृष्ण ! मामव रक्ष । पद्ये । उं ॥ ४८ ॥

## व्याकरणम् ।

तितनिषति ॥ ४६ ॥
सम्भित्सुः ॥ ४७ ॥
समुद्दिधीर्षो ॥ ४८ ॥

अथ विष्णुस्त्वामाविरासीत् । ततः सा यथाविधि प्रणम्य देवाह-
मद्य विपदर्णवमग्नास्मि उद्धर । विष्णुः । अनुश्रोष्यामि ।

दृष्ट्वाऽस्मि पूतो भवतीम् रक्षितो हि सदा त्वया ।
धर्मोऽतः साध्वि ! दर्शस्ते पिपावयिषतेऽखिलम् ॥ ४९ ॥
एष प्रच्छ उदेतिस्म तत् द्वैधं छेत्तुमर्हसि ।
यद्यञ्जिजिषसेऽव्यक्तं ब्रूहि तन्मां पिपृच्छिषुम् ॥ ५० ॥

प्रश्नो यथा ।

रक्षेत् सतीत्वं सत्यञ्च द्वयमेव समं सती ।
नचेत् लोकद्वयमपि तां सिस्मयिषते तिरम् ॥ ५१ ॥
स्वधर्मं पालयेन्नित्यं धर्म्मो रक्षति धार्म्मिकम् ।
धर्म्म एवारिरिषति लोकं पिपतिषुं सह ॥ ५२ ॥

---

दृष्ट्वेति । भवतीं दृष्ट्वा अहं पूतोऽस्मि । हि यस्मात् त्वया धर्म्मः सदा रञ्जितः प्रीणितः अतः कारणात् हे साध्वि ! तव दर्शो दर्शनं अखिलं पिपावयिषते पावयितुमिच्छति । पक्षे । दृष्ट्वेत्यस्य बुध्यस्वेतिशेषः त्वयेत्यादिकं च । अस पुवः ६।, भवति ८।, इम् १।, ( ऋट अञ्जित ) रञ्जित ६।, ( हि ) सदा ७।, ॥ ४९ ॥

एष इति । एषः प्रच्छः प्रश्नः । यदि एतदव्यक्तं अञ्जिजिषसे व्यक्तीकर्तुमिच्छसि तदा पिपृच्छिषुं प्रष्टुमिच्छुं मां ब्रूहि । एषः १।, प्रच्छः ६।, उदेति ८।, ॥ ५ ॥

रक्षेदिति । चेत् यदि तदुभयं न रक्षेत् तदा लोकद्वयमपि तां सतीं तिरो वक्रं सिस्मयिषते उपहसतीत्यर्थः । पक्षे । सूत्रस्य उदाहरणम् ॥ ५१ ॥

व्याकरणम् ।

स्निपूती भवतीम् रञ्जितो हि सदा । स्मिङ् पूञ ऋट अञ्जोपि इम् स्यात् सनि नित्यं । पिपावयिषते ॥ ४९ ॥

एष प्रच्छ उदेति । प्रच्छधातोरपि सनि इम् स्यात् । पिपृच्छिषुं, अञ्जिजिषसे ॥५०॥

सिस्मयिषते ॥ ५१ ॥

( तथा ) नास्ति सत्यात् परो धर्म्मः सत्यं धर्म्मांस्तितांसति ।
सत्ये नष्टेऽखिलं नष्टं सत्यं मोक्षं सिसासति ॥ ५३ ॥

तस्मात् सतीत्वधर्म्मः सत्यञ्च मम पालनीयम् ।

यत्रैतयोरेकतरत्र रक्षिते क्षतिस्तयोरन्यतरस्य जायते ।
तस्मिन् बुभूर्षेत् कतरत्तयोः सतो सती तयोर्व्वा कतरत् समुत्सृजेत्॥५४

एष मम प्रश्नः । विरजा । देव! तयोरेकतरस्मिन् नष्टे तदुभयमेव नश्यतीति कथं तयोरेकस्मिन् त्यक्ते अन्यतररक्षा सम्भवति । तस्मात् ।

उभावपि विरोधेऽपि सम्यक् तिष्ठासतो यया ।
श्रित्वा तां चातुरीं तत्र पालयेत्तदुभावपि ॥ ५५ ॥

तदुक्तं । "या लोकद्वयसाधनी तनुभृतां सा चातुरी चातुरीति" ।

विष्णुः साधु साधु यद्येवं तदा ।

आयातः पतिरेष ते गृहमसौ नाम्ना पुनर्जाङ्गलिः
सत्येनैव भवान्तरे पतितया प्राक् स्वीकृतो यस्त्वया ।

---

स्वधर्म्ममिति । लोकं परलोकं पिपतिषुं गन्तुमिच्छुं जनं धर्म्म एव सह आरिरिषति सहगन्तुमिच्छति । पद्यं । सूत्रस्य उ ॥ ५२ ॥

नास्तीति । तितांसति विस्तारयितुमिच्छति जनयतीत्यर्थः । सिसासति दातुमिच्छति । पद्यं । उ ॥ ५३ ॥

यत्रेति । यत्र स्थले तयोः सत्यधर्म्मयोरेकतरत्र एकस्मिन् रक्षिते सति तयोरन्यतरस्य क्षतिर्नाशो भवति अर्थात् तदुभयरक्षा यत्र न भवति तत्र स्थले सती तयोर्म्मध्ये कतरत् किम्वा बुभूर्षेत् रक्षेत् कतरत् वा सती समुत्सृजेत् त्यजेत् । पद्यं । उ ॥ ५४ ॥

उभाविति । विरोधेपि विरोधस्थलेपि यया चातुर्य्या उभावपि सत्यधर्म्मौ सम्यक् तिष्ठासतः स्थातुमिच्छतः । तां चातुरीं श्रित्वा अवलम्ब्य तदुभावपि सत्यधर्म्मौ उभावपि पालयेत् नत्वेकं त्यजेदित्यर्थः । पद्यं । उ ॥ ५५ ॥

व्याकरणम् ।

आरिरिषति ॥ ५२ ॥ तितांसति सिसासति ॥ ५३ ॥
बुभूर्षेत् ॥ ५४ ॥ तिष्ठासतः ॥ ५५ ॥

गङ्गामुक्ततनुस्त्वदृत्तनियतोऽन्वागादिदानीं त्वया
प्राज्ञे ! सत्यसतीत्वरक्षणविधौ का चातुरी लभ्यते ॥ ५६ ॥

अथ विरजा पूर्ववृत्तान्तमनुस्मृत्य मुमूर्च्छ । अनन्तरं विष्णुकरस्पर्शात् प्राप्तसंज्ञा भयात् वेपमाना उच्चैरुरोद । आह च ।

धर्म्मं सत्यं भवानेव तद्रक्षारक्षकोऽप्यसि ।
चातुरी च भवानेव तान्तु त्वं वेत्थ नापरः ॥ ५७ ॥

विष्णुः माभयं इमौ द्वावपि तव धर्म्मतः पती आभ्यां सह निःशङ्कं विहर तस्मात् ते तदुभयं रक्षितमासीत् । विरजा । देव ! तव मायां न जानीमः अयं व्याधः परपुरुषः अस्पृश्यश्च अस्य स्पर्शात् मम देहेन सह सतीत्वं नङ्क्ष्यति । विष्णुः । नायं जाङ्गलिर्व्याधः किन्त्वसावहमेव । यतोऽयं मम सारूप्यमाप्तापि तव सत्यनियन्त्रितः पुनर्द्विभुजोऽभूदतो मां सदा हृदये धारयसि निजपतिमपि मत्स्वरूपतया सेवसे । विरजा । देव ! तवेदृशमनुग्रहमपि निग्रहमिव मन्ये यतः एकस्या द्वौ पती इति लोको मामुपहसिष्यति । विष्णुः । सस्मितं वत्से ! साध्वीस्त्रिया बहुपतित्वं न दूषणावहमिति दृश्यते यद्यपि लोकनिन्दातो बिभेषि तदा आभ्यां पतिभ्यां स्वर्गं गच्छ । इत्युक्त्वा विष्णुरन्तर्दधे । विरजापि तत्क्षणादागतदिव्यरथेन ताभ्यां स्वर्गं जगाम ॥

इति श्रीकृष्णानन्दविरचिते अन्तर्व्याकरणे नाव्यपरिशिष्टनाम नाटके विरजोपाख्यानं नाम सनन्तपरिच्छेदः समाप्तः ॥

---

आयात इति । तव एष पतिर्गङ्गमायातः । असौ पुनर्नाम्ना जाङ्गलिः यो जाङ्गलिस्त्वया भवान्तरे शरीरान्तरे सत्येनैव प्राक् पूर्व्वकाले पतितया पतित्वेन स्वीकृतः । स जाङ्गलिः गङ्गामुक्ततनुः गङ्गायां त्यक्तशरीरः सन् अनु पश्चात् आगात् आगतः ननु कथं न मुक्त इत्यत आह तवर्त्तनियतः तव यत् ऋतं सत्यं तेन नियतः बद्धः । इदानीं हे प्राज्ञे ! बुद्धिमति ! सत्यसतीत्वरक्षणविषये का चातुरी लभ्यते आश्रीयते । अर्थात् कां चातुरीमवलम्ब्य तदुभौ पालयिष्यसीतिभावः ॥

प्रणमत लोका गिरिशं मुहुरतिशयितार्थेऽस्साधीकाश्च ।
स्पृहयति यच्छिल राद्धुं जगदखिलं सोसूयते परा या ॥ १ ॥

सभ्याः । अद्भुतमतीवाश्चर्य्यमिदं श्रुतम् ।
नंनम्ये तत्कर्म्म येनाऽमुत्राटोऽर्त्तेश्च कर्म्मणा ।
नीचोऽप्युत्तमया साध्व्या सह क्रीडन्नटाट्यते ॥ २ ॥

सुबन्धुः । नैतच्चित्रम् ।
अवेक्ष्यैतत् कर्म्मसूत्रसूचितोऽशः परत्र च ।
न शुभो वाऽशुभो वा यत् कर्म्म वाऽश्नाश्यते पुमान् ॥ ३ ॥

---

प्रणमेति । हे लोकाः ! अत्यन्तमतिशयितार्थे अतिशयितो योऽर्थः प्रयोजनीभूतः पुरुषार्थो मोक्षादिस्तदर्थं गिरिशं शिवं मुहुः प्रणमत एकाच अद्वितीयापि सा आद्या काली यं शिवं राद्धुं आराधयितुं स्पृहयति परा सर्व्वोत्कृष्टा परमात्मभूता वा अखिलं जगत् सोसूयते । अत्र राधधातोः साधनार्थत्वेन स्पृहयतीत्यनेन च सम्बन्धाभावात् न चतुर्थी । पद्ये । पूर्व्वचरणं मङ्गलार्थं परभाग उदाहरणवाक्यं । मुहुरतिशयार्थे ७, ऋसाधीकाच: ५।, स्पृहयति ५, यङ् १।, ॥ १ ॥

नंनम्य इति । तत्कर्म्म तस्य व्याधस्य कर्म्म नंनम्ये पुनःपुनर्नमामि येन कर्म्मणा अर्त्तेः संसारदुःखात् मोचितः सन् अमुत्राटः परलोकगतः सन् नीचोपि जात्याधमोपि उत्तमजातीयया साध्व्या सत्या सह क्रीडन् सन् अटाट्यते मुहुरटति । अटः ५।, अर्त्तेः ५।, ( च ) ॥ २ ॥

अवेक्ष्येति । परत्र च परलोकेपि न शुभः अशुभो वा अंशो भोगः कर्म्मसूत्रसूचित एव । न शुभ इति न ञुत इति वत् नञोऽकारादेशस्य वैकल्पिकत्वं । यत् यस्मात् पुमान्

व्याकरणम् ।

मुहुरतिशयितार्थेऋसाधीकाचस्पृहयति यङ् । ऋसाधीकाची धातोर्मुहुरतिशयितार्थे यङ् इच्छति । सोसूयते ॥ १ ॥

अटोऽर्त्तेश्च । अटाट्यते ॥ २ ॥

एवं व्याधकन्यापि उत्तमेन सह सशरीरं स्वर्गं ययौ कर्मणैव तदपि श्रूयतां । करालनामा व्याधो द्रविड़े आसीत् ।

सदाऽसच्चरितोग्रश्च गर्हितार्थे प्रवर्त्तते ।
स यङ्करालं चंचूर्य्यमाणं स्माऽमन्यतान्तकम् ॥ ४ ॥
परस्वजप् लुप् दष्टोऽपि सः ॥ ५ ॥

तस्य कन्या विकटा नामासीत् ।

या नार्थेभ्यस्स्पृहयति वक्रे भावे प्रवर्त्तिनम् ।
विद्वेष्टि च न यद्दृष्टिः पुंसि वाव्रज्यते क्वचित् ॥ ६ ॥

---

कर्म्मेत्र अश्नाश्नुते पुनःपुनर्भुज्यते इति एतदवेहि जानीहि । अवेहि ८।, एतत् २।, कर्म्म २।, सूत्रसूचितः ५।, अश्नः ५।, परत्र ७।, ( च ) नशुभः ५।, ॥ ३ ॥

सदेति । स व्याधः सदा गर्हितार्थे प्रवर्त्ततेस्म । कीदृशः असच्चरितोग्रः असत्शील: उग्रो रौद्रः ततस्तयोः कर्म्मधारयः । चंचूर्य्यमाणं गर्हितमाचरन्तं यं करालं भयानकं व्याधं अन्तकं यमं अमन्यत लोका इतिशेषः । (सदा ७।) सच्चरितः ५।, यः ५।, (च) गर्हितार्थे ७।, प्रवर्त्तते ८।, सः १।, यङ् १।, ॥ ४ ॥

परेति ! स व्याधः परस्वजप् परधनचिन्तनः परधनलुप् च दष्टोपि दाष्टकोऽपि धनिन इतिशेषः ! पचे । परस्वेति परेषामात्मीयस्य सम्बोधनं । जप् लुप् दष्टः ५।, (अपि) सः १।, ॥ ५ ॥

येति । या विकटा अर्थेभ्यो धनेभ्यो न स्पृहयति वक्रे कुटिले भावे स्वभावे प्रवर्त्तिनं

व्याकरणम् ।

अवेह्येतत् कर्म्म सूत्रसूचितोऽश्नः परत्र च न शुभः । सूत्र सूच अशिभ्यः परे च एतत् कर्म्म यङ्रूपकर्म्म अवेहि नशुभः । अश्नाश्नुते ॥ ३ ॥

सदा सच्चरितोग्रश्च गर्हितार्थे प्रवर्त्तते स यङ् । सद चर गधातुभ्यो गर्हितार्थे यङ् स्यात् । चंचूर्य्यमाणं ॥ ४ ॥

जप लुप दष्टोपि सः ॥ ५ ॥

सा सखीं प्रति । अजितसेननामा गौडेश्वरोऽस्ति तस्य पुत्रः सुदेवः ।

श्रुतो गुणोऽस्य खे राजा राजतेऽसौ सुधामयः ।
यथा तथैव स क्ष्माभृत् सुतो देदीप्यते भुवि ॥ ७ ॥

स एव कुमारो मम पतिर्भवत्विति लालसा वरीवृध्यते । अथ सखी विहस्य विकटां प्रति ।

दीर्घोऽनितोऽभिलाषोऽयं वर्द्धते हृदि ते सदा ।
अहो चान्द्रीं कलां भाले नेतुं लालस्यते शिशुः ॥ ८ ॥

सखि ! एवं मुखाग्रं मा नय । यतः ।

---

जनं वेष्टि च यद्दृष्टिर्यस्या विकटाया दृष्टिः क्वचिदपि पुंसि न वाव्रज्यते न वक्रं व्रजति । पक्षे । भावेत्यादिकमुदाहरणवाक्यं ॥ यानार्थेभ्यः ५॥, स्पृहयति ८।, वक्रे ७।, ॥ ६ ॥

श्रुत इति । अस्य कुमारस्य गुणः श्रुतः । खे आकाशे असौ सुधामयो राजा चन्द्रो यथा राजते तथैव क्ष्माभृत्सुतो भुवि देदीप्यते । यक्षे चन्द्रे च राजा स्यादितिकोषः । श्रुतः १।, गुणः १।, अस्य ६।, खेः ६।, ॥ ७ ॥

दीर्घ इति । न एति गच्छतीति अनितः स्थिर इत्यर्थः । एतादृशो दीर्घोऽभिलाषो हृदि ते तव सदा वर्त्तते अहो आश्चर्यं चान्द्रीं चन्द्रसम्बन्धिनीं कलां भाले ललाटे नेतुं शिशुर्लालस्यते पुनःपुनरतिशयं वा इच्छति । दीर्घः १।, अनितः ६।, ॥ ८ ॥

व्याकरणम् ।

यानार्थेभ्यः स्पृहयति वक्रे । यानं गतिस्तदर्थेभ्यो वक्रार्थे स्पृहयपि यमितिशेषः । वाव्रज्यते ॥ ६ ॥

श्रुतो गुणोऽस्य खेः । अस्य प्रक्रान्तयङन्तस्य खेर्गुणः श्रुतः । देदीप्यते ॥ ७ ॥

दीर्घोऽनितः । अनकारेतः खेर्दीर्घः स्यात् । लालस्यते ॥ ८ ॥

सन्नारी नृत्वतः कामान् दुरापान् हृदि गोपयेत् ।
कण्ठवाटे वरीवृत्यमानानपि निवर्त्तयेत् ॥ ९ ॥

तवैवं मनोरथो युज्यतेऽपि यतः ।

त्वान्तु श्वपचजातीयां सम्यद्रूपगुणोज्झिताम् ।
उद्वोढुं राजपुत्रोऽसौ न नरीनृत्यते कथम् ॥ १० ॥

विकटा । तपोबलेनैव दुरापमिमं मनोरथं साधयिष्यामि । अतएवोक्तम् ।

"तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि तपस्यत" इत्यादि ।

सखी तां प्रति । सखि ! वृथैव तत् यतः ।

जपादेर्नुन्नपापानां फलत्याशु तपो जपः ।
अतेस्तवाघं दंदह्यमानाया वय एष्यति ॥ ११ ॥

---

सन्नारीति । सन्नारी प्रशंसिता नारी हृदि नृत्वतः नृत् नर्त्तनं तद्विद्यते येषां ते नृत्वन्तः एतादृशान् दुरापान् दुर्लभान् कामान् मनोरथान् हृदि गोपयेत् । हृदीत्यस्य उभयत्रान्वयः । कण्ठवाटे कण्ठपथे वरीवृत्यमानान् पुनःपुनर्व्वर्त्तमानानपि कामान् निवर्त्तयेत् वहिर्गन्तुं निवर्त्तयेदित्यर्थः पक्षे । सन्ना इति प्राप्तानां सम्बोधनं । रीन् १।, नृत्वतः ६।, ॥ ९ ॥

त्वामिति । श्वपचजातीयां श्वानं पचतीति श्वपचो व्याधः तज्जातीयां । एतत्तु घृणासूचनाय । अन्यत् सुगमं । पक्षे । सूत्रस्य उ ॥ १० ॥

जपेति । जपादेर्नित्यवेदाभ्यासादेर्हेतुभूतात् नुन्नपापानां जनानां जपस्तपश्च आशु शीघ्रं फलति फलं जनयति । तथाच पापसत्त्वे जपादिकं न फलं जनयतीति भावः ।

व्याकरणम् ।

रीनृत्वतः । ऋकारवती धोः खेः रीन् स्यात् यङि । वावृत्यमानान् ॥ ९ ॥
नरीनृत्यते ॥ १० ॥

अतस्ते पाणिग्रहसंस्कारमेव दुर्घटं मंमन्ये । विकटा तां प्रति । सत्यं पापसत्त्वे तपो न फलति किन्तु ।

कलुषं दन्दशूकोऽपि नहि दंदश्यते क्वचित् ।
कालीनाम्नो जंजपूकश्चेति शंशप्यते शिवः ॥ १२ ॥

अतस्त्वनाम जंजप्यमानाया अपि निष्पापाया आश्वेव तपः फलिष्यति ।

अतो नो मोहय नु ! मां बालां यां वामलोचने ! ।
आर्त्तां मंमन्यसे तन्मामुत्साहय तपःकृतौ ॥ १३ ॥

सखी । तद्भवतु ।

---

ननु तदा ऽऽदौ व्रतादिभिः पापं शमयिष्यामि इत्यत आह व्रतैर्नियमैरघं पापं दंदह्यमानायास्तव वयो यौवनावस्था एष्यति यास्यतीत्यर्थः । जपादेः ६।, नुन् १।, ॥ ११ ॥

कलुषमिति । कलुषमेव दन्दशूकः सर्पः सोऽपि कालीनाम्नो जंजपूकश्च गर्हितं जपन्तमपि जनं नहि दंदश्यते सम्यक् जपन्तन्तु सुतरामेवेति भावः । इति शिवः शंशप्यते प्रतिजानीते इत्यन्वयः । पद्ये । सूतस्य उं ॥ १२ ॥

अत इति । अतः कारणात् नु भोः सखि ! बालां मां न मोहय हे वामलोचने ! यां मां आर्त्तां दुःखितां मंमन्यसे तत् तस्मात् तपःकृतौ तपःकरणविषये मां उत्साहय । पद्ये । ह्वय इति गन्तुः सं । अतः ६।, नः ६।, मः ६।, ( ह्वय ! नु ! ) ( मां वा ) लां ६॥, यां ६॥, वा १।, ॥ १३ ॥

व्याकरणम् ।

जपादेर्नुन् । जपादेः खेर्नुन् स्यात् यङि । दंदह्यमानायाः ॥ ११ ॥

दन्दशूकः दंदश्यते जंजपूकं शंशप्यते ॥ १२ ॥

अतो नोमः । नान्तस्य मान्तस्य धातोरदन्तस्य खेर्नुन् स्यात् यङि । लां यां वा । लान्तानां यान्तानाञ्च वा स्यात् । मंमन्यते ॥ १३ ॥

तपश्चरेः सोऽत उच्चगुणो नवशशिप्रभः ।
युवराजः पतिस्तेऽस्तु नाचंचूर्य्येऽस्तु ते शुभम् ॥ १४ ॥
सफलोप्यभिलाषस्ते भवेदिति च मन्यते ।
यतः सम्यक् समारम्भाः पंफुल्यन्ते न निष्फलाः ॥ १५ ॥
अथाम्बिकावनं गौरीपीठं पुण्यमुपेत्य सा ।
शंशम्यमाना गिरिजामाराद्धुमुपचक्रमे ॥ १६ ॥

अथ सा अम्बिकामुद्दिश्य ।

सम्पदो नीन्य ईशि ! त्वद्भक्ताः सुरनरादिकान् ।

---

तप इति । तपश्चरेः तपः कुर्य्याः अतस्तपसः स उच्चगुणो नवशशिप्रभो युवराजस्तव पतिरस्तु ते तव शुभमस्तु न आचंचूर्य्ये नाहं गर्हितमाचारं करोमीत्यर्थः । पक्षे । च इति वरुणस्य सं । चरेः ६।, सः १।, अतः ६।, उत् १।, ( च ) गुणः १।, न १।, ॥१४॥

सफल इति । ते तव अभिलाषः सफलोऽपि भवेत् इत्यपि मन्यते । यतो यस्माद्धेतोः सम्यक् समारम्भाः वैधकर्मारम्भाः पंफुल्यन्ते अतिशयं फलन्त्येव न निष्फला भवन्तीति शेषः । सः १।, फलः ६।, ( अपि १। ) ॥ १५ ॥

अथेति । अथानन्तरं सा विकटा अम्बिकावनं पुण्यं गौरीपीठं उपेत्य शंशम्यमाना अतिशयं शान्ता सती गिरिजां आराद्धुं उपचक्रमे समारेभे । पक्षे । सूतस्य ष्ठं ॥१६॥

सम्पद इति । हे ईशि ! ईश्वरि ! त्वद्भक्ताः सुरनरादीन् सम्पदः ऐश्वर्य्याणि नीन्ये प्रापयामास तत् तस्मात् सर्वे जनाः आत्मना यत्नेन त्वां शरणं आपनीपद्यन्ते मुहुरतिशयं वा प्राप्नुवन्ति । अत्र आपधातोः प्राप्त्यर्थत्वेन अतिशयार्थे यङ् । पक्षे । सम् इति वैकव्याप-

## व्याकरणम् ।

चरेः सोऽत उच्चगुणो न । चरधातोः स खिर्हन् स्यात् अत उत् च तस्य च न गुणः । आचंचूर्य्ये ॥ १४ ॥

स फलोऽपि । फलधातोरपि स विधिः स्यात् । पंफुल्यन्ते ॥ १५ ॥

शंशम्यमाना ॥ १६ ॥

तत् सर्वं शरणं त्वामापनीपद्यन्त आत्मना ॥ १७ ॥

इत्यहमपि भवतीं शरणमापन्ना इति तत्राम्बिकामाराधयन्ती तस्थौ । अथ गौड़ाधिपस्य नृपतेः पुत्रो वयस्यान् प्रति ।

यथा सैन्यपतिस्कन्दस्तथैवं मच्चमूपतिः ।
आपनीपत्यमानारीन् निघ्नन् राज्यं ममावति ॥ १८ ॥
भ्रंशादेश न शङ्कास्ति धर्मस्य विषये पितुः ।
यत् वनीवच्यते योऽन्यान् स वनीभ्रश्यते श्रियः ॥ १९ ॥

---

मस्य सं । नीन्य इत्यत्र य इति वायोः सं । अत्र ग्रन्थकृता कृष्णानन्देन नीन्ये इतिपदं कथं प्रयुक्तं केन वा साधितं तन्निर्णेतुं नालं । नीञ्धातोर्लिटः प्रथमपुरुषात्मनेपदैकवचने भ्रमरवयष्टघं कृणामिति सूत्रेण रवौ कृते तृतीयस्वरसंयुक्तं निन्ये इतिपदं भवेत् तद्रूपपदप्रयोगे च व्याकरणपदार्थस्यासङ्गतिः सुतरामत्रैवं श्लोको युज्यते ।

अजनीन् पद एवात्र जनन्यातनुषे जनान् ।
तस्मात्तव पदाम्भोजं पनीपद्यामहे वयम् ॥ १७ ॥

हे जननि ! अत्र पदे अस्मिन् स्थाने जनान् लोकान् अजनीन् जन्मरहितान् आतनुषे करोषि । अजनीन् इति नास्ति जनिर्जन्म येषां तथोक्तान् । मुक्तिं ददासीत्यर्थः तस्मात् कारणात् वयं तव पादाम्भोजं पनीपद्यामहे मुहुरतिशयेन वा प्राप्नुमः । पद्मे । अजेति विष्णोः सम्बोधनम् । नीन् ११, पदः ६१, ॥ १७ ॥

यथेति । स्कन्दः कार्त्तिकेयो यथा सैन्यपतिः मच्चमूपतिः मम सेनापतिः तथैवं आपनीपत्यमानारीन् वक्रं आपततः अरीन् निघ्नन् सन् मम राज्यं अवति रक्षति । पद्मे । यथासैन्येति सैन्यसमीपस्थस्य सं । पतिस्कन्दः ६१, तथा ११, ( एवं ) ॥ १८ ॥

भ्रंशेति । मम पितुर्विषये देशे धर्मस्य भ्रंशादेः शङ्का नास्ति यत् यस्मात् यो जनी-

व्याकरणम् ।

पदो नीन् । पदः खेर्नीन् स्यात् यङि । पनीपद्यन्ते ॥ १७ ॥

पतिस्कन्दस्तथैवं । अनयोरपि खेर्नीन् स्यात् यङि । आपनीपत्यमानान् ॥ १८ ॥

तस्मादहमधुना स्थिरचित्तोऽस्मीति कियत्कालं भवद्भिर्वयस्यैः साद्धं तीर्थाटाव्याच्छलेन देशान् तापसाश्रमानपि द्रष्टुमिच्छामि।

मन्त्रिपुत्रः। कुमार! एवं युज्यते किन्त्वेवं चिन्त्यते।

सोषुप्यमानोऽपि मृदूपधाने मञ्चे भवान् योऽन्वभवन्न शर्म्म।
स्वपोऽजिरे क्व बत तापसानां स त्वं सुखी किन्नु सुखं लभेथाः॥२०॥

(कुमारः) न वशो भविता को वाऽवयवोऽभ्यस्यतो मम।
वावश्ययैव भूस्वापाटनधूर्व्वहनादिकम्॥ २१ ॥

मन्त्रिपुत्रः। एवं भवत्यपि। "भवति विज्ञतमः क्रमशो जन" इति। किन्तु।

ऋतोऽरी राजपुत्र! त्वं राज्ञां ते चेदुपागतम्।

---

ऽन्यान् वनीवच्यते मुहुर्वञ्चयति स जनः श्रियः सम्पदः वनीभश्यते अतिशयं शोभन्ते भवति। भ्रंशादेः ६।, (च) ॥ १८ ॥

सोषुप्येति। यो भवान् मृदूपधाने मृदु उपधानं यस्मिन् तादृशमञ्चे खट्वायां सोषुप्यमानोऽपि मुहुः शयानोऽपि शर्म्म सुखं न अन्वभवत् सुखानुभवं न प्राप्तः। अहो आश्चर्य्यं बत खिदे सुखी स त्वं तापसानामजिरे चत्वरे स्वपः शयानः सन् नुभोः किं कथं सुखं लभेथाः। पचे। अजिरे इत्यत्र ए इति सम्बोधनम्। पूर्व्वभागः उदाहरण-वाक्यम्। स्वपः ६।, जिः १।, ॥ २० ॥

नवश इति। भूस्वापाटनधूर्व्वहनादिकं अभ्यस्यतो मम वावश्यया मुहुर्व्वशीकरणेनैव को वा अवयवो न वशो भविता अपि तु भवितैव। न १।, वशः ६।, ॥ २१ ॥

ऋत इति। हे राजपुत्र! त्वं राज्ञां ऋतः प्रदीप्तोऽरिः शत्रुः यद्यपि ते राजानः

व्याकरणम्।

भ्रंशादेश्च। वनीवच्यते। वनीभश्यते॥ १८॥

स्वपो जिः। स्वपो जिः स्यात् यङि परे। सोषुप्यमानस्य ॥ २० ॥

न वशः। वष्टेर्जिर्न स्यात् यङि। वावश्यया ॥ २१ ॥

चेक्रीयन्ते निबद्धं त्वां तर्हि सर्वं विनङ्क्ष्यति ॥ २२ ॥

इति भावयन् मुह्यामि। कुमारः। मैवं।

जङ्घन्यते चत्रजातिर्युयुत्सूनेव सा यतः।

आत्रवाघ्नीह नो जेघ्नीयतेऽरीनप्यनीदृशान् ॥ २३ ॥

मन्त्रिपुत्रः। एवं। किन्त्वेवं चिन्तयामि।

सदा मञ्चशियोऽयीतोऽगुणयेवेति दृश्यते।

आशय्यते यो मञ्चे स म्लायते विपदाक्रमे ॥ २४ ॥

अतो भवान् दीर्घपथं कथमाक्रमिष्यसि। कुमारः। एतत् पूर्वमेवोक्तं धीसचिव-कर्मसचिवान् प्रति।

---

उपागतं समीपमागतं त्वां निबद्धं चेक्रीयन्ते तर्हि सर्व्वं विनङ्क्ष्यति। चेक्रीयन्त इति आशंसायां क्तौ। ऋतः ६।, रीः १।, ॥ २२ ॥

जङ्घेति। चत्रजातिः क्षत्रियः युयुत्सूनेव युद्धमिच्छूनेव जङ्घन्यते मुहुर्हन्ति यतो यस्मात् सा चत्रजातिः आत्रवाघ्नी आत्रवं शत्रुं आहन्तीति सा तथा। इह लोके अनीदृशान् अयुयुत्सून् अरीनपि शत्रूनपि न जेघ्नीयते। पचे। अ इति ईश्वरस्य सम्बोधनम्। अव ७।, वा १।, घ्नी १।, हनः ६।, ॥ २३ ॥

सदेति। अयि भोः! इतः अस्मिन् लोके सदा मञ्चशियः खट्टाशयानस्य जनस्य अयं अगुण एव गुणविरुद्धो दोष एव दृश्यते। अत्र असुर इतिवत् नञ् विरुद्धार्थकः। "अगुणवान् नार्हः स्यात् पैतृके धने" इतिवत्। अगुणवान् गुणविरुद्धदोषवानिति तद्व्याख्यानाच्च। को दोष इत्यत आह। यः सदा मञ्चे खट्टायां आशय्यते स विपदाक्रमे म्लायते। पचे। सदामञ्चविशिष्टस्य सं। शियः ६।, अय् १।, ईतः ६।, अगुणये ७।, ॥ २४ ॥

## व्याकरणम्।

ऋतो रीः। ऋकारस्य रीः स्यात् यङि। चेक्रीयन्ते ॥ २२ ॥

अव वा घ्नी हनः। हनस्थाने घ्नी वा स्यात् अव यङि। जङ्घन्यते जेघ्नीयते ॥२३॥

शियीऽयीतोऽगुण ये। शीङ इकारस्य अय स्यात् अगुण ये। आशय्यते ॥ २४ ॥

राजा हि नराणां पतिर्दण्डनिग्रहवधबन्धनादिषु प्रभुरितीश्वरबुद्ध्यैव सेवनीयः स हि प्रीत्या भरण्यभुग्भ्यो दत्ते क्वचित् चण्डरूपो सापराधेभ्यस्तेभ्य आदत्ते च यथाऽर्य्यमा मित्रात्मा जीवानामन्नसम्पत्तये अपो देदीयतेऽयं क्वचित् लुगप् च पञ्च तस्मिन् गुणपूर्वकानि विहितानि कार्य्याणि नहि तस्मिंश्च धवस्वरूपग्रहपूर्व्वकमभिहितं तत्कर्म्म विधेयं सदा अनित्ये तु नित्यं नीतस्थिरबुद्ध्या प्रत्येतव्यमिति ॥ २५ ॥

---

राजेति। भरण्यभुग्भ्यो भृत्येभ्यः। अयं सूर्य्यः क्वचित् कर्हिचित् लुगप् च लुम्पन्ते अपनीयन्ते आपो जलानि येन स लुगप्। तस्मिन् राज्ञि अर्थात् तस्य राज्ञः समीपे गुणपूर्व्वकाणि विहितानि कार्य्याणि पञ्च विस्तारय। पञ्च इति पचिक विस्तारे इत्यस्य रूपं यथा सिध्यति तत् अदादिप्रकरणे पञ्चतिवार्त्ते: पञ्च णबादिविधायकसूत्रस्य व्याख्याने उक्तं द्रष्टव्यम्। तथा च राजसमीपे कर्म्माणि गुणांश्च विस्तारय इत्यर्थः। तस्मिंश्च राज्ञि धवस्वरूपग्रहपूर्वकं धवो मनुष्यस्तत्स्वरूपज्ञानपूर्वकं अर्थात् राज्ञि मनुष्यबुद्ध्या तत्कर्म तस्य राज्ञः कर्म अभिहितं राज्ञोक्तं न कार्य्यम्। तथा च राज्ञि ईश्वरबुद्ध्यैव तत्कर्म्म करणीयं उत भोः सदा अनित्ये वस्तुनि नित्यं नित्यत्वं स्थिरबुद्ध्या न प्रत्येतव्यं न निर्णेतव्यं। नित्यमिति भावप्रधाननिर्देशः। यङ् १।, क्वचित् ७।, लुक् १।, अप् १।, ( च ) पं १।, ( च ) तस्मिन् ७।, गुणपूर्वकाणि १॥, विहितानि १॥, । कार्य्याणि १॥, नहि १।, तस्मिन् ७।, ( च ) धवस्वरूपग्रहपूर्व्वकं १।, अभिहितं १।, तत् १।, कर्म्म १।, विधेयं १।, सदा ७।, अनि ७।, त्ये ७।, ( तु ) नित्यं १।, न १।, उत: ५।, स्थिरमत्या ३।, प्रत्येतव्यं १।, ॥ २५ ॥

व्याकरणम्।

यङ् क्वचिल्लुगप् च पञ्च तस्मिन् गुणपूर्वकाणि विहितानि कार्य्याणि नहि तस्मिंश्च धवस्वरूपग्रहपूर्वकमभिहितं तत्कर्म्म विधेयं सदा अनित्ये तु नित्यं नीतस्थिरमत्या प्रत्येतव्यं। क्वचिदर्थाद्विकल्पेन यङ् लुक् स्यात् अप् च लुक् स्यात् पं च स्यात् यङ् प्रकरणोक्तगुणादीनि विहितकार्य्याणि स्युः। धीरिदं भवं तथाच धातोः स्वरूपग्रहण-

सदा सत्पथेन सावधानेन गन्तव्यं। यतः।

बोभोत्यापाततो मित्रं सचिवो नृपतेरथ।
आचंचूर्त्ति वनीवंक्ति जङ्गमीत्यथ तस्य च॥ २६॥
धाता वामो बोभवीति वनीवश्चीति कालतः।
आचंचुरीति जङ्गन्ति ग्रहस्तस्यापि पापिनः॥ २७॥
हा को नाख्यदिदं चौरः सचिवो रणभीलुकः।
सैनिकोऽनृतवाक् चारो यस्य तं श्रीर्जहेत्यरम्॥ २८॥

---

बोभोतीति। सचिवो मन्त्रादिः आपाततः प्राप्तिचणे नृपतेर्मित्रं बोभोति अतिशयं भवति अथानन्तरं आचंचूर्त्ति गर्हितमाचरति वनीवंक्ति मुहुर्वञ्चयति जङ्गमीति वक्रं गच्छति। पचे। सूत्रस्य छं॥ २६॥

धातेति। तस्य च धाता विधाता वामः प्रतिकूलो बोभवीति कालतः काले वनीवश्चीति अस्य पापिनः ग्रहो रव्यादिः जङ्गन्ति वक्रं गच्छति आचंचुरीति गर्हितमाचरति। पचे। सूत्रस्य छं॥ २७॥

हाक इति। हा विषादे को जन इदं नाख्यत् नोक्तवान्। किं तदित्याह। यस्य राज्ञः सचिवश्चौरः सैनिकः सेनायां समवेतः पुरुषः रणभीलुकः चारो गूढ़पुरुषोऽनृतवाक् मिथ्यावादी तं नृपं श्रीः अरं शीघ्रं जहेति अतिशयं त्यजति। हाकः ६।, न १।, आ १।, (खि अत्) ख्यत् १।, ॥ २८॥

व्याकरणम्।

पूर्वकमभिहितं यत् तत् कर्म सदा न विधेयं अर्थाद्विकल्पेन। अनि त्ये तु अन्प्रत्यये तु नित्यं स्यात् नीतः उदन्तात्तु अनि न स्यात्। अत्र त्यलोपे त्यलचणमिति न्यायेन यङो लोपे च यङन्तत्वेनैव द्वित्वे बाधकाभावात् द्वित्वं स्यादेवेति न यङ्लुकि द्वित्वं विहितं पौनरुक्तत्वात्॥ २५॥

बोभोति, आचंचूर्त्ति वनीवंक्ति जङ्गमीति॥ २६॥

बोभवीति वनीवश्चीति आचंचुरीति जङ्गन्ति॥ २७॥

हाको नाख्यत्। हाकः खेरकारः आ न स्यात् यङ्लुकि। जहेति॥ २८॥

सचिवादीनां बहुधागुणोऽपि न चौर्य्यादिस्वभावहस्तिनामङ्कुशो भवति। तदुक्तं वृद्धैः।

"बहुधागुणयोगेऽपि पुमान् प्राक्तनयोगतः।
न जहाति क्वचिद्भावं नवमोऽङ्को यथा नृप!" ॥ २९ ॥
लोभोऽहिर्यं दशति नो लोपः क्वाप्यस्य न श्रियः।
स यं दंदष्टि सचिवं दंदंष्टि तमहिर्नृपः ॥ ३० ॥

इत्यपि जानीहि। अपि च। सचिवसेनादीनां मतैक्यमेव राज्ञां जये हेतुः।

तदैक्यलोपे च गुणवृद्धी नारेरघोरपि।
जयाय हेतू भवतः संस्मृतासीत्यतन्द्रितः ॥ ३१ ॥

---

बहुधेति। बहुप्रकारगुणयोगे सत्यपि प्राक्तनशुभाशुभकर्म्मयोगात् भावं स्वभावं पुमान् क्वचिदपि न त्यजति। अत्र दृष्टान्तो नवमोऽङ्कः। यथा नवमाङ्कस्य अनेकधा गुणे कृतेपि प्राक्तनस्य पूर्व्वाङ्कस्य योगात् मेलनात् भावं नवमाङ्कत्वं न जहाति। पद्ये। सूत्रस्य च ॥ २९ ॥

लोभ इति। लोभरूपोऽहिः सर्पः यं सचिवं न दशति अस्य सचिवस्य क्वापि कदापि श्रियो लोपो न स्यादिति शेषः। स लोभोऽहिर्यं सचिवं दंदष्टि गर्हितं दशति नृपः अहिः सन् तं दंदंष्टि। दशति नः ६।, लोपः १।, क्व ७।, ( अपि ) ॥ ३० ॥

तदैक्येति। तदैक्यलोपे पूर्व्वोक्तसचिवसेनादिमतैक्यलोपे गुणवृद्धी षड्गुणान्तर्भुतो गुणः वृद्धिः क्षयादित्रिवर्गान्तर्भूता वृद्धिश्च रघोरपि लघोरपि अरेः शत्रोर्व्विजयाय न हेतू भवतः अतन्द्रितोऽनलसः सन् संस्मृताऽसि मुहुः स्मरिष्यसि। रघोरिति रलयोरैक्याभिप्रायेणेदम्। अतएव दुर्गादासेन यङन्तटीकायां शूलं शूरं रघुः लघुः अङ्गुरिः

व्याकरणम्।

जहाति ॥ २९ ॥

दशतिनो लोपः क्वापि। दंशो न लोपः कदाचित् स्यात्। दंदष्टि दंदंष्टि ॥३०॥

सेनापतिः । सर्वमेतत् भवदादिष्टं करिष्यामः तदस्तु इदन्तु मम चेतस्युदेति ।

स्याद्वाजिर्नो भवतु वा विपक्षैः पथि तन्मम ।
सुतः ससैन्यस्त्वाऽन्वेतु सास्वपोष्यसि यत् सुखम् ॥ ३२ ॥

कुमारः । निष्प्रयोजनमेतत् । यतः ।

अयुयुत्सुमशस्त्रं न जिघांसति रिपुं रिपुः ।
यदा युयुत्सुर्यास्यामि तर्हि बेभिदिता स माम् ॥ ३३ ॥

(अपि च) । सर्वोऽपि मां सत्त्वगुणं वीक्ष्य जातकृपो नृपः ।
जलार्द्रया मम म्लानं मुखं मर्मृजिता पुनः ॥ ३४ ॥

---

अङ्गुलिरित्यादिद्वैरूप्यं दर्शितम् । पद्ये । ऐ सम्बोधने । क्लोपे ७।, (च) गुणवृद्धी १॥, न १।, मरे ७।, ॥ ३१ ॥

स्यादिति । विपक्षैः सह पथि वाजिर्युद्धं स्याद्वा न वा भवतु तत् तस्मात् मम सुतः ससैन्यस्त्वामन्वेतु सह गच्छतु यत् यस्मात् सुखं यथा स्यात् तथा सास्वप्स्यसि । स्यात् ८।, वा १।, जिः १।, नो १।, ॥ ३२ ॥

अयुयुदिति । स रिपुर्मां बेभिदिता मुहुर्भेदं करिष्यति । अन्यत् सुगमम् । पद्ये । सूत्रस्य उं ॥ ३३ ॥

सर्व्व इति । जातकृपः जाता कृपा दया यस्य स तथा जलार्द्रया आर्द्रवस्त्रेण म्लानं मम मुखं मर्मृजिता मुहुर्मार्जयिष्यति । पुनरव परन्तु इत्यर्थे । आर्द्रवस्त्रं जलाद्री स्यादिति कोषः । अन्यत् सुगमम् । पद्ये । सूत्रस्य उं ॥ ३४ ॥

व्याकरणम् ।

क्वलोपे च गुणवृद्धी नारे । क्लोपे चकारात् यङ्लुकि च रभिन्नप्रत्यये परे गुणवृद्धी न भवतः । संस्मृताभि ॥ ३१ ॥

स्याद्वाजिर्नो । जिर्न वा स्यात् यङ्लुकि । सास्वपोष्यसि ॥ ३२ ॥

बेभिदिता ॥ ३३ ॥

मर्मृजिता ॥ ३४ ॥

मन्त्री । भर्त्तृदारक ! हस्तिना अश्वेन वा गन्तव्यम् । कुमारः ।

करी नो वारि रौद्रे ह न सुखायेत्यहं पुनः ।
नक्तं यत्वा द्रुमच्छाये चरिकर्त्तास्मि विश्रमम् ॥ ३५ ॥

अथ कुमारः मन्त्रिपुत्रपुरपालपुत्राभ्यां सह निर्ययौ । अथ पथि गच्छन् ।

स्वापं क्वचिच्चर्करीति तर्तपीतिस्म सत् पिवन् ।
द्रुच्छाये क्वापि वर्व्वर्त्ति नरीनर्त्तीति स क्वचित् ॥ ३६ ॥

---

करीति । करी हस्ती वारि जले रौद्रे ह रौद्रे च नोऽस्माकं सुखाय न स्यात् । ननु तदा कथं गमिष्यसीत्यत आह । नक्तं नक्तपरिमितमध्वानं गत्वा द्रुमानां छायायां विश्रमं चरिकर्त्तास्मि मुहुर्विश्रामं करिष्यामि । पक्षे । क इति सूर्य्यस्य सम्बोधनम् । हे ह इति निर्द्देष्टोः सम्बोधनम् । रौनः ६।, वा १।, रिरौ १॥, ॥ ३५ ॥

स्वापमिति । स राजपुत्रः क्वचित् कुत्रचित् स्थाने स्वापं चर्करीति शयनं मुहुः करोति स्म । अन्यत् सुगमम् । पक्षे । सूत्रस्य उदाहरणम् ॥ ३६ ॥

व्याकरणम् ।

रौनौ वा रिरौ । रौनस्थाने रिरौ वा स्तः यङ्लुकि । चरिकर्त्तास्मि ॥ ३५ ॥
चर्करीति तर्तपीति वर्व्वर्त्ति नरीनर्त्ति ॥ ३६ ॥

इति यङन्तपादः ॥

# अन्तर्व्याकरणनाट्यपरिशिष्टम् ।

क्वचित् स्म काम्यक् भवति लिङ्गत: स्वमनोरथे ।
उत्थाय धावति मृगान् क्वचिद्विश्रामकाम्यति ॥ १ ॥

अथ राजपुत्र: स्वशूलाग्रं स्वर्णीभूतं वीक्ष्य ससम्भ्रमं मन्त्रिपुत्रं प्रति ।

अशक्योऽयीह निर्द्देष्टुं हेतुस्तं निश्चयीयतु ।
निखातोद्धृतशूलाग्रमकस्मात् कनकायते ॥ २ ॥

मन्त्रिपुत्रस्तद्दृष्ट्वा तं प्रति ।

---

क्वचिदिति । क्वचित् कामी इच्छावान् सन् अक् गमनशीलो भवति स्म । कश्चित् स्वीयमनोरथे उत्थाय लिङ्गतो गच्छतो मृगान् प्रति धावति क्वचिदात्मनो विश्राम-मिच्छति । क्वचित् ७।, ( स्म ) काम्यक् १।, भवति ८।, लिङ्गत: ५।, स्वमनोरथे ७।, ॥ १ ॥

अशेति । अयि भो: । इह एतस्मिन् हेतु: कारणं निर्द्देष्टुं निर्णेतुमशक्य: तं हेतुं निश्चयीयतु आत्मनो निश्चयमिच्छतु । किन्तदित्याह । निखातोद्धृतशूलाग्रं आदौ निखातं पश्चादुद्धृतं यत् शूलं तस्याग्रं अकस्मात् कनकायते स्वर्णायते अकनकं कनकं भवतीत्यर्थ: । पचे । अश इति अशयानस्य सम्बोधनं । क्य: १।, अ: १।, ई १।, इह ७।, ॥ २ ॥

व्याकरणम् ।

क्वचित् स्म काम्यक् भवति लिङ्गत: स्वमनोरथे । कश्चित् लिङ्गात् काम्यक् स्यात् स्वेच्छायां । विश्रामकाम्यति ॥ १ ॥

क्योऽयीह । लिङ्गात् क्य: स्यात् स्वेच्छायां तस्मिन् अवर्णं ई स्यात् । निश्चयीयतु ॥२॥

न मन्तव्या देवकृपा हेतुत्वेनात्र यत् सुरः ।
शं काम्यतामपि नृणां नर्त्ते कर्म्म शमिच्छति ॥ ३ ॥

विभाव्य आ ज्ञातं ।

सम्यङ्ये वा लोपनं नो मैत्रस्येच्छन्ति निर्ज्जराः ।
शर्म्मीयतां तव वाद्य शूलन्ते स्वर्णयन्त्यदः ॥ ४ ॥

अत्र वीजं समयान्तरे वक्तव्यं तद्भवतु अत्र स्पर्शमणिरस्ति यत् स्पर्शात् तव शूलाग्रं स्वर्णायते। अथ स भुवं खनित्वा तं मणिमादाय असौ तवैवेति राजपुत्रहस्ते समर्पयामास। अथ समयान्तरे रहसि स कुमारं प्रति।

सत्क्रियाद्वारेह सतोऽवेत यो रेफमूर्खयोः ।
विश्वसित्यपरीक्ष्यैव नूनं विपदिता स तु ॥ ५ ॥

---

नमेति। अत्र विषये देवकृपा देवस्य दया हेतुत्वेन न मन्तव्या अत्र देवस्य कृपा न हेतुरित्यर्थः। यत् यस्मात् सुरो देवो नृणां शंकाम्यतामपि कल्याणमिच्छतामपि कर्म्म ऋते विना कर्म्म न शमिच्छति न कल्याणमिच्छति। न १।, मन्तव्यात् ५।, ( एव ) ॥ ३ ॥

सम्येति। हे सम्यङ्! ये वा निर्ज्जरा देवा नोऽस्माकं मैत्रस्य सख्यस्य लोपनं नाशमिच्छन्ति कीदृशानामस्माकं शर्म्मीयतां आत्मनः शर्म्म सुखमिच्छताम्। ते निर्ज्जरा एव अद्य ते तव अदः इदं शूलं स्वर्णयन्ति स्वर्णं कुर्व्वन्ति। पद्ये। सम्य इति समस्य सं। ङ्ये ७।, ( वा १। ) लोपनं १।, नः ६।, ॥ ४ ॥

सदिति। इह लोके सत्क्रियाद्वारा सतः साधून् अवेत जानीयुः यो जन अपरीक्ष्यैव रेफमूर्खयोर्नीचमूर्खयोः विश्वसिति स जनो नूनं निश्चितं विपदिता आत्मनो

व्याकरणम्।

न मन्तव्यादेव। मकारान्तादव्ययाच्च नैव स्यात्। शंकाम्यतां। स्वेच्छायां किं नृणां शमिच्छति ॥ ३ ॥

ङ्ये वा लोपनं नः। नकारस्य लोपः स्यात् ङ्ये परे। समुच्चयार्थकवाकारात् की च। शर्म्मीयतां ॥ ४ ॥

अतो नीचे मूर्खे च पुरपालपुत्रे न विश्वसितव्यं। यतः।

अहो सम्यङ्ङाधनस्य पारक्यस्य गृहे सखा।
हार्द्दं स्यति न किं जाल्मः परानर्घधनायति ॥ ६ ॥

तदेवं पश्य।

अदनार्थेऽशनस्यापि देवपित्रस्य लोभतः।
हरणार्थे प्रयतते श्वाऽशनायार्द्दितो न किम् ॥ ७ ॥

( अपरमपि। ) आसन्नपरकीयोद्नः पानार्थे यन्नरोऽध्वगः।

विपदमेष्टा। रेफा याप्यावमाधमा इत्यमरः। पक्षे। सत्क्रियाद्दिति सत्क्रियाया अदनशीलस्य सं। वा १।, परे ७।, इसतः ५।, अवेत ८१।, यीः ६॥, ॥ ५ ॥

अहो इति। हे सम्यक्! आधमस्य स्वल्पधनस्य गृहे गृहणविषये सखा हार्द्दं सख्यं स्यति नाशयति। धनस्य कीदृशस्य पारक्यस्य परे उत्तरकाले कं सुखं यस्मात् तत् परकं ततः स्वार्थे ष्यप्रत्यये पारक्यं तस्य। जाल्मः असमीक्ष्यकारी मूर्खः न किं परानर्घधनायति परस्य अनर्घं अमूल्यं धनं किं न गृहीतुमिच्छति अपि तु तथा। पक्षे। अहो सम्यङ् इति सम्बोधनम्। ङा १।, धनस्य ६।, पारक्यस्य ६।, गृहे ७।, ॥ ६ ॥

अदेति। लोभतो देवपित्रस्यापि अशनस्य अदनार्थे भक्षणार्थे हरणार्थं श्वा कुक्कुरः किं न प्रयतते। किम्भूतः श्वा अशनायार्द्दितः अशनाया बुभुक्षा तया अर्द्दितः पीड़ितः। अदनार्थे ७।, अशनस्य ६।, ( अपि ) ॥ ७ ॥

आसन्नेति। अध्वगो नरः उदन्यार्त्तः उदन्या पिपासा तया आर्त्तः सन् यन् गच्छन्

व्याकरणम्।

वारेहसतोऽवेत यीः। इसात् परयोः क्यप्रत्ययष्यप्रत्ययसम्बन्धीययकारयोर्लोपः स्यात् वा परे ॥ विपदिता ॥ ५ ॥

ङा धनस्य पारक्यस्य गृहे। परे उत्तरे क्यौ यस्य तादृशस्य धनस्य ङा स्यात् गृहणार्थे। परानर्घधनायति ॥ ६ ॥

अदनार्थेऽशनस्यापि। अशनाया ॥ ७ ॥

यतते नह्युदन्यार्त्तः स्वोपमानेन वेत्त्विति ॥ ८ ॥

( अपि च। ) सन् यामार्थे वृषस्योपासन्नस्य ललितस्य च।

नेष्टी न किं वृषस्यन्ती असती किमु नेच्यते ॥ ६ ॥

अतोऽहं ब्रवीमि।

तर्क्यः कर्म्मोपमानाच्च आचारे त्वाशतः सता।

सन्नसन् वा नृणां भावः स्वीयेन्नापाततः परम् ॥ १० ॥

सन् आसन्नपरकीयोऽद्रः समीपस्थपरकीयजलस्य पानार्थे नहि यतते अपि तु तथा। इति आत्मोपमानेन वेत्तु जानातु भवानिति शेषः। पचे। आसन्नपरकीय इति निकटस्थपरकीयस्य सं। उद्रः ५।, पानार्थे ७।, यन् १।, ॥ ८ ॥

सन्निति। हे सन् पण्डित! असती कुलटा वृषस्यन्ती कामुकी यामार्थे वृषस्य शुक्रल-पुरुषस्य किं नेष्टी न वाञ्छयित्री अपि तु तथैव। वृषस्य किम्भूतस्य उपासन्नस्य समीपोपस्थितस्य ललितस्य मनोहरस्य उ भोः! किं नेच्यते। वृषस्यन्ती तु कामुकीत्यमरः शुक्रले मूषिके श्रेष्ठे सुकृते वृषभे वृष इत्यमरः। पचे। सन्निति सं। सन् १।, यामार्थे ७।, वृषस्य ६।, ॥ ६ ॥

तर्क्य इति। आपाततः प्राप्तिक्षण एव परमनात्मीयं न स्वीयेत् स्वमात्मीयमिव नाचरेत्। नृणां मनुष्याणां भावः स्वभावः आचारे आचरणविषये कर्म्मोपमानाच्च कर्म्मणा कार्य्येण उपमानात् दृष्टान्तेन च सन् असन् वा साधुरसाधुर्व्वा सता पण्डितेन तर्क्यः आदौ विवेचनीयः। पचे। तर इति तरणशीलस्य सं। क्यः १।, कर्म्मोपमानात् ५।, ( च ) आचारे ७।, ॥ १० ॥

व्याकरणम्।

उद्रः पानार्थे यन्। इदन्तु पदादयः पृथक् शब्दा इति स्वमतमाश्रित्य प्रयुक्तं। उदन्यार्त्तः ॥ ८ ॥

सन् यामार्थे वृषस्य। वृषस्य यामार्थे सन् स्यात् क्ये परे इच्छायां। वृषस्यन्ती ॥ ६ ॥

क्यः कर्म्मोपमानामाचारे। चकारोऽनुक्तसमुच्चयार्थकः। परं स्वीयेत् ॥ १० ॥

क्वचिदाधारोपमानादनुमेयौ गुणागुणौ ।
सामुद्रिको न साधूयेत् रक्तास्ये कालदन्तके ॥ ११ ॥
न्यङ्य: क्वित्योऽघाद्भियेव जीवहत्याकृतात् प्रभो: ।
आरात् शनै: क्षिपन् पादौ सत्यते स हि वञ्चक: ॥ १२ ॥

कुमार: । सत्यमेवैतत् । किन्तु ।

सोऽविनाशी क्वापि तस्मिन् विश्वन् निद्राति यो नहि ।
नहि चौराज्जाग्रतो भीर्भाव्यं सावहितेन तत् ॥ १३ ॥

क्वचिदिति । आधारस्य आकृतेरुपमानात् गुणागुणौ दोषादोषौ सामुद्रिक: सामुद्रिकग्रन्थवित् रक्तास्ये कालदन्ते च न साधूयेत् न साधाविवाचरेत् । तदुक्तं । "शूचीमुखा भग्नपृष्ठा: कालदन्ता: कुचेलिका: । रक्तनासाश्च रक्तास्यास्ते नरा दुष्टमानसा" इति । क्वचित् ७।, आधारोपमानात् ५।, ॥ ११ ॥

न्येति । यो न्यङ् नीच: जीवहत्याकृतात् अघात् पापात् भियेव प्रभोरारात् प्रभु-समीपे शनै: पादौ क्षिपन् सन् क्वित्य: कौ पृथिव्यां इत्यागतिर्यस्य एतादृश: सन् सत्यते सन्निव आचरति स हि वञ्चक: । पद्ये । न्य इति नायकस्य सं । न्य: १।, क्वित्य: १।, घात् ५।, ॥ १२ ॥

स इति । यो जन: क्वापि कदापि तस्मिन् पूर्व्वोक्ते वञ्चके विश्वन् सन् न निद्राति स जन: अविनाशी । विश्वन्निति विश्वसितीति विश्वस् स इवाचरन्निति विश्वन् हि यस्मात् जाग्रतो जनस्य चौरात् न भीरस्तीति शेष: । तत् तस्मात् सावहितेन सावधानेन भाव्यमस्माभिरिति शेष: । अवहितमिति भावक्तस्य रूपं । स: १।, विनाशी १।, ( क्वापि ) तस्मिन् ७।, ॥ १३ ॥

व्याकरणम् ।

क्वचिदाधारोपमानात् । रक्तास्ये न साधूयेत् ॥ ११ ॥

न्य: क्वित्यो घात् । कर्त्तुरुपमानात् न्य. क्विप्रत्ययश्च स्यात् आचारे । सत्यते ॥ १२ ॥

सो विनाशी क्वापि तस्मिन् । तस्मिन् प्रत्यये परे सकारो विनाशी वा स्यात् । विश्वन् ॥ १३ ॥

चिन्ता भृशादितोऽभूततद्भावे दूरदर्शिना ।
क्रियते नान्यथाऽस्यैषा भृशत्येवोत्तरोत्तरम् ॥ १४ ॥
तस्मिन् सति सतस्तस्य लोपः स्यात् सम्विदस्ततः ।
किन्त्वसत्सम्मुखेऽनन्यचेतायीत सदा बुधः ॥ १५ ॥

यतो द्विजिह्वात् भयं भवत्येव । यतः ।

खकेड़ाचो लोहिताद्यात् पञ्चास्यान्मशकादपि ।
बिभेत्यलं फणफणायतः किन्न द्विजिह्वतः ॥ १६ ॥

चिन्तेति । अभूततद्भावे अभूतं यत् तस्य भावे उत्पत्तिविषये आदितः पूर्व्वकाले भृशा अतिशयिनी चिन्ता दूरदर्शिना न क्रियते अन्यथा अस्य चिन्तयतो जनस्य सा चिन्ता उत्तरोत्तरं भृशति अभृशा भृशा भवतीत्यर्थः। (चिन्ता १।) भृशादितः ५।, अभूततद्भावे ७।, दूरदर्शिना ३।, क्रियते ८।, ॥ १४ ॥

तस्मिन्निति । ननु उत्तरोत्तरचिन्तावर्द्धने का क्षतिरित्यत आह । तस्मिन् सति चिन्ताया आतिशय्ये सति ततस्तस्मात् तस्य चिन्तयतो जनस्य सतो बुधस्य सम्विदो बुद्धेर्लोपः स्यात् । किन्तु असतां सम्मुखे बुधः सदा अनन्यचेतायीत अनन्यचित्तो भवेदित्यन्वयः । पचे । सम्विद इति सम्यक् बुद्धिमतां सं । तस्मिन् ७।, सति ७।, सतः ६।, स्तस्य ६।, लोपः १।, स्यात् ८।, ॥ १५ ॥

खेति । खमाकाशं कं जलं इड़ा भूः तत्र चरतीति खकेड़ाचः खचरो जलचरो भूचरश्च लोहिताद्यात् लोहितं अद्यं भक्ष्यं यस्य तस्मात् पञ्चास्यात् विस्तृतमुखात् मशकादपि अलमत्यर्थं बिभेति कीदृशात् फणफणायतः फणफणेति शब्दं कुर्व्वतः द्विजिह्वतः

व्याकरणम् ।

चिन्ता भृशादितोऽभूततद्भावे दूरदर्शिना क्रियते । भृशादिभ्योऽभूततद्भावे अर्थे पण्डितेन पूर्व्वोक्तयोः प्रत्यययोश्चिन्ता क्रियते । भृशति ॥ १४ ॥

तस्मिन् सति सतः स्तस्य लोपः स्यात् । भृशादिभ्यस्तत्प्रत्यये सति सतो विद्यमानस्य स्तस्य सस्य तस्य च लोपः स्यात् । चेतायीत ॥ १५ ॥

मन्त्रिपुत्रः । दासोऽयं त्यज्यतां । यतः ।

असदाचरणात् पुंसामधर्म्मायति धर्म्मति ।
सदाचारादिति नयो वेत्ति तं झटिति त्यजेत् ॥ १७ ॥
सध्र्यङ्यो नु ! भवे दुःखात् सुखान्मित्रस्य भावतः ।
दुःखायते खलु सुखायते सन् सुहृदेव सः ॥ १८ ॥
विम्लायतोऽपि कष्टेभ्योऽघप्रवृत्तौ न यस्य तृट् ।
अनिच्छन्नपि यः कष्टायते वा साधुरेव सः ॥ १९ ॥

सर्पात् खलाच्च न किं बिभेतीत्यन्वयः । द्विजिह्वौ खलसूचकौ इत्यमरः ॥ डाचः ११, लोहितादाद्यात् ५।, यं ११, ( च ) ॥ १६ ॥

असदिति । अधर्म्मायति नाधर्म्मोऽधर्म्मो भवतीत्यर्थः धर्म्मति न धर्म्मो धर्म्मो भवतीत्यर्थः । अन्यत् सुगमं । पचे । सूत्रस्य उदाहरणम् ॥ १७ ॥

सध्र्येति । नु भोः ! भवे संसारे यः सध्र्यङ् सहचरो भावतः स्वभावतः मित्रस्य दुःखात् सुखाच्च दुःखायते सुखायते च स एव सन् साधुः सुहृच्च । पचे । सध्र्य इति शिवधारकस्य सम्बोधनं सं शिवं ध्रियते यः स सध्रः मद्रीध्र इतिवत् ततः स्वार्थे ष्यञ् सध्र्य इति सिद्धं । क्यः ११, अनुभवे ७।, दुःखात् ५।, सुखात् ५।, ॥ १८ ॥

विम्लेति । कष्टेभ्यो दुःखिभ्यो विम्लायतोऽपि म्लानिं प्राप्नुवतोऽपि यस्य जनस्य अघप्रवृत्तौ पापं कर्त्तुं प्रवृत्तौ तृट् इच्छा न अस्तीति शेषः । योऽनिच्छन्नपि न कष्टायते कष्टं गर्हितं कर्म्म कर्त्तुं न प्रवर्त्तते स साधुरेव । पचे । अयतोऽपि विम्ल इति गमनादपि म्लानस्य सम्बोधनं । कष्टादेः ५।, अघप्रवृत्तौ ७।, ॥ १९ ॥

व्याकरणम् ।

डाचो लोहितादाद्यात् पञ्चास्यात् । फणफणायतः ॥ १६ ॥

धर्म्मायति, धर्म्मति ॥ १७ ॥

क्योऽनुभवे दुःखात् सुखात् । दुःखसुखाभ्यां क्यः स्यादनुभवार्थे । दुःखायते, सुखायते ॥ १८ ॥

कष्टादेरघप्रवृत्तौ । कष्टादेर्ङ्यः स्यात् पापार्थे प्रवृत्तौ । कष्टायते ॥ १९ ॥

प्रवासे ईदृगेव सहचरो युज्यते। कुमारः। एवं।

नु! वैरादेः क्रताविच्छामस्य ज्ञास्यामि यत्क्षणे।
तदा वैरायमाणोऽहममुं त्यक्ष्यामि तत्क्षणात्॥ २०॥

तदस्तु तदानीं तच्चिन्त्तं। अहह सखे! पश्य पश्य सिद्धाश्रमोऽयं हिंसादिदोषरहितः।

अभीर्व्वनचरो मन्थात् स्वार्थेऽस्मिन् परितोऽटति।
रोमन्थायत एणोऽसौ पश्य व्याघ्रस्य सम्मुखे॥ २१॥
शक्यो भवति कण्ड्वादेः क्रतौ गन्तुं द्रुमो गजैः।
सिंहाश्रितो व्याघ्रगात्रं गौः कण्डूयति जिह्वया॥ २२॥

न्विति। नु भोः अस्य सहचरस्य वैरादेः क्रतौ विद्वेषादेः क्रतिविषये इच्छां यत्क्षणं ज्ञास्यामि अहं तदैव वैरायमाणः वैरं कर्त्तुमिच्छन् सन् अमुं सहचरं तत्क्षणे त्यक्ष्यामि। पद्ये। नु सम्बोधने। वैरादेः ५।, क्रतौ ७।, ॥ २०॥

अभीरिति। अस्मिन् कानने वनचरो मन्थात् हिंसात् अभीर्निर्भयः सन् स्वार्थे स्वकार्य्यार्थे परितः सर्व्वतः अटति। मन्थादिति मन्थति हिनस्तीति मन्थः मन्थगाहे इत्यस्य रूपं। असौ एणो मृगः व्याघ्रस्य सम्मुखे रोमन्थायते पश्य। पद्ये। अभीर्व्वन अ इति अभीतस्य वनचरस्य सम्बोधनं। रोमन्थात् ५।, स्वार्थे ७।, ॥ २१॥

शक्य इति। गजैर्हस्तिभिः कण्ड्वादेः क्रतौ कण्डूयनादिक्रियाविषये सिंहाश्रितो द्रुमोऽपि गन्तुं शक्यो भवति शक्तिविषयो भवति निर्भयत्वादिति भावः। गौरपि जिह्वया व्याघ्रगात्रं कण्डूयति कण्डूमपनयति। पद्ये। श इति शक्तस्य सम्बोधनं। क्यः १।, भवति ८।, कण्ड्वादिभ्यः ५॥, क्रतौ ७।, ॥ २२॥

## व्याकरणम्।

वैरादेः क्रतौ। वैरायमाणः॥ २०॥

रोमन्थात् स्वार्थे। स्वार्थे उद्गीर्णभक्षणार्थे। रोमन्थायते॥ २१॥

क्यो भवति कण्ड्वादिभ्यः क्रतौ। कण्डूयति॥ २२॥

नमो वरिवसश्चायं योग्योऽत्र यमिनाङ्गणः ।
नमस्या वरिवस्यैषां श्रेयसे नो भवत्यलम् ॥ २३ ॥
तपस्यामोऽत्र सिद्धर्थं किमस्माकमटाव्यया ।
तपसोऽपि स्थानमेतत् तपस्या चाखिलार्थकृत् ॥ २४ ॥
स्वपाणिचं मन्यते चाख्याने नाम्नः कृते हरेः ।
कैवल्यं सिद्धपीठेऽस्मिन्निति निर्णययाम्यहम् ॥ २५ ॥
कल्यादितो विशेषार्थे नास्तीच्छा मेऽत्र कानने ।
वसतः प्राप्तसत्त्वस्य कलयन्तु नृपाः परे ॥ २६ ॥

नम इति । अत्राश्रमे अयं यमिनां मुनीनां गणः नमो वरिवसोर्नमस्कार-शुश्रूषयोर्योग्यः, एषां मुनीनां नमस्या पूजा वरिवस्या नोऽस्माकं अलमत्यर्थं श्रेयसे भवति । नमो वरिवसः ५।, (अ) अयं १।, ॥ २३ ॥

तपेति । सुगमम् । पद्ये सूत्रस्य उदाहरणम् ॥ २४ ॥

स्वेति । अस्मिन् सिद्धपीठे हरेर्नाम्नः आख्याने उच्चारणे कृते सत्यपि कैवल्यं मुक्तिः स्वपाणिचं स्वहस्तगतं मन्यते, स्वस्य आत्मनः पाणौ चरतीति तत्तथा वार्धं इतिवत्, इत्यहं निर्णययामि निर्णयं करोमि । पद्ये । स्वपा इति स्वपालकानां सम्बोधनम् । णिचं २।, मन्यते ८, (अ) आख्याने ७।, नाम्नः ५।, कृते ७।, ॥ २५ ॥

कल्येति । अत्र कानने वसतः वसतिं कुर्वतः प्राप्तसत्त्वगुणस्य मे मम कल्यादितः युद्धादिभिर्विशेषार्थे विशेषप्रयोजने इच्छा नास्ति । परे अन्ये नृपाः कलयन्तु विरोधं कुर्वन्तु नाहमिति भावः । कल्यादितः ५।, विशेषार्थे ७।, ॥ २६ ॥

व्याकरणम् ।

नमो वरिवसश्चायं । आभ्यामपि अयं क्यः स्यात् । नमस्या वरिवस्या ॥ २३ ॥

तपसोऽपि । तपस्यामः ॥ २४ ॥

णिचं मन्यते चाख्याने नाम्नः कृते । लिङ्गात् णिचं बुधा मन्यते कृते कृत्यर्थे । कृत इति भावे क्तः । निर्णययामि ॥ २५ ॥

कल्यादितो विशेषार्थे । कलयन्तु ॥ २६ ॥

मन्त्रिपुत्रः । कुमार ! मैवं ।

अवेहि वेदात् सत्यार्थात् नापत्यमुपकारकम् ।
यत् पित्रोस्तन्मूत्रसमं वेदः सत्यापयत्यदः ॥ २७ ॥
अये बुधैकाजतोऽपि तीर्थं पितृमतो भवेत् ।
पापं न कापयति यत् स पित्रोः सेवनादिभिः ॥ २८ ॥

तस्मात् पितृसेवां यौवराज्यञ्च विहाय तपस्या बहुतीर्थाटनञ्च भवतां न युज्यते ।

कुमारः । एवं । तत् कियत्कालं देशान् परिभ्रम्य देशं प्रति यास्यामः । इति ते तस्मिन्नाश्रमे रात्रौ सुषुपुः ॥

अवेहीति । यदपत्यं सन्ततिः पित्रोर्नोपकारकं तदपत्यं पित्रोर्मूत्रसमं, अद इदं वेदः सत्यापयति सत्य करोति । अवेहि ८।, वेदात् ५।, सत्यार्थात् ५।, नापत्यं १।, ॥ २७ ॥

अये इति । अये बुधैक ! पण्डितश्रेष्ठ ! पितृमतो जनस्य तीर्थं अजतोऽपि अटतोऽपि पापं भवेत् । यत् यस्मात् स पितृमान् तीर्थगन्ता सेवनादिभिः पित्रोर्न कापयति न सुखं करोति । कं सुखं तत् करोतीति कापयति । पचे । अये बुधैकेति सम्बोधनं । ( एकाच् अतः ) एकाजतः ५।, ( अपि ) ॥ २८ ॥

व्याकरणम् ।

अवेहि वेदात् सत्यार्थान्नापत्यम् । वेदसत्यार्थेभ्यो नापप्रत्ययं अवेहि । सत्यापयति ॥ २७ ॥

एकाजतोऽपि । एकाचोऽदन्तादपि नाप् स्यात् णिचि । कापयति ॥ २८ ॥

इति नामधात्वध्यायः ॥ ० ॥

अथ पुरपालपुत्रः । ( कुमारं प्रति )

अजय्यारिर्व्विजयते क्षुत्तया विपराजितः ।
संमन्ये निविशेऽघेऽदः साऽत्तुं निविशते नु माम् ॥ १ ॥
अवोपसर्गात् परितोऽवेः क्रीतो दास एव ते ।

कुमारः उत्तरयति ।

विक्रीणीते नेह भक्ष्यं कथं त्वां भोजयेऽधुना ॥ २ ॥

पुरपालपुत्रः । तदाऽहं म्रिये ।

क्षुदस्मे बलितयाऽदोऽङ्गमादत्ते स्ववशेऽत्र न ।
स्वप्रसारेप्यलं मात्तुं व्याददातीव सा मुखम् ॥ ३ ॥

---

अजय्येति । क्षुत् क्षुधा अजय्या जेतुमशक्या अरिः शत्रुर्विजयते, तया क्षुधया विपराजितो विशेषेण पराजितः सन् अघे व्यसने अर्थात् विपदि निविशो निविष्टः सन् अदः इदं संमन्ये । किं तदित्याह । नु वितर्के सा क्षुधा अत्तुं भक्षितुं मां निविशते । व्यसनेऽप्यघं । व्यसनं विपदि भंशे इत्यमरः । वि-परा-जितः ५।, सं २।, मन्ये ८।, नि-विशः ५।, घे ७।, ॥ १ ॥

अवेति । हे अव रक्षक ! परितः सर्व्वतोभावेन उपसर्गात् क्षुधाजन्यरोगविशेषात् अवेः रक्षेः, एष जनः ते तव क्रीतो दासः । इह कानने भक्ष्यं द्रव्यं न विक्रीणीते कथं त्वामधुना भोजये: । अवोपसर्गात् ५।, परितः ५।, वेः ५।, क्रीतः ५।, ॥ २ ॥

क्षुदिति । क्षुत् क्षुधा बलितया बलवत्तया मे मम अदोऽङ्गं स्ववशे आदत्ते आयत्ती-करोतीत्यर्थः । अत्र समये स्वप्रसारेऽपि स्वीयव्यापारेऽपि मालं न समर्थं अङ्गमिति

व्याकरणम् ।

विपराजितो मं मन्ये निविशो घे । आभ्यां मं आत्मनेपदं मन्ये घे । विजयते, निविशते ॥ १ ॥

अवोपसर्गात् परितो वेः क्रीतः । अव-परि-विभ्यः क्रीणातेर्मं स्यात् । विक्रीणीते ॥२॥

मन्त्रिपुत्रः । ( सक्रोधं ) हत हत पापोऽयं निद्रां प्रतिबध्नाति ।

सत्कर्म्मोच्चरते रत्या मन्त्रं नाम च वैष्णवम् ।
प्रयाणोऽसावुच्चरते भोक्ष्ये किमिति चत्वरः ॥ ४ ॥

अथ वृक्षस्थो वनकुक्कुटः । ( प्रियां प्रति ) प्रिये ! मम्माश्रमे बुभुक्षवोऽतिथय उपस्थिताः किमत्र विधेयं ।

पक्षिणी । ( तं प्रति )

नक्तं समोऽविदद्दृशोऽगमश्वासि निसर्गतः ।
सङ्गच्छेत कथं नाथ ! रात्रावतिथिपूजनम् ॥ ५ ॥
युज्यते सत्कर्म्मण एवं किन्तु प्रज्ञियुतः ॥ ६ ॥

सम्बन्धः । सा क्षुधा मा मां अत्तुं भक्षयितुं मुखं व्याददातीव प्रसारयतीव । लित: ५।, आदः ५।, ॥ ३ ॥

सदिति । सत्कर्म्मा सत्कर्म्मान्वितो जनः प्रयाणः सन् वैष्णवं विष्णुसम्बन्धीयं मन्त्रं नाम च रत्या अनुरागेण भक्त्येति यावत् उच्चरते, असौ चत्वरः अचरः किं भोक्ष्ये इत्येव उच्चरते । सत्कर्म्मोच्चरते: ५।, ॥ ४ ॥

नक्तमिति । नक्तं रात्रौ अविदः अज्ञानस्य अदृशः अन्धस्य समस्तुल्यः अगमोऽचलश्चासि, रात्रौ तव अतिथिपूजनम् कथं सङ्गच्छेत । पक्षे । नक्तमिति रात्रेः सम्बोधनम् । समः ५।, विदद्दृशः ५।, गमः ५।, च १। ॥ ५ ॥

युज्येति । सत्कर्म्मणो जनस्य एवं कर्म्म युज्यते किन्तु प्रज्ञियुक्तस्य । पक्षे । प्रज्ञियुत इति समर्थानां सम्बोधनम् । युज्यते ८।, असत्कर्म्मणः ५। एवम् १।, ॥ ६ ॥

व्याकरणम् ।

लित आदः । लृकारितः आङ्पूर्व्वक दाधातोर्मे स्यात् । अङ्गमादत्ते । न स्वप्रसारे । मुखं व्याददाति ॥ ३ ॥

सत्कर्म्मोच्चरतेः । सत् वर्त्तमानं कर्म्म यस्य तादृशात् चरतेर्मे स्यात् । किं भोक्ष्ये इत्युच्चरते ॥ ४ ॥

समोविदद्दृशोगमश्च । संपूर्व्वकात् विदद्दृशो गमश्च मे स्यात् । सङ्गच्छेत ॥ ५ ॥

युज्यतेऽसत् कर्म्मण एवं । अकर्म्मक-सम्पूर्व्वक-विदादेर्मे स्यात् ॥ ६ ॥

पक्षी। ( तां प्रति )

स्वनोऽप्यर्त्तिः श्रुत इह क्षुधार्त्तस्यातिथेर्मया।
यद्यभुक्तः समृच्छेत तदा मे पातकं भवेत्॥ ७॥

अथ पक्षी। ( अतिथीन् प्रति ) अभ्यागता अवधातव्यम्।

धर्म्मान् समवतो विप्रात् स्थः श्रुतं यः स्वशक्तितः।
अतिथीन्नार्च्चयेत सोऽघः प्रस्थाता निरये मृतः॥ ८॥

तस्माद् बुभुक्षूनतिथीन् युष्मान् भोजयितुमिच्छामि।

रात्रावन्धोऽचलः क्षुद्रोऽसद्वयो विधिना कृतः।
दिवाचरन् पालयन् स्वानवतिष्ठेऽत्र शाखिनि॥ ९॥

कुमारः। ( पक्षिणं प्रति )

स्वनेति। इह अस्मिन्नाश्रमे क्षुधार्त्तस्य अतिथेः अर्त्तिः स्वनः अर्त्तिः पीड़ा तज्जन्यः स्वनोऽपि मया श्रुतः। यदि अभुक्तः उपवासी सन् समृच्छेत गच्छेत् तदा मम पातकं भवेत्। पक्षे। स्वन इति नोऽस्माकं स्व आत्मीय इति सम्बोधनम्। (अपि) अर्त्तः ५। श्रुतः ५॥, ॥ ७॥

धर्म्मेति। धर्म्मान् ब्राह्मणधर्म्मान् समवतः सम्यक् पालयतः स्थः स्थिति-शीलात् विप्रात् श्रुतं। किं श्रुतमित्याह ; यः स्वशक्त्या अतिथीन् न अर्च्चयेत, स अघः पापी मृतः सन् निरयं नरकं प्रस्थाता प्रस्थानं करिष्यति। पक्षे। धर्म्मानिति धर्म्म प्रधानस्य सम्बोधनम्। समवतः ५', विप्रात् ५।, स्थः ५।, श्रुतं १।, ॥ ८॥

रात्रेति। अस्यार्थः सुगमः। पक्षे। सूत्रस्य उदाहरम्॥ ९॥

व्याकरणम्।

अप्यर्त्तिः श्रुतः। अर्त्तिः शीरप्येवं। समृच्छेत॥ ७॥
समवतोविप्रात् स्थः श्रुतं। समादिपूर्व्वकात् स्थो मं स्यात्। प्रस्थाता॥ ८॥
अवतिष्ठे॥ ९॥

निर्णयादौ च किं दाताऽस्यातिथ्यं किमसञ्चयी ।
तिष्ठते त्वयि वाञ्छात्रमातिथ्यार्थं द्विजोत्तम ! ॥ १० ॥

पक्षी । ( तं प्रति )

तिष्ठे वोऽभ्यागतेभ्योऽहं क्षुद्रोऽसञ्चय्यकिञ्चनः ।
भुक्त्यै स्वदेहं नेष्ये वो भूयासमनृणी ततः ॥ ११ ॥
उदस्थो मा मया दत्तं चेत् कृपोत्तिष्ठते हृदि ।
ऊर्द्ध्वहेनैव वृक्षान्मां पातयोत्तिष्ठ चासनात् ॥ १२ ॥

पौरपालः । ( तं प्रति )

द्विज ! भवत एकं शरीरं क्षुद्रञ्च बुभुक्षवो वयं बहवः ।

अथ तत् श्रुत्वा नीड़स्थस्तच्छावकः । ( भ्रातॄन् प्रति )

---

निर्णेति । आदौ पूर्वकाले निर्णय निश्चयं कुरु, असञ्चयी त्वं किं आतिथ्यं दातासि दास्यसि, हे द्विजोत्तम ! आतिथ्यार्थं त्वयि वाञ्छात्रं तिष्ठते । निर्णयादौ अ, ( च ) ॥ १० ॥

तिष्ठेति । अभ्यागतेभ्यो वो युष्मभ्यं अहं तिष्ठे स्वाभिप्रायं प्रकाशयामि । किम्तदाह ; अहं क्षुद्रः असञ्चयी अकिञ्चनश्च, भुक्त्यै भोजनाय वो युष्मान् स्वदेहं नेष्ये प्रापयिष्यामि । ततस्तदनन्तरं अनृणी भूयासं भविष्यामि अहमिति शेषः । पद्ये । सूत्रस्य उं ॥ ११ ॥

उदेति । मया दत्तं मा उदस्थः उपेक्षां मा कुरु । चेत् यदि हृदि कृपा उत्तिष्ठते ऊर्द्ध्वहेनैव ऊर्द्ध्वचेष्टयैव वृक्षात् मां पातय आसनाच्च उत्तिष्ठ । उदस्थ इति उत्पूर्व्व-कस्य अस्य इक्षेपे इत्यस्य रूपम् । उदः ५ ।, स्थः ५ ।, ॥ १२ ॥

व्याकरणम् ।

निर्णयादौ च । निर्णयाद्यर्थे च स्थो मं स्यात् । वाञ्छात्रं त्वयि तिष्ठते ॥ १० ॥

तिष्ठे वोऽभ्यागतेभ्यः ॥ ११ ॥

उदः स्थः । उत्तिष्ठते हृदि । ऊर्द्ध्वहे नैव । ऊर्द्ध्वचेष्टायां उत्पूर्व्वकात् स्थाधातोर्मं न स्यात् । आसनादुत्तिष्ठ ॥ १२ ॥

विफलात् मनुनोऽपाच्च वृथानुपकृतः पिता ।
वृथैवाजपयात्मानमुपतिष्ठामहे ततः ॥ १३ ॥
स्थातोऽसत्कर्म्मणः पुंसोभारं भूर्मन्यते परम् ।
तातोपकृत्यै तत् स्थामो धीरेषोत्तिष्ठते मम ॥ १४ ॥
आराधनादौ चेशो नो नाधिकारोस्ति तत् पितुः ।
उपतिष्ठेमह्यतिथीनुपचारेण वर्म्मणा ॥ १५ ॥

अथ पश्चिमश्रावकाः । ( अग्रजं प्रति ) अग्रज ! एवं युज्यते ।

अथ पत्नी । ( श्रावकानां व्यवसितं श्रुत्वा पतिं प्रति )

नाथ ! जीवनलिप्सायां भवेद् वैभिर्व्विना मम ।

---

विफलेति । नोऽस्मान् व्यर्थजीवितान् मनु जानीहि, अनुपकृतः उपकारासमर्थान् नोऽस्मान् पिता वृथा अपात् पालयामास । अजपया श्वासोच्छ्वासाभ्यां हंस इति मन्त्रेण आत्मानं परमात्मानं वृथा उपतिष्ठामहे उपासनां कुर्म्मः । तथाच वयं वृथा जीवाम इत्यर्थः । पक्षे । विफलानिति विफलजीवनस्य सम्बोधनम् । विफलं अनिति प्राणितीति स तथा । मनुना ३।, अपात् ५।, ॥ १३ ॥

स्थातेति । नास्ति सत्कर्म्म यस्येति असत् कर्म्मणः पुंसः स्थातः स्थितिः परं केवलं भूः पृथ्वी भारं मन्यते, तत् तस्मात् तातोपकृत्यै पितुरुपकाराय स्थामः भवेमः । मम एषा धीरुत्तिष्ठते उपस्थितिशालिनी भवति । स्थातः ५।, असत्कर्म्मणः ५।, ॥ १४ ॥

आरेति । ईशः ईश्वरस्य आराधनादौ नोऽस्माकमधिकारो नास्ति, तत् तस्मात् वर्म्मना देहेन उपचारेण पितुरतिथीन् उपतिष्ठेमहि । आराधनादौ ७।, ( च ) ॥ १५ ॥

नाथेति । हे नाथ ! जीवनलिप्सायां जीवनेच्छायां एभिः श्रावकैर्व्विना जीवन-

व्याकरणम् ।

मनुनोपात् । मनुर्मन्त्रसत्करणकोपासनार्थे उपात् स्थो मं स्यात् । अजपयात्मानमुपतिष्ठामहे ॥ १३ ॥

स्थातोऽसत्कर्म्मणः । अकर्म्मकात् स्थो मं स्यात् । धीरुत्तिष्ठते ॥ १४ ॥

आराधनादौ च । उपतिष्ठेमहि अतिथीन् ॥ १५ ॥

वृथैव जीवनं तस्मादुपतिष्ठे मृते यमम् ॥ १६ ॥

पक्षी तां प्रति। प्रिये! ममाप्येवं तत् सर्व्वं वयमतिथ्यर्थे भवामः इति निश्चित्य अतिथीन् प्रति। भो! वयमपि बहवः। अथ कुमारः पक्षिणं प्रति। अहो।

नीतः सज्ज्ञानविनयार्च्चाव्ययादौ तु वेधसा।
त्वां नाधिकारस्तत् किं नोऽर्च्चार्थे विनयसे वपुः ॥ १७ ॥

पक्षी तं प्रति। भोः! अस्ति वैधे कर्म्मणि अस्माकमप्यधिकारः। तदेवं पश्य।

देवो विराजं नयते विराजः श्रेयसे परम्।
नार्णं विनयते विष्णोर्नैवोपनयते स तम् ॥ १८ ॥

मेव वा मम वृथा भवेत्, तस्मात् मृते मरणाय यमसुपतिष्ठे यमं मित्रं करोमीत्यर्थः। पक्षे। नाथ जीवन इति प्रियसम्बोधनम्। लिप्सायां ७।, (वा) ॥ १६ ॥

नीत इति। हे सज्ज्ञानविनय! ज्ञानविनयाभ्यां सह वर्त्तमान! अर्च्चाव्ययादौ पूजादानादौ वेधसा विधात्रा अधिकारो न त्वां नीतः प्रापितः, तत् तस्मात् नोऽस्माकं अर्च्चार्थे पूजार्थं किं कथं वपुर्व्विनयसे ददासि। नीतः ५।, सः १।, ज्ञानविनयार्च्चाव्ययादौ ७।, ॥ १७ ॥

देव इति। विराजो वीनां पक्षिणां राजा गरुड़ः विराजं विराड़्मूर्त्तिं देवं विष्णुं परं केवलं श्रेयसे मुक्त्यै नयते पूजयति। ननु तत् विष्णोः ऋणमेव शोधयतीत्याह। विष्णोः ऋणं न विनयते न शोधयति स विष्णुस्तं गरुड़ं न वा विनयते न वा भरणेन पुष्णाति। पक्षे। सुवस्य उदाहरणम् ॥ १८ ॥

व्याकरणम्।

लिप्सायां भवेद्वा। मरणाय यममुपतिष्ठे ॥ १६ ॥

नीतः स ज्ञान-विनयार्च्चाव्ययादौ। ज्ञानाद्यर्थे नीञधातोः सः विधिः स्यात्। विनयसे ॥ १७ ॥

विराजं नयते, ऋणं विनयते, स तं विनयते ॥ १८ ॥

कुमारः । ( खगं प्रति ) द्विजोत्तम ! भवानधुना सुखं निद्रातु, तव सूनृतया वचसैवातिथ्यं सुसम्पन्नमासीत् । तदुक्तं "तृणानि भूमिरुदकं वाक् चतुर्थी चेत्यादि" ।

पुरपालः । ( कुमारं प्रति ) भवान् शास्त्रे नयते वचसातिथ्यं भवतामेव, अहन्तु मूर्खः क्षुधार्त्तः शरीरधारणाक्षमस्तेन आश्रमिणोऽस्य स्वीकृतयातिथ्यं स्वीकरोमीत्युक्त्वा पक्षिणं वृक्षादवतारयितुमुद्यतं वीक्ष्य मन्त्रिपुत्रः सानुक्रोशं अरे ! अब्रह्मण्यमब्रह्मण्यं निवर्त्तस्व निवर्त्तस्व ।

यावदाक्रामति ध्वान्तं तावत् भो दययाक्रमः ।
कार्य्यो नैषु शतं दास्ये वीनाक्रान्ता यदा रविः ॥ १९ ॥

कुमारं तूष्णीकं वीक्ष्य । हत हत ।

उपप्रतोद आरम्भ उद्धताजसमीहितः ।
निवर्त्ततेऽयमस्वामी नेच्छया प्रक्रमेत किम् ॥ २० ॥

---

यावदिति । यावत्कालं ध्वान्तमन्धकारः आक्रामति खं व्याप्नोति तावत्कालं भोः पौरपाल ! दयया कृपया एषु पक्षिषु आक्रमो न कार्य्यः शतं शतसंख्यकान् वीन् पक्षिणः दास्ये तुभ्यमिति शेषः । कदा दास्ये इत्यत आह । रविः सूर्य्यः यदा आक्रान्ता उद्गमिष्यति । पक्षे । पूर्वापरभागौ उदाहरणप्रत्युदाहरणवाक्ये । भोदये ७, आक्रमः ५।, ॥ १९ ॥

उपेति । उद्धताजसमीहितः उद्धतो दुराधर्षो योऽजश्छागो गौर्व्वा तस्य समीहितः स्वाभिमत आरम्भः क्रियासूद्यमः उपप्रतोदे प्रतोदः पशुताडनयष्टिस्तस्य समीपमिति उपप्रतोदं तस्मिन् निवर्त्तते । अयं पौरपालः अस्वामी किं कथं इच्छया न प्रक्रमेत आरभेत । पक्षे उपप्रतः ५।, अदः १।, आरम्भे ७, ॥ २० ॥

व्याकरणम् ।

भोदययाक्रमः । भोदीप्तिमान् तस्य उदये उद्गमार्थे आङ्पूर्व्वकक्रमो मं स्यात् । रविराक्रान्ता, भोदये किं ध्वान्तमाक्रामति खं व्याप्नोतीत्यर्थः ॥ १९ ॥

उपप्रतोद आरम्भे । उपप्रादुपसर्गात् क्रमोऽदो मं स्यात् । प्रक्रमेत ॥ २० ॥

नेष्टा यमः स्वप्रतीककर्म्मणश्च स्मरत्यपि।
तथाघ्नतोऽप्यसुं नेतुं पादमायच्छतेऽपि न॥ २१॥
आः ज्ञातमपि असत्कर्म्मण एवं युज्यते॥ २२॥
( यममुद्दिश्य )
यमेड़सि हनः किन्नु न नृशंसस्य पापिनः।
देव! यन्नाहत भवान् परकष्टाय तत् परम्॥ २३॥
अथ पुरपालः। तं पञ्चिशं सभार्य्यापत्यमवताड्य दग्ध्वा बभुजे
तद्वीक्ष्य मन्त्रिपुत्रः ( साश्रुनेत्रः कुमारं प्रति )

नेष्टेति। आः कोपे स्वप्रतीककर्म्मणः स्व आत्मीयः प्रतीकः प्रतिकूलो यस्य तत् स्वप्रतीकं तादृशं कर्म्म यस्येति स तथा तस्य अर्थादात्मीयजनानभिमतकर्म्मकारकस्य जनस्य यमः कालः इष्ट समये स्मरत्यपि न चिन्तयत्यपि, न अत्र स्मृत्यर्थधातुयोगे कर्म्मणि षष्ठी। तथा घ्नतोऽपि न असुं जनं नेतुं यमः पादं आयच्छतेऽपि न प्रसारयत्यपि न। पत्ते। नेष्ट इति अनिष्टोः सं। आयमः ६।, स्वप्रतीककर्म्मणः ६।, ( च ) स्मरति ८।, ( अपि ) ( तथा ) घ्नः ६।, ( अपि )॥ २१॥

असदिति। अस्यार्थः सुगमः। ( अपि ) असत्कर्म्मणः ६।, एवं १।, युज्यते ८।,॥ २२॥

यमेति। हे यमेड् यमानामीश! अस्य नृशंसस्य घातुकस्य पापिनः किं कथं न हनोषि न हन्सि? हे देव! भवान् यत् नाहत नावधीत् तत् परं केवलं परेषां कष्टाय दुःखाय। पत्ते। यमेड् इति यमस्य सं। सि १।, हनः ६।, कित् १।,॥ २३॥

व्याकरणम्।

आयमः स्वप्रतीककर्म्मणश्च स्मरत्यपि तथाघ्नोपि। स्वप्रतीकं स्वस्याङ्गं कर्म्म यस्य तादृशस्य आयमः तथा आघ्नश्च मं स्मरत्यपि बुधः। पादमायच्छते॥ २१॥
अपि असत्कर्म्मण एवं युज्यते। अकर्म्मणोऽपि आङ्न यम एवं॥ २२॥
सि हनः कित्। आहत॥ २३॥

व्युत्तपोऽयं लुब्धो निजरसनां किमु नोत्तपते ॥ २४ ॥

( पुनः कुमारं प्रति )

आयग्रे च तपः कर्मणः फलं प्राप्तवानसि ।
तत् किं तपस्तप्यसे वा किंवा तीर्थमटाट्यसे ॥ २५ ॥

( पुरपालं प्रति )

सत्तीर्थयुत्सृजः श्राद्धकर्तुरिच्छन् फलानि यः ।
उत्सृज्यतेऽतिथिभ्योऽङ्गमादोऽर्हाहँ तमत्सर ॥ २६ ॥

स ( तं प्रति ) भोः ! अहं किमपराध्यामि ।
उत्तरेणागमो मान्यस्तनयादौ सृजो मुहः ।

व्युत्तेति । विः पक्षी तस्य उत्तपः उत्तापजनकः पाचक इति यावत् । अन्यत् सुगमम् । व्युत्तपः ५', अयं १।, ॥ २४ ॥

आयेति । आः कोपपीड़योः अग्रे च अग्रे एव तपः कर्मणः फलं प्राप्तवानसि । अन्यत् सुगमम् । यक् १।, रे ७।, ( च ) तपःकर्मणः ५।, ॥ २५ ॥

सत्तीर्थेति । यः पक्षी सत्तीर्थे गङ्गातीरादौ उत्सृजः दानं कुर्व्वतः श्राद्धकर्तुश्च फलानि तत्सदृशफलानि इच्छन् सन् अतिथिभ्योऽङ्गमुत्सृज्यते, हे अत्सर ! बहुभक्षणशील ! अर्हार्हं पूजार्हं तं पक्षिणं आदः भक्षितवानसि । उत्सृज इति उत्पूर्व्वकसृजधातु-र्दानार्थकः । उत्सर्जनविसर्जने इति कोषात् । पक्षे । सत्तीर्थयुदिति सत्तीर्थयुक्तस्य सं । सृजः ६।, श्राद्धकर्तुः ६।, ( च ) ॥ २६ ॥

उत्तरेणेति । मान्यो माननीयः आगमः पक्षी अयमे हवे भव इति आगमः नगौका

व्याकरणम् ।

व्युत्तपोऽयं । आत्माङ्कर्माकर्मकव्युत्तपो मं स्यात् । निजरसनामुत्तपते ॥ २४ ॥

यग्रे च तपः कर्मणः । तपः कर्मणस्तपो मं स्यात् रे परे यक् च । तपस्तप्यसे ॥२५॥

सृजः श्राद्धकर्तुश्च । श्रद्धावान् कर्त्ता यस्य तादृशस्य सृजतेर्मं स्यात् । उत्सृज्यते-ऽतिथिभ्योऽङ्गं ॥ २६ ॥

निरयायासर्जि देहं स्वैः सहाभ्यागताय मे ॥ २७ ॥
क्वतोऽवचेपणार्थे वाग्व्ययो भवतानुमाम्।
खगादं श्वभुजं नापकुरुषे किमु गाधिजम् ॥ २८ ॥

अहन्तु। क्षुधयाधिक्वतः प्रक्तौ क्षीनायां बुभुजे खगम्।
दत्तमाश्रमिणातिथ्यं किमाधिकुरुते भवान् ॥ २९ ॥

मन्त्रिपुत्रः। मा एवं।

इति यावत्। दुदुमागमा इत्यमरः। उत्तरेष उत्तरकाशि निरयाय निरयनिवृत्तये अभ्यागताय मे मह्यं स्वैरात्मीयैः सह देहं असर्ज्जि दत्तवान्। कोदृशः तनयादौ पुत्रादौ सुष्ठो मोहस्य सृजः त्यागशील: निर्मोह इति यावत्। सृज इति इगुपधात् कः। निरयायेति नरकनिवृत्त्यर्थम्। नरकाय प्रदातव्यो दीप इतिवत्। पचे। उत्तर इति उत्तमस्य उत्तारकर्तुर्वा सम्बोधनं। इणागमः १, मान्यः १, तनः ६, आदौ ७, सृजः ६, ॥ २७ ॥

क्वत इति। भवता अनुमां मां प्रति अवचेपणार्थे तिरस्कारार्थं वाग्व्ययः क्वतः, कोदृशं मां खगादं पक्षिभक्षकम्। श्वभुजं कुकुरभक्षकं गाधिजं विश्वामित्रं तु भोः किं कथं नापकुरुषे न तिरस्करोषि। विश्वामित्रः क्षुधार्त्तः शुनो जघनं भुक्तवानित्यागम-प्रसिद्धिः। क्वतः ५, अवचेपणार्थे ७, ॥ २८ ॥

क्षुधेति। क्षुधया अधिक्वतः प्रक्तया आयत्तीक्वतः सन् प्रक्तौ क्षीनायां सत्यां आश्रमिणा दत्तं आतिथ्यं खगं बुभुजे कथं भवान् मा मां अधिकुरुते अभिभवति पराजयते इति यावत्। पचे। क्षुधय इति क्षुधाप्राप्तस्य सं। अधिक्वतः ५, प्रक्तौ ७, ॥ २९ ॥

व्याकरणम्।

इणागमो मान्यस्तनयादौ सृजः। सृजधातोरिति आदौ इणागमो मन्यते। अभ्यागतेभ्यो देहमसर्ज्जि नरकनिवृत्तये ॥ २७ ॥

क्वतोऽवचेपनार्थे। तिरस्कारार्थे क्वधातोर्मे स्यात् प्रक्तौ। अपकुरुषे ॥ २८ ॥

अधिक्वतः प्रक्तौ। अधेः क्वधातोर्मे स्यात् प्रक्तौ। अधिकुरुते ॥ २९ ॥

सहशायी निद्रितं मां विश्वस्तं दुर्ब्बलं वने ।

भक्षितुं यस्माध्यक्तथास्तन्मन्ये पुष्यतः पितुः ॥ ३० ॥

पुरपालः । ( सक्रोधम् )

न पारुष्यं प्रकुर्व्वे ते प्रकुर्व्वे ते न निह्नवम् ।

न चाहमपकुर्व्वे ते भृतिं प्रकुरुषे न मे ॥ ३१ ॥

तत् कथं मां प्रकुरुषे । एवं पुन र्न वाच्यं अन्यथा एवमेव श्रोष्यति भवान् ।

सचिवः । ( पुनः साञ्जलिः ) महाशय ! क्षम्यतां ।

अथ कुमारः । (पुरपालं प्रति) अरे जाल्म ! मैवं मर्त्तुकामोऽसि ।

अथ प्रभाते समयान्तरे रहसि मन्त्रिपुत्रः कुमारं प्रति ।

संमन्यतां निह्नुतौ ज्ञो नीचोऽसावित्यलं स यत् ।

शतं सदापजानीते कृत्वा कर्म्म विगर्हितम् ॥ ३२ ॥

---

सहेति । सहशायी एकासनशयानस्त्वं निद्रितं मां यत् भक्षितुं नाध्यकृथाः अङ्गी-कारयत्नं न कृतवानसि, तन्मन्ये पितुः पुष्यत इति मन्ये । पद्ये । सूत्रस्य उदाहरणम् ॥ ३० ॥

नपारुष्यमिति । तेऽतव सम्बन्धे पारुष्यं निष्ठुरवाक्यं न प्रकुर्व्वे न कथयामि तव निह्नवं चौर्य्यं न प्रकुर्व्वे साहसात् तत्कर्म्मणि प्रवृत्तोऽस्मि न वा ते तव प्रकुर्व्वे दोषमाविष्करोमि मे मह्यं भृतिं मासिकं भरण्यं न प्रकुरुषे न ददासि । पद्ये । सूत्रस्य उं ॥ ३१ ॥

संमन्यतामिति । असौ नीचः पुरपालः निह्नुतौ चौर्य्यं कर्म्मणि ज्ञः पण्डितः इत्यल-मतिशयं संमन्यतां, यत् यस्मात् स सदा गर्हितं कर्म्म कृत्वा शतमपजानीते अपलपति शतवाक्निह्नवं करोतीत्यर्थः । निह्नुतिः स्त्रियां चौर्य्येऽपलापे इति कोषः । सं २।, मन्यतां ८।, निह्नुतौ ७।, ज्ञः ६।, ॥ ३२ ॥

व्याकरणम् ।

अध्यकृथाः ॥ ३० ॥

सूचनादौ कृञ उदाहरति । पारुष्यं प्रकुर्व्वे । प्रकुर्व्वे निह्नवं । अपकुर्व्वे ते । भृतिं प्रकुरुषे ॥ ३१ ॥

सं मन्यतां निह्नुतौ ज्ञः । अपलापार्थे ज्ञाधातोर्मे मन्यतां । अपजानीते ॥ ३२ ॥

कथ्यते स्मरणार्थेऽदः सम्प्रति त्वमापदि ।
इत्येव प्रतिजानीष्व दासं त्यक्ष्यामि वा मणिम् ॥ ३३ ॥

अनयोरेकतरत्याग एव तव श्रेयसे भवति ।

हर्त्ता तवेमं मणिमेष निर्दयो
नूनं यतोऽदर्शयतैनमक्षरम् ।
स्वं स्वर्णमेतन्मणिजन्ततोऽघक-
र्म्मणोऽस्य दूरीकरणं शिवाय ते ॥ ३४ ॥

मणिरयं सदैवात्मानमेनं स्मारयति । तस्मादसौ दुष्टः प्रियोऽपि त्याज्य एव । यतः ।

अपथा यः सञ्चरते सुतोऽप्यहितकारकः ।

---

कथ्येति । स्मरणार्थं अदः एतत् कथ्यते त्वं पण्डितस्त्वं सम्प्रति अधुना आपदि आपदवस्थायां इत्येव प्रतिजानीष्व प्रतिज्ञां कुरु, किं तदित्याह दासं त्यक्ष्यामि मणिं वा त्यक्ष्यामि इत्येव प्रतिज्ञां कुरु इत्यन्वयः । कथ्यते ८, अस्मरणार्थे ७, अदः २, सम्प्रतिशः ६।, ॥ ३३ ॥

हर्त्तेति । एष निर्दयः पुरपालः नूनं निश्चितं तव इमं मणिं हर्त्ता हरिष्यति, यतो यस्मात् एतन्मणिजं एतत्स्पर्शमणिस्पर्शसम्भूतं स्वर्णं स्वमात्मानं एनमक्षरं अक्षरं अदर्शयत पश्यन्तमेनं आत्मानमदर्शयत ; अर्थात् असौ मणिजातस्वर्णं दृष्टवान् । ततस्तस्मादस्य अघकर्म्मणः पापकर्म्मणः पापाय कर्म्म यस्य तादृशस्य दूरीकरणं तव शिवाय क्षेमाय । पञ्च णिजन्ततः ५।, घकर्म्मणः ५, ॥ ३४ ॥

अपथेति । अपथा विरुद्धपथेन यो जनः सञ्चरते गच्छति स जनः सुतोऽपि दुष्टोऽहितकारकः सन् त्याज्यः । क इव इत्याह अहितो दुष्टः करणचरः करणं शरीरं

## व्याकरणम् ।

कथ्यतेऽस्मरणार्थे सम्प्रतिशः । प्रतिजानीष्व ॥ ३३ ॥

णिजन्ततो घकर्म्मणः । घः कर्त्तैव कर्म्म यस्य तादृशात् णिजन्तात् मं स्यात् । स्वर्णं स्वं एनमदर्शयत ॥ ३४ ॥

त्याज्यो दुष्टः स करणचरो वाऽस्तकृचयोऽहितः ॥ ३५ ॥

तद्भवतु ।

आकर्षति आरयतीह मां सुहृत् आसे परं त्वाऽवितुमत्र कानने ।
प्रतिज्ञयैवानुवदाम्यदः सखे ! क्षणञ्च नापैति ममाप्नराद्भयम् ॥३६॥

कुमारः । एवं बाढ़ादनुवदोऽस्यहं तेऽनुवदे सखे ! ।

किं करिष्यति कीटोऽयमावयोर्जाग्रतोः सदा ॥ ३७ ॥

किन्तु देवीं प्रति गन्तुमनास्त्वं लक्ष्यसे तद्गच्छ तन्निवारयितुं शक्नोमि । यतः ।

मन्मते विमतिव्यक्तसङ्कोक्ती श्रुतिगोचरे ।

तत्र चरतीति विग्रहः । करणं साधकतमं चेत्रगावेन्द्रियेष्वपीत्यमरः । तादृशोऽस्तकृचयो वा रक्तसञ्चयरूपरोगविशेष इव । अत्र वा शब्द इवार्थकः । सकरणचरः ५।, ॥ ३५ ॥

आकर्षेति । इह वर्षासमये सुहृत् मां आकर्षति आरयति च आरन्तं मां आत्मानं आरयति, अत्र कानने परं केवलं त्वा त्वां अवितुं रक्षितुं आसे वसामि । अदः एतत् प्रतिज्ञयैव अनुवदामि पूर्व्वोक्तमेव पुनर्व्वदामि । किन्तदित्याह, अप्नरात् वज्ञरात् अर्थात् पश्चिमचक्रात् मम भयं क्षणमपि नापैति न याति । पद्ये । वक्ष्यमाणसूत्रस्य च ॥ ३६ ॥

एवमिति । बाढ़ं प्रतिज्ञा तदाश्रित्य एवं पूर्व्वोक्तं अनुवदोऽसि दासं त्यज इति तस्मात् भयं भवतीत्यादिपूर्व्वोक्तस्यानुवादशीलोऽसि अहमपि ते तव सम्बन्धे तथानुवदे यथा त्वं वदसि तथाहमपि वदामि । किन्तदित्याह किं करिष्यतीति । तथाच यथा त्वं पुनःपुनर्वदसि अस्मात् बिभेमि, तथाहमपि पुनःपुनर्वदामि अयं कीट इति । पद्ये । एवमिति एवं जानीहीत्यर्थः । वा १।, बाढ़ात् ५।, अनुवदः ५।, ॥ ३७ ॥

मन्मत इति । व्यक्ता स्पष्टार्था चासौ सङ्कोक्तिश्चेति स तथा, विमतेरनिच्छाया व्यक्तसङ्कोक्तिः मन्मते ममाभिमते कर्म्मणि विमतेरनिच्छाया व्यक्तसङ्कोक्ती श्रुतिगोचरे श्रवण-

व्याकरणम् ।

सकरणचरः । करणेन सह वर्त्तमानाच्चरतेर्म्मः स्यात् घे । अपथा सञ्चरते ॥ ३५ ॥

अदोऽनुवदामि ॥ ३६ ॥

बाढ़ादनुवदः । अकर्म्मकादनुवदतेर्मं स्यात् वा । अनुवदे ॥ ३७ ॥

मन्मते योजये किं त्वां तन्नैवं विवदावहे ॥ ३८ ॥

तद्भवतु भवानभिमानीव लक्ष्यते किमत्र बीजं ।

मन्त्रिपुत्रः । कुमार ! तव दासस्य चरित्रं पुरा समक्षं ज्ञातवानसि तदभियोगो भवत्पुरतो न कृतः । अधुना तु असहिष्णुरिति वेदयामि । यथा ।

दासस्त्वमप्यहमिवेत्यवजानाति मामयम् ।
मयि वादिनि वक्त्येव मयि क्रुध्यति कुप्यति ॥ ३९ ॥
एवं क्रियाव्यतीहारे प्रवृत्ते ह्यात्मने पदम् ।
वश्मि नास्ते यत्र मिथो वचनं कुसतोः सदृक् ॥ ४० ॥

---

प्रत्यक्षविषये सति किं कथं त्वां मन्मते ममभिप्रेते कर्मणि योजये नियुक्तं कुर्य्यां तत्, तस्मात् एवमनेन प्रकारेण न विवदावहे न परस्परं विविधमतिपूर्व्वकसङ्गोक्तिं न कुर्व्वः । मतिरिच्छायां बुद्धावपि स्त्रियां मतेतिकोषः । पद्ये । मन्मते इति सम्मतायाः सं । विमतिव्यक्तसङ्गोक्तौ ७, शुतिगोचरे ७।, ॥ ३८ ॥

दास इति । अहमिव त्वमपि दासः कुमारस्येति शेषः । इत्यनेन रूपेण अयं दासः मां अवजानाति अवज्ञां करोति । अत्र व्याकरणपद्यो नास्ति ॥ ३९ ॥

एवमिति । एवमनेन प्रकारेण क्रियाव्यतीहारे क्रियायाः सजातीयक्रियाकरणं क्रियाव्यतीहारस्तस्मिन् प्रवृत्ते आरब्धे सति, आत्मने आत्मनिमित्तं पदं स्थानं वश्मि इच्छामि, यत्र स्थाने कुसतोः कुर्निन्दितः सन् साधुस्तयोर्मिथः परस्परं सदृक् समानं वचनं न आस्ते । पद्ये क्रियाव्यतीहारे ७, प्रवृत्ते ७।, आत्मनेपदं २।, वश्मि ८।, न १।, आस्ते ८।, यत्र ७।, मिथोवचनं १।, ॥ ४० ॥

व्याकरणम् ।

विमतिव्यक्तसङ्गोक्तौ शुतिगोचरे । शुतिगोचरे शाब्दबोधविषयीभूते । विमत्या सह व्यक्तसङ्गोक्तिरिति विग्रहः । मीनकूर्म्मकोष इतिवत् । विवदावहे ॥ ३८ ॥

क्रियाव्यतीहारे प्रवृत्ते आत्मनेपदं वश्मि नास्ति यत्र मिथोवचनं । क्रियायाः सजातीयक्रियाकरणे प्रवृत्ते बुद्धौ प्रवर्त्तमाने सति आत्मनेपदमिच्छामि ; यत्र मिथोवचनं परस्परवाचि पदं नास्ति ॥ ३९ ॥ ४० ॥

कुमारः। (सक्रोधं) आ दुरात्मनो व्यवसितमेतादृक् अधुनैव तं निगृहीतास्मि।

मन्त्रिपुत्रः। सुसमये यथायोग्यं विधास्यसि। कुमारः। तन्नेह कानने क्षणमपि स्थातव्यं इदानीमुत्तरकोशलाधिपते राजधान्यां निर्भयं निर्व्विवादं निवत्स्यामः।

अलकाञ्च या हसति राया हिंसावचनतोऽपि निवर्त्तते यत्र ॥ ४१ ॥
वैधे सदेह रतिवहस्तदर्थे आत्मनेपदं वैष्णवमिच्छन् तनुभृत् ॥ ४२॥
यत्रस्था व्यतिवर्त्तन्ते इतरेऽपि महाजनान्।
व्यत्याचरन्ति वाऽसाधून् मनसापि न कर्हिचित् ॥ ४३ ॥

---

अलकेति। या राजधानी राया धनेन अलकाञ्च कुवेरपुरीमपि हसति तिरस्करोति, यत्र वचनतोऽपि वाक्यतोऽपि हिंसा निवर्त्तते यत्र हिंसा नास्तीत्यर्थः। पक्षे। अलकाञ्चेति अलकागतस्य सं। हसति ५।, रा-या-हिंसावचनतः ५।, (अपि) निवर्त्तते ८।, यत्र ७।, ॥ ४१ ॥

वैध इति। इह राजधान्यां तनुभृत् लोकः आत्मने आत्मार्थं वैष्णवं पदं विष्णुसम्बन्धिस्थानमिच्छन् सन् सदा वैधे वेदविहिते कर्म्मणि रतिवहः अनुरागभाक् सन् तदर्थे वैधकर्म्मार्थं प्रवर्त्तते। पक्षे। वैधेसदे इति वैधकर्म्मणि गतायाः सं। हरतिवहः ५।, तदर्थे ७।, प्रवर्त्तते ८।, आत्मनेपदं १।, ॥ ४२ ॥

यत्रेति। यत्रस्था राजधानीस्था इतरेऽपि नीचा अपि महाजनान् व्यतिवर्त्तन्ते महाजना यथा वर्त्तन्ते तथैव वर्त्तन्ते कर्हिचिदपि मनसापि असाधून् न व्यत्याचरन्ति असाधवो यथा आचरन्ति तथा नाचरन्ति ॥ ४३ ॥

### व्याकरणम्।

हसति रा-या-हिंसावचनतोऽपि निवर्त्तते यत्र। राः शब्दः या गमनं तथाच शब्दार्थगमनार्थहिंसार्थादपि हसधातोर्निवर्त्तते ममिति शेषः ॥ ४१ ॥

हरतिवहस्तदर्थे प्रवर्त्तते आत्मनेपदम् ॥ ४२ ॥

(व्यतिवर्त्तन्ते।) शब्दार्थादौ किं व्यत्याचरन्ति ॥ ४३ ॥

दाता वदान्यं दानेन यत्र व्यतिजिगीषति ।
अपराह्णे सूपविष्टं व्यत्यालपति वार्द्धकम् ॥ ४४ ॥
सहोपविष्टा वनिता पतिं व्यतिहसत्यपि ।
भित्तिस्थमुकुरे विम्बमन्योन्यं व्यतिपश्यति ॥ ४५ ॥

राजा तु परमधार्म्मिकः ।

यः सन्दानोऽधर्म्यसम्प्रदानात् विरमते सदा ।
संयच्छते योऽसत्येष्टं तन्मुखं वीक्षतेऽपि न ॥ ४६ ॥
अशनार्थं भुजो देवैर्यस्य यज्ञे प्रसार्य्यते ।
भुञ्जते पितरो दिव्या मनुष्या अपि यज्ञिया: ॥ ४७ ॥

दातेति । यत्र राजधान्यां दाता जनः दानेन वदान्यं दातारं जनं व्यतिजिगीषति । तथाच । दातारौ दानेन परस्परं जेतुमिच्छन्तीत्यर्थः । वार्द्धकं वृद्धसमूहः अपराह्णे सूपविष्टं सत् व्यत्यालपति परस्परं आलपति । वृद्धसङ्घेऽपि वार्द्धकमिति कोषः ॥ ४४ ॥

सहेति । यत्र वनिता सहोपविष्टा सती पतिं व्यतिहसति भित्तिनिबद्धे मुकुरे दर्पणे विम्बं प्रतिविम्बं अन्योन्यं परस्परं व्यतिपश्यति । पद्मे । सूत्रस्य छं ॥ ४५ ॥

य इति । यो राजा सन्दानः सं सम्यक् दानं यस्य स तथा अधर्म्यासम्प्रदानात् धर्म्मादनपेतमिति धर्म्यं न धर्म्यमधर्म्यं तादृशं यत् सम्प्रदानं तस्मात् विरमते अयोद-विहितदानाद्विरतः । यो जनोऽसत्या कुलटया संयच्छते ददाति तन्मुखमपि न वीक्षते । पद्मे । य इति यवत: सं । सन्दानः ५।, अधर्म्यासम्प्रदानात् ५।, ॥ ४६ ॥

अशनेति । यस्य राज्ञो यज्ञे अशनार्थं भोजनार्थं देवैः भुजः प्रसार्य्यते । यत्र च

व्याकरणम् ।

व्यतिजिगीषति, व्यत्यालपति ॥ ४४ ॥

व्यतिहसति, अन्योऽन्यं व्यतिपश्यति ॥ ४५ ॥

सन्दानोऽधर्म्यासम्प्रदानात् । असत्या इष्टं संयच्छते ॥ ४६ ॥

अशनार्थे भुजः । भुञ्जते पितरः ॥ ४७ ॥

यद्राजधान्यां मनुजो दत्ते एव न याच्ञितः ।
क्रियावान् तत्फली चेत् स्यादिच्छा तदुपगच्छतु ॥ ४८ ॥
पुरोऽपि निर्व्वासयते कृतागसं यः स्वीयधर्म्माऽप्रणिजन्ततस्तथा ।
बोधेऽपि वा यस्य वदोऽनृतोऽदमो हृषीकसंघो नयते तमन्तरम् ॥४९॥

यज्ञिया दिव्या दिविभवा मनुष्याः जनकादयः पितरश्च पश्चिस्त्वत्तादयो भुञ्जते । पक्षे अन्नमार्थे ७, भुज: ५।, ॥ ४७ ॥

यदिति । यस्य राजधान्यां मनुजो लोको दत्ते एव नतु याच्ञितः न याच्यते इत्यर्थः । याच्ञा अस्य जाता इत्यर्थे याच्ञितः । यत्र च मनुजः क्रियावान् वैधक्रियावान् तत्फली च तत्कर्म्मजन्यफलवांश्च । चेत् यदि इच्छा स्यात् तत् तदा उपगच्छतु तद्राजधानीमिति शेषः । पक्षे । पूर्व्वभाग उदाहरणवाक्यम् । याच इति याचमानस्य सं । जित: ५।, क्रियावान् १।, तत्फली १।, ( चेत् ) स्यात् ८।, ॥ ४८ ॥

पुर इति । यो राजा कृतागसं कृतापराधं लोकं पुरात् निर्व्वासयते वने वासयति, तथा स्वीयधर्म्माऽप्रणिजं स्वीयधर्म्माणां अपोषकं स्वीयधर्म्मान् न प्रणेनेक्ति न पुष्णाति यः स तथा । निजृ्षि इर्जौ पोषे इत्यस्मादिगुपधात् कप्रत्यये रूपम् । ततः पुरात् तथा निर्व्वासयते इत्यर्थः । बोधे सदसद्ज्ञाने सत्यपि यस्य जनस्य वदो वाक्यं अनृतः असत्यः, यस्य हृषीकसङ्घः इन्द्रियसमूहः अदमः अदान्तः तं जनं पुरादन्तरं वहिर्नयते । पक्षे । स्वीयधर्म्माप्र इति स्वीयधर्म्माणां सम्यक् पालकस्य सम्बोधनम् । आप्र इति पृलि पालने इत्यस्य रूपं, महीप्र कुप्र इतिवत् । णिजन्ततः ५।, तथा १।, वस् धे-पिव-आयस्य-वेदः ५।, नृत: ५।, दम: ५।, ॥ ४९ ॥

## व्याकरणम् ।

जित: क्रियावान् तत्फली चेत् स्यात् । जितो धातोर्मः स्यात् चेत् यदि क्रियावान् तत्फली तत्क्रियाजन्यफलभाक् स्यात् । मनुजो दत्ते ॥ ४८ ॥

णिजन्ततस्तथा वो, धे, पिवायस्य, वदो, नृतो, दमः । णिजन्तात् वस धे पिव आयस वदो नृतो दमस्तथा मं स्यादित्यर्थः । कृतागसं निर्व्वासयते, नयते ॥ ४९ ॥

चन्द्रभासो मणिचया यस्य चादः पुरं महत् ।
दीपयन्तो रोचयन्त आत्मनो मोदयन्ति च ॥ ५० ॥
शुद्धा यद्राजधानीस्था यजन्तेऽब्दद्विजाः ।
यजन्ति यजमानार्थं पाययन्ते प्रपाकृतः ॥ ५१ ॥
गावो वत्सान् धापयन्ते प्रातर्यस्य परःशताः ।
स्वं स्वभार्य्या रोचयन्ते दमयन्ते सुतान् नराः ॥ ५२ ॥
नर्त्तयन्ते वादयन्ते काश्मीरजवनाङ्गनाः ।
रात्रौ देवालये तांश्च वासयन्ते पुराद्दहिः ॥ ५३ ॥
स्त्रियो रूपेण च परिमोहयन्तेऽमराङ्गनाः !
आयामयन्ते लोभादीन् परस्मादेजितेन्द्रियाः ॥ ५४ ॥

---

चन्द्रेति । चन्द्रभासः चन्द्रस्येव भा दीप्तिर्येषां तादृशा मणिचया मणिसमूहा यस्य दीप्ता अदः इदं महत् पुरं दीपयन्तः सन्तः यं राजानं आत्मनो रोचयन्ते आत्मभ्यो रोचमानं यं रोचयन्ते मोदयन्ति च । पक्षे । चन्द्रभासोम इति सुन्दरस्य सम्बोधनम् । णिचः ५।, आयम्-रुचादः ५।, ॥ ५० ॥

शुद्धा इति । शुद्धा जितेन्द्रियाः प्रपाकृतः पानीयशालिकाकृतो जनाः पाययन्ते पथिकानिति शेषः । पक्षे । सूत्रस्य उं ॥ ५१ ॥

गाव इति । नराः स्वभार्य्याः स्वं रोचयन्ते स्वस्मै रोचमानाः स्वभार्य्याः स्वंरोचयन्ते मान्या इति भावः । पक्षे । सूत्रस्य उं ॥ ५२ ॥

नर्त्तेति । अस्यार्थः सुगमः । पुराद्वहिरिति पञ्चमीप्रज्ञया ॥ ५३ ॥

व्याकरणम् ।

णिचः आयमुचादः । णिजन्तात् आयम् रुच अदश मं स्यात् । रोचयन्ते ॥ ५० ॥
यजन्ते, यजमानार्थं यजन्ति, पाययन्ते ॥ ५१ ॥
रोचयन्ते, दमयन्ते ॥ ५१ ॥
नर्त्तयन्ते, वादयन्ते, वासयन्ते ॥ ५३ ॥

आदयन्तेऽतिथीन् नित्यं संयच्छन्ते सदार्थिने ।
न केप्यपवदन्तेऽन्यान् जानते ते हि तद्व्यथाम् ॥ ५५ ॥

अतो वयमधुनातिश्रान्ताः क्षीणा मलिनाश्चेति शुश्रूषार्थं अमुष्यातिथिशालायां वत्स्यामः ।

एतादृशो ननु ज्ञोपि सदा प्रत्याश्रुतः स नः ।
दिदृक्षिषिष्ट शुश्रूषिष्यते जिज्ञासिता मुहुः ॥ ५६ ॥

अथ ते तद्राजधानीं प्रति प्रतस्थिरे । अथ पुरपालः अम्बिकावनमाहात्म्यं स्मृत्वा स्वकार्य्यं सिसाधयिषुः कुमारं प्रति ॥ ० ॥

---

स्विय इति । परस्वादिः परधनादिर्लोभादीन् आयामयन्ते विरतान् कुर्व्वते । पचे । सूत्रस्य उदाहरणम् ॥ ५४ ॥

आदयन्त इति । केऽपि जनाः अन्यान् न अपवादयन्ते अभिशस्तान् कुर्व्वन्ति हि यस्मात् ते जनाः परव्यथां जानते । पचे । उं ॥ ५५ ॥

एतेति । ननु भोः ज्ञः पण्डितोऽपि स नृपः प्रत्याश्रुतः कृतप्रतिज्ञः सन् एतादृशान् ईदृगवस्थान् नोऽस्मान् दिदृक्षिषिष्ट शुश्रूषिष्यते जिज्ञासिता च । पचे । एता इति आगतानां सम्बोधनम् । दृशः ५।, अननुज्ञः ५।, (अपि) (सदा) अप्रत्याश्रुतः ५।, सनः ५।, ॥ ५६ ॥

व्याकरणम् ।

परिमोहयन्ते, आयामयन्ते ॥ ५४ ॥

आदयन्ते, संयच्छन्ते, अपवदन्ते, जानते ॥ ५५ ॥

दृशोऽननुज्ञोऽपि सदाप्रत्याश्रुतः सनः । एभ्यो मं स्यात् । दिदृक्षिषिष्ट, शुश्रूषिष्यते, जिज्ञासिता ॥ इति मपादः ॥ ५६ ॥

---

श्रेयो यत् कर्मभावे मंमन्यते सुहृदा धिया।
स्वयं क्रियेत तत् कर्म कारयेत् सुहृदोपि सः॥ १॥

यदेतत् मन्मनस्युदेति।

भोयग्रे नातिदूरेऽस्ति गौरीपीठोऽम्बिकावनम्।
यत्र सन्निहिता काली गम्यतां यदि रोचते॥ २॥
दृश्यतेऽसावुत्तरेणागमस्तनितवारिणा।
रहितेनासिताब्देन योऽन्वकारि तड़िमता॥ ३॥

हत हत। इत्येवानुशये नायं तपःसिद्धाश्रमः पुरा।
मन्मनस्युदियायैनं येऽपश्यन् नन्वतप्त तैः॥ ४॥

---

श्रेय इति। सुहृदा धिया बुद्ध्या यत्कर्मभावे यत्कर्मणः सत्तायां श्रेयो मंमन्यते तत्कर्म स्वयं क्रियेत, स सुहृत् सुहृदोऽपि तत् कर्म कारयेत्। पद्ये। श्रेयोयदिति श्रेयसि यतमानस्य सं। कर्मभावे ७।, मं १।, ॥ १॥

भो इति। भोः कुमार! अग्रे पुरोभागे नातिदूरे अम्बिकावनं गौरीपीठोऽस्ति। पद्ये। भो इति सं। यक् १।, रे ७।, ॥ २॥

दृश्यत इति। उत्तरेण उत्तरस्यां दिशि असौ अगमः पर्व्वतो दृश्यते योऽगमः असिताब्देन नीलमेघेन अन्वकारि सदृशीकृतः। कीदृशेन स्तनितवारिणा स्तनितं मेघध्वनिः तेन वारिणा च रहितेन। तड़िमता विद्युत्युक्तेन। तड़िमता इत्यनेन सुवर्णादिधातुमयत्वं सूचितं। पद्ये। दृश्यते सावुत्तर इति हे उत्तर! उत्तम! असौ इणागमो दृश्यते इति प्रश्नः। तत्र इति उत्तिमतः सं। इणागमः १।, तनि ७।, ॥ ३॥

इतोति। अहं इत्येव अनुशये पश्चात्तापं करोमि। किं तदित्याह, अयं तपःसिद्धाश्रमः तपसा सिद्धानामाश्रमः पुरा पूर्व्वकाले मनसि मम उदियाय उपस्थितो न जातः।

व्याकरणम्।

कर्मभावे मं। धोः कर्मणि भावे च मं स्यात्। मन्यते, क्रियेत॥ १॥

यग्रे। रे परे धोर्यक् स्यात् कर्मभावयोः। गम्यताम्॥ २॥

इणागमस्तनि। अन्वकारि॥ ३॥

सोऽस्यैवाधित्यकास्थोऽत्र धर्म्मिणागम इष्यते।
स वासोऽर्हन् दृक्पथश्च योऽकारि पूर्व्वं सकृन्मया॥ ५॥
कारां भित्वा विनिःसृत्य विषयान् भ्राम्यता मया।
अकारिषातां द्वावेतौ शैलपीठौ दृशोऽतिथी॥ ६॥
सताद्याख्यातस्य चास्य गिरेः पृष्ठेऽम्बिकावनम्।
दर्शिता भवता चक्षुः सफलं कारितात्मनः॥ ७॥

---

एनं आश्रमं ये जना अपश्यन् तैर्जनैर्न अन्वतप्त। पचे। इत्येवेति जानीहीति शेषः। अनुशये ७।, न १।, अयं १।, तपः ५।, ॥ ४॥

स इति। स सिद्धाश्रमः अस्यैव पर्व्वतस्य अधित्यकास्थः ऊर्द्ध्वभूमिस्थः, अत्र आश्रमे धर्म्मिणा धार्म्मिकेण आगमः आगमनं इष्यते। वासोऽर्हन् वासविषये अर्हन् योग्यो भवन् स पीठः पूर्व्वं पूर्व्वकाले सकृदेकवारं मया दृक्पथश्च अकारि दृक्पथो दर्शनजन्यो यो पथः ज्ञानं तस्मिन् चरतीति स तथा। चाक्षुषज्ञानविषयीकृत इत्यर्थः। पचे। धर् इति पर्व्वतस्य सं। मिणागमः १।, इष्यते ८।, सः १।, वा १।, सेः ६।, इन दृक्-पथ चपः ५।, ॥ ५॥

कारामिति। कारां बन्धनालयम्। विषयान् देशान्। शैलपीठौ पर्व्वतपीठस्थस्थानद्वयं दृशोऽतिथी दर्शनविषयौ। पचे। सूत्रस्य उं। ६॥

सतेति। सता साधुना भवता अद्य आख्यातस्य विख्यातस्य अस्य गिरेः पर्व्वतस्य पृष्ठे अम्बिकावनं दर्शिता आत्मनश्चक्षुश्च सफलं कारिता। पचे। सेति शिवस्य सं। सः १।, ताद्याख्यातस्य ६, (च) ॥ ७॥

व्याकरणम्।

अनुशये नायं तपः। अनुतापार्थे अयं इण् न स्यात्। तैरन्वतप्त॥ ४॥

मिणागम इष्यते स वा सेर्हन्-दृक्पथचपः। इनदृक्पथहाजन्तात् सेस्थाने मिणागम इष्यते स तु वा विकल्पेन भवतीत्यर्थः॥ ५॥

अकारिषातां॥ ६॥

स ताद्याख्यातस्य च। ताप्रभृति आख्यातस्य च स मिणागमः स्यात्। दर्शिता, कारिता॥ ७॥

एतत् सर्व्वं निवेदितं अत्र विधेयं निर्णीयतां।

कुमारः। अवश्यमेव गन्तव्यं नालं विलम्बेन। (सचिवं प्रति) सखे! किं मौनमालम्बसे? अस्योत्तरं कार्य्यं।

स। (तं प्रति) शं जानाम्युत्तरेणातो यन्न तेऽद्य मनीषितात्।
मया नादायि तेनास्योत्तरमस्थिरचेतसा॥ ८॥

यतः। हितकृच्चोत्तरेणानुबन्धोऽघश्चेति मन्यते।
चेत्तदातः स तत् कार्य्यात् धीधायः स्वं निवर्त्तयेत्॥ ९॥

इति तत्र गमनार्थं चेतो मे प्रसन्नतां न लभते। अतएव किम्बदन्ती मनस्खलति चेत् गच्छेति।

कुमारस्तं प्रति। भवान् सर्व्वमेव मनीषितं प्रतिबध्नाति।

शमिति। अतोऽस्मात् ते तव अद्य मनीषितात् अभीप्सितकर्म्मणः यत् यस्मादुत्तरेण उत्तरकाले शं कल्याणं न जानामि तेन हेतुना अस्थिरचेतसा मया अस्योत्तरं न अदायि न दत्तम्। पक्षे। शं मङ्गलार्थं। जानामि ८।, उत्तरेणातः ५।, यन १।, ॥ ८॥

हितेति। हितकृत् जनः चेत् यदि उत्तरकाले अनुबन्धो दोषोत्पादोऽघश्च व्यसनञ्च अर्थात् विपदिति मन्यते, तदा अतोऽस्माद्धेतोः स हितकृत् धीधायो बुद्धितत्कार्य्यात् स्वमात्मीयं जनं निवर्त्तयेत्। धीधाय इति धियं दधातीति स तथा। धाधातोर्णप्रत्यये रूपम्। पक्षे। हितेति सं। कृत् १।, (च) उत्तरे ७, अनुबन्धः १।, घञ् १।, (च) इति १।, मन्यते ८।, तदा ७।, आतः ५।, सः १।, ॥ ९॥

व्याकरणम्।

जानाम्युत्तरेणातो यन्। उत्तरे इन् यस्य तादृशस्य आदन्तात् यन् स्यादिति जानामि। अदायि॥ ८॥

कृच्चोत्तरेणानुबन्धो घञ्चेति मन्यते चेत्तदातः सः। चेत् यदि परत्र णकारानुबन्धः कृतप्रत्ययो घञ् च इति मन्यते, तदा आदन्तात् स यन् स्यात्, चकारः समुच्चये। धीधायः॥ ९॥

भाविहमाऽद्य वचनं प्रयोज्यं भवतेदृशम्।
प्रतीकवाचा यात्रायां मतिद्वैधाय भूयते ॥ १० ॥

अतस्तत्र गमनार्थं कृतनिश्चयस्य मे वारणं न युज्यते। इति ते अम्बिकावनं प्रति प्रतस्थिरे।

एतस्मिन् समये अम्बिकापीठेश्वरी विकटां प्रति। पुत्रि! तपःसिद्धासि।

मन्यतामिति ते दुःखभञ्जनोऽवेधि! लोपनम्।
दुःखस्याभूदभाज्यद्य हृदयग्रन्थिभिश्च ते ॥ ११ ॥
वरलम्भो भवेदेतन्नमे स्थिरमते! तव।
तपःफलं त्वयालाभि स्वेष्टसिद्धिरलम्भि च ॥ १२ ॥

भावेति। हे भाव! हे विद्वन्! इह यात्रासमये अद्य ईदृशं वचनं भवता मा प्रयोज्यं न प्रयोक्तव्यम्। अत्र हेतुमाह, यात्रायां यात्रासमये प्रतीकवाचा प्रतिकूलवचसा मतिद्वैधाय भूयते मतिद्वैधं जन्यते। भावि ७।, (ह) माद्यवचनं १।, प्रयोज्यं १।, भवता ३।, ॥ १० ॥

मन्यतामिति। हे अवेधि! नियमवशात् अकृतकेशसंस्कारे! ते तव दुःखभञ्जनः एति आगच्छति इति मन्यतां तव दुःखस्य लोपनमभूत् हृदयग्रन्थिभिश्च नानासंशयैश्च अद्य अभाजि भग्नं। पक्षे। दुःखेति दुःखवतः सं। भञ्ज-नः ६।, वा १।, इधि ७।, लोपनं १।, ॥ ११ ॥

वरेति। हे स्थिरमते! तव वरलम्भः पतिलाभः एतन्नमे अस्मिन् पर्व्वते भवेत्। त्वया तपःफलं अलाभि इष्टसिद्धिरुपसिद्धिश्च अलम्भि। पक्षे। वरेति सं। लम्भः ६।, भवेत् ८।, एतत् १।, न १।, मेः ५।, ॥ १२ ॥

व्याकरणम्।

भावि ह माद्यवचनं प्रयोज्यं भवता। भावे आत्मनेपदस्याद्यवचनमेव प्रयोक्तव्यं। हकारोऽवधारणे। भूयते ॥ १० ॥

भञ्ज-नो वेधि लोपनं। भञ्जधातोर्नकारस्य लोपः स्याद्वा इधि। अभाजि ॥ ११ ॥

लम्भो भवेदेतन्न मेः। लभधातोर्नकारलोपो वा स्यादिधि न तु मेः। अलाभि, अलम्भि ॥ १२ ॥

अथ कुमारादय: अम्बिकावनं प्राप्ता: ।

तैस्तत्रादर्शि सा देवी प्रणम्यास्तावि भक्तित: ।
अग्राहि मूर्ध्नि निर्माल्यं तेन चाघान्यघानिषु: ॥ १३ ॥

अथ दास: सचिवं प्रति । पीठेश्वरी पूजनीया, भवान् स्नानाय व्रजतु । कुमार: प्रात:स्नातो विश्राम्यतु । अथ सचिवे स्नानार्थं गतवति दास: कुमारं प्रति ।

दृश्यन्तां पारिजातानि कुसुमानीह कानने ।
भूदुर्लभानि चीयन्तां गौर्य्या: पूजार्थमास्थया ॥ १४ ॥

अथ कुमारो हृष्टस्तत्कुसुमानि चिन्वन् वानरो बभूव । अथ दासस्तस्मात् स्पर्शमणिमादाय प्रतस्थे ।

अथ व्रजन्तं तं हृष्टं गृहीत्वा पथि दस्युभि: ।
अनीयाथ नृशंसोऽयमुपजर्हेऽम्बिकां सतीं ॥ १५ ॥

अथ सचिवस्तत्रागत्य कुमारं दासञ्चादृष्ट्वा कुमारो हत इति मत्वा बहु विलप्य देशं प्रतिजगाम ।

अथ विकटा काली प्रणम्य स्तुत्वा बद्धाञ्जलि: । मात: ! मम वर: केनात्रानीत: ।

---

तैरिति । तेन हेतुना अघानि पापानि अघानिषु: हतानीत्यर्थ: । पचे । उदाहरणम् ॥ १३ ॥

दृश्यन्तामिति । आस्थया भक्त्या । अन्यत् सुगमं । पचे । उदाहरणमात्रं ॥१४॥

अथेति । सुगममेतत् । पचे । सूत्रस्य च ॥ १५ ॥

व्याकरणम् ।

अदर्शि, अस्तावि, अग्राहि, अघानिषु: ॥ १३ ॥

चीयन्तां, दृश्यन्तां ॥ १४ ॥

उपजर्हे ॥ १५ ॥

देवी तां प्रति। तव तपसैवाकृष्यमाणः कुमारः स्वयमेवात्रा-कर्षि। एतद्भवत्यपि यदुक्तं वृद्धैः।

"क्रियमाणन्तु यत् कर्म्म स्वयमेव प्रसिध्यति।
सुकरैः स्वैर्गुणैः कर्त्तुः कर्म्मकर्त्तेति तद्विदुरिति॥"

तपस्यतास्त्व कर्म्मानुरूपं फलं भवत्येव तद्गृहाण।

फलभाक् कर्म्मवत् कर्म्मकर्त्ता स्याद्धि कर्म्मणि।
सत्यत्र कस्य वा दुःखमभेदि स्वयमेव हि॥ १६॥

इति तव समीहितं स्वयमेव प्रसिध्यतित्यत्र।

अथ विकटा। मातस्तव चरणसरोजं समक्षं दृष्टवत्या मे नहि किमपि दुर्लभमस्ति। अतएवोक्तं।

भिद्यन्ते सर्व्वदुःखानि छिद्यन्ते सर्व्वसंशयाः।
क्षीयन्ते चास्य कर्म्माणि येनादर्शीश्वरीपदम्॥

(देवीं प्रति) मातरिति तु चिन्तये।

अनुरज्येत् कथं राजसुतो वृन्दारको गुणी।
जात्या रूपगुणैश्वर्य्यैर्व्विहीनायां मयीश्वरि!॥ १७॥

फलेति। कर्म्मकर्त्ता जनः कर्म्मवत् कर्म्मानुरूपेणैव फलभाक् स्यात्। कर्म्मणि सति साधुनि कर्म्मणि सति अत्र लोके कस्य वा दुःखं स्वयमेव नहि अभेदि अपि तु तथा। पद्ये। फलभागिति कं। कर्म्मवत् १।, कर्म्मकर्त्ता १।, स्यात् ८, नहि १।, कर्म्मणि ७।, ॥ १६॥

अन्विति। हे ईश्वरि! जात्यादिभिर्व्विहीनायां वृन्दारको रूपवान् गुणी गुणवान् राजसुतः कथं अनुरज्येत् अनुरक्तो भवेत्। पद्ये। कं॥ १७॥

व्याकरणम्।

क्रियमाणन्तु यत् कर्म्मेत्यादि। कर्म्मवत् कर्म्मकर्त्ता स्यात् नहि कर्म्मणि। स्वय-मेव दुःखमभेदि॥ १६॥

क्षयं भिद्यन्ते, छिद्यन्ते क्षीयन्ते। अनुरज्येत् राजसुतः॥ १७॥

देवो तां प्रति ।

स त्वां पश्यन् भवेद्रक्तो रत्येवाऽनन्यजस्त्वया ।
रज्यन्त्याऽनु स्वयं रज्यन् यथेष्टं विहरिष्यति ॥ १८ ॥

विकटा । मातर्नैतद्विचित्रं । यतः ।

रेखा च स्थूलताप्यते केन वा किन्नामाऽऽप्तं कृपया ते ॥ १९ ॥
अम्बिका कृपा कामदुघा दुग्धोऽपि वा ।
किमशक्यमदोहि जगन्मोहयितुम् ॥ २० ॥

स इति । स राजसुतः त्वां पश्यन् सन् रक्तोऽनुरागवान् भवेत् त्वयेति शेषः । स स्वयमनुरज्यन् सन् अनुरज्यन्त्या त्वया सह यथेष्टं विहरिष्यति, क इव इत्याह, अनन्यजः कामो रत्या इव । पक्षे । सत्वाम् इति गमनशीलस्य जन्तोः सं । पश्यन् १।, भवेत् ८।, रक्तः ५।, रत्ये ७।, वा १।, ॥ १८ ॥

रेखेति । ते तव कृपया केन वा जनेन किं नाम किं वस्तु न आप्तम् । तव कृपया रेखा च रेणुनापि स्थूलता आप्यते । पक्षे । रेति वक्रः सम्बोधनम् । इण् १।, वा १।, अचः ५।, ॥ १९ ॥

अम्बिकेति । अम्बिकायाः कृपारूपा या कामदुघा गौ सत्त्वा दुग्धा जनस्य अदो जगत् एतत् भुवनं मोहयितुं किं अशक्यं ? अपि तु शक्यमेव । पक्षे । अम्बिकाकृपा-कामदुघा इति अम्बिकायाः कृपैव कामदुघा येषां तेषां सम्बोधनम् । दुहः ५।, (अपि) वा १।, ॥ २० ॥

व्याकरणम् ।

पश्यन् भवेद्रक्तो रत्ये वा । रक्तः पं श्नन् च भवेत् र प्रत्यये वा । रज्यन् । यनि कृते एवेष्टसिद्धौ श्नन् विधानफलं दर्शयति रज्यन्त्येति ॥ १८ ॥

इण् वाऽचः । अजन्तादिण् वा स्यात् कर्म्मकर्त्तरि । अआप्त ॥ १९ ॥

दुग्धोऽपि वा । अदोहि ॥ २० ॥

देवी तां प्रति।

तपःसत्कर्मणो नास्त्यप्राप्यं यस्मात्तपोबलात्।
पृथुना दुह्यमानेयमदुग्ध सुरभीप्सितम्॥ २१॥
सुखञ्च सत्कर्मपचो न भवेत्तत्तपोरुधः।
कर्मद्रुमोऽपक्व सुखं फलं यस्य स सार्थभूः॥ २२॥
तत् साधूनां गौणमुख्यभेदात् कर्मद्वयीमताम्।
एकं कर्म्मैव तत्त्वेन जानीहि सुखकृत् भवेत्॥ २३॥

---

तप इति। तप एव सत् विद्यमानं कर्म्म यस्य तादृशजनस्य अप्राप्यं नास्ति यस्मा-द्धेतोः पृथुना पृथुनाम्ना राज्ञा तपोबलात् दुह्यमाना इयं सुरभी पृथ्वी स्वयमेव ईप्सितं अदुग्ध। पक्षे। तप इति तपोविशिष्टस्य सं। सत्कर्म्मणः ५।, न १।, अस्ति ८।, ॥२१॥

सुखमिति। सुखञ्च सत्कर्म्मणः पचः परिणाम एव। सत्कर्म्मपाक एव सुखमित्यर्थः। तपोरुधः तपोरुणद्धि अर्थान्न करोति यः स तथा तादृशस्य अर्थात् तपस्याविहीनस्य तत्सुखं न भवेत्। यस्य जनस्य कर्म्मद्रुमः कर्म्म एव वृक्षः सुखं फलं सुखरूपं फलं अपक्व, स एव जनः सार्थभूः सार्था सफला भूरुत्पत्तिर्यस्य स तथा। पक्षे। सुखञ्चेति सुखचरस्य सं। अलुक्समास इष्टः। सत्कर्म्मपचः ५।, न १।, भवेत् ८।, तत् १।, तपः ५।, रुधः ५।, ॥ २२॥

तदिति। गौणमुख्यभेदात् आनुकल्पिकमुख्यकल्पिकभेदेन यद्वा काम्यनित्यभेदेन कर्म्मद्वयीमतां साधूनां एकमेव तयोरेकतरमेव कर्म्म तत्त्वेन याथार्थेन सुखकृत् जानीहि। पक्षे। तत्सा इति तन्नामकस्य सं। धूनां ६॥, गौणमुख्यभेदात् ५।, कर्म्मद्वयीमतां ६॥, एकं २।, कर्म्म २।, (एव) तत्त्वेन ३।, जानीहि ८।, ॥ २३॥

व्याकरणम्।

सत्कर्म्मणो नास्ति। सकर्म्मकदुहधातोरिण् न स्यात्। दुह्यमाना सुरभी अदुग्ध ॥ २१॥

सत्कर्म्मपचो न भवेत् तत् तपोरुधः। सकर्म्मकपचस्तपोरुधश्च तत् इण् न भवेत्। कर्म्मद्रुमोऽपक्व फलं सुखं॥ २२॥

धूनां गौणमुख्यभेदात् कर्म्मद्वयीमतां एकं कर्म्मैव तत्त्वेन जानीहि। तत्त्वेन कर्म्म-त्वेन। अदृष्टेन लोका धर्म्मान् कार्य्यन्ते, लोकान् धर्म्माः कार्य्यन्ते॥ २३॥

इत्यपि बोध्यं । प्राक्तनेन शुभादृष्टेनैव लोका धर्म्मान् कार्य्यन्ते अशुभादृष्टेन तु लोकान् अधर्म्माः कार्य्यन्ते । तदस्तु अलमतिविस्तरेण । संप्रति ।

प्राप्तासि धन्याऽद्य धवं तन्मुख्यं कर्म्म चिन्त्यताम् ।
कर्म्मत्वेनैव कल्याणि ! कण्ठं मालाऽस्य नीयताम् ॥ २४ ॥

विकटा । मातस्त्वं वरं द्रष्टुमिच्छामि ।

अथाम्बिका संज्ञया तं वानरं दर्शयन्ती आह । पुत्रि ! तवायं पतिरिति ।

अथ विकटा एवं विकटं वानरं दृष्ट्वा वज्राहतलतेव पतिता मुमूर्च्छ । अथ प्राप्तसंज्ञा देवीं प्रति । मातस्त्वत्पादसरोजदर्शनमेव मम तपःफलं जातं, पतिन्तु न कामये । यतः ।

शुभेच्छुर्याचरेत् कर्म्म सत्फलप्रणिजन्तया ।

प्राप्तेति । धन्या त्वं अद्य धवं पतिं प्राप्तासि, तत् तस्मात् मुख्यमावश्यकं कर्म्म विवाहरूपमावश्यकं कर्म्म कर्म्मत्वेन करणीयत्वेन विचिन्त्यताम् । तत् किमित्याह, हे कल्याणि ! अस्य वरस्य कण्ठं माला नीयताम् । पद्ये । प्राप्त असिध इति आगतस्य असिधारकस्य सं । न्याद्यधवं १।, तत् १।, मुख्यं १।, कर्म्म १।, चिन्त्यतां ८।, कर्म्मत्वेन ३।, ( एव ) ॥ २४ ॥

शुभेति । या नारी शुभेच्छुः शुभफलेच्छुः सती सत्फलप्रणिजं प्रणेनिज्ञ पुण्यानि यत तादृशं कर्म्म आचरेत्, तया नार्य्या वाच्यकर्म्मणां निन्दितकर्म्मणां एवं व्युष्टिः एतादृशं फलं अर्थात् वानरपतिरूपफलं न स्वमात्मानं गमिष्यते न प्रापयिष्यते अर्थाद्विवाहश्च फलं

व्याकरणम् ।

न्याद्यधवं तन्मुख्यं कर्म्म चिन्त्यतां कर्म्मत्वेनैव । णीप्रभृतिधातूनामिदमिति न्याद्यधवं अर्थात् न्यादिप्रभृतिधातुसम्बन्धि तत् प्रसिद्धं मुख्यमेव कर्म्म कर्म्मत्वेन चिन्त्यतां । अस्य कण्ठं माला नीयतां ॥ २४ ॥

न वाच्यकर्म्मणामेवं व्युष्टिः स्वं गमयिष्यते ॥ २५ ॥

इति साश्रुनेत्रामधोमुखीं प्रति देवी । पुत्रि ! मैवं यतः ।

अमुख्यं याचाद्य धवं कर्म्मैवमफलं निजम् ।
मन्यसेऽज्ञाऽसि सा कर्म्मद्रुर्यच्चिक्ये सत् फलं त्वया ॥ २६ ॥

यतोऽयं वानरो द्दश्यस्तव सुदेवनामा नृपसुतः अद्य ममात्र कानने पारिजातकुसुमापहरणदोषात् वानरोऽजनि तत्तु तव तपसैवेति जानीहि । यतः ।

कुमारेणावानरेण तवोद्वाहो घटेत किम् ।
कथं वैनं निजावासो रुध्येताऽयोग्यया त्वया ॥ २७ ॥

न गच्छेष्यति । वाच्यन्तु कुत्सिते हीने वचनार्हे इति । व्युष्टिः फले समृद्धौ चेति कोषः । पचे । सत्फलप्र इति सत्फलपालकस्य सं । पॄशि पालने इत्यस्मात् उणादि-कारकप्रत्यये रूपम् । अभ्र इत्यादिवत् । णिजन्त-यान-वाच्यकर्म्मणां ६॥, एवं १।, ॥ २५ ॥

अमुख्यमिति । या त्वं धवं पतिं अमुख्यं अवरेण्यं मन्यसे, एवं निजमात्मीयं कर्म्म तपोरूपं कर्म्म अफलं विफलं मन्यसे, सा त्वमज्ञाऽसि अस्य फलमनधिगतासि । त्वया कर्म्मद्रुर्निजतपोरूपकद्रुमः सत्फलं साधुफलं चिक्ये । चिक्ये इति चिञ् चयने इत्यस्य रूपं । मुख्यवर्य्यवरेण्यार्य्या इति कोषः । अमुख्यं १।, याचाद्यधवं १।, कर्म्म १।, एवं १।, ॥ २६ ॥

कुमारेणेति । अवानरेण वानरत्वमनापन्नेन कुमारेण राजसुतेन सह तवोद्वाहो विवाहः किं कथं घटेत । कथं वा अयोग्यया रूपगुणजात्यादिभिरसरूपया एनं कुमारं निजावासो निजगृहं रुध्येत रुद्धः कार्य्येत । पचे । सूत्रस्य उं ॥ २७ ॥

व्याकरणम् ।

णिजन्तयानवाच्यकर्म्मणामेवं । णिजन्तगतिवाचिनामकर्म्मकाणाञ्च धातूनां एवं मुख्यमेव कर्म्म कर्म्मत्वेन चिन्त्यतां । व्युष्टिः स्वं गमयिष्यते ॥ २५ ॥

अमुख्यं याचाद्यधवं कर्म्मैवं । याचादि धातुसम्बन्धि अमुख्यं मुख्यभिन्नं गौणकर्म्म एवं अर्थात् कर्म्मत्वेन चिन्त्यतां । त्वया कर्म्मद्रुः सत्फलं चिक्ये ॥ २६ ॥

एनं निजावासो रुद्ध्येत त्वया ॥ २७ ॥

न वानरः स्यादयमद्य चेत् तदा पर्य्यङ्कशायी नृपनन्दनः कथम् ।
शय्यां निजां कच्चरलक्तकास्तरां त्वयाधिशाय्येत महीध्रकन्दरे ॥२८॥

सदाऽन्वेष्यति ते साध्वि ! दिवाऽसौ कदलीप्रियः ।
रात्रौ भावी नरस्तर्हि वक्ष्यतेऽसौ त्वयेङ्गितम् ॥ २९ ॥

अतोऽलं विलम्बेन ।

गान्धर्व्व विधिनैवास्य कण्ठे माला प्रदीयताम् ।
कदलीं भोजयन्त्यैनमावासः प्राप्यतां निजः ॥ ३० ॥

इत्येवमुक्त्वा अम्बिका अन्तर्दधे । विकटापि अनिच्छन्त्यपि उपासितदेवतावाक्यात् तथाऽकरोत् ।

इति अष्टमीरात्रप्रहासे प्रथमोऽध्यायः ॥ ० ॥ * ॥

न वानर इति । चेत् यदि अद्य अयं कुमारो वानरो न स्यात् तदा महीध्रकन्दरे पर्व्वतगुहायां कच्चरलक्तकास्तरां मलदूषितौ यौ लक्तकौ जीर्णचीरवस्त्रं स एवास्तरो यत्र तादृशीं निजामात्मीयां शय्यां पर्य्यङ्कशायी नृपनन्दनः कथं त्वया अधिशाय्येत शयानं कार्य्येत । पद्ये । उं ॥ २८ ॥

सदेति । हे साध्वि ! कदलीप्रियोऽसौ वानरः दिवा दिवसे सदा ते तव अन्वेष्यति पश्चात् गमिष्यति, रात्रौ नरो मनुष्यो भावी, तर्हि त्वया असौ कुमारः ईङ्गितं वाञ्छितं वक्ष्यते । पद्ये । उं ॥ २९ ॥

गान्धर्व्वेणेति । कदलीं भोजयन्त्या त्वया एनं कुमारं निज आवासः स्वगृहं प्राप्यतां । पद्ये । उं ॥ ३० ॥

व्याकरणम् ।

नृपनन्दनः शय्यामधिशाय्येत ॥ २८ ॥

त्वयासौ ईङ्गितं वक्ष्यते ॥ २९ ॥

निज आवास एनं प्राप्यतां ॥ ३० ॥

इति ढभावपादः ॥ ० ॥

अथ नृपादयः शिष्याः सुबन्धुं प्रति ।

अत्र प्रबन्ध आख्यातः प्रथमश्च द्वितीयकः ।
तृतीयो भवति ज्ञानोदयाय सुखयत्यपि ॥ १ ॥
पीयूषभूत आख्यातश्चतुर्थः पञ्चमस्तथा ।
षष्ठोऽपि चेतिहासः सोऽभवन्नो ज्ञानदीपकः ॥ २ ॥
सप्तमोऽष्टम आख्यातो भव्यार्थो नवमोऽपि च ।
केषां न शृण्वतां नृणां विवेकं जनयिष्यति ॥ ३ ॥

---

अत्रेति । अत्र ग्रन्थे भवता आख्यातः कथितः प्रथमो द्वितीयः तृतीयोऽपि प्रबन्ध इतिहासः ज्ञानोदयाय भवति । तथा सुखयति सुखं जनयति । आख्यातः १।, प्रथमः १।, ( च ) द्वितीयकः १।, तृतीयः १।, भवति ७, ॥ १ ॥

पीयूषेति । तथा चतुर्थः पञ्चमः षष्ठोऽपि पीयूषभूतः सुधातुल्यः कथित इतिहासः नोऽस्माकं ज्ञानदीपकोऽभवत् । पचे । पीयूषेति अमृतस्य सं । भूते ७।, आख्यातः १।, चतुर्थः १।, पञ्चमः १।, ( तथा ) षष्ठः १।, ( अपि ) ॥ २ ॥

सप्तम इति । सप्तमोऽष्टमो नवमोऽपि इतिहासः आख्यातः स भव्यार्थः भव्यं कुशलमर्थः प्रयोजनं यस्य स तथा मङ्गलजनक इत्यर्थः । शृण्वतां जनानां मध्ये केषां नृणां न विवेकं जनयिष्यति अपि तु सर्व्वेषामेव । सप्तमः १।, अष्टमः १।, आख्यातः १।, भव्यार्थः १।, नवमः १।, ( अपि ) ॥ ३ ॥

व्याकरणम् ।

आख्यातः प्रथमश्च द्वितीयकस्तृतीयो भवति । प्रथमः द्वितीयस्तृतीयोऽपि आख्यातो भवति वर्त्तमानकाले स्यात् । सुखयति ॥ १ ॥

भूत आख्यातश्चतुर्थः पञ्चमस्तथा षष्ठोऽपि । चतुर्थः पञ्चमः षष्ठोऽपि आख्यातः भूते अतीते काले भवति । अभवत् ॥ २ ॥

सप्तमोऽष्टम आख्यातो भव्यार्थो नवमोऽपि । भव्यार्थो भविष्यदर्थकः । जनयिष्यति ॥ ३ ॥

ब्रह्मन्निदानीं नरकागतानां लक्षणं श्रोतुमिच्छामः। सुबन्धु-राह श्रूयतां। रिपुञ्जयनामा राजासीत्।

धार्म्मिकप्रथमो नाम्ना ख्यातो भूते स्म योजने।
येन सन्तः स्म मन्यन्ते आत्मानं स्वर्गिणं चणात्॥ ४॥
स राजाऽस्ति स्म पुत्रार्थी यजते यः स्म सोत्सवम्।
पुत्रेष्या विधिना तर्हि नभोवागाह तं प्रति॥ ५॥
यत् भव्यार्थं पुरा यावतामखेनार्च्चिताः सुराः।
राजन्! पुरा फलति तत् यावत् पत्नरा भवत्यृतुः॥ ६॥

---

धार्म्मिकेति। स राजा धार्म्मिकानां मध्ये प्रथमः मुख्यः। नाम्ना ख्यातः स्वनाम-विख्यात इत्यर्थः। येन नृपेण सह चणात् चणकालं व्याप्य योजने मिलने भूते सति सन्तः साधवः आत्मानं स्वर्गिणं मन्यन्ते स्म। पद्ये। धार्म्मिकेति सं। प्रथमः १।, नाम्ना ३।, आख्यातः १।, भूते ७।, अयोजने ७।, ॥ ४॥

स राजेति। स राजा अस्तिस्म। यो राजा पुत्रार्थी सन् सोत्सवं यथा स्यात् तथा पुत्रेष्या पुत्रेष्टिनामकयागेन विधिना यजतेस्म इयाज। तर्हि तदा तं नृपं प्रति नभोवाक् आकाशवाणी आह। पद्ये। सूतस्य छं॥ ५॥

आकाशवाणी किमाह इत्यत आह यद्भव्येति। हे राजन्! पुरा पूर्व्वस्मिन् काले यद्भव्यार्थं यस्य मङ्गलस्य निमित्तं यावता मखेन यज्ञेन सुरा देवाः अर्च्चिताः। तत् भव्यं मङ्गलं पुरा आगामिकाले फलति फलिष्यतीत्यर्थः। कदेत्याह। यावत् यदा तव पत्नरा ऋतुर्भवति भविष्यतीत्यर्थः। भव्यार्थे ७।, पुरायावता ३।, ॥ ६॥

व्याकरणम्।

प्रथमो नाम्नाख्यातो भूते अयोजने। अशब्दस्य योगे भूते अतीते नाम्ना प्रथम आख्यातः स्यात्। स्वर्गिणं मन्यन्ते स्म॥ ४॥

स राजा अस्तिस्म यजतेस्म॥ ५॥

भव्यार्थे पुरायावता। पुराशब्देन यावत् शब्देन च योगे भविष्यदर्थ प्रथम आख्यातः स्यात्। पुरा तत् फलति पत्नरा यावत् ऋतुर्भवति॥ ६॥

तत् श्रुत्वा राजा सहर्षमचिन्तयत्।

कर्हिं पुन्नामनरकमुत्तराम्यात्मजाननम्।
पश्यामि वा कदा कर्ह्याश्लेषतः सोऽस्ति त्वमिकत्॥ ७॥
अथ राज्ञोऽभवत् पुत्रः कालेन ववृधे स च।
दुरात्मा निर्घृणः कर्हिं कं हन्तेति सभीः प्रजा॥ ८॥

प्रजाः ऊचुः। सन्निन्द्यालिप्सासिद्धौ हि केवलं यः प्रवर्त्तते।
सोऽयं धर्म्मं स्थापयति यशः प्राप्नोति पैतृकम्॥ ९॥
यस्तु म्लेच्छमताध्यायी स्वधर्म्मान् द्वेष्टि नास्तिकः।

---

कर्हीति। पुन्नामनरकं कर्हिं कदा उत्तरामि। आत्मजस्याननं कदा वा पश्यामि। स पुत्रः आश्लेषतः आलिङ्गनात् कर्हिं त्वमिकत् अस्ति भवितेत्यर्थः। वा ११, कदा कर्ह्याश्लेषतः ७।, सः ११, अस्ति ८।,॥ ७॥

अथेति। निर्घृणः निर्दयः। कारुण्यं करुणा घृणा इत्यमरः। कर्हिं कदा कं जनं हन्ता हनिष्यतीति कत्वा प्रजा लोकः सभीः भीता इत्यर्थः। पद्ये। सूत्रस्य उदाहरणम्॥ ८॥

सन्निन्द्येति। यो राजपुत्रः केवलं सन्निन्द्यालिप्सासिद्धौ सतां निन्दनीयस्य लिप्स्यस्य अधर्म्मादिना इष्टस्य सिद्धौ प्रवर्त्तते, सोऽयं राजपुत्रः धर्म्मं स्थापयिष्यति पैतृकयशश्च प्राप्स्यति। काकूक्तिरियं अर्थादत्यन्तासम्भवमेतत्। पद्ये। सन्निन्द्येति सं। लिप्स्य-सिद्धौ ७।,॥ ९॥

व्याकरणम्।

वा कदाकर्ह्याश्लेषतः सोऽस्ति। कदाकर्हिंभ्यां योगे स प्रथमाख्यातः स्यात् वा। कर्हिं नरकमुत्तरामि, कदा आत्मजाननं पश्यामि॥ ७॥

कर्हिं कं हन्ता॥ ८॥

लिप्स्यसिद्धौ। लिप्स्येन धर्म्मादिना कस्यापि वस्तुनः सिद्धौ गम्यमानायां भविष्यत्-काले प्रथमाख्यातः स्यात्। अयं धर्म्मं स्थापयति, पैतृकं यशः प्राप्नोति॥ ९॥

स हि पिण्डोदकं दाता पितृर्णमपनेष्यति ॥ १० ॥

इति पौरमुखात् श्रुत्वा राजा पुत्रमाहूय तं प्रत्याह ।

मदुक्तं श्रोष्यसि नवेत्याशंसातश्च जायते ।

कौण्ठ्यं मे तत् भवति चेद्रुचिस्ते वच्मि तत् कियत् ॥ ११ ॥

सति बोधातिशय्येऽपि नाऽद्वितीय उ तेन च ।

सदा कार्य्यं पृच्छते स्वं तेन शं स उताप्नुयात् ॥ १२ ॥

सामर्थ्यतस्तत्कृतिसाध्यताग्रहेऽपीष्टेऽत्यवैधे न बुधः प्रवर्त्तते ।

यस्त्विति । यः राजपुत्रः नास्तिकः म्लेच्छानां मताध्यायी स्वधर्म्मान् द्वेष्टि च । पितृर्णं पितृणां ऋणं । पक्षे । उं ॥ १० ॥

मदुक्तमिति । मदुक्तं मम वाक्यं त्वं श्रोष्यसि न वा, इत्येवं आशंसातः सन्देहात् मे मम कौण्ठ्यं कुण्ठता जायते । तत् तस्मात् चेत् यदि ते तव रुचिः श्रवणेऽनुरागः भवति, तत् तदा कियत् किञ्चित् वच्मि कथयामि । आशंसातः ७ा, (च) जायते दा, ॥ ११ ॥

सतीति । अद्वितीयः अतुल्यो ना पुमान् बोधस्य आतिशय्ये सत्यपि उ भोः तेन च पुंसा स्वं आत्मीयं कार्य्यं पृच्छते, स पुमान् तेन हेतुना शं कल्याणं उत भोः आप्नुयात् । आतिशय्ये ७ा, अपिना ३ा, उतेन ३ा, (च) सदा ७ा, ॥ १२ ॥

सामर्थ्येति । सामर्थ्यतः सामर्थ्यात् तत्क्रियायाः कृतिसाध्यताग्रहेऽपि स्वीययत्न-साध्यत्वबोधेऽपि अत्यवैधे कर्म्मणि इष्टेऽपि अभिलषितेऽपि बुधो धीमान् जनः निन्दाभयभीत्या

व्याकरणम् ।

पिण्डोदकं दाता, पितृर्णमपनेष्यति ॥ १० ॥

आशंसातश्च जायते । आशंसायामपि स स्यात् । चेत् तव रुचिर्भवति तदा वच्मि कियत् ॥ ११ ॥

आतिशय्ये अपिना उतेन च सदा । आतिशय्ये अपिना उतेन च योगे द्वितीय आख्यातः स्यात् सर्व्वकाले । शंस उताप्नुयात् ॥ १२ ॥

निन्दाघभीत्या जनयेदुभे च ते ह्यसत्प्रवृत्तिर्न तदेति जाल्मधीः॥१३॥
फलोदये वा फलकारणग्रहे उदेत्युदर्के कुधियां कुकर्म्मणः।
कुर्य्यां कुकर्म्माऽशुभमाप्नुयां तदा वेत्तीति चेन्नात्र रतिर्भविष्यति॥१४॥
कामोक्तौ कच्चिदासङ्ग उत सद्भिः कृतो न वा।
कामार्थनिस्पृहैर्द्दिवदिनं कामं भजेरमून्॥१५॥

लोकनिन्दापापभयेन न प्रवर्त्तते। हि यस्मात् असत्प्रवृत्तिः ते उभे निन्दापापे जनयेत्। जाल्मधीः जाल्मानां असमीक्ष्यकारिणां धीर्बुद्धिस्तन्नेति तत्र विषयीकरोति। सामर्थ्येतः ५।, तत्कृतिसाध्यताग्रहे ७, (अपि।)॥१३॥

फलोदय इति। कुधियां दुष्टबुद्धीनां कुकर्म्मणः फलोदये वा फले उत्पन्ने सत्येव उदर्के उत्तरकाले फलकारणग्रहः फलकारणस्य बोध उदेति जायते। कुकर्म्म कुर्य्यां अशुभं प्राप्नुयां चेत् यदि इति वेत्ति जानीयात्, तदा तत्र कुकर्म्मणि रतिर्न भविष्यति न भवेदित्यर्थः। फलोदये ७।, वा १।, फलकारणग्रहे ७।, उदर्के ७।,॥१४॥

कामोक्त इति। उत भोः कामोक्तौ कामस्य अभिलषितस्य उक्तौ कथनविषये कच्चित् सद्भिः साधुभिः सह आसङ्गः कृतो न वा। सद्भिः कीदृशैः कामार्थनिस्पृहैः। उत भोः द्विवदिनं अमून् साधून् कामं अत्यर्थं भजेः आश्रयस्व। कच्चित् कामप्रवेदने इत्यमरः। कामोक्तौ ७।, अकच्चिदासङ्गे ७।,॥१५॥

व्याकरणम्।

सामर्थ्येतस्तत्कृतिसाध्यताग्रहेऽपि। सामर्थ्यहेतुकतत्क्रियायां योग्यताग्रहेऽपि द्वितीयः आख्यातः स्यात्। जनयेदुभे च ते ह्यसत्प्रवृत्तिः॥१३॥

फलोदये वा फलकारणग्रहे उदर्के। फलोदयं प्रति फलकारणस्य बोधे द्वितीय आख्यात उदेति उदर्के भविष्यत्काले वा। कुर्य्यां कुकर्म्म, अशुभं प्राप्नुयां, वेत्तीति नात्र रुचिर्भवेत्॥१४॥

कामोक्तौऽकच्चिदासङ्गे। कामोक्तौ द्वितीय आख्यातः स्यात्, कच्चित् शब्दयोगे न स्यात्। कामं भजेरमून्॥१५॥

अथ दुर्म्मतिनामा राजपुत्र आह ।

तात ! यस्याधुनेच्छार्थे न तृतीयोऽपि चेष्यते ।
पुरुषार्थो येन सता क्वास्ति स आदिश ॥ १६ ॥

निमन्त्रणप्रार्थन एव सर्व्वदा
उपास्त आढ्यं बुधमानिनां गणः ।
वेत्स्यामि कान् वा धननिस्पृहान् सतः
ज्ञानं लभेयं कुत एव वा सतः ॥ १७ ॥

अहो राजन् ! गुरुजनानुमत्यादौ विधौ तथा ।
श्रद्धेक्ष्यते नृणां या सा लोकाचारेक्षणात् परम् ॥ १८ ॥

तातेति । हे तात ! अधुना यस्य साधोः अर्थे इच्छा नास्ति । येन च सता साधुना तृतीयः पुरुषार्थोऽपि अर्थात् कामोऽपि सम्भोगोऽपि न इष्यते, स तादृशः साधुः क्व आस्ते इति आदिश । अर्थात् ईदृक् साधुः अधुना नास्तीति भावः । इच्छार्थेन ३।, तृतीयः १।, ( अपि ) ( च ) इष्यते ८।, ॥ १६ ॥

निमन्त्रणेति । बुधमानिनां गणः आत्मानं बुधं मन्यन्ते ये ते बुधमानिनः तेषां गणः समूहः सर्व्वदैव निमन्त्रणप्रार्थनः सन् आढ्यं धनिनं उपास्ते । कान् वा धननिस्पृहान् सतः साधून् वेत्स्यामि, कुतः कस्मादेव वा सतः साधोः सकाशात् ज्ञानं लभेयं । निमन्त्रणप्रार्थने ७।, ॥ १७ ॥

अहो इति । हे राजन् ! गुरुजनानामनुमत्यादिषु आदिपदात् पूजाभक्त्यादीनां ग्रहणं । तथा विधौ अनुष्ठाने नृणां या श्रद्धा इक्ष्यते सा श्रद्धा परं केवलं लोकाचारदर्शनादेव । नतु पारमार्थिकीति भावः । अनुमत्यादौ ७।, विधौ ७, तथा १।, ॥ १८ ॥

व्याकरणम् ।

इच्छार्थेन तृतीयोऽपि चेष्यते । अपिकारात् द्वितीय आख्यातः स्यात् । इच्छास्ति क्व स आदिश ॥ १६ ॥

निमन्त्रण-प्रार्थने । निमन्त्रण-प्रार्थनयोर्द्वितीयतृतीयौ स्याताम् । कुत एव वा सतो ज्ञानं लभेयं ॥ १७ ॥

प्राप्तकालेऽपि संप्रश्न इह धर्मस्य नेष्यते ।
प्राप्तकालस्तप: कुर्य्या: क्वापि नैवं वच: श्रुतम् ॥ १९ ॥
वेदमध्यापयेः पुत्रमिति नाध्येषणं श्रुतम् ।
श्रुतात्वर्थकरीं विद्यां पुत्रमध्यापयेतिगीः ॥ २० ॥
किं भो वेदमधीयीय किं वाधीयीय संहिताम् ।
न श्रुतोऽपीदृश: प्रश्न आर्थिक: श्रूयते परम् ॥ २१ ॥
नित्यं सन्ध्यामुपासीतेति विधि: कै: प्रमीयते ।
प्रमीयते त्वतो भार्य्यां विन्देतेति विधि: परम् ॥ २२ ॥
स्वाशीरर्थे तृतीयोऽंशोऽह्नो देवर्ष्यर्चयैव यैः ।

प्राप्तेति । प्राप्तकालेऽपि धर्मस्य संप्रश्न: जिज्ञासा इह काले न ईष्यते । अन्यत् सुगमम् । प्राप्तकाले ७।, (अपि) संप्रश्ने ७।, ॥ १९ ॥

वेदमिति । सुगमम् । पद्ये । सूत्रस्य उदाहरणम् ॥ २० ॥

किं भो इति । अहं किं वेदं अधीयीय पठेयं, उत वा सूत्यादिसंहितामधीयीय ईदृक् प्रश्न: श्रुतोऽपि न । परं केवलं आर्थिक: अर्थसाधक: प्रश्न: श्रूयते । पद्ये । उदाहरणम् ॥ २१ ॥

नित्यं सन्ध्ये ति । प्रमीयते प्रमाणत्वेन मन्यते अपि तु केनापि न प्रमीयते । परं केवलं । अतो भार्य्यां विन्देत इति विधि: प्रमीयते । पद्ये । उदाहरणम् ॥ २२ ॥

स्वाशीति । स्वाशीरर्थे स्वस्य मङ्गलार्थं देवानां ऋषीणाञ्च अर्चया यैर्जनै: अह्न-

## व्याकरणम् ।

अनुमत्यादौ विधौ तथा । अनुमतिप्रैष्याऽध्येषणेषु विधौ च तथा तदुभयं स्यात् । प्राप्तकालस्तप: कुर्य्या: ॥ १८ ॥ १९ ॥

पुत्रं वेदं अध्यापये: । विद्यां पुत्रमध्यापय ॥ २० ॥

किं भो वेदमधीयीय ॥ २१ ॥

नित्यं सन्ध्यामुपासीत ॥ २२ ॥

नीतस्तेषां श्रियं पश्याऽतादृशाञ्चास्तु शं श्रुतेः ॥ २३ ॥

तत् श्रुत्वा राजा आत्मगतं ।

वा निर्गुणोऽसौ तु हितात् विरतः स्वाहिते रतः ।
जीवतादयमित्यस्य केनाप्युक्तं न कर्ण्यते ॥ २४ ॥
हिताहिताग्रहेऽत्यर्थं स्वहितध्वंसकृत् पुमान् ।
जायते तत् स नो वेत्ति किन्तु तत् विद्धि कर्हिचित् ॥ २५ ॥

---

तृतीयोऽंशः भागो नीतः यापितः, तेषां जनानां श्रियं पश्य अर्थादिते निश्रीका इति भावः। अतादृशां देवर्षीन् अपूजयतां श्रियञ्च पश्य अर्थादिते सश्रीका इति भावः। श्रुतेर्व्वेदस्य शं कल्याणमस्तु। इयन्तु साचिपीक्तिः। आशीरर्थे ७।, तृतीयः १।, ॥ २३ ॥

वा निर्गुण इति। असौ तु पुत्रः निर्गुणः वा निर्गुण एव हितात् विरतः निवृत्तः स्वस्य आत्मनोऽहिते रतः आसक्तः। अयं जीवतात् इति वाक्यं अस्य सम्बन्धे केनापि जनेन उक्तं न श्रूयते। तथाहि त्वं जीव इति अस्य सम्बन्धे कोऽपि न वक्तीति भावः। वा १।, निर्गुणः १।, असौ १।, तु-हि १।, तात् १।, ॥ २४ ॥

हिताहितेति। आत्मनो हिताहितयोरग्रहे अबोधे अत्यर्थं अतिशये सति पुमान् स्वस्य हितध्वंसकृत् जायते। स पुमान् तन्न वेत्ति किन्तु कर्हिचित् उत्तरकाले अर्थात् फलोदये तत् विद्धि अतिशयेन ज्ञास्यतीत्यर्थः। ग्रहे ७।, अत्यर्थे ७।, स्व-हि-त-ध्वं १।, ॥ २५ ॥

व्याकरणम् ।

आशीरर्थे तृतीयः। आशीर्व्वादार्थे तृतीय आख्यातः स्यात्। श्रुतेः शमस्तु ॥ २३ ॥

वा निर्गुणोऽसौ तु-हि-तात्। तुह्योस्तात् स्यात् वा, असौ निर्गुणो भवति। जीवतादयं ॥ २४ ॥

ग्रहेऽत्यर्थे स्व-हि-त-ध्वं भवति। अतिशयार्थे बोधविषये सति तृतीयाख्यातस्य स्व-हि-त-ध्वं भवति। तद्विद्धि कर्हिचित् ॥ २५ ॥

मुहुरर्थे च सद्‌गर्ह्ये पतनाय प्रवर्त्तते।
वारितोऽपि स दुर्मेधाः स्वशिरश्छिन्धि तत् परम्॥ २६॥
एनो-युतामासंसर्गात् वा ख्यातः पञ्चमोऽघवान्।
पुमान् भवति तत् पुत्र! माभूत् सङ्गस्त्वया सह॥ २७॥
अवमेष्ट मया ख्यात आशीरर्थे विरज्यसे।
तन्मन्ये त्वं चिरं जीव्या इत्यप्याशीस्तवोषती॥ २८॥

वेदान्ती आह।

मुहुरिति। सद्‌गर्ह्ये साधुभिर्निन्दिते अर्थे कार्य्ये मुहुर्व्वारितोऽपि पतनाय प्रवर्त्तते, स दुर्मेधाः परं केवलं स्वशिरश्छिन्धि पुनःपुनरात्मनः शिरः छिनत्ति। मुहुरर्थे ७।, (च)॥ २६॥

एनोयुतेति। एनोयुतां पापयुक्तानां आसंसर्गात् सम्यक्संसर्गेण ख्यातो वा विख्यातोऽपि पुमान् पञ्चमोऽघवान् पञ्चमो महापातकी भवति। तत् तस्मात् हे पुत्र! त्वया सह सङ्गो माभूत्। मासंसर्गात् ५।, वा १।, आख्यातः १।, पञ्चमः १।,॥ २७॥

अवमेति। हे अवमेष्ट! अवमा अधमा जना इष्टा यस्य स तथा। आशीरर्थे हिताभिशंसार्थे मया आख्याते कथिते;विरज्यसे विरक्तो भवसि; तस्मात् त्वं चिरं जीव्याः इत्यप्याशीस्तव उषती अकल्याणी। अष्टमः १।, आख्यातः १।, आशीरर्थे ७।,॥ २८॥

व्याकरणम्।

मुहुरर्थे च। स्वशिरश्छिन्धि॥ २६॥

मासंसर्गात् वाख्यातः पञ्चमः। माशब्दयोगे पञ्चमाख्यातः स्यात् वा। माभूत् सङ्गः॥ २७॥

अष्टमयाख्यात आशीरर्थे। आशीरर्थे अष्टम आख्यातः स्यात्। त्वं चिरं जीव्याः॥ २८॥

सिषाधयिषितस्य मनोगतस्य साध्वर्थस्यानिष्पत्तौ गम्यमानायां ।
पाश्चात्याख्यात: स राजाऽनुततताप ॥ २९ ॥

राजा आह । अकरिष्यं पुरा कर्म्म चेत् यशस्यं श्रुतीरितम् ।
तदाऽभविष्यत् सत्पुत्रस्तेन शर्म्म यशश्च मे ॥ ३० ॥

राजा ( पुन: पुत्रं प्रति । )

पुरुषार्थेषु पुरुषार्थान्तरसाधकत्वेनोत्तमो
नामार्थे उक्त आदित्यादीनां त्रितयं प्रत्येकं भजते तेनार्थेन
चतुर्व्वर्गसिद्धये श्रद्धान्वितो धीमान् । पाषण्डानान्तु
सोऽर्थ: केवलं द्यूतवेश्यामदादिभि: क्षीयते ॥ ३१ ॥

---

सिषाधेति । सिषाधयिषितस्य साधयितुमिष्टस्य मनोगतस्य साध्वर्थस्य साधुप्रयोजनस्य । पाश्चात्यानां मध्ये आख्यात: सम्यक् ख्यात: । ध्वर्थस्य ६।, अनिष्पत्तौ ७।, गम्यमानायां ७।, पाश्चात्याख्यात: १।, ॥ २९ ॥

अकरिष्यमिति । चेत् यदि अहं श्रुतिविहितं यशस्यं कर्म्म पुरा पूर्व्वकाले अकरिष्यं तदा सत्पुत्रोऽभविष्यत् । तेन पुत्रेण मे मम कीर्त्ति: सुखञ्च अभविष्यत् । पद्ये । सूत्रस्य उ ॥ ३० ॥

पुरुषार्थ इति । पुरुषार्थेषु धर्म्मार्थकाममोक्षेषु मध्ये नाम प्रसिद्ध: अर्थ: पुरुषार्थान्तरसाधकत्वेन उत्तम: उक्त: । धीमान् तेन अर्थेन आदित्यादीनां देवर्षिपितॄणां त्रितयं प्रत्येकं भजते । अन्यत् सुगमम् । नाम १।, अर्थे ७।, उक्ते ७।, आदि-त्यादीनां ६॥, त्रितयं २।, प्रत्येकं २।, भजते ८।, ॥ ३१ ॥

## व्याकरणम् ।

ध्वर्थस्यानिष्पत्तौ गम्यमानायां पाश्चात्याख्यात: । पाश्चात्यश्रम: ॥ २९ ॥

यदि कर्म्म अकरिष्यं तदा सत्पुत्रोऽभविष्यत् ॥ ३० ॥

नामार्थ उक्त आदित्यादीनां त्रितयं प्रत्येकं भजते । अत्र नाम शब्देन युष्मदस्मच्छब्दातिरिक्तो देवदत्तादिनाम शब्दो लक्ष्यते युष्मदस्मदोर्व्विशेषेण प्रतिपादितत्वात् ।

तस्मात् पाषण्डस्त्वं पुरुषार्थसाधनस्य योग्यो नाऽसि । यतः ।

पितॄणापनयः पित्रोः सेवापोषणमेतयोः ।
तीर्थे पिण्डेन दानेन परत्रोपकृतिस्तयोः ॥ ३२ ॥
स्ववंशोद्दीपनं कीर्त्त्या कुटुम्बप्रतिपालनम् ।
वदन्ति मुनयः सर्व्वं पुत्रस्यैतत् प्रयोजनम् ॥ ३३ ॥

इत्यतो मयेदं निश्चितं ।

पुत्र ! सेत्स्यति नो युष्मदुक्तार्थो मध्यमं वयः ।
चपयिष्यसि तत् दुःखैरनवाप्य नृपासनम् ॥ ३४ ॥
सुखं न तेऽभवत् पुत्र ! तथास्मच्चरमं वयः ।
तद्दुःखैः चपयिष्यामि शृखन् निन्दां सदा तव ॥ ३५ ॥

पित्रर्णेति । पित्रर्णापनयः पुत्रोत्पादनेन पितुः ऋणमोचनम् । अन्यत् सुगमम् ॥ ३२ ॥

स्ववंशेति । सुगमम् । पद्ये । उदाहरणम् ॥ ३३ ॥

पुत्रेति । हे पुत्र ! उक्तार्थः प्रागुक्तं पुत्रप्रयोजनं पित्रर्णापनयादिरूपं युष्मत् युष्माकं सकाशात् नो नहि सेत्स्यति । तत् तस्मात् नृपासनमनवाप्य मध्यमं वयः दुःखैः चपयिष्यसि । युष्मत् १।, उक्तार्थः १।, मध्यमं २।, ॥ ३४ ॥

सुखमिति । हे पुत्र ! अस्मत् अस्माकं सकाशात् ते तव तथा सुखं तवाभिमतं सुखं न भवेत् । तत् तस्मात् अहञ्च सदा तव निन्दां शृखन् दुःखैश्चरमं वयः चपयिष्यामि । तथा २।, अस्मत् १।, चरमं २।, ॥ ३५ ॥

व्याकरणम् ।

तथाहि । अथ उक्ते सति युष्मदस्मद्भिन्नं नाम त्यादीनां प्रत्येकं आदिभूतं वितयं भजते । सोऽर्थः चीयते ॥ ३१ ॥ ३२ ॥

मुनयो वदन्ति ॥ ३३ ॥

युष्मदुक्तार्थो मध्यमं । उक्तः प्रत्ययेनाभिहितोऽर्थो यस्य तादृशो युष्मच्छब्दस्त्यादीनां प्रत्येकं मध्यमं वितयं भजते । दुःखैर्वयः चपयिष्यसि ॥ ३४ ॥

तथाऽस्मच्चरमं । तथा अस्मत् उक्तार्थोऽस्मच्छब्दस्त्यादीनां प्रत्येकं चरमं वितयं भजते । अहं वयः चपयिष्यामि ॥ ३५ ॥

अनुत्तरिते पुनराह ।

श्रद्धत्ते यत्र नो भार्य्या पितरौ नानुरज्यतः ।
द्विषन्ति स्वजना यश्च स तु भारो भुवःऽपरम् ॥ २६ ॥

इत्येवोक्त्वा स निष्क्रान्तः । राजा च विमनाः पुरमाविवेश ।

इति अष्टमीरात्रिविनोदे नास्तिकोपाख्यानं नाम
द्वितीयोऽध्यायः ॥ ० ॥ * ॥

---

श्रद्धेति । यत्र यस्मिन् जने भार्य्या न श्रद्धत्ते श्रद्धां न करोति, यस्मिन् जने पितरौ अनुरक्तौ न भवतः ; स पुमान् परं केवलं भुवो भारः । पद्ये । पूर्व्वसूत्रस्य उदाहरणम् ॥ २६ ॥

व्याकरणम् ।

भार्य्या श्रद्धत्ते, पितरौ अनुरज्यतः, द्विषन्ति स्वजनाः ॥ २६ ॥

इति क्तिपादः ॥ ० ॥

सुबन्धुराह । तदाऽवैधकृतो वाच्या अत्रत्या धौरणेश्वराः ।
आसन् कतिपये धूर्त्ताः पाषण्डाः संहचारिणः ॥ १ ॥
तथाऽकृत्याऽसमो बाध्यः कृतस्तत्रत्य आस्तिकः ।
मिथ्यावितण्डया चोपहासैस्तैर्बुधमानिभिः ॥ २ ॥
वाच्ये कर्म्मणि भावे य उदितो रतिमादधुः ।
पृथक्वर्णाश्चैकवर्णा वादेऽजेयाः सतामपि ॥ ३ ॥

---

तदेति । तदा तस्मिन् काले कतिपये अत्रत्या अत्र देशे भवाः पाषण्डा आसन्, किम्भूताः अवैधं वेदैरनुक्तं कर्म्म कुर्व्वन्तीति अवैधकृतः वाच्या गर्हणीयाः धौरणेश्वराः धौरणं घोटकशकटादिकं यानं तैर्गमनशीलाः धनिन इति भावः। संहचारिणः दल इति ख्याताः। कृतः १॥, वाच्याः १॥, अत्र ७।, त्याः १॥, धौः ५।, ॥ १ ॥

तथेति । तैर्बुधमानिभिः आत्मानं बुधं मन्यन्ते ये तैः, तथाऽकृत्या अवैधक्रियया असम आत्मनोऽसमानस्तत्रत्यस्तद्देशभव आस्तिको धार्म्मिको जनः मिथ्यावितण्डया उपहासैश्च बाध्यः व्यथितः कृतः। परपक्षप्रतीवादे वितण्डा इति कोषः। ( तथा ) आकृत्या ३।, समः १।, बाध्यः १।, कृतः ६।, तत्र ७।, त्यः १।, ॥ २ ॥

वाच्य इति । ये संहचारिण उदितः उदयं प्राप्ताः सन्तः वाच्ये गर्हणीये कर्म्मणि भावे स्वभावे चेष्टायाञ्च रतिं अनुरागं आदधुः सतामपि पण्डितानामपि वादे विचारे अजेयाः। वाच्ये ७।, कर्म्मणि ७।, भावे ७।, यः १।, उदितः १।, ॥ ३ ॥

## व्याकरणम् ।

कृतो वाच्या अत्र त्या धौः। अत्र प्रकरणे धातोरुत्तरे वाच्या वक्ष्यमाणाः त्याः प्रत्ययाः कृतः कृत्संज्ञकाः स्युः ॥ १ ॥

तथाकृत्या समो बाध्यः कृतस्तत्रत्यः। तत्र कृत्सु मध्ये आकृत्या समस्तुल्यः त्यः प्रत्ययः कृतो बाध्यः ॥ २ ॥

वाच्ये कर्म्मणि भावे य उदितः। सतामजेयाः ॥ ३ ॥

असमर्थ्यैस्तैस्तथैवानीयतव्यौपरभावनैः ।
रमणीयैर्गीतवाद्यैर्वेश्यापानोत्सवैरहः ॥ ४ ॥
एकदा राट् सुतश्चक्रयानेन सह वेश्यया ।
भ्रमन् श्रुत्वैव तद्गीतं श्रोतव्यं तानुपाययौ ॥ ५ ॥
तत्र हेया स्थिता ये ये आयातोऽसौ नृपात्मजः ।
इति सर्व्वे त उत्तस्थुः प्रददुर्देयमासनम् ॥ ६ ॥

संहचारिणो नृपसुतं प्रति ।

---

असमर्थ्यैरिति । व्यौपरभावनैः विगता औपरभावना येषां ते तथा तैः । उपरि उत्तरकाले भवमिति औपरं पारलौकिकसुखदुःखादि तद्भावनारहितैरित्यर्थः । तैर-समर्थ्यैः रमणीयैर्गीतवाद्यैर्वेश्यामदपानोत्सवैः अहः दिनं अनीयत यापयाञ्चक्रे । तथा १।, ( एव ) अनीयतव्यौ १॥, ॥ ४ ॥

एकदेति । चक्रयानेन युद्धयोग्ययानेन शकटेन । तान् संहचारिणः । श्रुत्वैव श्रवणानन्तरमेव तान् संहचारिण उपाययौ । पञ्चे । उ' ॥ ५ ॥

तत्रेति । तत्र सभायां ये ये हेयाः साधुभिस्त्यज्याः स्थितास्ते सर्व्वे असौ नृपात्मज आयात इत्युक्त्वा उत्तस्थुः देयं दानोपयुक्तं आसनञ्च ददुः । ए १।, ये ७।, आः १।, आतः ६।, ॥ ६ ॥

### व्याकरणम् ।

तथैवानीयतव्यौ । अनीयतव्यौ तथैव भावे कर्म्मणि च वाच्ये इत्यर्थः । रमणीये-र्गीतैः ॥ ४ ॥

श्रोतव्यं गीतं ॥ ५ ॥

ए ये आः आतः । आतः आदन्तस्य आः आकारः ए स्यात् ये परे । हेयाः, देयं ॥ ६ ॥

परिग्रहणीया इमाः प्राग्वाचः क्षतो नो मूर्द्धण्योऽन्तरुपसर्गतो मुक्तिभाक् अद्य प्रेङ्खणीयेन भवद्दर्शनेन ॥ ७ ॥

मेदुरो नलवत् यस्या राज्ञ्या अङ्घ्रिरसौ करैः ।
दुर्यानीयो भानुनापि तद्रजा नो गृहेऽपतत् ॥ ८ ॥

ख्यातो भूतश्च पूतश्च तथा भातो न आश्रमः ।
धन्याः प्रपवनीयाश्च वयमेतेन रेणुना ॥ ९ ॥

अभूत् प्यायकमगमोऽनया प्रक्रमणीयया ।
देव्या नोऽनुगृहीतानामसूर्य्यम्पश्यरूपया ॥ १० ॥

---

परिग्रहेति । प्राक् पूर्व्वं इमा वाचः परिग्रहणीयाः श्रोतव्याः । किं तदाह । प्रेङ्खणीयेण वाञ्छनीयेन भवतो दर्शनेन नोऽस्माकं मूर्द्धण्यः मूर्द्धनि धृतोऽर्थात् गणमध्ये श्रेष्ठोजनः अन्तरुपसर्गतः अन्तरस्थव्यामोहात् मुक्तिभाक् मुक्तः क्षतः । प्राग्वा १।, अचः ५।, क्षतः ६।, नः १।, मूर्द्धण्यः १।, अन्तरुपसर्गतः ५।, ॥ ७ ॥

मेदुर इति । यस्या राज्ञ्याः असौ अङ्घ्रिः चरणं नलवत् पद्मवत् मेदुरः स्निग्धः । भानुनापि करैः किरणैः दुर्यानीयः दुष्प्राप्यः । अर्थात् राज्ञी असूर्य्यं पश्या इति भावः । तद्रजः तत्पदधूलिः नोऽस्माकं गृहे अपतत् । दुरः ५।, न १।, ॥ ८ ॥

ख्यात इति । अनेन रेणुना नोऽस्माकं आश्रमः ख्यातो भूतः विख्यातोऽभूत् । भातः प्रदीप्तः । वयमपि धन्याः प्रपवनीयाश्च पवित्राः स्म । ख्यातः ५।, भूतः १।, पूतः ५।, ( तथा ) भातः ५।, न १।, ॥ ९ ॥

अभूदिति । असूर्य्यम्पश्यरूपया अनया प्रक्रमनीयया प्रकृष्टक्रमनीयया देव्या राज्ञ्या अनुगृहीतानां नोऽस्माकं प्यायकमगमः प्यायस्य वर्द्धितस्य क्रमस्य वाञ्छनीयस्य गमः प्राप्तिरभूत् । प्यायकमगमः ५।, ( न १। ) ॥ १० ॥

व्याकरणम् ।

प्राग्वाचः क्षतो नो मूर्द्धण्योऽन्तरुपसर्गतः । प्राग्वा पूर्व्ववत् अर्थात् णत्वविधिरितो मति । अन्तरशब्दात् उपसर्गाच्च अचः परः क्षसम्बन्धो यो नकारः स मूर्द्धण्यः स्यात् । प्रेङ्खणीयेन ॥ ७ ॥

दुरो न । दुर्शब्दात् उक्तविधिर्न स्यात् । दुर्यानीयः ॥ ८ ॥

ख्यातो भूतश्च पूतश्च तथा भातो न । ख्यादेरुक्तविधिर्नस्यात् । प्रपवनीयाः ॥ ९ ॥

प्यायकमगमो न । प्रक्रमनीयया । प्रगमनीयं ॥ १० ॥

दुर्म्मतिराह। मैवं अस्मज्जोषिज्जनैः किमन्तःपुराङ्गिः प्रगमनीयं। इयन्तु न स्वीया किन्तु परकीया चेमङ्करी नाम वेश्या।
सहचारिणः ( सस्मितं। )

निजाङ्गनैषा न हि चेदितोऽनिजा
ऽथात्ता नु किं दृष्टचरी प्रदर्श्यते।
कीर्त्तिः स्वतो भाति हि तत्प्रकाशने
कैः प्राङ्गनीयं दिशिदिश्युत स्वयम् ॥ ११ ॥

हत हत। यस्याधमर्णा हतभाग्यपूरुषा
नीवी तनुर्यस्य च वाणिजं ततः।
तस्याधमर्णत्वमितेन केवलं
प्रयापनीया निजरेफतां बुधाः ॥ १२ ॥

---

निजेति। चेत् यदि एषा नारी निजाङ्गना निजस्यात्मनो नारी न, तदा अद्य इतोऽत्र स्थले अनिजा अनात्मीया आत्ता गृहीता नु भोः किं कथं प्रदर्श्यते। कीदृशी दृष्टचरी पूर्व्वकाले दृष्टा अस्माभिरिति शेषः। हि यस्मात् कीर्त्तिः स्वत एव भाति प्रकाशते। तत्प्रकाशने तस्याः कीर्त्तेः प्रकाशननिमित्तं कैर्जनैः स्वयं दिशि दिशि प्राङ्गनीयं गन्तव्यं गम्यते इत्यर्थः। नहि १।, ( अ ) इदितः ५।, अनिजाद्यात् ५।, ॥ ११ ॥

यस्येति। हतभाग्यपूरुषाः यस्य जनस्य अर्थात् वेश्याजनस्य अधमर्णाः ऋणकर्त्तारः। यस्य च वेश्याजनस्य तनुरेव देह एव नीवी मूलधनं पुँजीति ख्यातं। अतएव नीवीतः वाणिजं वाणिज्यं तस्य वेश्याजनस्य अधमर्णत्वं इतेन प्राप्तेन अनेन केवलं निजरेफतां आत्मनो रेफतां अधमत्वं बुधाः ज्ञानिनो जनाः प्रयापनीयाः ज्ञापनीयाः भवन्ति। तथाच केवलं आत्मनोऽधमत्वं बुधा न ज्ञापयन्तीत्यर्थः। रेफो याप्यावमाधमा इत्यमरः। वा १।, णिजन्ततः ५।, ॥ १२ ॥

## व्याकरणम्।

नहि चेदितोऽनिजाद्यात्। अनिजादेरिदितश्च नहि भवति। प्राङ्गनीयं ॥ ११ ॥

वा णिजन्ततः। णिजन्तधातोर्वा स्यात्। प्रयापणीयाः ॥ १२ ॥

इति सहसमुखोपधे च स्फुरति नृपात्मजेऽत्रपेऽतिमूढे च ।
आहुः पुनरपि तेऽमुं परिजनवचसा न प्रकोपणीयम् ॥ १३ ॥
आवश्यार्थोऽध्यणो राज्ञा निग्रहोऽनुग्रहो यतः ।
अतस्तत् सत्यमेवेति भाव्यं मेघसमैर्नृपैः ॥ १४ ॥

दुर्म्मतिस्तान् प्रति । भवन्त एव सुखिनः । भवतां सभैव सुधर्म्मेत्युच्यते । ते तं प्रति ।

कार्य्याकार्य्यविवेकीमां सभां नार्हति सत्रपः ।
योऽनुरागयुतो रासु ह सोप्यर्हति नो नृप ! ॥ १५ ॥

---

इतीति । इति श्रुत्वा अतिमूढे अत्रपे निर्लज्जे नृपात्मजे सहसमुखोपधे सहसं हास्ययुक्तं मुखं उपदधातीति स तथा तादृशे स्फुरति दीप्यमाने सति ते संहचारिणः पुनरपि अमुं नृपसुतं आहुः । किमाहुरित्याह । परिजनवचसा न प्रकोपणीयमिति । इति १।, स १।, हससुखोपधेच: ५।, ॥ १३ ॥

आवश्येति । अघी अपराधी अण्यते प्राणितीति अण् प्राणी । ततः अघीचासौ अण् चेति अध्यण् तस्य अपराधिप्राणिनः राज्ञा निग्रहः आवश्यार्थः आवश्यक इत्यर्थः । यतो यस्मात् राज्ञा त्वया अनुग्रहः अतः तत् नृपैर्मेघसमैर्भाव्यं इतिवचः सत्यमेव । तथा हि मेघः वज्रं पातयति अमृतं वर्षति चेति राजा तत्समः । आवश्यार्थः १, ध्यण् १।, णो: ५।, ॥ १४ ॥

कार्य्येति । कार्य्याकार्य्यविवेचकः सत्रपः लज्जायुक्तश्च इमां सभां नार्हति । यो जनः रासु धनेषु अनुरागयुक्तः सोऽपि इमां नार्हति । युतः ५।, ( ऋ आसु ) रासुहस: ५।, ( अपि ) ॥ १५ ॥

व्याकरणम् ।

इति हससुखोपधेच: । हसः सुखे आदौ यस्य उपधायां इच् यस्य तादृग्धातोरिति एवंस विधिरित्यर्थः । प्रकोपणीयं ॥ १३ ॥

आवश्यार्थो ध्यणो: । उवर्णान्तात् आवश्यार्थो घ्यण् स्यात् । भाव्यं ॥ १४ ॥

युतो रासुहसोऽपि । यौतेः ऋवर्णान्ताद्रासुनीतिहसन्ताच्च घ्यण् स्यात् । कार्य्यं ॥१५॥

कश्चोपजायतेऽघानुबन्ध ईशस्य सन्निधौ ।
वाक्यं प्रयोक्तुं सङ्कोचः पृच्छाम्यागमकारणम् ॥ १६ ॥
यद्वा । गोजोऽपराधो योग्यो न ग्रहीतुं महतां पुनः ।
मूर्खभृत्यप्रियोन्मादमत्तानां बालकस्य च ॥ १७ ॥
दुर्म्मतिः । दृष्टं श्रुतं सुखी चाहं शिवारोग्यं सदाऽस्तु वः ।
भूयो यदागमिष्यामि तदा वक्ष्ये प्रयोजनम् ॥ १८ ॥
स एवमुक्त्वा स्वालयमागत्य वयस्येभ्यः सर्व्वमावेद्य पुनराह ।
एकभक्तं तथा नक्तोपवासाऽयाच्य भोजनम् ।
क्षमा निष्ठा यतो दृष्टा न तस्यास्ति प्रमालवः ॥ १९ ॥

---

कश्चेति । ईशस्य प्रभोः सन्निधौ वाक्यं प्रयोक्तुं अघानुबन्धः अपराधप्रयोज्यः कश्च कोऽपि सङ्कोचः कुण्ठता उपजायते । तव आगमनप्रयोजनं पृच्छामि । कः १।, च १।, उपजायते ८।, घानुबन्धे ७।, ॥ १६ ॥

गोज इति । गौर्व्वाक्यं तज्जनितोऽपराधो ग्रहीतुं महतान्तु योग्यो न । गः १।, जः ६।, ॥ १७ ॥

दृष्टमिति । सुगमम् । पद्ये सूत्रस्य त्वं ॥ १८ ॥

एकेति । एकभक्तं व्रतं नक्तं नक्तव्रतं उपवासः अयाचितभोजनञ्च क्षमा निष्ठा कर्म्मसु श्रद्धा यतो यस्मिन् जने दृष्टास्तस्य जनस्य प्रमालवोपि बुद्धिलेशोऽपि नास्ति । क्षमा १।, निष्ठा १।, यतः ५।, दृष्टा १।, न १।, तस्य ६।, अस्ति ८।, ॥ १९ ॥

## व्याकरणम् ।

कश्चोपजायते घानुबन्धे । घकारानुबन्धे परे कश्चः उपजायते चकारः ककारत्वेन विकृतो भवतीत्यर्थः । वाक्यं ॥ १६ ॥

गोजः । अस्य गः स्यात् घिति । योग्यः ॥ १७ ॥

आरोग्यं ॥ १८ ॥

क्षमा निष्ठा यतो दृष्टा न तस्यास्ति । क्षमासहिता निष्ठा क्तक्तवतू यतो यस्मात् धातोर्दृष्टा तस्य च चजयोः कगौ न स्तः । अयाच्यभोजनम् ॥ १९ ॥

तथैवाङ्गयज्ञोनीतोपांशुयाजादिकर्म्मभिः।
केवलं पीड्यते स्वात्मा वेदविश्वासतोऽबुधैः॥ २०॥
यतः। इहैव नरकस्वर्गौ नरको दुःखमेव हि।
सुखं स्वर्ग इति ख्यातमित्यालोच्यं हितार्थिभिः॥ २१॥
इत्याद्युक्त्वा सवयस्यस्तानुपाययौ। तं पुनरायातं सहचारिण ऊचुः।
आवश्यकेऽर्थेऽघ्यणि न क्रुदुद्भवत्यसदृग्रहो वा तदधीनकार्य्यिणः।
भाज्यैव भूषेति बुधो विरज्यते न स्वर्णकारे खलु पश्यतो हरे॥ २२॥
यजस्त्यजश्च प्रवचो धर्म्माणाञ्च वयं सताम्।

---

तथैवेति। तथा अङ्गयज्ञो अङ्गेन प्रधानीभूतयागस्य अङ्गीभूतयागेन यजन्ते ये ते अङ्गयज्ञास्तेषाञ्च न प्रमाणैर्योऽपि नास्तीत्यर्थः। उत भोः उपांशुयाजो यज्ञस्य अङ्गीभूतयागविशेषस्तदादिकर्म्मभिः अबुधैरज्ञानैः वेदवाक्ये विश्वासात् केवलं स्वीय आत्मा पीड्यते। तथा १।, (एव) अङ्गयज्ञः ६।, ॥ २०॥

इहेति। सुगमम्। पद्ये। सूतस्य उ ॥ २१॥

आवश्येति। अर्थे कार्य्ये आवश्यके सति अघ्यणि अपराधिप्राणिनि अर्थात् अपराधिनि जने तदधीनकार्य्यिणः तस्य अपराधिजनस्य अधीनं कार्य्यं यस्य तस्य जनस्य क्रुत् क्रोधो न उद्भवति असदृग्रहो वा असाधुत्वबोधो वा न उद्भवति। एतदेव दर्शयति। भूषा अलङ्कारः भाज्यैव अवश्यं भजनीया इति कृत्वा मतिमान् बुधः पश्यतोहरेऽपि स्वर्णकारे न विरज्यते न विरक्तो भवति। आवश्यके ७।, अर्थे ७।, अघ्यणि ७।, न १।, ॥ २२॥

यज इति। वयं यजो यागस्य प्रवचो वेदस्य धर्म्माणाञ्च त्यजः त्यागकर्त्तारः।

व्याकरणम्।

तथैवाङ्गयज्ञो न। यज्ञाङ्गवाचियज्ञो न स्यात्। उपांशुयाजादि॥ २०॥
आलोच्यं॥ २१॥
आवश्यकेऽर्थे अघ्यणि न। आवश्यकेऽर्थे वर्णोः क्रमो न स्तो अघ्यणि। भाज्या॥ २२॥

त्यज्यास्तत् यदिहायातस्तन्मन्येऽर्थोऽस्ति कोपि ते ॥ २३ ॥

दुर्म्मतिः । तुष्टोऽस्मि वः प्रवाच्यं न याचे तदिति यत् सुखम् ।
भवद्भिर्भुज्यते तस्य भागमेकं प्रयच्छत ॥ २४ ॥
यूयं सतामयाज्यास्त्र संस्पृष्टाः क्ष्माभुजा मया ।
भविष्यथ सतां ग्राह्याः क्व जातिर्धनिनां हता ॥ २५ ॥

संहचारिणः ( सस्मितं ) । स्वेच्छाचारैरस्माभिर्यत् सुखं भुज्यते भवतो नैतत् योग्यं । यतः

यज्ञशेषभुजो न हि भक्ष्ये ऽर्थे गृध्राणां स्पृहां दधति ।
तस्मात् त्वया स एव भोज्योऽस्मत्भोग्ये सुखेऽर्हो न भवान् ॥२६॥

---

तथा वयं सतां साधूनां त्यज्याश्च । यत् यस्मात् इहायातः आगतः तत् तस्मात् ते तव इह कोप्यर्थः किमपि प्रयोजनमस्तीति मन्ये । यजः ६।, त्यजः ६।, ( च ) प्रवचः ६।, ॥ २३ ॥

तुष्ट इति । वो युष्माकं प्रवाच्येन प्रकृष्टवचसा तुष्टोऽस्मि । तत् तस्मात् भवद्भिर्यत् सुखं भुज्यते तस्य सुखस्य एकं भागं प्रयच्छत इति याचे प्रार्थये । पद्ये । सूत्रस्य ञ ॥ २४ ॥

यूयमिति । सतां पण्डितानां अयाज्या अपि क्ष्माभुजा मया संस्पृष्टाः सन्तः सतां ग्राह्या भविष्यथ । कुत्र धनिनां जातिर्हता वा अयाज्या ॥ २५ ॥

यज्ञेति । यज्ञशेषभुजो जनाः गृध्रस्य भक्षे अर्थे वस्तुनि । शेषः सुगमः । भुजः ६।, नहि १।, भक्ष्ये ७।, अर्थे ७।, ॥ २६ ॥

व्याकरणम् ।

यजत्यजश्च प्रवचः । एषां चजोः कगौ न स्तो व्यथि । त्यज्याः ॥ २३ ॥

प्रवाच्येन ॥ २४ ॥

अयाज्या ॥ २५ ॥

भुजो नहि भक्ष्येऽर्थे । यज्ञशेषो भोज्यः । अन्यत्र भुजि भोग्यो ॥ २६ ॥

हा वप्रनियुजः शक्य एवार्थे उत एष हि।
निन्द्येऽर्थे कथमस्माभिर्नियोज्यस्त्वं नृपात्मज॥ २७॥
एतद्वचस्त्वशब्देन नृपसूनो! प्रयुज्यताम्।
यथा न श्रूयतेऽन्यैस्तदवाच्यं धीमतां हि तत्॥ २८॥
इष्टस्य भज आनमो यजो यो वा जपः स्मृतः।
तेन भज्येष्टतुष्टिः स्यात् तुष्टेऽस्मिन् किं न सिध्यति॥ २९॥

---

हावप्रेति। निन्द्येऽर्थे निन्दनीयकार्य्ये नृपात्मजस्त्वं कथमस्माभिर्नियोज्यः नियोजयितुं शक्यः। एष हि अर्थः कार्य्ये निन्दनीये नियोजनं वप्रनियुजः वप्रे केदारे नियुक्तो नियुक्तस्य अर्थात् कृषकस्यैव शक्यः नान्यस्य। हा विषादे। प्रनियुजः ६।, शक्ये ७।, (एव) अर्थे ७।, ॥ २७॥

एतदिति। एतद्वचः भवता यत् प्रार्थ्यते तद्वाक्यं अशब्देन निःशब्देन प्रयुज्यतां यथा येन प्रकारेण तद्वचः अन्यैर्न श्रूयते हि यस्मात् तत् वाक्यं धीमतामवाच्यम्। एतत् १।, वचः ६।, (तु) अशब्देन ३।, ॥ २८॥

इष्टस्येति। इष्टस्य अभीष्टदेवतायाः भजः भजनं आनमः प्रणामः यजो यजनं यो वा जपः स्मृतः शास्त्रोक्तः। तेन कर्म्मणा भज्येष्टस्य भजनीयस्य इष्टस्य तुष्टिः स्यात्, तस्मिन् इष्टे तुष्टे सति किं न सिध्यति अपि तु सर्व्वसिद्धिः स्यात्। भजः ५।, आनमः ५।, यजः ५।, यः १।, वा १।, जपः ५।, स्मृतः १।, ॥ २९॥

व्याकरणम्।

प्रनियुजः शक्य एवार्थे। प्रनिपूर्व्वस्य युजः शक्यार्थे अस्य गो न स्यात्। कथं त्वं नियोज्यः॥ २७॥

एतद्वचस्त्वशब्देन। वचधातोस्तु अशब्दार्थे एतद्विधानं अर्थात् अस्य कोन स्यात्। अवाच्यं॥ २८॥

भज आनमो यजो यो वा जपः स्मृतः। एभ्यो यो ना स्यात्। भज्येष्टतुष्टिः॥२९॥

भवादृशामयं पन्थास्तमेवाश्रय सुव्रत।
अस्वर्ग्यमयशस्यञ्च अभाग्यं कर्म्ममाचर॥ ३०॥
गुरुर्यज्यस्तथानम्यो जप्यो मन्त्रोऽस्य सर्व्वदा।
गुरोर्याज्यानाम्यजाप्यैः किं न सिध्यति भूतले॥ ३१॥

सङ्गचारिणां कश्चित् सस्मितमाह।

प्रवृत्तिभाक् भो भवति स्म यो यतः सदापवर्गादपि शस्त ईड्यते।
स एव धर्म्मोऽस्य सुरस्य उत्तमः कस्तं ततो वारयितुं क्षमो भवेत्॥ ३२॥

मनोवेगसहः शक्तो यः स्यात् स तप्यतां तपः।

---

भवेति। भवादृशां युष्मत्सदृशानाम्। अभाग्यं अभजनीयम्। शेषः सुगमः। पद्ये। सूत्रस्य छं॥ ३०॥

गुरुरिति। गुरुर्यज्यः पूजनीयः आनम्यः नमस्कार्य्यः, अस्य गुरोर्मन्त्रः सदा जप्यः। याज्यानाम्यजाप्यैः पूजनप्रणामजप्यैः। पद्ये सूत्रस्य छं॥ ३१॥

प्रवृत्तीति। भोः यो जनः यतः यस्मिन् धर्म्मे प्रवृत्तिमान् भवति अस्य जनस्य स एव धर्म्मः सुरस्यः उत्तमश्च। स धर्म्मः अपवर्गादपि मोक्षादपि सदा शस्तः प्रशस्त ईड्यते मन्यते। को जनः ततः तस्मात् धर्म्मात् तं जनं वारयितुं क्षमः स्यात्। भवतिस्म ८।, यः १।, यतः ५।, सदा १।, पवर्गात् ५।, (अपि) शस्तः ५।, ईड्यते ८।, ॥ ३२॥

मन इति। यो जनः शक्तः समर्थः मनसो वेगं सहिष्णुश्च स्यात् स तपस्तप्यताम्।

व्याकरणम्।

भाग्यं॥ ३०॥

यज्यः, आनम्यः, जप्यः, याज्यानाम्यजाप्यैः॥ ३१॥

भवतिस्म यो यतः सदा पवर्गादपि शस्त ईड्यते। यतधातोर्यभवति नित्यं, शस्तः शसधातोः पवर्गान्तादपि ईड्यते। सुरस्यः॥ ३२॥

असह्यचित्तवेगस्याशक्य एव जपस्तपः॥ ३३॥

दुर्म्मतिराह। भो भद्रमुक्तं। संक्रचारी तं प्रति।

नाश्राव्यात्महितं लाप्यं स्वाभीष्टमत्रपोऽलपः।
कमोऽवपो न वा वीजं सत्काम्यफलसिद्धये॥ ३४॥
अग्राहि नो गद्यमदोऽगदश्च योगितोऽमुना।
अभविष्यो यदि तदाऽभ्रमिष्यन् मद्यजः भ्रमिः॥ ३५॥

तद्भवतु वाक्प्रपञ्चेनालं।

चराचरोऽयमश्वासि विदितस्ते मनोरथः।

---

असह्यश्चित्तस्य वेगो यस्य तस्य जनस्य जपस्तपः अशक्य एव। सह: ५।, शकल: ५।, य: १।, स्यात् ८।, ॥ ३३॥

नाश्रावीति। आत्महितं लाप्यं वाक्यं न अश्रावि त्वयेति शेषः। अत्रपो निर्लज्जः सन् स्वस्याभीष्टं अलपः अकथयः। अत्र हेतुमाह। स्वाभीष्टफलसिद्धये कमः कामनायुक्तः सन् वीजं वा न अवपः उप्तवानसि पूर्व्वस्मिन् काले इति शेषः। त्रपः ५।, लपः ५।, कमः ५।, वपः ५।, न १।, ॥ ३४॥

अग्राहीति। अदोगद्यं इदं निषेधं वाक्यं न अग्राहि त्वयेति शेषः। अगदश्च त्वं तथा अकथयस्त्यर्थः। अमुना अस्मन्निषेधवाक्येन योगितः युक्तो यदि अभविष्यः तदा मद्यजः भ्रमिः मदजन्यो भ्रमिः अभ्रमिष्यत्। मदः ५।, गदः ५।, (च) यः १।, अगितः ५।, ॥ ३५॥

चरेति। चराचरश्चञ्चलः अयमः नियन्तुमशक्यः अश्वाश्य इत्यर्थः। ते तव मनो-

## व्याकरणम्।

सहः शक्तौ यः स्यात्। सहः शकश्च यः स्यात्। असह्य॥ ३३॥

त्रपोलपः कमो वपोन। एभ्यो यो न स्यात्। लाप्यं, काम्यं॥ ३४॥

मदोगदश्च योऽगितः। अगितः अनुपसर्गात् मदोगदश्च यः स्यात्। गद्यः मद्यः॥ ३५॥

तस्मात् यत् यत् त्वयाचर्य्यं तत् वक्ष्येऽवहितः शृणु ॥ ३६ ॥
लोकनिन्दापवादश्च अकीर्त्तिरुषती गुरोः ।
उपालम्भः प्रजानाञ्च विप्राणां परुषं वचः ॥ ३७ ॥
ज्ञातीनामुपहासस्तैः पंक्तिभोज्यवहिष्कृतिः ।
सह्यासनञ्च सत्कीर्त्ते ! सह्यान्येतानि सर्वदा ॥ ३८ ॥
स्वधर्म्ममानलज्जानां त्यागश्च गुरुशिष्ययोः ।
सम्बन्धस्य तथा पित्रोः सौम्य सह्यान्यमूनि च ॥ ३९ ॥

दुर्म्मतिराह । एतन्मम शक्यं ।

संहचारी । ज्ञातं महाशयोऽसि । शृणु ।

धर्म्मान्नो स्पृहयालोक्य विभृतो यो मनोरथः ।
स सिद्धोऽभूत् व्रजेदानीं इत्यं स्थानं महाशय ! ॥ ४० ॥

---

वधोऽपि ज्ञातः । आचर्य्यं करणीयम् । अवहितः सावधानः । चर-आचरः ५।, यमः ५।, (च) ॥ ३६ ॥

लोकेति । उषती अकल्याणी वाक् । उपालम्भः निन्दायुक्तभर्त्सनम् । परुषं निष्ठुरं । तैः ज्ञातिभिः पंक्तिभोजनात् वहिष्करणं । हे सत्कीर्त्ते ! एतानि सर्व्वदा सह्यानि । पद्ये । छं ॥ ३७ ॥ ३८ ॥

स्वधर्म्मेति । गुरुशिष्ययोः सम्बन्धस्य तथा पित्रोः सम्बन्धस्य च त्यागः हे सौम्य ! तव एतान्यपि सह्यानि । पद्ये सूत्रस्य छं ॥ ३९ ॥

धर्म्मेति । नोऽस्माकं धर्म्मान् स्पृहया आलोक्य यो मनोरथो विभृतः धृतः त्वयेति शेषः, स मनोरथः सिद्धोऽभूत् इदानीं इत्यं गम्यं स्थानं व्रज । क्यप् १।, इभृतः ५।, ॥ ४० ॥

व्याकरणम् ।

चराचरौ यमश्च । अनुपसर्गादितेभ्यो यः स्यात् । आचर्य्यं ॥ ३६ ॥

सह्यानि ॥ ३७—३९ ॥

क्वविभृतः । इणो भृधातोश्च क्यप् स्यात् भावकर्म्मणोः । इत्यं ॥ ४० ॥

मृज्यं तवासनस्थानं भृत्यैर्गोविट् सदाम्भसा ।
नागन्तव्यं पुनरिति याचे त्वां गलवाससा ॥ ४१ ॥

दुर्नीतिराह । कथमिदं । स तं प्रति ।

पितुरपि विरतो नीत्या मृदुपान्तात् स्तुतस्तथाहृतस्य ।
शासः पापोऽस्तुत्योऽस्पृश्योऽसतां गणो गुरुवत् ॥ ४२ ॥
दुर्दैवजुट् व्रती वा न राजधर्म्मोऽर्थसाधनम् ।
कियद्भिः पामरैर्जुष्टो म्लेच्छधर्म्मे प्रवर्त्तसे ॥ ४३ ॥

---

मृज्यमिति । तवासनस्थानं गोमयसदम्भसा भृत्यैः कारणकैः सम्यक् मृज्यं मार्ज्जितव्यं । इह स्थाने पुनर्नागन्तव्यं त्वयेति शेषः इति त्वां याचे । पचे । ञ ॥ ४१ ॥

पितुरिति । नीत्या राजनीत्या विरतः पितुरपि विरतः । पितुः किम्भूतात् मृदुपान्तात् मृत् मृत्युः उपान्ते समीपे यस्य स तथा तस्मात् आसन्नमृत्योरित्यर्थः । पापः पापयुक्तः शासः शासनार्हः अस्तुत्योऽप्रशंसनीयः अस्पृश्योऽसतां गणो गुरुवत् स्तुतस्तथा आहृतस्य त्वयेति शेषः । मृदुपान्तात् ५।, स्तुतः ५।, ( तथा ) हृतः ५।, शासः ५।, ॥ ४२ ॥

दुर्दैवेति । हे दुर्दैवजुट् ! दुरदृष्टान्वित ! कियद्भिः पामरैर्जुष्टो युक्तः सन् म्लेच्छधर्म्मे प्रवर्त्तसे । अर्थसाधनं पुरुषार्थचतुष्टयसाधनम् राजधर्म्मो वा राजधर्म्मोऽपि न व्रतः प्रार्थितः । जुट्व्रतः ५।, वा १।, ॥ ४३ ॥

## व्याकरणम् ।

भृत्यैः ॥ ४१ ॥

मृदुपान्तात् स्तुतस्तथाहृतस्य शासः । मकारोक्तः स्तुहृशासश्च क्यप् स्यात् । अस्तुत्यः, अस्पृश्यः ॥ ४२ ॥

जुट्व्रती वा । जुषव्रजश्च क्वप् स्यात् । वा शब्दः समुच्चयार्थकः । जुष्यः ॥ ४३ ॥

स्वपिति स्वस्य तनुभाक् यन्मञ्चे देववाञ्छिते।
तं त्यक्त्वा कुक्कुटाक्रीड़कन्याहत्याऽद्यृणस्य ते ॥ ४४ ॥
धर्म्मो लोकानुरागस्य कीर्त्तिर्व्वा जन्मन: फलम्।
नृणां तद्विपरीतेषु प्रहत्यं तव दृश्यते ॥ ४५ ॥

तस्मान्नरकागतोऽसीति निश्चिनोमि तस्मात्तव सङ्गो न युज्यते।

कुकर्म्मणि रुचिर्यस्य स्तुत्ये यो न प्रवर्त्तते।
स्वधर्म्मद्विट् विधर्म्मैषी नरकादागतो हि स: ॥ ४६ ॥
वृष: कृत: सम्भृतो वा पाथेयो भवता नहि।
सत्कृत्यद्विट् कुकार्य्यैषी वृथोदर्केण यातना ॥ ४७ ॥

स्वपितीति। स्वस्यात्मन स्तनुं भजते इति स्वतनुभाक् भार्य्या देवैरपि वाञ्छिते यन्मञ्चे यस्यां खट्टायां स्वपिति, तं मञ्चं त्यक्त्वा अद्यृणस्य ते तव कुक्कुटाक्रीड़ा कुक्कुटानां क्रीड़ास्थानं कन्या आहत्या आदरणीयाऽभवत्। पिति ७।, स्वस्य ६।, तन् १।, ॥४४॥

धर्म्मेति। तद्विपरीतेषु धर्म्मादिविपरीतेषु कार्य्येषु तव प्रहत्यं प्रवृत्तिर्दृश्यते। पद्ये। छं ॥ ४५ ॥

कुकर्म्मेति। स्तुत्ये प्रशंसनीये। अन्यत् सुगमम्। पद्ये। छं ॥ ४६ ॥

वृषेति। भवता पाथेय: परलोकयात्रोचित: पथिसम्बन्धी वृष: धर्म्मो न कृत: न वा सम्भृत:। उदर्केण उत्तरकालेन यातना वृथा भजनीया भवतीति शेष:। वृष: ५।, कृत: ५।, सम्भृत: ५।, वा १।, ॥ ४७ ॥

## व्याकरणम्।

पिति स्वस्य तन्। आहत्या ॥ ४४ ॥

प्रहत्यं ॥ ४५ ॥

स्तुत्ये ॥ ४६ ॥

वृष: कृत: सम्भृतो वा। एभ्य: क्यप् वा स्यात्। कृत्य, कार्य्य, वृथा ॥ ४७ ॥

पापामृजस्तथाशंसो वापि तस्य न कर्हिचित्।
अस्थाश्रद्धोऽशस्यरतिर्वह्निः कार्य्यः सतामसि ॥ ४८ ॥
वयमेतेऽमृज्यपापा नः स्वर्गो नो भविष्यति।
एष एव हि सम्भोगः स्वर्गो न सच्चारिणाम्। ४९ ॥
त्वं मार्ग्यपापो गुरुणा धनेन स्वर्गोऽस्ति राज्यं सुखसाधनन्ते।
परेऽपि सामग्र्यपि ते दिवोऽस्ति तदस्पृहं प्रेतमवैम्यहं त्वां ॥ ५० ॥
न ते हिताहिते प्रत्यपिग्रहो वास्ति नोचतः।
अपि ग्रह्यं हितं सद्भ्योऽपि ग्राह्यं नाहितं सता ॥ ५१ ॥

पापेति। पापं न मृजति प्रायश्चित्तादिना न शोधयतीति पापामृजस्त्वम्। तथा कर्हिचिदपि तस्य पापस्य आशंसोऽपि न आशङ्काकृदपि न। शसे प्रशस्ते कर्म्मणि अश्रद्धः श्रद्धारहितः। अशस्यरतिः अशस्ये अप्रशस्ते रतिरनुरागो यस्य स तथा। मृजः ५।, (तथा) शंसः ५।, वा १।, (अपि) ॥ ४८ ॥

वयमिति। अमृज्यपापा अमृज्यानि मार्जयितुमशक्यानि पापानि येषां ते तथा। नोऽस्माकं। शेषः सुगमः। पथ्ये। छं ॥ ४९ ॥

त्वमिति। त्वं गुरुणा धनेन च मार्ग्यं मार्जनाशक्यं पापं यस्य स तथा। ते तव सुखसाधनं राज्यमेव स्वर्गोऽस्ति। परे परकालेऽपि दिवः स्वर्गस्य सामग्री अस्ति तदस्पृहं तेषु अस्पृहं स्पृहारहितं त्वां प्रेतं अवैमि जानामि। पथ्ये। छं ॥ ५० ॥

नते इति। हिताहिते प्रति अपि ते तव ग्रहो वा बोधो वा नास्ति। सता साधुना नीचतो लोकात् हितं ग्रह्यं, सद्भ्यः पण्डितेभ्योऽपि अहितं न ग्राह्यम्। प्रत्यपिग्रहः ५।, वा १।, अस्ति ८।, ॥ ५१ ॥

व्याकरणम्।

मृजस्तथाशंसो वाऽपि। आभ्यामपि क्यप् वा स्यात्। शस्य, अशस्य ॥ ४८ ॥

अमृज्य ॥ ४९ ॥

मार्ग्य ॥ ५० ॥

प्रत्यपिग्रहोवास्ति। प्रत्यपिभ्यां ग्रहः क्यप् वा स्यात्। अपि ग्रह्य, अपि ग्राह्यम् ॥ ५१ ॥

एते मुखागुहस्तद्वत् गुह्यागोह्याविवेकिनः।
किं वक्तव्ये किं वदेयुस्तद्गच्छातो महाशय ! ॥ ५२ ॥

एतत् श्रुत्वा दुर्म्मतिर्दीर्घं निःश्वस्य सवयस्यो निष्क्रान्तः। सुबन्धुराह।

स्वर्गभाक् ज्ञायते लिङ्गात् वदो यश्च सह स्मितैः।
वेदोद्ये मुनिवद्ये च प्रवर्त्ती स्वर्गभाक् स हि ॥ ५३ ॥
धरेवास्ते यः आतद्य वौच्यते भाव एव हि।
भूतो येनानुकम्पित्वात् स स्वर्गी देवभूयभाक् ॥ ५४ ॥

एत इति। एते सहचारिणः मुखागुहः मुखानि अगुह्यानि असंवृतानि येषां ते तथा। तद्वत् तथा गुह्यागोह्याविवेकिनः गोपनीयागोपनीयविवेचनारहिताः। शेषः सुगमः। गुहः ५।, तद्वत् १।, ॥ ५२ ॥

स्वर्गेति। लिङ्गात् अनुमापकचिह्नात् स्वर्गभाक् ज्ञायते। तच्चिह्नमाह। स्मितैः सह यो वदः वक्ति सस्मितभाषीत्यर्थः। वेदोद्ये वेदोक्ते मुनिवद्ये मुन्युक्ते च स्मार्त्ते कर्म्मणि प्रवर्त्ती प्रवृत्तिमान् स एव स्वर्गभाक्। लिङ्गात् ५।, ज्ञायते ८।, वदः ५।, यः १।, सः १।, ( च ) ॥ ५३ ॥

धरेति। यो जनः आतद्य सर्व्वं सह्यं कृत्वा धरेव धरणीव आस्ते। येन च अनुकम्पित्वात् दयाशीलत्वात् भूतः प्राणी भाव एव, भाव आत्मा तद्वदौच्यते। अत्र एव शब्द इवार्थकः। स जनः स्वर्गी देवभूयं देवत्वं भजते इति देवभूयभाक्। क्यप् १।, ईच्यते ८।, भावे ७, ( एव ) भूतः ५।, ॥ ५४ ॥

व्याकरणम्।

गुहस्तद्वत्। गुह्या, गोह्य ॥ ५२ ॥

लिङ्गात् ज्ञायते वदो यश्च सह। लिङ्गात् वदः स क्यप् स्यात् यश्च ज्ञायते। हकारः पादपूरणे। वेदोद्ये, मुनिवद्ये ॥ ५३ ॥

क्यचौच्यते भाव एव हि भूतः। भुवः क्यप् ईच्यते भावे एव लिङ्गात्। देवभूयं ॥ ५४ ॥

प्रवर्त्तते वैधमात्रे प्रतिषिद्धान्निवर्त्तते।
मोक्षाभिलाषी यो नित्यं स जनो ब्रह्मभूयभाक्॥ ५५॥
वैधक्लेशादिसहनस्तथाऽतो न विरज्यते।
यो वृथा जीवहत्यायाः विरतः स्वर्गभुक् स हि॥ ५६॥
साधोर्व्वाच्येऽकर्म्मकर्त्तरि केलिमोदैर्व्वेश्यामदोत्सवैश्च।
मोहिते क्षणमपि सन्निनं वस्तव्यं यस्य पापं पचेलिमं कथमपि
न भवति॥ ५७॥
येऽप्येवंविधाः पुरुषाः शृगालकुक्कुरादीनां
तुल्यास्ते कथ्यन्ते॥ ५८॥

प्रवर्त्तत इति। वैधमात्रे विधेयकर्म्मण्येव प्रवर्त्तते प्रतिषिद्धात् वेदनिषिद्धात् कर्म्मणो निवर्त्तते स साधुर्ब्रह्मभूयं ब्रह्मत्वं भजते इति ब्रह्मभूयभाक्। पद्ये। ञ॥ ५५॥

वैधेति। वैधी विधिबोधितो य उपवासादिक्लेशस्तस्य सहनः सहिष्णुः ततस्तस्मात् क्लेशान्न विरज्यते न विरक्तो भवति। वृथाहिंसाया विरतश्च निवृत्तश्च स तु स्वर्गभुक्। स १।, हनः ५।, तथा १।, तः १।, नः ६।,॥ ५६॥

साधोरिति। वाच्ये गर्हणीये अकर्म्मकर्त्तरि अप्रशस्तकर्म्मकर्त्तरि केलिमोदैः द्यूतक्रीड़ामोदनैर्व्वेश्यामदोत्सवैश्च मोहिते। अत्र सामीप्यार्थे सप्तमी। तथा हि एवम्विधस्य साधोर्गर्हणीयस्य समीपे क्षणमपि न वस्तव्यम्। यस्य पापं कथमपि पचेलिमं न भवति। धोः ५।, वाच्ये ७।, कर्म्मकर्त्तरि ७।, केलिमः १।,॥ ५७॥

येऽपीति। अस्यार्थः सुगमः। ल्याः १।।।, ते १।।।, कथ्यन्ते ८।,॥ ५८॥

व्याकरणम्।

ब्रह्मभूय॥ ५५॥

स हनस्तथा तीनः। खिद्धात् हनः स क्यप् स्यात् भावे नस्य तस्य। जीवहत्यायाः॥ ५६॥

धोर्व्वाच्ये कर्म्मकर्त्तरि केलिमः। धोः केलिमः स्यात् कर्म्मकर्त्तरि वाच्ये। पचेलिमं पापं॥ ५७॥

ल्यास्ते कथ्यन्ते। ते याद्याः अतः ल्यसंज्ञकाः कथ्यन्ते॥ ५८॥

स्तोतव्यः स योग्यकाले शक्येऽर्हेऽर्थे प्रवर्त्तते
यः श्रद्धया वैध एव तस्य साध्यं समीहितम् ॥ ५९ ॥

इति नाव्यपरिशिष्टे अष्टमोरात्रिविनोदः ॥ ० ॥

स्तोतव्य इति । स जनः स्तोतव्यः स्तोतुं योग्यः । यो जनः योग्यकाले क्रिया-योग्ये समये शक्ये स्वशक्तिविषये अर्हे योग्ये वैधे एव श्रुतिविहिते एव अर्थे कार्य्ये श्रद्धया प्रवर्त्तते । तस्य जनस्य समीहितं वाञ्छितं साध्यं साधयितुं शक्यं स्वशक्तिविषय इति यावत् । सः १।, योग्यकाले ७।, शक्ये ७।, अर्हे ७।, अर्थे ७।, ( यः ) प्रवर्त्तते ८।, ॥५९॥

व्याकरणम् ।

स योग्यकाले शक्येऽर्हेऽर्थे च प्रवर्त्तते । स्तु स्तवसंज्ञकः क्रत् योग्यकालाद्यर्थे प्रवर्त्तते स्तोतुं योग्यः स्तोतव्यः । साधयितुं शक्यं साध्यं ॥ ५९ ॥

इति स्त्यपादः ॥ ० ॥

अथ प्रविश्य सूत्रः परिक्रम्य नटीं प्रति । आर्य्ये ! आदिष्टोऽस्मि महाराजेन यथा अद्य महानवमीरात्रिस्तदत्र देव्याः कवच-माहात्म्यादिकं यथाभिव्यक्तौ भवति तदनुसारेणैव नटितव्यमिति । ( नेपथ्याभिमुखमवलोक्य ) अये ! जनार्द्दनो नाम नृपतिरत्रोपवने विहर्त्तुमायाति तन्नेह स्थातव्यमिति । तौ निष्क्रान्तौ ।

राजा । ( परिक्रम्य समन्तादवलोक्य उपविशति । ) वन्दिनस्तं स्तुवन्ति ।

श्रीरस्तु साधोर्व्वाच्येऽघेऽत्नसकौलनये सताम् ।
द्वेष्टर्य्युद्गीमदण्डस्य साधूनां पालकस्य ते ॥ १ ॥
जगद्धिताणिन् ! ग्रहाद्यधोरणाभे रथे स्थितम् ।
भक्तानुग्राहिणं लोकाः सूर्य्यं त्वां मन्वते नृप ! ॥ २ ॥

पारिपार्श्विकाः राजानं प्रति ।

---

श्रीरस्त्विति । साधोर्व्वाच्ये गर्हणीये अघे पापे तथा अत्नसः अनादृतः कुलसम्बन्धी नयो नीतिर्येन स तथा तस्मिन् त्यक्तकुलनीतौ इत्यर्थः । तथा सतां साधूनां द्वेष्टरि विद्वेषिणि जने उद्गीमदण्डस्य साधूनां पालकस्य ते तव श्रीरस्तु । त्नस इति त्नदिधना-दरे इत्यस्य क्तप्रत्यये सिद्धम् । वाच्यन्तु निन्दिते इति कोषः । पद्ये । सा श्रीरस्तु इत्या-शीर्व्वादः । धोः ५।, वाच्ये ७।, घे ७।, त्नसकौ १॥, ॥ १ ॥

जगद्धितेति । हे जगद्धिताणिन् ! जगतां हिताय अणयते प्राणितीति स तथा । अणवुङ प्राणने इत्यस्य रूपम् । ग्रहाद्यधोरणाभे ग्रहाणां आद्यः सूर्य्यस्तस्य धोरणं रथः तदाभे तत्सदृशे रथे स्थितं त्वां लोकाः सूर्य्यं मन्वते । मन्वते इति मनदुङ बोधे इत्यस्य रूपम् । युग्मं पत्रञ्च धोरणमित्यमरः । पद्ये । जगद्धिता इति सं । णिन् १।, ग्रहाद्यधोः ५।, ॥ २ ॥

व्याकरणम् ।

धोर्व्वाच्ये घे त्नणकौ । कर्त्तरि वाच्ये धातोस्तृणकौ स्यातां । द्वेष्टरि, पाल-कस्य ॥ १ ॥

णिन् ग्रहाद्यधोः । ग्रहप्रभृति धातोर्णिन् स्यात् कर्त्तरि । अनुग्राहिणं ॥ २ ॥

विज्ञानिना मन्यते नो नन्द्यादेः सदृशान् गणान् ।
वयं यत्ते पारिषदा महादेवस्य नन्दनाः ॥ ३ ॥

याचका राजानं प्रति ।

अन्धोः पचादेरुपयोगि सर्ज्जनं स चात्र सत्पात्रगुणाद्यपेक्षते ।
उपास्यते देव ! भवानकिञ्चनैर्व्विश्राणने यो न किमप्यपेक्षते ॥ ४ ॥
राजेवाकृतिमन्रात्रेरीशो रात्रिंचरो हि रुक् ।
अहो राजंस्तव रुचिर्दिवारात्रिचरो समा ॥ ५ ॥

---

विज्ञानीति । विज्ञानी चासौ ना पुरुषश्चेति स तथा ज्ञानवान् पुरुष इत्यर्थः । नोऽस्मान् नन्दिप्रभृतीनां सदृशान् गणान् मन्यते । यत् यस्मात् वयं महादेवस्य महाराजस्य ते तव नन्दनाः आनन्दजनकाः पारिषदाः । विज्ञानिना ३।, मन्यते ८।, अनः १।, नन्द्यादेः ५।, ॥ ३ ॥

अन्धोरिति । अन्धोः कूपस्य सर्ज्जनं दानं पचादेः पाकादेः उपयोगि उपयुक्तमेव परिमितमित्यर्थः । पचा पाके इत्यमरः । स च कूपः अत्र दाने सत्पात्रं गुणादि च अपेक्षते । हे देव ! हे मेघ ! प्रकृतपक्षे हे देव ! हे राजन् ! अकिञ्चनैर्जनैः अर्थात् सत्पात्रत्वगुणसामर्थ्यादिरहितैः तु भवानेव उपास्यते । यो देवः मेघो राजा च विश्राणने वितरणे किमपि याचकानां सत्पात्रत्वं गुणादि च न अपेक्षते । देवो मेघ सुरे राज्ञि, विश्राणनं वितरणमिति चामरः । अन् १।, धोः ५।, पचादेः ५।, ॥ ४ ॥

राजेति । हे राजेवाकृतिमन् ! राजा चन्द्रः स इव आकृतिमन् मूर्त्तिमन् ! । राजा समुद्रनवनीत तमोनुदो माः इति रत्नावलिः । रात्रेरीशश्चन्द्रस्य रुक् रुचिः रात्रिञ्चरो एव ; अहो आश्चर्य्ये हे राजन् ! तव रुचिः समा दिवारात्रिचरो । पक्षे । राजि इति दीप्तिमत्याः सं । वा १।, कृति ७।, मन् १।, रात्रेः ५।, ॥ ५ ॥

व्याकरणम् ।

विज्ञानिना मन्यतेऽनो नन्द्यादेः । नन्द्यादिरनो ज्ञानिना मन्यते । नन्दनाः ॥ ३ ॥
अन्धोः पचादेः । पचादेर्धोरन् स्यात् वे । देव ॥ ४ ॥
वा कृति मन् रात्रेः । रात्रेर्म्मन् वा स्यात् कृदन्तधातुपरे । रात्रिञ्चरो, रात्रिचरो ॥५॥

अथ राजा जनार्द्दनः समन्तादवलोक्य पारिषदान् प्रति।
अरे! दृश्यते क उपान्तेचोऽस्यारामस्यात्र दृक्क्षिपः ॥ ६ ॥

पारिषदा राजानं प्रति। राजन्! ज्ञातमस्माभिः अयं वन्दिः अस्योपवनस्य परिखाकर्त्तने भवता नियुक्तः, अयन्तु परिश्रमकातरः न खननकर्म्म करोति न वा मृद्भारं वहति, केवलं पत्तिभिर्वन्दिभिश्च सह विवदते।

अथ राजा तं वन्दिमानीय सरोषस्तं प्रति। अरे जाल्म! जड़! त्वं पापी अपराधी खातकर्म्मणि नियुक्तास्तदकृत्वा केवलं क्रीड़सि त्वं पुनर्दण्डनीयः।

तत् श्रुत्वा वन्दिरन्तर्जातक्रोधः राजानं प्रति।

अवक्रोग्रः प्रियो ज्ञः स्यात् प्रियवाक् ज्ञेषु साधुषु।
पापेष्वसत्सु कुटिलोऽप्रियः स्यात् कटुवाक्किरः ॥ ७ ॥

दृश्यत इति। कः कोऽयं जनो दृश्यते अस्य आरामस्य उपवनस्य उपान्तेचः उपान्ते समीपे चरतीति उपान्तेचः वार्त्तं इतिवत्। अत्र आरामे आरामं प्रति दृशं दृष्टिं क्षिपतीति दृक्क्षिपः। दृश्यते ८।, कः १।, उपान्तेचः ५।, ॥ ६ ॥

अवेति। ज्ञः पण्डितः ज्ञेषु पण्डितेषु साधुषु च अवक्रोग्रः अवक्रः स्यात् अनुग्रश्च स्यात् प्रियवाक् च स्यात्, पापेषु पापयुक्तेषु असत्सु च कुटिलः अप्रियश्च स्यात् कटुवाक्किरः कटुवाक्यक्षेपकोऽपि स्यात्। पद्ये। अव इति रक्षकस्य सं। अन्यदुदाहरणवाक्यम्। क्रः ५।, ग्रः ५।, प्रियः ५।, ज्ञः ५।, स्यात् ८।, ॥ ७ ॥

व्याकरणम्।

दृश्यते क उपान्तेचः। उपान्ते उपधायां इच् यस्य तादृशधातोः अर्थात् इगुङ्धातोः कः प्रत्ययो दृश्यते। वाक्क्षिपः ॥ ६ ॥

क्रोग्रः प्रियः ज्ञः स्यात्। कृ-गृ-प्री-ज्ञाभ्यः कः स्यात् घे। प्रिय, ज्ञेषु वाक्किरः ॥ ७ ॥

अतो यत् परुषोक्तिगिरो मां पापं निर्भर्त्सि तत् युज्यत एव अहमेव पाप इत्यपि सत्यं। यतः।

सुरभीयं कामदुघा सुव्रताम्बुधिमेखला।
तव राट्! तद्दुहोऽघङ्के ब्रुवते मन्दबुद्धयः॥ ८॥

राजा (सक्रोधं)।

हन्ति तोड़त्यस्खलितप्रतापश्चारट्टक् नृपः।
धर्म्मसेतूपहान् क्रूरानशासत् शिष्यपापभाक्॥ ९॥

तदहं कथं पापी।

सुरभीति। इयं सुरभी पृथ्वी कामदुघा आस्ते इति शेषः। कीदृशी सुव्रता सुखदोह्या अम्बुधिमेखला समुद्रशृङ्खला जलधिपरिच्छिन्ना इति यावत्। हे राट्! हे राजन्! तद्दुहस्तस्याः पृथिव्याः करादानादिरूपदोहनकर्त्तुस्तव अघं पापं के मन्दबुद्धयः ब्रुवते वक्तुं शक्नुवन्ति। एतेन त्वमपि पापीति व्यज्यते। अत्र पृथिव्याः गोरूपत्वख्यापनाय सुरभीति पदमुपात्तम्। सुरभिरियमुदीर्णा गोधरा शक्रकोष्विति कोषः। पक्षे। सुरभीत्यादिकपूर्व्वभाग उपाहरणवाक्यम्। दुहः ६।, घङ् १।, के ७।, ब्रुवते ८॥, अमन्दबुद्धयः १॥, ॥ ८॥

हन्तीति। चारट्टक् चारचक्षुः अस्खलितप्रतापो नृपः धर्म्मसेतूपहान् धर्म्मरूपसेतुहन्तॄन् हन्ति तोड़ति तिरस्करोति, अशासत् सन् शिष्याणां शासनार्हाणां पापभाक् भवति। पक्षे। स्खलितेत्यादिकमुदाहरणवाक्यं। हन्तित: ५।, ड-त्य: १।, ॥ ९॥

व्याकरणम्।

दुहो घङ् के ब्रुवतेऽमन्दबुद्धयः। के परे दुहो घङ् ब्रुवते धीमन्तः। काम-दुघा॥ ८॥

हन्तितो डत्यः। हनधातोर्डप्रत्ययः स्यात्। धर्म्मसेतूपहान्॥ ९॥

रेऽपराधिन्! जड़ात्माह! शृङ्खलेनापि संयतः।
पापेषु मां दण्डधरमवजानास्यघं ब्रुवन्॥ १०॥

वन्दिराह। अहो दण्डधर! न केवलमहमेव तादृक्, अपि तु अपराधित्वं जाड्यं शृङ्खलितत्वञ्च उभयोस्तुल्यं। तथाहि।

त्वञ्च सागा जड़ इति प्रत्ययो जनितस्तव।
तन्वैव ह्यघजो देहो जड़ो देही अनात्मवित्॥ ११॥
देवातोऽपि प्रत्ययोऽसौ स्यात् भवान् पापवानिति।

रे इति। रे अपराधिन्! रे जड़! रे आत्माह! आत्मानं अधर्म्मेणाहन्तीति स तथा। शृङ्खलेन संयतोऽपि बद्धोऽपि मां अघं पापिनं ब्रुवन् अवजानासि अवज्ञां करोषि। पद्ये। सूत्रस्य उदाहरणम्॥ १०॥

त्वञ्चेति। त्वमपि सागाः सापराधः जड़श्च इति प्रत्ययः इति ज्ञानं तव तन्वैव तव शरीरेणैव जनित उत्पादितः। ननु शरीरदर्शनमात्रेण अपराधित्वजड़त्वज्ञानं कथं तव जातमित्यतस्तत्र तज्ज्ञाने हेतुमाह। हि यस्मात् देहः शरीरं अघजः पापजः एवं अनात्मवित् आत्मज्ञानरहितो देही एव जड़ उच्यते। तथाच भवतोऽपराधित्वं जड़त्वञ्च तव शरीरदर्शनेनैव अनुमितं भवतीत्यर्थः। पद्ये। त्वञ्च सागाज इति इत्युदाहरणवाक्यं। तदर्थश्च, हे अज! कृष्ण! त्वमपि सा अगा दुर्गा इति तव इत्यादिकमुदाहरणवाक्यम्। ड: १।, इति प्रत्ययः १।, जनितः ५।,॥ ११॥

देवेति। हे देव! राजन्! भवान् पापवान् इत्यसौ प्रत्ययः एतज्ज्ञानं अतोऽपि कारणात् भवतीत्यर्थः। तज्ज्ञाने हेतुमाह। राजपुत्त्र चिरं जीवेति। हे राजपुत्त्र!

व्याकरणम्।

आत्माह॥ १०॥

ड इति प्रत्ययो जनितः। जनधातोर्डप्रत्ययः स्यात्। अज, अघज:॥ ११॥

राजपुत्र ! चिरं जीवेत्युक्तं यद्धर्म्मशास्त्रगैः ॥ १२ ॥

अपि च । मृदर्थं दुर्ब्बलान् हंसि वृथा सा तु न कस्यचित् ।
स्वस्थैवास्ते परं भूतान्यात्मसात्कृत्य वर्द्धते ॥ १३ ॥

तत् पापं तव क्व गतं । अपि च ।

संसारकारागेहस्थं मोहशृङ्खलयान्वितम् ।
निर्भर्त्ससे किं नात्मानं वहन्तं कर्म्मणां धुरम् ॥ १४ ॥

अपि च । गमादितोऽपि भवति नराणां पापसञ्चयः ।

राज्ञामपराधित्वात् परलोके सुखं नास्तीत्यतस्त्वं इहैव सुखभोगार्थं चिरं जीवेति धर्म्मशास्त्रगैः धर्म्मशास्त्रवक्तृभिरुक्तम् । पद्ये । देव इति द्युतिमतः सम्बोधनम् । भवानित्यादिकमुदाहरणवाक्यम् । आतः ५।, ( अपि ) प्रत्ययः १।, असौ १।, स्यात् ८।, ॥१२॥

मृदेति । मृदर्थं मृत्तिकानिमित्तं वृथा दुर्ब्बलान् हंसि । वृथात्वे हेतुमाह । सा च मृत्तिका कस्यचिदपि न । अत्र हेतुमाह । स्वस्थैव आत्मस्थैव स्वयमास्ते । न कोऽपि तां नेतुमर्हतीति भावः । परं केवलं भूतानि स्थावरजङ्गममयशरीराणि आत्मसात्कृत्य मृत्तिकात्वेन परिणतीकृत्य वर्द्धते । सर्व्वं मृत्तिकात्वेन परिणमति इति त्वामपीयं आत्मसात् करिष्यतीति भावः । पद्ये । सूत्रस्य उदाहरणम् ॥ १३ ॥

संसारेति । एवम्भूतमात्मानं कथं न निर्भर्त्ससे । तथाच बद्धमिव त्वमपि कारागेहस्थः शृङ्खलितो भारवोढा चेति कथं नात्मनि आक्षिपसीत्यर्थः । पद्ये । सूत्रस्य उदाहरणम् ॥ १४ ॥

गमेति । गमादितोऽपि गमनादितोऽपि नराणां पापसञ्चयो भवति, उत्थानशान्

व्याकरणम् ।

आतोऽपि प्रत्ययोऽसौ स्यात् । आदन्तादपि असौ प्रत्ययः स्यात् । धर्म्मशास्त्रगैः ॥१२॥

स्वस्था ॥ १३ ॥

गेहस्थं ॥ १४ ॥

अपाप: कोऽस्ति ना भूग ऋते उत्तानशयान् शिशून् ॥ १५ ॥

तत् कथं मामेव पापीति निर्भर्त्संसे ।

राजा । सत्यमेतत् किन्त्वेवं ।

वेत्थ को गोऽस्थैर्यं इह उदस्येन्मम शासनम् ।

तथा मम यशश्चण्डप्रतापोद्गायको न कः ॥ १६ ॥

अतः प्रभोर्मम शासनोल्लङ्घनात् त्वमपराधो जडश्चेति वक्तुं युज्यसे ।

वन्दिः । सत्यमेतत् ।

राजन् नृणां शरण ! नट् ! गोबोध्योऽहमुदस्तवान् ।

प्रभोस्तवादेशनम्त्वत्प्रतापोद्गायनोऽप्यहम् ॥ १७ ॥

उत्तानशयान् शिशून् ऋते विना भूग: पृथिवीगत: को ना क: पुरुष: पापशून्योऽस्ति अपि तु सर्व्व एव पापभाज इत्यन्वय: । पक्षे । नराणामित्यादिकमुदाहरणवाक्यं । गमादित: ५।, (अपि) भवति ८।, ॥ १५ ॥

वेत्थेति । वेत्थ जानीहीत्यर्थ: । को गोस्थेय: गौ: पशुस्तस्येव स्थेयं ज्ञानं यस्य तादृश: को जन: इह संसारे मम शासनं ममाज्ञां उदस्येत् उदसीकुर्य्यात्, तथा मम यशस: चण्डप्रतापस्य च उद्गायको गायन: को जनो न भवतीति शेष: । पक्षे । वेदिति ज्ञानिन: सं । इहेत्यादिकमुदाहरणवाक्यम् । थक: १।, ग: ५।, स्थेय: १।, ॥ १६ ॥

राजन्निति । हे राजन् ! हे नृणां शरण ! हे नृणां नट् ! नायक ! नशधातो-रन्तर्भूतार्थे क्विपि नट् इति सिद्धं । अहं गोबोध्यो गौ: पशुस्तस्येव बोध्यं ज्ञानं यस्येति स तथा । तथा हि पशुबुद्धिरहं त्वत्प्रतापोद्गायनोऽपि अर्थात् तव प्रतापं जानन्नपि प्रभोस्तवादेशनं तवाज्ञां उदस्तवान् लङ्घितवान् । पक्षे । नृणां राजन्निति राज्ञ:, शर इति श्रोतु: सं । अहमित्यादिकमुदाहरणवाक्यं । अनट् १।, ग: ५।, बोध्य: १।, ॥१७॥

व्याकरणम् ।

गमादितोऽपि भवति । ममादेरपि उ: स्यात् । भूग:, उत्तानशयान् ॥ १५ ॥

थको गो स्थेय: । गायतेस्थकी ज्ञातव्य: । प्रतापोद्गायक: ॥ १६ ॥

अनट गो बोध्य: । गायतेरनट् बोद्धव्य: । उद्गायन: ॥ १७ ॥

उष्णाः सदा धुतः पूर्व्वकर्म्मणस्तत एव ते।
गिरोष्णयाऽस्मि दण्ड्योऽहं पापकारो हि शोकभाक्॥ १८॥

एवं सति तत् भवतोऽपि तुल्यं।

भवानपि प्रभोराज्ञा मुदस्यति मुहुस्ततः।
पापीकारोऽसि दण्ड्योऽसि काराञ्चेष्यत्यनु प्रभोः॥ १९॥
संसार एषको रञ्जोऽनृतोपि भ्रान्तचेतसाम्।
यथा नर्त्तक्यङ्गहारस्तत्र नास्था विवेकिनाम्॥ २०॥

उष्णेति। तत एव पूर्व्वकर्म्मणः प्रभोस्तवादेशस्योल्लङ्घनरूपपूर्व्वकृतकर्म्मणो हेतोर्दण्ड्यः सन् ते तव उष्णया गिरा वाचा सदा उष्णः उत्तप्तः धुतः कम्पितश्चास्मि। हि यस्मात् पापकारो जनः शोकभाक् भवति इत्यन्वयः। पद्ये। उ इति सं। तत इत्यादिकमुदाहरणवाक्यं। ष्णः १।, (सदा) धुतः ५।, पूर्व्वकर्म्मणः ५।, ॥ १८॥

भवानिति। ततः प्रभोरादेशस्योदस्तीकरणात्। अपापं पापं करोतीति पापीकारः। अनु पश्चात् अर्थात् परकाले प्रभोरीश्वरस्य कारां बन्धनगेहं अर्थात् नरकं एष्यति। पद्ये। सूत्रस्य उदाहरणम्॥ १९॥

यच्चोक्तं अहं प्रभुर्म्मम शासन इत्यस्य प्रत्युत्तरयति संसारेति। एषको दारादिमयः संसारः अनृतोऽपि असत्योऽपि भ्रान्तचेतसां मुग्धानां रञ्जः रञ्जकः अनुरागजनकः। यथा नर्त्तक्यङ्गहारः नर्त्तक्याः अङ्गविक्षेपादिविलासः तत्र विवेकिनां नास्था भवति न सत्यत्वग्रहो भवति। पद्ये। संसार इति संसारिणः सं। ए इति च सं। भ्रान्तचेतसामित्यादिकमुदाहरणवाक्यं। षकः १।, रञ्जः ५।, नृतः ५।, (अपि)॥ २०॥

व्याकरणम्।

ष्णः सदा धुतः पूर्व्वकर्म्मणः। पूर्व्वं कर्म्म यस्य तादृशधातोः ष्णः स्यात्। पापकारः॥ १८॥

पापीकारः॥ १९॥

षको रञ्जोनृतोऽपि। आभ्यां षकः स्यात्। नर्त्तकी। परत्रापि पूर्व्वकर्म्मण इत्युपादानात् पूर्व्वकर्म्मण इत्यस्य नानुवृत्तिः॥ २०॥

राजा । ( सचकितं ) अहो मधुरया गिरा चित्तरञ्जक ! किमहं प्रभोराज्ञामत्यचरम् ।

वन्दिः । ऋद्धिं सर्व्वोपरिचरीं चरितः पूर्व्वकर्म्मणः ।
कट् स्त्रीभिरास्तेऽद्दचरो विस्मरन्नायतिं भवान् ॥ २१ ॥

वेदवाचा प्रभुना यद् यदादिष्टं तत् सर्व्वं भवान् किं प्रतिपालयति । अपि च ।

गोहनश्च तथा ब्रह्मघ्नस्तेनमद्यपादयः ।
कुर्व्वन्ति यदघं तच्च देव ! त्वय्येव वर्त्तते ॥ २२ ॥

राजा । ( सविस्मयं ) प्रजाकृतं पापं कथं मयि ? ।

वन्दिः । चारदृक् धर्म्मगो राट् चेत् प्रजाः शिष्यात् तदा क्वचित् ।

ऋद्धिमिति । पूर्व्वकृतकर्म्मणो हेतोः सर्व्वोपरिचरीं सर्व्वोत्तमां ऋद्धिं सम्पत्तिं चरितः प्राप्तवान् आयतिं उत्तरकालं विस्मरन् सन् अद्दचरः अट्टालिकागतः स्त्रीभिः कट् परिवृतः सन् भवानास्ते । कट् इति कट आवृतौ इत्यस्य क्विप रूपं । पद्ये । पूर्व्वापरभागौ उदाहरणवाक्ये । चरितः ५।, पूर्व्वकर्म्मणः ५।, कट् १।, ॥ २१ ॥

गोहन इति । गां हन्तीति गोहनः पचाद्यन् । स्तेनश्चौरः मद्यपाः सुरापाः अन्यत् सुगमम् । पद्ये । ब्रह्मघ्नमित्यादिकमुदाहरणवाक्यम् । गः ५।, हनः ५।, ( च ) तथा १।, ॥ २२ ॥

चरेति । राट् राजा चेत् यदि चारो गूढ़पुरुषः स एव दृक् दृष्टिर्यस्य स तथा

व्याकरणम् ।

चरितः पूर्व्वकर्म्मणः कट् । कर्म्म पूर्व्वं यस्य तादृशचरधातोः कट् स्यात् । सर्व्वोपरिचरीं, अद्दचरः ॥ २१ ॥

गोहनश्च तथा । गायतेर्हनश्च कट् स्यात् । ब्रह्मघ्नः ॥ २२ ॥

न ताः पापे प्रवर्त्तन्तेऽशासत् पापभाग्भवेत् ॥ २३ ॥

अन्यच्च । हृतोऽस्यमात्यैर्द्धनिपक्षपातिभिः
साच्योपजीव्यस्य कुमाक्षितः परम् ।
दण्डेष्वदण्डं निरघेषु दण्डं
कुर्व्वन् तदेनांसि बिभर्षि पुण्यग ! ॥ २४ ॥

एतत् श्रुत्वा राजा मुमोह । अनन्तरं जातवैराग्य आह ।

मोहान्धतमसे भ्रान्तं पन्थानं मामदर्शयः ।
बिभ्रत् तमोघ्नीं वागुल्कामतस्त्वं मे गुरुः सुहृत् ॥ २५ ॥

एतादृशः सन् तथा धर्म्मगः धर्म्मं गायति उपदिशति यः स धर्म्मगः एतादृशः सन् प्रजाः शिष्यात् शासनं कुर्य्यात्, तदा ताः प्रजाः क्वचिदपि पापे न वर्त्तन्ते, अशासत् राजा तत्पापभाक् शासनार्हस्य पापभाक् भवेत् । पद्ये । सूत्रस्य छं ॥ २३ ॥

हृत इति । धनिजनानां पक्षपातिभिरमात्यैर्हृतोऽसि परं केवलं साच्यं साक्षित्वं तदेवोपजीव्यं यस्य तस्य जनस्य परं केवलं कुमाक्ष्यतः मिथ्यासाक्ष्यात् दण्ड्येषु दण्डार्हेषु अदण्डं निरघेषु निष्पापेषु दण्डं कुर्व्वन् तदेनांसि तेषां पापानि बिभर्षि पुष्णासि । हे पुण्यग ! । पद्ये । सूत्रस्य छं ॥ २४ ॥

मोहेति । मोहान्धतमसे मोहान्धकारे भ्रान्तं भ्रान्तिं प्राप्तं मां पन्थानं त्वमदर्शयः दर्शितवानसि । किं कुर्व्वन् तमोघ्नीं वागुल्कां वाक्यरूपप्रदीपं बिभ्रत् । अतः कारणात् त्वं मे गुरुः सुहृच्च । पद्ये । सूत्रस्य छं ॥ २५ ॥

व्याकरणम् ।

धर्म्मगः ॥ २३ ॥

पुण्यग ॥ २४ ॥

तमोघ्नीं ॥ २५ ॥

बैदान्ती। कृतस्तुषस्तेन कृतागसा यदा
स ईश्वरस्तेन स मोचितस्तदा ।
जगाम चानन्दकरीं निजां पुरीं
नृपोऽभवच्चास्तसमस्तवासनः ॥ २६ ॥

न्यस्य राज्यं शिशू पुत्रौ मन्त्र्यादौ राट् पुरःसरः ।
आश्वास्य योषितः सर्व्वा वनाय पदटः सृतः ॥ २७ ॥

अथ क्रन्दन्तीं राजमहिषीं प्रति मन्त्री ।
ग्लौनखि ! प्रत्ययः कार्य्य आत्मनः कुक्षितो भृतः ।
सुतो यथा तथैवाहमिति नात्मम्भरिः क्वचित् ॥ २८ ॥

---

कृत इति । यदा तेन कृतागसा कृतापराधेन वन्दिना स ईश्वरः स राजा तुषः तुष्टः कृतः तदा तेन राज्ञा स वन्दिर्मोचितः । नृपश्च आनन्दकरीं निजां आत्मीयां पुरीं जगाम, अस्तसमस्तवासनश्च अस्ता निरस्ता समस्तवासना विषयवासना यस्य स तथा अभवच्च इत्यन्वयः । कृतः ५।, ( तु ) षः १।, ॥ २६ ॥

न्यस्येति । राट्पुरःसरो राजश्रेष्ठो मन्त्र्यादौ राज्यं शिशू पुत्रौ च न्यस्य समर्प्य पदटः पद्भ्यामटतीति स तथा सन् वनाय सृतः वनं गतवान् । पद्यं । वनायपद इति वनगन्तुः सं । अन्यदुदाहरणवाक्यम् । टः १।, सृतः ५।, ॥ २७ ॥

ग्लौ इति । ग्लौश्चन्द्रस्तद्वत् नखं यस्याः सा तथा । यथा आत्मनः कुक्षितः उदरे भृतो धृतः सुतस्तथैवाहं गर्भजातपुत्रवत् इति प्रत्ययः कार्य्यः सत्यत्वेन ग्राह्यः कार्य्यः भवत्येति शेषः । क्वचिदप्यर्थे नाहं आत्मम्भरिः । पद्यं । ग्लौम इति ग्लानिरयमारकस्य सं । सुत इत्यादिकमुदाहरणवाक्यम् । खि प्रत्ययः १।, कार्य्यः १।, आत्मनः ५।, कुक्षितः ५।, भृतः ५।, ॥ २८ ॥

## व्याकरणम् ।

कृतस्तुषः । कृधातोस्तु षः स्यात् । आनन्दकरी ॥ २६ ॥

टः सृतः । सृधातोष्टः स्यात् । पुरःसरः ॥ २७ ॥

खिप्रत्ययः कार्य्य आत्मनः कुक्षितो भृतः । आत्मकुक्षिभ्यां भृधातोः खिप्रत्ययः ; । आत्मम्भरिः ॥ २८ ॥

भृतोऽप्युदरतो मातुः शरीरेणोदरम्भरिः।
पुष्टौ भूरिक्लेशदोऽस्या मत्पोषः सुखकृत्तव ॥ २९ ॥

महिषी विलपन्ती आह।

क्षमाभुजां भीतिकरः प्रियः स मे
खित्प्रत्यये व्याजरुषोऽहिमल्लघु।
बिभ्यत् रुषं तामपनिन्य आत्मवान्
कुक्षिम्भरिः किं बिभियात्तथाद्य मे ॥ ३० ॥

कोविदैकाजिजन्तस्यामन्तकोपमरूपकम्।

भृत इति। उदरतः उदरे भृतोऽपि धृतोऽपि पुत्रः मातृशरीरेणैव उदरम्भरिः एवं पुष्टौ पोषणे अस्या मातुः भूरिक्लेशदः। किन्तु मत्पोषः मम पोषणं तव सुखकृत् सुखमात्र साधनमित्यर्थः। भृतः ५।, ( अपि ) उदरतः ५।, ॥ २९ ॥

क्षमेति। स प्रियः स भर्त्ता व्याजरुषः व्याजेन कपटेन रुट् क्रोधो यस्यास्ताटृश्या मे मम खित्प्रत्यये खेदज्ञाने सति तां रुषं तं मम क्रोधं अहिमत् अहिमिव मन्यमानः बिभ्यत् सन् लघु क्षिप्रं यथा स्यात् तथा आत्मवान् यत्नवान् सन् अपनिन्ये अपनीतवान् कुक्षिम्भरिर्जनः किं अद्य मे मत्तः तथा बिभियात् भयं कुर्व्वीत। अहिमादीति मन-धातोः क्विपि सिद्धम्। कीटृशः प्रियः क्षमाभुजां नृपाणां भीतिकरः। पद्ये। पूर्व्वापरभागयोः पूर्व्वसूत्रीयोदाहरणवाक्यत्वेन सार्थकत्वम्। खित्प्रत्यये ७, अव्याजरुषः ५।, ( कि ) मन १।, लघु १।, ॥ ३० ॥

कोविदेति। हे कोविदैक पण्डितश्रेष्ठ! वैरिभूभुजः शत्रुभूतराजानः यस्य मम

## व्याकरणम्।

भृतोऽप्युदरतः। उदरशब्दादपि भृधातोः खिः स्यात्। उदरम्भरिः ॥ २९ ॥

खित्प्रत्ययेऽव्याजरुषोऽहिमल्लघु। अव्ययवर्ज्जितस्य पूजन्तस्य अरुषश्च मन् स्यात् लघु कि ह्रस्वमपि स्यात् खित्प्रत्यये परे। कुक्षिम्भरिः ॥ ३० ॥

यस्यालोक्य भयादासन् गांमन्या वैरिभूभुजः ॥ ३१ ॥
धार्य्यं मनः सुखप्रेऽजे स्थिरेऽह्नौ जनमेजये ।
निरानन्दं निष्प्रभञ्च यथा विश्वं तथाद्य मे ॥ ३२ ॥
बत स्वकर्म्मणो मन्यत एषोऽनुशयः फलम् ।
श्रियंमन्या या पुराहं दीनंमन्याद्य साऽस्म्यहम् ॥ ३३ ॥

अथ मन्त्री तां प्रति । अम्ब ! नायं विषादसमयः । यतः ।

भन्तुः आजिजं आजियुद्धं तेन जनितं अन्तकोपमरूपं यमोपमरूपं तस्यामाजौ आलोक्य भयात् गांमन्याः आत्मानं गां मन्यन्ते ये ते तथा तादृशा आसन् । पद्मे । कोविद इति सं । एकाजिजन्तस्य ६।, अमन्तकोपमरूपकं १।, ॥ ३१ ॥

धार्य्यमिति । जनमेजये जनार्द्दने अजे श्रीकृष्णे स्थिरे स्थिरभूते अह्नौ अमन्ते सुखप्रे सुखप्रयाने सति विश्वं जगत् यथा निरानन्दं निष्प्रभञ्च भवति तथा अद्य मे मम मनश्चित्तं निष्प्रभं निरानन्दञ्च धार्य्यं भवतीति शेषः । पद्मे । मनःसु धार्य्यमेतत् सूत्रमिति छात्राणामवधानाय । खश् १।, एजेः ५।, ॥ ३२ ॥

बत इति । पुरा पूर्व्वकाले या अहं श्रियंमन्या आत्मानं श्रियं मन्यते या सा तथा । सा अहं अद्य दीनं मन्यास्मि । बत खेदे एष अनुशयः पश्चात्तापः स्वकर्म्मणः फलं मन्यते मयेति शेषः । पद्मे । बतेति कस्यचित् सं । स्वकर्म्मणः ५।, मन्यतः ५।, एषः १।, ॥ ३३ ॥

## व्याकरणम् ।

एकाजिजन्तस्यामन्तकोपमरूपकं । एकाजिजन्त शब्दस्य अमन्तरूपं भवति । खिति । गांमन्याः ॥ ३१ ॥

खश् एजेः । जनमेजये ॥ ३२ ॥

स्वकर्म्मणो मन्यत एषः । स्वमात्मैव कर्म्म यस्य तादृशस्य मनधातोरेष खश् स्यात् । दीनंमन्या, श्रियंमन्या ॥ ३३ ॥

विस्मरन्ति न निजं पराभवं कालतोऽपि रिपवोऽत्यरुन्तुदम् ।
पूर्ववैरमधियन् जहात्यसौ राहुरग्निमरुषो विधोस्तुदः ॥ ३४ ॥

आसन् प्रतीक्ष्य कालन्ते हृतराज्या महारथाः ।
द्रोणम्पचास्त्वल्पपचोऽमितमानान्मृता इव ॥ ३५ ॥

हतोत्साहा भीताः कलितनिजनीड़ा हतदृशो
ह्यसूर्य्योग्रात् कालादहहविरवाः सन्ति विहगाः ।

विस्मरन्तीति । रिपवः शत्रवः अत्यरुन्तुदं अतिमर्म्मस्पृशं निजं आत्मीयं पराभवं कालतोऽपि न विस्मरन्ति । एतदेव दर्शयति । पूर्व्वकालीनं वैरं अधियन् स्मरन् सन् असौ राहुः विधोस्तुदः चन्द्रस्य तुदः तुदति व्यथयतीति तुदः इगुपधात् कप्रत्ययसिद्धम् । तादृशः सन् अग्निमरुषः अपरिमितक्रोधान् जहाति । अधियन् इति अधिपूर्व्वस्य इकस्य स्मरणे इत्यस्य रूपम् । पच्चे । पूर्व्वभाग उदाहरणवाक्यम् । अरुषः ५।, विधोः ५।, तुदः ५।, ॥ ३४ ॥

आसन्निति । महारथास्ते पराजिता रिपवः हृतराज्याः सन्तः अपरिमितमानात् मृता इव कालं प्रतीक्ष्य आसन् । कीदृशाः द्रोणम्पचाश्च बहुकुटुम्बातिथीनां पोषणार्थं द्रोणपरिमितपाचिनोऽपि इदानीं अल्पपचः । पच्चे । पूर्व्वभाग उदाहरणवाक्यम् । पचः ५।, मितमानात् ५।, ॥ ३५ ॥

हतेति । असूर्य्योग्रात् कालात् नास्ति सूर्य्यो यस्मिन् उग्र काले इति असूर्य्योग्रात् कालात् अत्र ल्यबर्थे पी तथा हि सूर्य्यरहितं कालं रात्रिं प्राप्य इत्यर्थः विरवा नीरवाः

व्याकरणम् ।

अरुषो विधोस्तुदः । अरुषो विधोश्च तुदः स्वश्च स्यात् । अरुन्तुदं ॥ ३४ ॥
पचो मितमानात् । द्रोणम्पचाः ॥ ३५ ॥

यथा तद्वन्नाथे गतवति वनं नो नरपतौ
असूर्य्यम्पश्ये! ऽद्य त्वदमितभटाः सन्त्यवनताः ॥ ३६ ॥
अद्य ते प्राप्तसमया हृतराज्या महारथाः।
अद्य श्वो वा गमिष्यन्ति व्यत्तास्याव विधुन्तुदः ॥ ३७ ॥
अथ श्रुतः प्रियवशाद्वदः खोद्वेगकृच्चरात्।
युद्धार्थी चेदिपः सैन्यैरायातीत्यप्रियम्वदः ॥ ३८ ॥
अनन्तरं। रथी रथैः शकटगजाश्वपत्तिभि
र्महाजवैः प्रलयघनाघनस्वनैः।

सुन्तः विहगाः पक्षिणः यथा सन्ति वसन्ति। तद्वत् तथा हे असूर्य्यम्पश्ये! त्वदमितभटाः तव अपरिमितसैन्यानि अवनताः सन्ति। पक्षे। हत इति खेदे हतोत्साहा इत्यादिकं सं। दृशः ५।, (अपि) असूर्य्योग्रात् ५।, ॥ ३६ ॥

अद्येति। व्यत्तं व्यादानीकृतं आस्यं मुखं येन स व्यत्तास्यः विधुन्तुदो राहुरिव, अत्र वकारः इवार्थकः। अन्यत् सुगमं। पक्षे। पूर्व्वसूत्रस्य सं ॥ ३७ ॥

अथेति। प्रियवशात् प्रियश्चासौ वशश्चेति प्रियवशस्तस्मात् चरात् वदः वचः श्रुतः राजभिरिति शेषः। वदः कीदृशः खोद्वेगकृत् खं इन्द्रियं मनः तस्य उद्वेगजनकः। किं वच इत्याह। चेदिपश्चेदिदेशीयो राजा युद्धार्थी सन् सैन्यैः सह अप्रियम्वदः सन् आयाति इति। पक्षे। अथेति मङ्गले। श्रुतः १।, प्रियवशात् ५।, वदः ५।, खः २।, ॥ ३८ ॥

रथीति। महाजवैः महान् जवो वेगो येषां ते तथा तैः। प्रलयघनाघनस्य प्रलय-

## व्याकरणम्।

दृशोऽप्यसूर्य्योग्रात्। असूर्य्यादुग्राच्च दृशोऽपि खश् स्यात् असूर्य्यम्पश्ये ॥ ३६ ॥
विधुन्तुदः ॥ ३७ ॥
श्रुतः प्रियवशात् वदः खः। प्रियम्वदः ॥ ३८ ॥

प्रकम्पयन् क्षितितलमेत्य चेदिपो
रुरोध तत्पुरसरणीर्वशम्बद ॥ ३९ ॥

अथ पृथिवीं वेपमानां वीक्ष्य राजमहिषी ।
भयात् कूर्व्वेपते नूनमित्याशङ्क्य करं मम ।
विधवाया ग्रहीष्यन्ति बलादेते भयङ्कराः ॥ ४० ॥
भूताऽस्म्यारात् प्रियात् क्षेमादपि कुर्व्वी प्रियङ्करी ।
क्षेमङ्करी किमद्यैतां दीनां मां वत हास्यति ॥ ४१ ॥

अथ मन्त्री चण्डवेगनामकं सेनापतिं प्रति ।
अभिख्यार्थं धृतो नाहं राज्ञा त्वञ्च बलेश ! यत् ।

कालीनस्य मेघस्य स्वन इव स्वनो रवो येषां ते तथा तैः । वर्षुकाब्दो घनाघन इत्यमरः । एत्य आगत्य । चेदिपः चेदिराजः । तत्पुरसरणीः तस्याः राजमहिष्याः पुरस्य सरणीः मार्गान् रुरोध । वशम्बद इति राज्ञः सम्बोधनम् । पक्षे । सूत्रस्य च ॥ ३९ ॥

भयादिति । एते भयङ्कराः विधवाया मम करं बलात् ग्रहीष्यन्ति नूनं निश्चितं इत्याशङ्क्येव कुः पृथिवी वेपते कम्पते । भयात् ५।, कुः ६।, वा १।, ॥ ४० ॥

भूतेति । प्रियात् पत्युः क्षेमादपि मङ्गलादपि आरात् दूरे भूताऽस्मि प्रियङ्करी क्षेमङ्करी कुर्व्वी पृथिवी वा अद्य वत खेदे किं एतां दीनां मां हास्यति त्यक्ष्यति । पक्षे । हे भूत ! आरात् समीपे अस्मि इति क्षावं प्रति आसनवाक्यं । प्रियङ्करी क्षेमङ्करीति पदद्वये ईवागमोऽनुसन्धेयः । प्रियात् ५।, क्षेमात् ५।, ( अपि ) कुः ५।, वा १।, ॥ ४१ ॥

अभीति । हे बलेश ! सेनापते ! अभिख्यार्थं अभिख्या शोभा तदर्थं शोभानिमित्तं,

## व्याकरणम् ।

वशम्बद ॥ ३९ ॥

भयात् कुर्व्वी । भयशब्दात् कृञः खः स्यात् वा । भयङ्कराः ॥ ४० ॥

प्रियात् क्षेमादपि कुर्व्वी । प्रियङ्करी, क्षेमङ्करी ॥ ४१ ॥

वसुन्धराद्य नौ हस्ते न्यस्तास्ते दोःशस्त्रयोः ॥ ४२ ॥
रिपुञ्जयाः ! राट् स्वस्त्यर्थे युध्यन् वाच्यो न युध्व्रजः ।
जितोऽपि हि तदर्थे स भवति स्मातियत्नवान् ॥ ४३ ॥

सेनापतिस्तं प्रति ।

अभिख्यार्थे भृतो नास्मि राज्ञा योत्स्येऽरिभिस्ततः ।
जये पराजये हेतुरिच्छा विश्वम्भरस्य हि ॥ ४४ ॥

सर्व्वथैव प्रभोर्म्मङ्गलं चिन्त्यं तस्मात् ।

चेत्तदर्थे भवेत् द्रोहो वपुषो युध्यतो मम ।

मेव राज्ञा अहं त्वञ्च न धृतः न पुष्टः । यत् यस्मात् दोःशस्त्रयोः नौ आवयोर्हस्ते वसुन्धरा पृथिवी अद्य न्यस्ता अर्पिता आस्ते । अभिख्यार्थे ७।, धृतः ५।, ॥ ४२ ॥

रिपुञ्जया इति । हे रिपुञ्जयाः ! राट् स्वस्त्यर्थे राज्ञो मङ्गलार्थं युध्व्रजः योधनसमूहः युध्यन् सन् जितोऽपि पराजितोऽपि वाच्यो निन्दनीयो न भवति । हि यस्मात् स युध्व्रजः तदर्थे राज्ञो मङ्गलार्थं यत्नवान् भवतिस्म अभूदित्यर्थः । पद्यै । युध् इति स । ( व्र अजः ) व्रजः ५।, जितः ५।, ( अपि ) तदर्थे ७।, भवति ८, ॥ ४३ ॥

अभिख्येति । अभिख्यार्थे शोभार्थे अहं राज्ञा न भृतः न पुष्टः । ततस्तस्मात् अरिभिः सह योत्स्ये । विश्वम्भरस्य ईश्वरस्य इच्छैव जये पराजये च हेतुः । अभिख्यार्थे ७।, भृतः ५।, ॥ ४४ ॥

चेत्तदिति । तदर्थे प्रभोर्म्मङ्गलार्थे यथाशक्ति युद्धतो यद्वात् मम चेत् यदि वपुषः

व्याकरणम् ।

अभिख्यार्थे धृतः । संज्ञार्थे धृधातोः खः स्यात् । वसुन्धरा ॥ ४२ ॥

व्रजो जितोऽपि तदर्थे भवति । वृ-अज जिभ्योऽपि संज्ञार्थे खः स्यात् । रिपुञ्जयाः ॥ ४३ ॥

अभिख्यार्थे भृतः । संज्ञायां भृञः खः स्यात् । विश्वम्भरस्य ॥ ४४ ॥

यथाशक्ति तदा सद्यो लप्स्ये पौरन्दरीं पुरीम् ॥ ४५ ॥

अथ राज्ञी तं प्रति।

सहोऽगमश्च मा दैन्यं युध्यस्व स्वस्तिमान् परैः।
सर्व्वं सहाव्यापि यशो लभस्व रिपुनिर्जयात् ॥ ४६ ॥
मृत्युञ्जयपदं स्मृत्वा नत्वा वाचंयमान् गुरुम्।
पतिम्वरां वीरकीर्त्तिं लब्धुं गच्छ महाबल ! ॥ ४७ ॥

अथ चण्डवेगः राजमहिषीं प्रति। देवि ! अधुनैवाहं योद्धुं गच्छामि। इत्युक्त्वा निष्क्रान्तः। अथ स स्वसैन्यं प्रति। अहो पश्यत।

शरीरस्य द्रोहोऽनिष्टं स्यात् तदा सद्य एव पौरन्दरीं ऐन्द्रीं पुरीं लप्स्ये। द्वावेतौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ। परिव्राड् योगयुक्तश्च रणे चाऽभिमुखे हत इति स्मरणात्। पक्षे। चेदिति कस्यचित् सं। तदर्थे ७।, द्रः ५।, ॥ ४५ ॥

सह इति। सहः सहिष्णुः सन् स्वस्तिमान् सन् परैः शत्रुभिः सह युध्यस्व दैन्यं मागमः दैन्यं माप्राप्नुहि। रिपूणां निर्जयात् पृथिवीव्यापि यशो लभस्व। सहः ५।, गमः ५।, ( च ) ॥ ४६ ॥

मृत्युञ्जयेति। वाचंयमान् मुनीन्। अन्यत् सुगमं। पक्षे। सूत्रस्य उदाहरणं ॥ ४७ ॥

व्याकरणम्।

तदर्थे द्रः। दृधातोस्तदर्थे खः स्यात्। पौरन्दरी ॥ ४५ ॥
सहोगमश्च। आभ्यामपि खः स्यात्। सर्व्वं सहा ॥ ४६ ॥
मृत्युञ्जय, वाचं यमान् ॥ ४७ ॥

इमे भटा रथहयहस्तिन: स्थिता
महाबला द्रुघनगदासिपाणय: ।
युयुत्सवो धृतधनुष: समासते
भुजङ्गमा रुष इव पञ्चशीर्षका: ॥ ४८ ॥

अथ चेदिपति: चण्डवेगं प्रति ।

अद्य मे युद्धयज्ञेऽस्मिन् प्रणीतास्त्रधनञ्जये ।
स्वयमेव पशुर्योग्यो मम भाग्यादुपस्थित: ॥ ४९ ॥

चण्डवेगस्तं प्रति । अहो एवं वक्तुं युज्यतेऽद्य ।

यावत् सूर्य्य: खमटति रथेनोज्ज्वलन् स्वै: प्रतापै-
स्तावद्भीतो वसति कुहरे मेचक: पेचकोऽयम् ।
तस्मिन्नस्ताचलमुपगते कोटरान्निर्गतोऽभी:
कण्ठध्वानैर्जनयति परं दु:सहै: कर्णपीड़ाम् ॥ ५० ॥

---

इमे इति । रथघोटकहस्तिशकटेषु स्थिता: । घन: शकट: । द्रुघनोऽस्त्रविशेष: । रुष: क्रोधान्विता: पञ्चशीर्षा विस्तृतमस्तका भुजङ्गमा इव । पद्ये । सूत्रस्य छं ॥ ४८ ॥

अद्येति । अद्य मम अस्मिन् युद्धरूपयज्ञे योग्य: पशु: स्वयमेव मम भाग्यादुपस्थित: । कीदृशे, प्रणीतास्त्रधनञ्जये प्रणीत: संस्कृतोऽस्त्ररूपो धनञ्जयो वह्निर्यस्मिन् स तथा तस्मिन् । पद्ये सूत्रस्य उदाहरणम् ॥ ४९ ॥

यावदिति । सूर्य्य: यावत् यावत् कालं स्वैरात्मीयै: प्रतापै: उज्ज्वलन् रथेन खं आकाशं अटति, तावत् कालं असौ मेचक: पेचक: कालपेचक: पक्षी भीत: सन् कुहरे वृक्षकोटरे वसति । तस्मिन् सूर्य्ये अस्ताचलं उपगते सति अभी: निर्भय: सन् कोटरान्निर्गत: सन् दु:सहै: कण्ठध्वानै: कण्ठरवै: परं केवलं कर्णपीड़ां जनयति । अस्मिन् श्लोके व्याकरणपक्षो नास्ति ॥ ५० ॥

व्याकरणम् ।

भुजङ्गमा: ॥ ४८ ॥

धनञ्जये ॥ ४९ ॥

कालमज: ॥ ५० ॥

यावन्ममप्रभुर्धनुर्धरो धरणीं शासदास्ते स्म तावदस्माकं दृग्गोचरो नाभोः, इदानीं तस्मिन् न्यस्तशस्त्रे प्रव्रजिते वातमज इव धावन्नागतो दृष्टोऽसि ।

चेदिराजस्तं प्रति । सत्यमेतत्

मेधाविण् ढुग्ढनीयः स ह्वितः कर्म्मिण उद्दिशः ।
यो निःशङ्कत्वणे लिप्सं साधयत्यक्षणेऽर्त्तिषाट् ॥ ५१ ॥
यदा मन्येत सिद्धिं स्वां तदेष्टं साधयेद्बुधः ।
सुनिर्णीतस्वसामर्थ्यस्तुराषाड् विक्रमोऽपि हि ॥ ५२ ॥
मम क्लेशभजः सत्यो जयकालप्रतीक्षया ।
प्रत्यानेष्येऽधुना राज्यं सुखभाक् स्वं रिपोश्च तत् ॥ ५३ ॥

मेधाविण्निति । हे मेधाविन् ! ह्वितः स जनः ढुग्ढनीयः अन्वेषणीयः नीतिशिक्षार्थमिति शेषः । यो जनः स्वीयकर्म्मिणः स्वीयकार्य्ये उद्दिशः उद्दिशन् सन् निःशङ्कत्वणे क्षिप्रं लब्धुमिष्टं वस्तु साधयति । अक्षणे असमये अर्त्तिषाट् पीडां सहिष्णुर्भवति । कर्म्मिण इति कर्म्मणि षष्ठी । पक्षे । मेधा इति मेधावतां सं । विण् १।, ढुग्ढनीयः १।, सह्वितः ५।, कर्म्मिणः ५।, ॥ ५१ ॥

यदेति । तुराषाड् विक्रमोऽपि इन्द्रस्य विक्रम इव विक्रमो यस्य तादृशोऽपि बुधः ज्ञानवान् जनः सुनिर्णीतं स्वसामर्थ्यं येन तथा सन् यदा स्वामात्मीयां सिद्धिं मन्येत तदैव इष्टमभिलषितं साधयेत् । पक्षे । सूत्रस्य स्तं ॥ ५२ ॥

ममेति । जयकालप्रतीक्षया मम दुःखभजः दुःखस्य भजनं सत्यः । अधुना सुखभाक् सन् त्वं निजं राज्यं प्रत्यानेष्ये रिपोश्च तद्राज्यं नेष्ये इत्यर्थः । पक्षे । मम क्लेश इति कस्यचित् आक्षेपसम्बोधनम । भजः ५।, सः १।, त्यः १।, ॥ ५३ ॥

## व्याकरणम् ।

विण् ढुग्ढनीयः सह्वितः कर्म्मिणः । कर्म्मणः परात् सहधातोर्विण् अनुसन्धेयः । अर्त्तिषाट् ॥ ५१ ॥

तुराषाट् ॥ ५२ ॥

भजः स त्यः । कर्म्मपरात् भजः स विण् प्रत्ययः स्यात् । सुखभाक् ॥ ५३ ॥

चण्डवेगः ।

शृणु मेऽवहितश्चैवं त्वन्तु त्यक्ताशिवृत्तिवाट् ।
कदान्नं त्यक्ष्यति गृहीति कालं यः प्रतीक्षते ॥ ५४ ॥

चेदिराजः ।

अरे ! त्वं मा कुवचसो वक्तृत्वं क्षतृखनो गमः ।
सन् जनो विटक्रमेश्चारुष्क्रां दंशां सहते न हि ॥ ५५ ॥
सुक्षुद्रविट्वनोऽराङ् सन् बलिकर्णोऽतिदुःसहम् ।
आशु स्वोत्पादकं हन्ति सुद्गां मशकरावबत् ॥ ५६ ॥

शृणिवति । त्वन्तु त्यक्ताशिवृत्तिवाट् त्यक्तं अश्नातीति त्यक्ताशी कुक्कुरस्तस्य वृत्तिं वर्त्तनं वहतीति स तथा । गृही गृहस्थः कदा अन्नं त्यक्ष्यति इति कृत्वा यस्त्यक्ताशी कालं प्रतीक्षते । एवं इत्येवं अवहितः सावधानः सन् शृणु । पक्षे । शृणु मे इति मे मम वचः शृणु इति क्वचोपदेशः । वहितः ५।, ( च ) एवं १।, ॥ ५४ ॥

अरे इति । त्वं क्षतृखनः कुवचसो वक्तृत्वं मा गमः मा प्राप्नुहि । क्षत् खनोति विदारयति इति क्षतृखन् तस्य क्षतृखनः । हि यस्मात् सन् साधुः विटक्रमेः विष्ठायाः क्रमेः अरुष्क्रां मर्मस्पृशं दंशां दंशनं न सहते । अरुर्मर्म क्रामति स्पृशतीति अरुष्क्राः तं । पक्षे । छदिति सं । खनः ५।, गमः ५।, सन्जनः ५।, विट् १।, क्रमेः ५।, ( च ) ॥ ५५ ॥

सुक्षुद्रेति । दुःसहः सुक्षुद्रविट्वनः अतिक्षुद्रस्य विशो मनुष्यस्य वनः रवः कण्ठध्वनिः बलिकर्णो बलवतां कर्णे अराङ् शीघ्रगतः सन् आशु शीघ्रं सुद्गां प्रीतिं प्राप्नुवन्तं स्वोत्पादकं स्वस्य जनकं हन्ति । अत्र दृष्टान्तमाह । मशकस्य रावो ध्वनिः यथा शीघ्रं स्वस्य जनकं हन्ति तथेत्यर्थः । पक्षे । सुक्षुद्रेति सं । विट्वनोः ७॥, आङ् १।, ॥ ५६ ॥

## व्याकरणम्

वहितश्चैवं । वहधातोरपि एवं शायते । वृत्तिवाट् ॥ ५४ ॥
खनो गमः सन् जनो विट् क्रमेश्च । एभ्यो विट् स्यात् । अरुष्क्रां ॥ ५५ ॥
विट्वनोराङ् । अनयोः परयोः आङ् स्यात् । सुद्गां ॥ ५६ ॥

अद्य क्षेमात् ध्रुतोऽमन्त्रविचस्त्वं मन्यसे यतः ।
अज्ञात्वा मद्बलं माप्तो रोषमाखुर्यथोरगम् ॥ ५७ ॥

चण्डवेगः ।

कः क्षत्रियो युधि पराङ्मुखतामवाप्य
शौर्य्यो ध्रुतः क्व निवसुर्व्वनिपोतपुष्टः ।
आस्ते जिजीविषुरसूनजहत् त्वदन्य-
स्तत् पौरुषं विदितमस्ति तवात्मनुत्वन् ॥ ५८ ॥

तस्माद्बलमेव तव भद्रमासीत् ।

अद्येति । अमन्त्रविचः मन्त्रेण मन्त्रणया विवेचयति यः स मन्त्रविचः तद्भिन्नस्त्वं मन्त्रणया अविवेचकस्त्वं क्षेमात् मङ्गलात् ध्रुतः भ्रष्टः इति मन्यसे । यतो यस्मात् मद्बलं मम बलं अज्ञात्वा मा मां आप्तः प्राप्तः । यथा आखुः मूषिकः रोषं रोषान्वितं उरगं प्राप्नोति तथेत्यर्थः । पक्षे । क्षेमादिति मङ्गलनामकस्य सम्बोधनम् । ध्रुतः ५।, मन्त्रविचः १॥, ॥ ५७ ॥

क इति । त्वदन्यः त्वदितरः कः क्षत्रियः युधि युद्धे पराङ्मुखतां अवाप्य शौर्य्यः ऐश्वर्य्येभ्यः ध्रुतो भ्रष्टः सन् निवसुः वसु धनं तद्रहितः सन् वनिपोतपुष्टः वनिनां वनवासिमुनीनां पोतैः शिशुभिः पुष्टः सन् असून् प्राणान् अजहत् अत्यजन् सन् जिजीविषुः जीवितमिच्छुः सन् क्व कुत्र आस्ते अपि तु कुत्रापि नास्ते । तत् तस्मात् हे आत्मनुत्वन् ! आत्मानं नौति प्रशंसयतीति आत्मनुत्वा । तव पौरुषं विदितमस्ति । पक्षे । पूर्व्वापरभागयोरुदाहरणघटितवाक्यत्वेन सार्थक्यं । ध्रुतः ५।, क्वनिप-अस-उस-वनिपः १॥, ॥ ५८ ॥

व्याकरणम् ।

ध्रुतो मन्त्रविचः । धातोर्मन् च विचः स्युः रोषं ॥ ५७ ॥

ध्रुतः क्वनिबसुर्वनिपः । धातोः क्वनिप् अस् उस् वनिप् स्युः । आत्मनुत्वन् ॥ ५८ ॥

सुपक्कि विचरेत् धान्यवनमेव सुखावहम् ।
वाञ्छति श्रीफलं यन्मुट् चञ्चुनाशाय तत्परम् ॥ ५९ ॥

अथ चण्डवेगः स्वसैन्यं प्रति सविनयम् ।

चेच्चेतस्त्रस्यति ह वो नेममिच्छति वाहवम् ।
निवर्त्तध्वं तद्यनिच्छन् योधोऽपि ह्लवाट् न गौः ॥६०॥

( अथ मल्लयुद्धम् । )

छिन्नदंष्ट्राग्रीवनेत्रा अपि वीरा रणोत्सुकाः ।
युधीत्वानोऽतिपीवानो हत्वानो युयुधुः परैः ॥ ६१ ॥

सुपक्कीति । श्रोभनं पक्कं पाको विद्यते अस्येति सुपक्कि सुपक्क इत्यर्थः । ततश्च विः पक्षी सुखावहं सुपक्कि अर्थात् सुपक्कं धान्यवनमेव चरेत् । मुट् मूढः यत् श्रीफलं वाञ्छति तत् परं केवलं चञ्चुनाशाय । पद्ये । सुप इति सुष्ठुपाचकस्य सं । क्किप् १।, इस् १।, (च) ॥ ५९ ॥

चेदिति । चेत् यदि वो युष्माकं चेतश्चित्तं त्रस्यति इमं आहवं युद्धं वा न इच्छति तत् तदा यूयं निवर्त्तध्वं । हि यस्मात् अनिच्छन् गौः योधोऽपि स्वाङ्गस्योजितोऽपि न ह्लवाट् ह्लवाहको न भवतीति शेषः । अत्र हकारः अवधारणे । पद्ये । चेत इति सं । त्रस ६।, ति इव: ६।, न १।, इमं २।, इच्छति ८।, ॥ ६० ॥

छिन्नेति । युधि युद्धे इत्वानो गताः पीवानो वीराः छिन्नदन्तग्रीवनेत्रा अपि रणोत्सुकाः परैर्युयुधुः । पद्ये । सूत्रस्य उदाहरणम् ॥ ६१ ॥

व्याकरणम् ।

क्विबिच । धातोः क्किप् इस् च स्यात् । मुट् ॥ ५९ ॥

अस्य ति इवो नेममिच्छति । क्ततसस्य तेच इवश्च इमं नेच्छति । योधः ॥ ६० ॥

दंष्ट्रा, ग्रीवनेत्राः, इत्वानः, पीवानः, हत्वानः ॥ ६१ ॥

अथ राजा चेदिजावा धनुर्धावा शितैः शरैः ।
न्यपातयत् परचमूं घनावलिमिवाशुगः ॥ ६२ ॥

चण्डवेगः ।

तथा विधास्येऽद्य यथास्त्रभृन्मृधे
स्पृहान्त्यजेः स्वस्य च गौरवं तथा ।
न शूरह्वः स्याश्च पुनः क्वचिद् यथा
यशांसि गास्यन्ति ममाद्य योधिनः ॥ ६३ ॥

ममास्त्रवेध्यः क्षौकास्त्वं पतितः स्यन्दनाल्लघु ।
हतधीरूः स्वगर्धाध्यैः शयितासेऽद्य सङ्गरे ॥ ६४ ॥

अथेति । चेदिजावा चेदिदेशजः धनुर्धावा धनुर्धरः शितैः शाणितैस्तीक्ष्णैः शरैः परसेनां न्यपातयत् । आशुगो वायुः घनावलिं मेघश्रेणिमिव । पद्ये । सूत्रस्य उदाहरणम् ॥६२॥

तथेति । अस्त्रभृन्मृधे अस्त्रधारिणां युद्धे यथा येन प्रकारेण स्पृहां त्वं त्यजेः, तथा स्वस्यात्मनः गौरवञ्च त्यजेः, यथा येन प्रकारेण क्वचित् पुनः शूरह्वः न स्याः युद्धार्थं शूरं वीरं आह्वयतीति शूरह्वः पुनस्तथा न भवेः, योधिनः योद्धारः यथा येन प्रकारेण अद्य मम यशो गास्यन्ति तथा अद्य विधास्ये करिष्यामि । पद्ये । त्यजेः स्पृह इति सं । अन्त्यजेः ५।, स्वस्य ६।, (च) गौरवं २।, ॥ ६३ ॥

ममेति । अद्य सङ्गरे युद्धे ममास्त्रेण वेध्यः विद्धः सन् हतधीः हतबुद्धिः सन् लघु शीघ्रं यथा स्यात् तथा स्यन्दनात् रथात् पतितः सन् क्षौकाः क्षुः पृथिवी ओकः आश्रयस्थानं यस्य तादृशः सन् स्वगर्धाध्यैः ऊः व्रतः सन् शयितासे । पद्ये ममास्त्रेति सं । वेध्यः ६।, क्षौ ७।, ॥ ६४ ॥

व्याकरणम् ।

चेदिजावा, धनुर्धावा ॥ ६२ ॥

अन्त्यजेः स्वस्य च गौरवं । ऋस्वस्य अन्ते स्थितस्य जेर्गौरवं गुरुत्वं स्यात् । शूरह्वः ॥६३॥

वेध्यः क्षौ । वेक्षौ ध्यायतेश्च जेर्गौरवं स्यात् । धीः, ऊः ॥ ६४ ॥

रे मन्द ! दृश्यते यस्त्वं समुज्झसि परेऽगुणे ।
तथा जघन्यवर्गान्तोऽङ् गर्व्वस्याद्यास्तु स प्रयान् ॥ ६५ ॥

एवमुक्त्वा चण्डवेगश्चेदिपं शरैरविध्यत् । अनु चेदिपो मूर्च्छितो रथोपरि पपात । सारथिस्तं रणादपोवाह । अथ चेदिपः प्राप्तचेतनः । सूतं प्रति । कथं मामिहानयः । स तं प्रति ।

रथोड्वो भवेन्नानु नसिकाक्षरपङ्क्तिके ।
विषमे रथिके तस्मात्तव ऊरभवं नृप ! ॥ ६६ ॥
महारथः पुनरगात् समरे सत्वरोऽज्वरः ।

रे मन्देति । रे मन्द मूढ ! अगुणे निर्गुणे परे शत्रौ यस्त्वं समुज्झसि त्यजसि दृश्यते । तथा जघन्यवर्गान्तः जघन्यवर्गं क्षुद्राणां समूहं अन्तयति नाशयतीति स तथा त्वं तथा सन् अर्थात् कियतः क्षुद्रजीवान् हत्वा गर्व्वस्य अहङ्कारस्य अङ् प्राप्तवान् । अङ् इति अञ्चधातोः क्विपि सिद्धं । स गर्व्वः प्रयान् यान्तोऽस्तु । उज्झसि ७, परे ७, अगुणे ७, तथा १, जघन्यवर्गान्तोऽङ् १, ॥ ६५ ॥

रथेति । रथिके रथिनि विषमे सति नासिकामनुसृत्याक्षरं वर्णं पञ्चयति विस्तारयतीति सानुनासिकाक्षरपञ्चकस्तस्मिन् तथा सति, रथोड् रथं वहतीति रथोड् सारथिः स अवो रक्षको भवेत् तस्मात् तव ऊः तव रक्षिता अभवं । ऊः १, अवः ६, भवेत् ८, (च) अनुनासिकाक्षरपङ्क्तिके ७, ॥ ६६ ॥

महेति । स महारथः अज्वरः सन् तूर्त्वरागच्छतीति तूर्गः शीघ्रगामी तादृश-

व्याकरणम् ।

उज्झि परेऽगुणे तथा जघन्यवर्गान्तोऽङ् । जघन्या अन्त्या वर्गान्ताः पञ्चवर्गान्ता अणनङमा यस्य तादृशस्य धोः अर्थात् अनन्तधातोः उङ् दीर्घः स्यात् अगुणे उज्झसि परे तथा । धोरितिशब्देनात्र क्विपः परिग्रहः । अन्त्यो जघन्यश्चरम इति कोषः । प्रयान् ॥ ६६ ॥

वयोराजयवस्तूर्गवाजियुक्तरथेन सः ॥ ९७ ॥

अथ चेदिपतिरजूः सूतं प्रति ।

असौ वलोट् हलिशाली दीप्यतेऽतोऽमुना सह ।
युध्यन्नमुं हन्म्यमोघशूलेन स्वौरहं रणे ॥ ९८ ॥

चेदिराजस्वक्कवेगं प्रति ।

यमो नाश्यन्तिक इति श्रेयं किञ्चेह तेऽवल ।
मागमस्तन्मनस्तादृक् समुन्नतिमनीकगत् ॥ ९९ ॥

---

वाजियुक्तरथेन सत्वरः सन् समरे पुनरगात् । कीदृशः वयोराजयवः पक्षिराजस्य वेगतुल्यवेगवान् । त्वरः ६।, ज्वरः ६।, वयोः ६।, ॥९७॥ अजूः अज्वरः नीरोग इति यावत् ।

असौ इति । वलं सैन्यं वहति प्रापयतीति वलोट् सेनापतिः असौ हलिशाली सन् दीप्यते । अतः कारणात् अमुना सह युध्यन् सन् अहं रणे स्वौः स्वान् आत्मीयान् अवन् सन् अमोघशूलेन अव्यर्थशूलेन अमुं हन्मि । स्वौरिति, स्वान् अवतीति स्वौः । ऊट् १।, हलिशाली १।, दीप्यते ८।, अतः ५।, अमुना ३।, सह १।, ॥ ९८ ॥

यमेति । हे किञ्च ! कुः कुत्सिता इच्छा बुद्धिर्यस्येति किञ्च दुर्बुद्धे इत्यर्थः । गत्यर्थकत्वेन ज्ञानार्थकत्वादिनधातोः क्वप्प्रत्ययेन इच्येति सिद्धं । हे अवल ! इह समये ते तव अन्तिके समीपे नाशो विनाशकृत् यमः इति श्रेयं । तत् तस्मात् इह समये अनीकगत् युद्धगतः सन् मनसः तादृक् समुन्नतिं अर्थात् गर्व मागमः मा प्राप्नुहि । यमः ६।, नाशो १।, अन्तिकः १।, इति १।, श्रेयं १।, । कौ ७।, गमः ६।, तन्मनः ६।, तादृक् १।, ॥ ९९ ॥

व्याकरणम् ।

त्वरो ज्वरो वयोः । वय अय इति वौ तयोर्वयोः त्वरज्वरयोर्वकार अकारयोः ऊट् स्यात् अगुणे झसि कौ वाऽनुनासिकवर्णपञ्चकै च । तूर्गः । अजूः ॥ ९७ ॥

ऊट् हलिशाली दीप्यतेऽतोऽमुना सह । [illegible] स्यात अमना अवर्णेन सह । स्वौः ॥ ९८ ॥

यमो नाश्यन्तिक इति श्रेयं कौ । गमस्तन्मनस्तादृक् । यमधातोरन्तवर्णो नाशो भवति कौ परे इति श्रेयं । गमादीनामपि तादृक् अर्थात् अन्तिको नाशो कौ । अनीकगत् ॥ ९९ ॥

इति वाक्तच्चेदिपतिरमोघं शूलमत्यजत्।
तेन विद्धश्चण्डवेगः पपात धरणीतले ॥ ७० ॥
श्रुत्वा तद्राजमहिषी सपुत्राहं हतैव तैः।
इति संमत् भिया मूर्च्छामवाप्य न्यपतत् भुवि ॥ ७१ ॥

अथ सुबोधनामा पुरोहितस्तां चेतयित्वा आह।

न शुचः सत्यटैर्विश्वकृद्देवस्याद्रिः सदाश्रितः।
कौकसामस्ति देवड्राड् राजास्ते यत्र याहि तम् ॥ ७२ ॥
स सर्व्वनाम्नो माहात्म्यं तस्मिन् मुनिगणैर्वृतः।
शृण्वन्नास्ते श्रुतमिति सर्व्वद्रीचो मुनेर्मुखात् ॥ ७३ ॥

इतीति। चेदिपतिः इतिवाक्तत् वाचं तनोति विस्तारयतीति वाक्तत्। अन्यत् सुगमं। पद्ये सूत्रस्य उदाहरणम् ॥ ७० ॥

श्रुत्वेति। तैः शत्रुभिः सपुत्राहं हतैव। भाविनि भूतवदुपचारात्। संमन्यते इति संमत् मन्यमानेत्यर्थः। शेषः सुगमः। पद्ये। सूत्रस्य उदाहरणं ॥ ७१ ॥

न शुच इति। हे सति! शुचः शोकान् न अटैः न प्राप्नुयाः। विश्वकृद्देवस्य विश्वव्यापिदेवस्य शिवस्य अद्रिः पर्व्वतः कौकसां धरौकसां अर्थात् मनुष्याणां सदा आश्रितः सन् आस्ते। यत्र राजा देवड्राड् देवपूजकः सन् आस्ते तं पर्व्वतं याहि। टैः ६।, विश्वकृद्देवस्य ६।, अद्रिः १।, ( सदा ) आश्रितः ५।, कौ ७।, ॥ ७२ ॥

स सर्व्वेति। स राजा तस्मिन् पर्व्वते सर्व्वनाम्नो महादेवस्य नाम्नो माहात्म्यं शृण्वन् सन् आस्ते। इति सर्व्वद्रीचः सर्व्वत्रगामिनो मुनेः अर्थात् नारदस्य मुखात् श्रुतः। सः १।, सर्व्वनाम्नः ६।, ॥ ७३ ॥

व्याकरणम्।

वाक्तत् ॥ ७० ॥

संमत् ॥ ७१ ॥

टैर्व्विश्वकृद्देवस्याद्रिः सदाश्रितः कौ। एतयोः टैरद्रिः स्यात् अञ्चधातोरुत्तरजात कौ परे। देवड्राड् ॥ ७२ ॥

स सर्व्वनाम्नः। सर्व्वनामशब्दस्यापि स विधिः स्यात्। सर्व्वद्रीचः ॥ ७३ ॥

तपःसहः स म्रियमान आस्ते
सध्र्यङ् तपस्विप्रवरैः स वीरः।
श्रुत्वाऽहितं त्वन्मुखतोऽत्यमर्षात्
स्मरिष्यति स्वं किल धर्ममुग्रम्॥ ७४॥

स गतिरस्ति रिरक्षिषुरात्मनः
स हि कलत्रसुतान् पुनरेष्यति।
अपि तिरश्चि पशौ च सुपालिते
न ममतां परिहर्त्तुमलं पुमान्॥ ७५॥

समः समीरो वहतेऽनुकूलः समर्योऽप्यसौ।
सम्यङ् तस्मात् गच्छ नावा सपुत्राऽलक्षिताऽपरैः॥ ७६

तप इति। स राजा तपःसहः क्लेशसहभावतपःसहिष्णुः म्रियमाणः जीवन् आस्ते। किं कुर्वन् तपस्विप्रवरैः सध्र्यङ् सार्द्धं गमनशीलः। स वीरः त्वन्मुखतः तव मुखात् अहितं श्रुत्वा अत्यमर्षात् अतिक्रोधात् स्वं आत्मीयं उग्रं धर्मं अर्थात् क्षत्रियधर्मं किल निश्चितं स्मरिष्यति। सहः १।, सध्रि: १।,॥ ७४॥

स गतीति। स राजा तव गतिरस्ति। हि यस्मात् स राजा आत्मनः कलत्रसुतान् रिरक्षिषुः रक्षितुमिच्छुः सन् पुनरेष्यति अपि हेतौ यस्मात् पालिते तिरश्चि पक्षिणि पशौ च ममतां परिहर्त्तुं त्यक्तुं पुमान् न अलं न समर्थः। तिरः १।, तिरि: १।,॥ ७५॥

सम इति। अनुकूलः समीरो वायुः समः सन् वहते असौ समर्योऽपि सम्यङ्। तस्मात् परैरलक्षिता सती नावा नौकया गच्छ। समः १।, समी १।,॥ ७६॥

व्याकरणम्।

सहः सध्रिः। सह सध्रिः स्यात् अञ्चधातोरुत्तरजात क्वौ परे। सध्र्यङ्॥ ७४॥
तिरस्तिरिः। तिरश्चि॥ ७५॥
समः समी। सम्यङ्॥ ७६॥

भास्वदृश: समानोऽपमानतो वाच्यकर्म्मण: ।
क्तियो रामसदृक् धन्वी स तेऽस्रं नापनेष्यति ॥ ७७ ॥
सोऽशं श्रुत्वाऽग्ने: सदृक्षो भूत्वा धन्वी रुषैष्यति ।
वाणीसदृशि ! प्राज्ञेऽत्र विचिकित्साट् च माभव ॥ ७८ ॥

राजमहिषी तं प्रति । गुरो ! ॥

भास्वदिति । भास्वान् सूर्य्य: दृक् नेत्रं यस्येति भास्वदृक् शिवस्तस्य समान:, रामसदृश: परशुरामतुल्य:, धन्वी धानुष्क: स राजा क्तिय: कु: पृथिवी तत्र क्त्या गतिर्यस्येति क्तिय: पृथ्वीगत: अर्थात् जीवन् सन् वाच्यकर्म्मण: वाच्यं गर्हणीयं कर्म्म शिशो: राज्यापहरणरूपं कर्म्म यस्येति वाच्यकर्म्मा तस्य सकाशात् अपमानतस्तिरस्कारात् ते तव अस्रं नेत्रजलं न अपनेष्यति अपि तु अपनेष्यत्येव । दृश: ५।, समानोपमानत: ५।, वाच्यकर्म्मण: ५।, क्तिय: १।, ॥ ७७ ॥

सोऽशमिति । स राजा अशं अमङ्गलं श्रुत्वा रुषा क्रोधेन अग्ने: सदृक्षो भूत्वा धन्वी धनुर्द्धर: सन् एष्यति आगमिष्यति । हे वाणीसदृशि ! सरस्वतीतुल्ये ! हे प्राज्ञे ! अत्र विषये विचिकित्साट् च विचिकित्सा संशय: तां अटति प्राप्नोतीति विचिकित्साट् तादृश्यपि मा भव । तथा हि स: अवश्यं आयास्यति अत्र सन्दिग्धचित्ता मा भवेति भाव: । कित् १।, साट् १।, ( च ) ॥ ७८ ॥

व्याकरणम् ।

दृश: समानोपमानतो वाच्यकर्म्मण: क्तिय: । उपमानार्थकात् समानशब्दात् वाच्यकर्म्मण: वाच्यं कर्म्म यस्य तादृशात् दृश:, अर्थात् यदि दृशधातो कर्म्मैव उक्तकारकं स्यात् तदा तस्मात् क्ति: प्रत्यय: स्यात् । रामसदृक् ॥ ७७ ॥

कित् साट् च । समानोपमानात् दृशधातो: स: अट् च स्यात् स च कित् स्यात् । सदृक्ष:, वाणीसदृशि ! ॥ ७८ ॥

त्वञ्चेत् त्राता नो तदाद्य भवदन्योऽपमानतः ।
तथा च्छिन्नां मामविता सुहृत् को वा भवादृशः ॥ ७९ ॥
देवद्राङ्ङाः सर्व्वनाम्नः जपन्नास्ते गिरौ पतिः ।
तं मां नय सुहृत् त्वं मे यादृक् तादृक् न मेऽपरः ॥ ८० ॥

तस्मात् गुरो ! भवत्सहाया राजानं गन्तुमिच्छामि ।

समानः सङ्भोग्यश्च तापोऽयं मे तवापि च ।
अतस्तं दावसदृशं भवान् निर्व्वापयिष्यति ॥ ८१ ॥

त्वञ्चेदिति । चेत् यदि त्वं त्राता त्राणकर्त्ता न भवेरिति शेषः, तदा तथापमानतः तादृशादपमानतस्तिरस्कारात् छिन्नां मां भवदन्यस्त्वदन्यः कः पुमान् अविता रक्षिष्यति । भवादृशस्तव तुल्यः सुहृद्वा कोऽस्ति अपि तु कोऽपि न । तदाद्यभवदन्योपमानतः ५॥, तथा १।, ॥ ७९ ॥

देवेति । देवद्राङ् देवपूजकः सन् सर्व्वनाम्नः शिवस्य नाम्नः जपंश्च मम पतिः गिरौ पर्व्वते आस्ते, तं पतिं मां नय प्रापय । त्वं मे मम यादृक् सुहृत् तादृक् सुहृत् अपरो मम नास्ति । नाम्नो जपन्नित्यत्र कर्म्मणि षष्ठी, पदयोर्भज इतिवत् । आः पीड़ायां । आस्तु स्यात् कोपपीड़योरित्यमरः । ङाः १।, सर्व्वनाम्नः ६।, ॥ ८० ॥

समान इति । अयं तापः पीड़ा मे मम तवापि समानः सङ्भोग्य उभयोर्भोग्यश्च, अतो हेतोः दावसदृशं दावानलतुल्यं तं तापं भवान् निर्व्वापयिष्यति । समानः १।, स १।, ॥ ८१ ॥

व्याकरणम् ।

तदाद्यभवदन्योपमानतस्तथा । उपमानार्थकेभ्यः तदादि भवत्-अन्यशब्देभ्यो दृशधातोः क्विप् तथा ककारानुबन्धः सः अट् च स्यात् । भवादृशः ॥ ७९ ॥

ङाः सर्व्वनाम्नः । सर्व्वनाम्नो ङाः स्यात् क्वाद्यन्ते दृशि । यादृक्, तादृक्, ॥ ८० ॥

समानः स । समानशब्दस्य स स्यात् । दावसदृशं ॥ ८१ ॥

किं कीर्यते न देहोऽपि परोपकृतये सता।
न त्रायते विपन्नं यः प्रपन्नं स तु कीदृशः॥ ८२॥

सुबोधनस्तां प्रति।

इदमीरितमाश्रुत्य ईदृक् दुःखी न को भवेत्।
अतः सपुत्रां त्वां नावा नयिष्यामि नृपान्तिकम्॥ ८३॥

(अथ राज्ञी सपुत्रा सपुरोधाः नौकया पुलस्त्यस्य मुनेराश्रमं जगाम।)

साऽपश्यत् पर्णशालायामासीनौ द्विजदम्पती।
ततो नत्वा स्थितामग्रे तामूचतुरमू अदः॥ ८४॥

किमिति। सता साधुना परोपकृतये परेषामुपकारार्थं देहोऽपि किं न कीर्यते त्यज्यते अपि तु त्यज्यते एव। यो जनः विपन्नं विपदापन्नं प्रपन्नं शरणागतं न त्रायते स जनः कीदृशः? किं १।, कौ १।, ईर्य्यते ८।, ॥ ८२॥

इदमिति। इदं ईरितं त्वया कथितं आश्रुत्य श्रुत्वा को जनः ईदृक् दुःखी तव दुःखसमानदुःखी न भवेत् अपि तु भवेदेव। नावा नौकया। शेषः सुगमः। इदं १।, ई १।, ईरितं १।, ॥ ८३॥

साऽपश्यदिति। सा राज्ञी पर्णशालायामासीनौ उपविष्टौ द्विजदम्पती अपश्यत्। ततः दर्शनानन्तरं नत्वा अग्रे स्थितां तां राज्ञीं अमू द्विजदम्पती अदः वक्ष्यमाणं ऊचतुः। अदः १।, अमू १॥, ॥ ८४॥

व्याकरणम्।

किं कीर्यते। किं शब्दस्य कौ कथ्यते। कीदृशः॥ ८२॥

इदमीरितं। इदम् शब्दः ई ईरितं इति कथितं। ईदृक्॥ ८३॥

अमू अदः। अदस् शब्दः अमू स्यात्॥ ८४॥

काऽसि कस्य गृहस्थोऽस्त्वं राज्ञी त्वं मन्यसे श्रिया।
अमूदृक् श्रीर्नेतरासां स्त्रीणां भवितु मर्हति ॥ ८५ ॥

अथ सुबोधनः मुनिं प्रति।

जनार्द्दनस्य राजर्षेर्म्महिषीयं पतिव्रता।
हृतराज्या परैर्भीता गतेदृशीं दशां गता ॥ ८६ ॥

इति नवमीरात्रीविनोदे प्रथमोऽध्यायः ॥

कासीति। त्वं राज्ञी राजमहिषी श्रिया तव शोभया कारणभूतया मन्यसे। शेषः सुगमः। पद्ये। सूत्रस्य उदाहरणं ॥ ८५ ॥

जनेति। ईदृशां ईदृशीं दशामवस्थां गता प्राप्ता सती आगता। पद्ये। सूत्रस्य उदाहरणं ॥ ८६ ॥

व्याकरणम्।

अमूदृक् ॥ ८५ ॥
ईदृशां ॥ ८६ ॥

इति त्यादिपादः।

सुबोधनी मुनिं प्रति।

वेदवक्तः! प्रत्ययोऽस्ति वृत्तेऽवाच्ये च कर्म्मणि।
भावे शस्ते पुमानस्मिन् भवेऽनुतपति क्वचित्॥ १॥

तत् कथं सद्वृत्तायाः अस्या राज्ञ्या एतावती विपदुत्पन्नेति चिन्तये। इदानीमुपस्थितविपदः शान्त्यर्थं तपस्यन्तं राजानमानेतुं राज्ञी मया सह हिमालयं याति।

मुनिस्तां प्रति।

विद्वन्! श्रुता वाक्तव तु वृत्तेऽघे रक्षितुं निजान्।
राजैष्यति तपस्त्यक्त्वा धन्वीति ज्ञातवान् भवान्॥ २॥

मम बोधे तन्नायाति।

राज्ञी मुनिं प्रति।

वेदेति। हे वेदवक्तः! वेदवादिन्! पुंसो वृत्ते चरित्रे तथा कर्म्मणि तथा भावे स्वभावे अवाच्ये अनिन्दिते प्रशस्ते च सति, स पुमान् भवे संसारे क्वचिदपि न अनुतपति इति प्रत्ययो निश्चयोऽस्ति। वृत्तं पद्ये चरित्रे चेत्यमरः। क्तः १।, प्रत्ययः १।, अस्ति ८।, वृत्ते ७।, वाच्ये ७।, (च) कर्म्मणि ७।, भावे ७।, ॥ १॥

विद्वन्निति। हे विद्वन्! तव वाक् श्रुता। अघे व्यसने विपदि च वृत्ते उत्पन्ने सति राजा तपस्त्यक्त्वा धन्वी सन् निजान् आत्मीयान् सुतादीन् रक्षितुं एष्यति आयास्यति इति भवान् ज्ञातवान्। व्यसनेष्वघमित्यमरः। पक्षे क्तवतु १।, वृत्ते ७, घे ७।, ॥ २॥

व्याकरणम्।

क्तः प्रत्ययोऽस्ति वृत्ते वाच्ये च कर्म्मणि भावे। धोः क्तः प्रत्ययः स्यात् वृत्ते अतीते कर्म्मणि भावे च वाच्ये। शस्तो॥ १॥

क्तवतु वृत्ते घे। धोः क्तवतु स्यात् वृत्ते अतीते कर्त्तरि वाच्ये। ज्ञातवान्॥ २॥

त्वं नो रक्षेर्गुरुरसत्कर्म्मणो दैन्यभावके ।
उपस्थिते पराक्रोशे वाऽशिवं स्यात् यथा क्षितम् ॥ ३ ॥
क्षीणायां मां नलमिव मन्येऽक्षीतोऽदयोऽदितः ।
तस्य नोदश्च स्यात् येन सोऽप्युपायः क्षितो मम ॥ ४ ॥
यस्याः स्फुरत् रयबलस्यारादपि हृतत्विषः ।
म्लाना आसन् नृपा भानोः समीपे खचरा इव ॥ ५ ॥

---

त्वमिति । पराक्रोशे परस्य शत्रोः आक्रोशे दैन्यभावे च उपस्थिते सति त्वं गुरुर्यथा येन प्रकारेण अशिवं अमङ्गलं क्षितं नष्टं स्यात् तथा नोऽस्मान् रक्षेः । कीदृशान् नः । असत्कर्म्मणः असत् अप्रशस्तं कर्म्म अदृष्टं यस्य स तथा तस्य । अत्र वाशब्दः समुच्चयार्थकः । रक्षेः ६।, गुरुः १।, असत्कर्म्मणः ६।, दैन्यभावे ७।, उपस्थिते ७।, पराक्रोशे ७।, वा १।, ॥ ३ ॥

क्षीणायामिति । असौ कलिः नलमिव नलनामकं राजानमिव मां इतः प्राप्तः इति मन्ये, यथा पुरा कलिः नलराजं प्राप्तस्तथा मां प्राप्त इत्यर्थः । मां कीदृशीं क्षीणायां क्षीणः अयः शुभादृष्टं यस्याः सा तथा तां । कलिः कीदृशः अदयः निर्द्दयः क्रूर इत्यर्थः, अदितः अच्छिन्नः सम्पूर्ण इत्यर्थः । येन उपायेन तस्य कलेः नोदः क्षेपः अपसरणं स्यात् सोऽपि उपायो मम क्षितः क्षीणोऽभूदित्यर्थः । नुदधातोः क्षेपोऽर्थः । यथा नुन्ननुत्तास्तनिष्ठ्यूत इति कोषः । क्षीतः ५।, दः ५।, ओदितः ५।, तस्य ६।, नः १।, दः ६।, (च) ॥ ४ ॥

यस्या इति । यस्या मम स्फुरन् दीप्यमानो रयो वेगो यस्येति स्फुरद्रयः तादृशस्य बलस्य सैन्यस्य आरात् समीपे नृपाः हृतत्विषः नष्टतेजसो म्लाना आसन् । भानोः समीपे खचराः चन्द्रादयो ग्रहा इव । रयवलस्यारात् ५।, (अपि) ॥ ५ ॥

व्याकरणम् ।

रक्षेर्गुरुरसत्कर्म्मणो दैन्यभावके उपस्थिते पराक्रोशे वा । क्षेर्घः स्यात् न तु ढे भावदैन्याक्रोशे तु वा । अशिवं क्षितं ॥ ३ ॥

क्षीतः दः ओदितः नोदश्च । दीर्घान्तक्षीधातोः दः दकारान्तधातोः ओकारेतो धातोश्च परस्य क्तक्तवत्वोस्तस्य नः स्यात् । पूर्व्वस्य दस्य च नः स्यात् । क्षीणः, क्षितः ॥ ४ ॥

रयवलस्यारादपि । र य व ल संयुक्ताकारान्तात् रकारान्ताच्च तयोस्तस्य नः स्यात् । म्लानाः ॥ ५ ॥

साऽहमप्यानपुण्याद्य ग्लानाऽत्राणा च बन्धुभिः।
श्राणा स्वोदरपोषेऽपि पश्य कालस्य पर्य्ययम् ॥ ६ ॥
योऽवगीतोऽप्यपूतो न मद्ध्यातः ख्यात एव न।
प्रोन्नतो बाधते मां स लूनायां कालपर्य्ययात् ॥ ७ ॥
विभवस्य वियोगोऽत्यसह्यः क्लेशात्तदुद्भवात्।
उरुतश्चकितो नेमं वष्टि सन् भृतधीः पुमान् ॥ ८ ॥

साऽहमिति। साऽहं तादृशी अप्यहं अद्य अप्यानपुण्या अप्यानं अल्पं पुण्यं यस्याः सा तथा क्षीणपुण्येत्यर्थः। अत्राणा अरक्षिता। श्राणा खिन्ना परिम्लानेत्यर्थः। पर्य्ययं वैपरीत्यं। पश्ये। सूत्रस्य उदाहरणं ॥ ६ ॥

य इति। यो जनः अवगीतः ख्यातगर्हणः निन्दनीय इत्यर्थः। अपूतः अपवित्रः मद्ध्यातः मया ध्यातश्चिन्तितोऽपि न ख्यात एव न, स जनः कालविपर्य्ययात् प्रोन्नतः सन् मां बाधते। कीदृशीं मां लूनायां लूनश्छिन्नः अयः शुभादृष्टं यस्याः सा तथा तां। ( गीतः ५।, अपूतः ५।, न १।, मद्ध्यातः ५।, ख्यातः ५।, ( एव ) न १।, प्रः ५।, ॥ ७ ॥

विभवेति। विभवस्य ऐश्वर्य्यस्य वियोगोऽत्यसह्यः। तदुद्भवात् विभवस्य वियोगोद्भवात् उरुतः महतः क्लेशात् चकितो भीतः सन् सन् साधुः भृतधीः भृता पुष्टा धीर्मोक्षविषयक-बुद्धिर्यस्य स तथा अर्थात् योगी जनः इमं विभवं न वष्टि नेच्छति। ( उरुतः ) रुतः ५।, कितः ५।, न १।, इमं २।, वष्टि ८।, सन् १।, ॥ ८ ॥

व्याकरणम्।

प्यान, ग्लाना, त्राणा, श्राणा ॥ ६ ॥

गीतोऽपूतो न मद्ध्यातः ख्यात एव न प्रः। पुम्भिन्नात् णिकारानुबन्धधातोरपि तद्योगस्य न स्यात्। न तु मदध्यै ख्या पू धातुभ्यः। लूनायां ॥ ७ ॥

रुतश्च कितो नेमं वष्टि सन्। ऋकारान्तादुवर्णान्तात् कितः इमं नेच्छति सन् पण्डितः। भृतः ॥ ८ ॥

नाकश्रितो हतोऽप्यर्च्चैर्देवैर्भूयोऽशुभाश्रितः ।
भवे पतत्यर्त्तिमयेऽतो नेच्छति दिवञ्च सन् ॥ ९ ॥

तद्भवतु कृतपुण्यायास्तवाचिरेणैव मर्त्तुर्नङ्क्ष्यति । यतः ।

बलीन्मत्तो यदा द्वेष्टि ख्यातं ध्यातञ्च साधुभिः ।
इष्टापूर्त्तयुतं विष्णुभक्तं तर्हि स नश्यति ॥ १० ॥

पुरादिदैत्यौ बलोन्मत्तौ यूनावभूतां तयोर्दिवो जिगीषाया-
मवगतायां सनातनस्तयोः प्राणैर्द्यूतमकरोत् ॥ ११ ॥

नाकेति । नाकः स्वर्गः तमाश्रितोऽपि अर्च्चैः पूजनीयैर्देवैर्हतोऽपि भूयः पुनरपि अशुभकर्म्माश्रितः सन् अर्त्तिमये पीड़ामये भवे संसारे पतति । अतः सन् साधुः दिवञ्च स्वर्गञ्च नेच्छति । श्रितः ५।, हतः ५।, ( अपि ) ॥ ९ ॥

बलेति । बलोन्मत्तो जनः साधुभिर्ध्यातं आराध्यं विष्णुभक्तं इष्टापूर्त्तयुतं इष्टं यागः पूर्त्तं पुष्करिण्यादि कर्म्म तद्युक्तं जनं यदा द्वेष्टि स तर्हि नश्यति । पद्ये । सूत्रस्य उदाहरणं ॥ १० ॥

पुरेति । आदिदैत्यौ हिरण्याक्ष-हिरण्यकशिपू यूनौ प्रदीप्तौ तयोर्दैत्ययोः दिवः स्वर्गस्य अपेक्षायां जातायां सत्यां सनातनो विष्णुः तयोः प्राणैः सह द्यूतक्रीड़ां अकरोत् । दिवः ६।, अजिगीषायां ७।, अवगतायां ७।, ( सना १।, ) त १।, नः १।, तयोः ६॥, ॥ ११ ॥

## व्याकरणम् ।

श्रितो हतोऽपि । अशुभाश्रितः ॥ ९ ॥

मत्तः, ख्यातं, ध्यातं, पूर्त्तं, ॥ १० ॥

दिवोऽजिगीषायामवगतायां सना तनस्तयोः । अजिगीषार्थे दिवस्तयोरस्य नः स्यात् सना नित्यं । यूनौ । जिगीषायान्तु द्यूतं ॥ ११ ॥

( अपि च )

दोर्गौरवञ्चासहमान आत्मनो विद्रावयामास दिगीशदिग्गजान्।
बाणो युयुत्सुः शिवमाह्वयत् यदा दूनस्तदासीत् हरिलूनगर्व्वकः॥१२॥

सतां स दुःखघ्नोऽपि कङ्कणो निजसेवकम्।
अघ्नदुःखमकरोत् सत्राता सज्जनप्रियः॥ १३ ॥
त्रातो नुत्तोऽपि वा तेन यः स केनापि न क्वचित्।
भुग्नस्त्राणोऽपि वा साध्वि ! तमेवाह्वय केशवम्॥ १४ ॥

दोरिति। बाणो बाणनामा असुरः आत्मनः दोर्गौरवं बाहूनां भारं असहमानः सन् दिगीशान् दिग्गजांश्च विद्रावयामास। युयुत्सुर्योद्धुमिच्छुः सन् शिवं आह्वयत् यदा स हरिणा लूनश्छिन्नो गर्व्वो यस्य तथा सन् दूनो दुःखित आसीत् दो: ६।, गौरवं १।, ( च १। )॥ १२ ॥

सतामिति। स हरिः सतां साधूनां दुःखघ्नोऽपि दुःखच्छेत्तापि। कथं कं निजसेवकं अघ्नदुःखं अकरोत् अपि तु न कमपि। घ्नः ६।, ( अपि १।, ) कङ् १।, ॥ १३ ॥

त्रात इति। तेन हरिणा यो जनः त्रातो रक्षितः स्यात्, स जनः केनापि जनेन क्वापि न नुन्नः न क्षिप्तो भवति। यस्तेन हरिणा नुत्तोऽपि वा क्षिप्तोऽपि वा स्यात्, स केनापि त्राणो रक्षितो न भवति। त्रातः ५।, नुत्तः ५।, ( अपि ) वा १।, ॥ १४ ॥

व्याकरणम्।

दोर्गौरवञ्च। दुधातोस्तयोस्तस्य नः स्यात् दीर्घत्वञ्च। दूनः॥ १२ ॥
घ्नोऽपि कङ्। घ्नः कङ् स्यात् अपिना तयोस्तस्य नः स्यात्। घ्नः॥ १३ ॥
त्रातोनुत्तोऽपि वा। त्राणुदभ्यां वा स्यात्। नुन्नः, त्राणः॥ १४ ॥

राजमहिषी मुनिं प्रति।

वित् क्लीबघ्रातोऽपि राज्ञां स्त्रीजनो नैति गृहाद्बहिः।
तथाप्यद्य विपन्नाहमक्लीबा वनमागता॥ १५॥
एतद्वित्तमविन्नं वा योषाहं ज्ञातुमक्षमा।
तथापि ते दयाघ्राणहृदे काम्यं ब्रवीम्यहम्॥ १६॥
तमानेष्ये तपो भंक्त्वा मोहयित्वा स्वमायया।
अक्लीताहं स्वदयितं करिणी करिणं यथा॥ १७॥
स हि श्रियं हृतां दीनां प्रत्यानेष्यति सद्रथी।
रिपुं हत्वा महाबाहुर्व्वेदबाहुः श्रुतिं यथा॥ १८॥

विदिति। राज्ञां स्त्रीजनः वित् सदसद्विवेचनक्षमः क्लीबघ्रातोऽपि क्लीबेन तया आघ्रातः स्पृष्ट इत्यर्थः। गृहाद्बहिर्नैति न याति। तथापि अद्याहं विपन्ना विपत्प्राप्ताहं अक्लीबा निर्लज्जा सती वनमागता। वित् क्लीबघ्रातः ५।, (अपि)॥ १५॥

एतदिति। एतद्वक्ष्यमाणं मनोगतं वित्तं विचारितं अविन्नं वा अविचारितं वा इति योषाहं नारी अहं ज्ञातुमक्षमा। तथापि दयाघ्राणहृदे दयया घ्राणं स्पृष्टं हृदन्तःकरणं यस्य तादृशाय ते तुभ्यं काम्यं ब्रवीमि। पद्ये। सूत्रस्य छं॥ १६॥

तमिति। अक्लीताहं निर्लज्जाहं स्वीयमायया दयितं पतिं मोहयित्वा तपस्तपस्याञ्च भंक्त्वा तं आनेष्ये। यथा करिणी करिणं मोहयित्वा आनयति तथेत्यर्थः। पद्ये। सूत्रस्य छं॥ १७॥

स हीति। स तु दयितः परैर्हृतां दीनां श्रियं प्रत्यानेष्यति। यथा वेदबाहुः विष्णुः दीनां श्रुतिं प्रत्यानयत् तथेत्यर्थः। पद्ये। सूत्रस्य छं॥ १८॥

व्याकरणम्।

वित्क्लीबघ्रातोऽपि। एष्योऽपि वा स्यात्। क्लीबायाः॥ १५॥

विन्नं, वित्तं, घ्राण॥ १६॥

अक्लीता॥ १७॥

दीनां॥ १८॥

मुनिस्तां प्रति।

प्राज्ञे! ऽभवत् यस्य मोचो मोहजालनिबन्धनात्।
बहुपुण्यैः चामबुद्धे! स भूयस्तत्र किं पतेत्॥ १९॥

अपि च। पतिं मोहयिष्यामीति यन्मन्यसे तदपि तव भ्रान्तिरेव।

त्वया नोपचितो बोधः कर्म्मभिः पक्वपाप्मनः।
षडूर्म्मिजयिनो न स्यात् वनितायां रसोदयः॥ २०॥

राजमहिषी मुनिं प्रति। यद्येवं तथापि।

कः शुषस्तपसा शुष्कपङ्कोऽपि कमलाशयः।
रसदाल्यागमे भूयो रसवान् दीप्यते न किम्॥ २१॥

---

प्राज्ञ इति। हे प्राज्ञे! यस्य जनस्य बहुपुण्यैर्मोहजालबन्धनात् मोचो मोचनं अभवत्, हे चामबुद्धे! अल्पबुद्धे! स जनः किं भूयः पुनरपि तत्र मायाजाले पतेत् अपि तु न पतेत्। चः ५।, मः १।, भवति ८।, ॥ १९॥

त्वयेति। त्वया बोधः सम्यक् ज्ञानं नोपचितः न सञ्चितः, यतो यस्मात् कर्म्मभिः पक्वः पाप्मा कषायो यस्य तादृशस्य षडूर्म्मिजयिनः कामक्रोधादयः षडूर्म्मयस्तेषां जयिनो जनस्य वनितायां रसस्यानुरागस्योदयो न स्यात्। पचितः ५।, वः १।, ॥ २०॥

क इति। कः कमलाशयः जलाशयः तपसा माघेन शुषः शुष्कपङ्कोऽपि रसदाल्यागमे रसदो मेघस्तस्याली श्रेणी तस्या आगमे अर्थात् वर्षासमये भूयः पुनरपि रसवान् सन् किं न दीप्यते अपि तु तथा। राजपचे कमलाशयः लक्ष्म्याश्रयः नृपः तपसा शुष्कः शुष्कपङ्कोऽपि चीणपापोऽपि रसदाया आल्या सख्या आगमे रसवान् अनुरागवान् न भवति अपि तु तथेत्यर्थः। कः १।, शुषः ५।, ॥ २१॥

व्याकरणम्।

चो मो भवति। चेधातोस्तयोस्तस्य मः स्यात्। चामबुद्धे!॥ १९॥
पचितो वः। पचधातोस्तयोस्तस्य वः स्यात्। पक्वपाप्मनः॥ २०॥
कः शुषः। शुषधातोस्तयोस्तस्य कः स्यात्। शुष्क॥ २१॥

मुनिराह।

यो मोहबन्धं सहसैव मुक्त्वाऽस्त्यस्याप्यलिप्सार्थलुभोऽवशोऽपि।
इच्छेदिमं यः पुनरेव बन्धं स लुब्धकोऽसौ लुभितोऽघृणश्च॥ २२॥

राजमहिषी। यद्येवं तदा तत्रैव स्थास्यामि।

तत्रोषिता करिष्येऽहं पत्युः पुष्पजलाहृतिम्।
पूजार्थाञ्च क्षुधोऽप्यद्भिर्व्वारयन्त्यर्च्चितप्रिया॥ २३॥

इत्यपि जानामि।

तपस्वी धृतनिष्ठायाः क्लिशः क्वापीममिच्छति।
नोज्झं गृहाश्रमं क्लिष्टो वान्तमश्नाति यत्न सन्॥ २४॥

यो मोहेति। यो मोहबन्धं दारादिमयसंसारबन्धनं सहसा मुक्त्वा त्यक्त्वा अस्ति, अहो हे अवशो! निर्द्धने! अस्य जनस्य अलिप्सार्थलुभः नास्ति लिप्सार्थे लब्धुमिष्टे धनादिवस्तुनि लुभः लोभो यस्य स तथा तस्य। पुनरेव इमं बन्धं संसारमायाबन्धनं यो जन इच्छति, स लुब्धकः व्याधतुल्यः अघृणः निर्दयः। क्त्वाः ६।, त्यस्य ६।, (अपि) अलिप्सार्थलुभः ६।, वशः ६।, (अपि) इच्छेत् ८।, इमं २।, ॥ २२॥

तत्रेति। तत्र पत्युः समीपे उषिता अर्च्चितप्रिया अर्च्चितः पूजितः प्रियः पतिर्यया तथा सती पत्युः पूजार्थां पुष्पजलाहृतिं पुष्पजलादाहरणं अहं करिष्ये। किं कुर्व्वती-त्याह। क्षुधोऽपि अद्भिर्जलैर्व्वारयन्ती। पूजार्थाञ्च क्षुधः ६।, (अपि)॥ २३॥

तपस्वीति। धृतनिष्ठायाः धृतनियमात् क्लिशः क्लिष्टः तपस्वी जनः क्वापि कदापि इमं उज्झं त्यक्तं गृहाश्रमं न इच्छति। यत् यस्मात् सन् साधुः क्लिष्टोऽपि वान्तं अन्नादिकं न अश्नाति। निष्ठायाः ५।, क्लिशः ५।, क्व ७।, (अपि) इमं २।, इच्छति ८।, ॥ २४॥

व्याकरणम्।

क्त्वास्त्यस्याप्यलिप्सार्थलुभो वशोऽपि इच्छेदिमं। क्त्वाप्रत्ययस्य अपिग्रहणात् क्त-क्तवतु प्रत्ययस्यापि इमं इच्छति। लुभितः, लुब्धकः॥ २२॥

पूजार्थाञ्च क्षुधोपि। उषिता, अर्च्चितप्रिया॥ २३॥

निष्ठायाः क्लिशः क्वापीममिच्छति। क्लिशधातोः निष्ठायाः क्त-क्तवत्वोः क्वापि इमं इच्छति न तु सर्व्वत्र। क्लिष्टः॥ २४॥

क्लिशितः स्यादिहामुत्र वेदार्थाविश्वसोऽवमः ।
पूतो जमोऽपि वा तेन वेदोऽविश्वसितोऽफलो ॥ २५ ॥
अतोऽविश्वस्तवेदा न यतिष्येऽवेध ईदृशे ।
याहं तद्वमितं राज्यं वश्मि भोजयितुं पतिम् ॥ २६ ॥

अतो राज्येऽपि न मे प्रयोजनं ।

जपिताभीष्टमन्त्राहं पवितात्मोपवासतः ।
समाध्यग्नौ जुहोम्याशु तपःशुष्कमिदं वपुः ॥ २७ ॥

क्लिशित इति । वेदार्थे अविश्वसो यस्य तादृशोऽवमोऽधमोजनः इहामुत्र क्लिशितः स्यात् । पूतः सहजत एव पवित्रो वेदः तेन अवमेन जमोऽपि अविश्वसितः सन् अफलो न फलजनकः स्यात् । आविश्वसः ५।, अवमः ५।, पूतः ५।, जमः ५।, ( अपि ) वा १।, ॥ २५ ॥

अत इति । अतः कारणात् अविश्वस्तवेदा अविश्वस्तो वेदो यस्यास्तादृशी सती ईदृशे अवेधे वेदाविहिते कर्म्मणि न यतिष्ये यत्नं न करिष्यामि । याऽहं प्रियं पतिं तद्वमितं तेन पत्या वमितं भुक्त्वा उज्झितं राज्यं भोजयितुं वश्मि इच्छामि । पद्ये । सूत्रस्य उं ॥ २६ ॥

जपितेति । जपितः अभीष्टमन्त्रो यया तादृशी सती उपवासात् पवितः पवित्री-कृत आत्मा यया सा तथा तादृशी सती समाधिरूपाग्नौ इदं तपसाशुष्कं वपुः शरीरं जुहोमि अर्थात् योगेन देहं त्यजामीत्यर्थः । पद्ये । सूत्रस्य उदाहरणम् ॥ २७ ॥

व्याकरणम् ।

आ-व-श्वसा वमः पूतो जमोऽपि वा । एष्योपि निष्ठया उम वा स्यात् । क्लिशितः, विश्वसितः ॥ २५ ॥

विश्वस्त, वमितं ॥ २६ ॥

जपित, पवित ॥ २७ ॥

सर्व्वदापदनेका च ईच्यते पतिता मम ।
तत्शान्त्युपायो नान्योऽस्ति आश्रयोन्मूलनं विना ॥ २८ ॥

मुने ! मम सुतयो: क्षत्रियधर्म्मं नेच्छामि । यत: ।

राज्ञो युद्धेऽमर्षितार्थं स्यात् क्षमार्थमृषेर्गुण: ।
प्राप्तयोरिममार्षं सत् गुणं स्याच्छुभमेतयो: ॥ २९ ॥
धृषस्तथाऽपूशीधोर्मुगपूतोऽपवितक्रिय: ।
पुत्रौ तथा तदेतौ न तथास्तां याच इत्यजम् ॥ ३० ॥

---

सर्व्वदेति । मम अनेका आपत् विपत् सर्व्वदा पतिता उपस्थिता ईच्यते, आश्रयस्य शरीरस्य उन्मूलनं उच्छेदं विना अन्यस्तस्य शान्तेरुपायो नास्ति । सर्व्वदा ७।, पदनेकाच: ५।, ईच्यते ८।, ॥ २८ ॥

राज्ञ इति । राज्ञ: क्षत्रियस्य गुण: युद्धे अमर्षितार्थं अमर्षितं अक्षमा तदर्थं तन्निमित्तं स्यात् । ऋषेर्गुणस्तु क्षमार्थं क्षान्त्यर्थं स्यात् । तस्मात् । एतयोर्म्मम पुत्रयो: इमं आर्षं ऋषिसम्बन्धिनं सद्गुणं प्राप्तयो: सतो: शुभं स्यात् । स्यात् ८।, क्षमार्थमृषे: ६।, गुण: १।, प्राप्तयो: ७॥, इमं २।, ॥ २९ ॥

धृष इति । धृष: परहिंस: । धृषु हिंसे इत्यस्य रूपं । अपू: अपवित्राश्चासौ शीधुश्चेति अपूशीधु: तद्भुक् मद्यपायी अपूत: अपवितकर्म्मा च पुत्र: तथा भवति । तत् तस्मात् एतौ मम पुत्रौ तथा तादृशौ न स्तां न भवतां इति अजं ईश्वरं याचे । धृष: ६।, (तथा) पूशीधो: ६।, ॥ ३० ॥

व्याकरणम् ।

सर्व्वदा पदनेका च ईच्यते । पतधातोरनेकाचश्च धातोस्तयोरिम सदा ईच्यते । पतिता ॥ २८ ॥

स्यात् क्षमार्थमृषेर्गुण: प्राप्तयोरिमं । क्षमार्थकमृषेर्धातोर्गुण: स्यात् इम्प्राप्तयोस्तयो: । अमर्षितार्थं ॥ २९ ॥

धृषस्तथा पूशीधो: । धृषस्तथा पूञ: शीङ्धातोश्च गुण: स्यात् तयो: सतो: । अपूत:, अपवित: ॥ ३० ॥

सुतौ ममेतौ वसतामिहाश्रमे ऽभयेऽभयौ शश्वदधर्षितौ परैः ।
क्वचिन्महौग्रैः शयितौ वनेचरैः समाश्रितौ त्वच्चरणं सुपालितौ ॥३१॥
सत्त्वानि वन्यानि मुनेरिहाश्रमे स्थितान्यहिंस्राणि समञ्चराणि च ।
इच्छन्ति नाशं जनितश्रवःसुखं शृण्वन्ति गानं शिशुसंहतेः श्रुतेः ॥३२॥
तदिह हिंस्रशङ्कापि नास्ति ।

तथाऽवेम इमं नाडीदितश्चेच्छति यं पुमान् ।
आशं तं दत्त एवेशो दीप्तो गूढ़श्च देहिषु ॥ ३३ ॥

सुताविति । तव चरणं समाश्रितौ एतौ मम सुतौ अभये भयरहिते इहाश्रमे शश्वत् सर्व्वदा अभयौ निर्भयौ सन्तौ परैः शत्रुभिः अधर्षितौ वसतां । कीदृशौ । क्वचिदपि महौग्रैर्व्वनेचरैः सह शयितौ अपि सुपालितौ तैः पशुभिः पालितौ इत्यर्थः । पत्ते । सूत्रस्य च ॥ ३१ ॥

सत्त्वानीति । इह आश्रमे स्थितानि वन्यानि वनचराणि सत्त्वानि जन्तवः अहिंस्राणि समञ्चराणि सहचराणि । शिशुसंहतेः मुनिबालकसमूहस्य श्रुतेर्गानं श्रुतेः सामवेदस्य गानं शृण्वन्ति सन्ति आशं भोजनमपि नेच्छन्ति । गानं कीदृशं, जनितं उत्पादितं श्रवसः कर्णस्य सुखं येन तत्तथा । णिसः ६।, इच्छन्ति नाशं २।, ॥ ३२ ॥

तथेति । नाडीदितः नाडी दिता छिन्ना यस्य तादृशः अर्थात् नाडीच्छेदात् परं पुमान् यं आशं यत् भक्ष्यं इच्छति तमेव आशं ईशो दत्ते । स कीदृशः देहिषु दीप्तो गूढ़श्च । इमं ईशं तथैव अवेमः जानीमः । वेमः ५।, इमं २।, ना १।, डीदितः ५।, ( च ) इच्छति ८।, ॥ ३३ ॥

व्याकरणम् ।

अधर्षितौ, शयितौ ॥ ३१ ॥

णिच इच्छन्ति नाशं । णिचो लोपमिच्छन्ति तयोः सैतौ । जनित ॥ ३२ ॥

वेम इमं नाडीदितश्चेच्छति । विकल्पितैमधातोः डी ईदितश्च धातोः इमं नेच्छति । अत्र माशब्दो निषेधार्थकः । दीप्तः, गूढः ॥ ३३ ॥

अतोऽनयोराहारं स एव दास्यति ।

मुनिराह । स भवत्या दितश्चाद्य सञ्चितो योऽशुभव्रजः ।
ममाश्रमं यदायाता त्वं च्छिन्ना परतो भयात् ॥ ३४ ॥

किन्तु प्रारब्धक्षयात् कियत्कालानन्तरं तव दुःखं नङ्क्ष्यति । यतः

प्रारब्धकर्म्मभावेऽबाधं पुम्भिर्भोज्यमेव तत् ।
यत् कर्म्म फलितं यस्मात् फुल्तं कर्म्म न नश्यति ॥ ३५ ॥

अथ मुनिस्तयोर्ब्बालकयोः शरीररक्षां बबन्ध । यथा ।

यत् त्वमेवाशकः कर्म्मण्यशक्ये दैत्यनिग्रहे ।
देवाऽवने तद्विष्णोऽमू शक्तौ द्विड्भ्योऽवितुं त्वया ॥ ३६ ॥

समवेति । योऽशुभव्रजः अशुभकर्म्मसमूहः भवत्या सञ्चित आसीत्, सः अशुभव्रजः अद्य दितश्छिन्नोऽभूत् । यत् यस्मात् परतः शत्रुतो भयात् छिन्ना सती ममाश्रमं आगता । भवति ८।, आदितः ५', ( च ) ॥ ३४ ॥

प्रारब्धेति । प्रारब्धकर्म्मभावे प्रारब्धस्य भोगारब्धस्य कर्म्मणोऽदृष्टस्य भावे सद्भावे सति तत् कर्म्म अबाधं भोज्यमेव अवश्यं भोज्यमित्यर्थः । यत् कर्म्म फलितं फलितुमारब्धं तत् भोज्यमेवेत्यन्वयः । यस्मात् फुल्तं, फलितुमारब्धं कर्म्म न नश्यति ज्ञानतपस्यादिभिरिति शेषः । प्रारब्धकर्म्मभावे ७', वा १।, ॥ ३५ ॥

यदिति । हे विष्णो ! यत् यस्मात् देवावने देवानां रक्षणे दैत्यनिग्रहे च अशक्ये दुःसाध्यकर्म्मणि त्वमेव अशकः शक्तोऽभूः । तत् तस्मात अमू शिशू द्विड्भ्यः शत्रुभ्यः अवितुं रक्षितुं त्वया शक्तौ । वा १।, शकः ५।, कर्म्मणि ७।, ॥ ३६ ॥

व्याकरणम् ।

भवत्यादितश्च । आकारेतो धातोश्च स विधिर्ज्ञेयः । छिन्ना ॥ ३४ ॥

प्रारब्धकर्म्मभावे वा । आकारेत् धातोः क्त स्थाने इम न स्यात् वा आरब्धकर्म्मणि वाच्ये भावे च । फलितं, फुल्तं ॥ ३५ ॥

वा शकः कर्म्मणि । शकधातोस्तयोरिम न स्यात् वा कर्म्मणि वाच्ये । अमू अवितुं त्वया शक्तौ ॥ ३६ ॥

जले स्थले खे निशि सन्ध्ययोर्दिवा
अष्टासु दिक्ष्वात्तनिजायुधः स्थितः ।
इमौ शिशू रक्ष हरे ! त्वयैव यत्
त्रातुं निहन्तुं शकिताः शरीरिणः ॥ ३७ ॥

सत्वरश्च हृषः सोऽथ विष्णोः कवचमेतयोः ।
न्यास्यदङ्गेषु हृष्टासीत् त्वरितं तेन तत्प्रसूः ॥ ३८ ॥

तथैव हृषितस्तूर्णं बालौ तावुपनीय सः ।
अध्याहयत् धनुर्व्विद्यां ब्रह्मास्त्रञ्च ससंहृति ॥ ३९ ॥

मुनिस्तौ प्रति ।

रुषोऽपि कर्हिचित् क्रूरो यद्यागच्छेत् जिघांसया ।
स दृष्ट्वा वां मुखं सद्यो रुष्टोप्यरुषितो भवेत् ॥ ४० ॥

जल इति । खे आकाशे । आत्तनिजायुधः आत्तं गृहीतं निजं आत्मीयं आयुधं येन स तथा । यत् यस्मात् शरीरिणः त्रातुं हन्तुं वा त्वयैव शकिताः शक्ताः । पक्षे सूत्रस्य उदाहरणं ॥ ३७ ॥

सत्वर इति । अथ अनन्तरं स मुनिः सत्वरः त्वरान्वितः हृषः हृष्टः सन् एतयोर्बालकयोः अङ्गेषु विष्णुकवचं न्यास्यत् न्यासं कृतवान् । तेन कर्म्मणा तयोः प्रसूस्तयोर्माता त्वरितं हृष्टा आसीत् । सः १।, त्वरः ५।, (च) हृषः ५।, ॥ ३८ ॥

तथेति । स मुनिः हृषितः सन् तौ बालौ उपनीय उपनीतौ कृत्वा धनुर्व्विद्यां अध्याहयत् । ससंहृति संहारेण सहितं ब्रह्मास्त्रञ्च अध्याहयत् । पक्षे सूत्रस्य उ° ॥ ३९ ॥

रुष इति । क्रूरो जनः रुषोऽपि जिघांसया यदि आगच्छेत् तदा स क्रूरः वां युवयोर्मुखं दृष्ट्वा सद्यः रुष्टोऽपि अरुषितो भवेत् । रुषः ५।, (अपि) कर्हिचित् ७।, ॥४०॥

व्याकरणम् ।

त्वया शरीरिणस्त्रातुं शकिताः ॥ ३७ ॥

स त्वरश्च हृषः । आभ्यामपि स विधिर्ज्ञेयः । हृष्टा, त्वरितं ॥ ३८ ॥

हृषितः, तूर्णं ॥ ३९ ॥

रुषोऽपि कर्हिचित् । कर्हिचित् विकल्पेन । रुष्टः, रुषितः ॥ ४० ॥

स्फीतधारोपि कालासिरकिञ्चित्कर एव वां।
गात्रे भवेदपि स्फायः स्फ्यादेश इव युवयोः॥ ४१॥

सुबन्धुराह। एवमुक्त्वा मुनिः प्रयागे तपसे जगाम।

तदाग्रजः स्म भवति नित्यं निरुपसर्गतः।
प्यायः पीवा स्वाङ्ग एकोऽपीनोप्यासीत् व्रणोपि न॥ ४२॥
स पञ्चदशवर्षीयोऽभवन्नाम्ना प्रियङ्करः।
पीनवक्षाः प्यानबलः स्फातोत्साहोऽस्त्रिणां वरः॥ ४३॥

प्रियङ्करः मातरं प्रति।

स्फीतेति। कालासिः यमस्य खड्गः स्फीतधारोऽपि स्फायोऽपि महानपि वां युवयोर्गात्रे अकिञ्चित्कर एव भवेत्। स्फ्यादेश इव स्फ्य इति आदिश्यते य इति स्फ्यादेशः स्फ्यनामकः याज्ञिकानां काष्ठनिर्मितः खड्गस्तद्वदित्यर्थः। भवेत् ८।, (अपि) स्फायः ६।, स्फ्यादेशः १।, ॥ ४१॥

तदेति। अग्रजः प्रियङ्करनामा निरुपसर्गतः निरुपद्रवेण प्यायो वर्द्धितो भवति स्म। पीवा वृहत्कायः अस्य स्वीयाङ्गे एकः अपीनः अतिक्षुद्रोऽपि व्रणः नासीत् न बभूव। निरुपसर्गतः ६।, प्यायः ६।, पी १।, वा १।, अस्वाङ्गे ७।, ॥ ४२॥

स पञ्चेति। प्यानबलः स्फीतबलः। स्फातोत्साहः वर्द्धितोद्यमः। अन्यत् सुगमं। पद्ये। सूत्रस्य छं ॥ ४३॥

व्याकरणम्।

भवेदपि स्फायः स्फ्यादेशः। स्फायः स्फी आदेशो भवेत् वा। स्फीतधारः॥ ४१॥
भवति नित्यं निरुपसर्गतः प्यायः पीवाऽस्वाङ्गे। अस्वाङ्गे तु वा। पीनः॥ ४२॥
पीनवक्षाः, प्यानबलः, स्फातोत्साहः॥ ४३॥

सुखं दितं सितं सैन्यं वीरेण तव तस्य न ।
आरोप्यते गुणे दोषः इरा तद्वीरभर्त्तृका ॥ ४४ ॥
मास्थश्चाश्रूणि मातस्त्वं मितः कालः प्रतीक्ष्यताम् ।
यावन्निहन्मि तं शत्रुं स्वबाहुबलमास्थितः ॥ ४५ ॥
अस्वेच्छाशः क्वचिन्मूलफलानां शयनञ्च ते ।
शितासिवत् कुशासटे तेनासीच्छातविग्रहा ॥ ४६ ॥
वनेचरो दुश्चरमास्थितस्तपो विवेकचूर्णीकृतपक्षहारिपुः ।

सुखमिति । वीरेणैव तव सुखं दितं छिन्नं सैन्यञ्च सितं नाशितं, तस्य वीरस्य गुणे शौर्य्यरूपे गुणे दोषो न आरोप्यते यत् यस्मात् इरा पृथिवी वीरभर्त्तृका वीरो भर्त्ता यस्याः सा तथा । तदुक्तं वीरभोग्या वसुन्धरेति । ते ७।, अगुणे ७।, दोषः ६।, इः १।, आः १।, ॥ ४४ ॥

मास्थ इति । हे मातः ! अश्रूणि नेत्रजलानि मास्थः न मुञ्च । मितः परिमितः । शेषः सुगमः पद्ये मास्थः ६।, ( च ) ॥ ४५ ॥

अस्वेति । क्वचिदपि समये ते तव मूलफलानां अस्वेच्छाशः अस्वेच्छया अशः भोजनं, शयनञ्च तव शितासिवत् शाणितखड्गसदृश कुशासने । छातविग्रहा छिन्नशरीरा । छाशः ६।, क्वचित् ७।, ॥ ४६ ॥

वनेचर इति । मम पिता गिरिराजस्य सन्निधौ आस्ते तं द्रष्टुं वञ्मि इच्छामि ।

व्याकरणम् ।

तेऽगुणे दोषः इराः । अनयोराकारः इः स्यात् अगुणे तकारे परे । दितं, सितं ॥ ४४ ॥

मास्थश्च । अनयोरप्याकारस्य इः स्यात् अगुणे ते । मितः, आस्थितः ॥ ४५ ॥

छाशः क्वचित् । शित, छात ॥ ४६ ॥

पिता ममास्ते गिरिराजसन्निधौ
तमीचितुं वश्मि धृतव्रतोऽस्त्रवित् ॥ ४७ ॥
दधाति धातुर्हि लिपिं षष्ठेऽह्नि निहितां नरः ।
तदेव भविता मातर्यदस्ति लिखनं विधेः ॥ ४८ ॥
अतोऽहं तदर्थं महारण्येऽपि यास्यामि ।
माता सुतं प्रति । अधोऽदो दच्छदान्नेयं न यो मद्दत्तहस्तहृत् ।
निद्रासि रात्रौ क्रोड़े मे स त्वं दुर्गं कथं व्रजेः ॥ ४९ ॥
( अपि च ) निवृत्तवाचोऽगेस्थायी प्रत्तचित्तः शिवेऽस्ति यः ।
तेन किं साधयेः कार्य्यं सिध्येत् कोऽर्थस्त्वयास्य वा ॥ ५० ॥

---

कीदृशोऽहं धृतव्रतः धृतं व्रतं उपनयनं येन स तथा । अस्त्रवित् । पिता कीदृशः वनेचरः दुश्चरं तपः आस्थितः धृतवान् । विवेकेन चूर्णीकृताः षट् महारिपवः कामक्रोधादयो येन स तथा । चरः ५।, चत् १।, ऊः १।, ॥ ४७ ॥

दधातीति । षष्ठेऽह्नि निहितां अर्पितां धातुर्विधातुर्लिपिं नरो दधाति । हे मातः ! विधेर्यल्लिखनमस्ति तदेव भविता । दधाति धातुः १।, हि १।, ॥ ४८ ॥

अध इति । अदः एतद्वचनं दत्-छदात् ओष्ठाधरात् अधो न नेयं । यस्त्वं मद्दत्तहस्तहृत् मया दत्तोऽर्पितो हस्तो हृदि यस्य तादृशः सन् रात्रौ मे मम क्रोड़े निद्रासि स त्वं कथं दुर्गं व्रजेः । अधः ६।, दः ६।, दत् १।, ॥ ४९ ॥

निवृत्तेति । यो जनः अर्थात् तव पिता निवृत्तवाचः निवृत्ता वाचा वाणी यस्य स तथा, अगे पर्व्वतसमीपे स्थायी शिवे प्रत्तं अर्पितं चित्तं येन एवम्भूतः सन् अस्ति तेन जनेन किं कार्य्यं साधयेः कार्य्यं सिध्येत् । अस्य जनस्य वा त्वया कोऽर्थः किं कार्य्यं सिध्येत् । त १।, वा १।, अचः ६।, गेः ६।, ॥ ५० ॥

व्याकरणम् ।

चरोऽद्रूः । चरधातोरकार ऊः स्यादनौ ते । चूर्णीकृत ॥ ४७ ॥

दधातिधातुर्हि । धाधातुर्हिः स्यादगुणे ते । आहित ॥ ४८ ॥

अधोदो दत् । धावर्ज्जितस्य दासंज्ञकस्य दत् स्यादनौ ते । मद्दत्त ॥ ४९ ॥

तवाचो गेः । गेरचः परस्य धाभिन्नस्य दासंज्ञकस्य त वा स्यादनौ ते । प्रत्तचित्तः ॥ ५० ॥

प्रियङ्करः। मातर्गुरोर्दर्शनं सर्व्वाभीष्टसाधकं।

माता तं प्रति। वत्स! किमहं तव गुरुर्न।

अज्ञा यपि च मन्यन्तेऽदो जग्धं जग्धपाकजम्।
हृन्मेदोऽस्या इति गुरुः पूज्याऽत्यज्या प्रसूः सदा॥ ५१॥

स मातरं प्रति। मातस्त्वमेव गुरुस्तस्मान्ममाभीष्टं मा वारय।

मातर्मम क्षेमचिन्तासक्त आरब्धकर्म्मणि।
कर्त्तर्य्यपि क्षमे मातुर्निषेधः स्यात् क्तोऽशुभम्॥ ५२॥

(अपि च) दुस्थो जनोऽप्यसत्कर्म्मश्लिषः शीधोः प्रपाय्यपि।
वेत्ति माता गुरुः पूज्या भूतोऽहं यत्तनोरिति॥ ५३॥

---

अज्ञा इति। अस्याः मातुः जग्धपाकजं जग्धस्य अन्नादेः पाकेन जातं यत् हृन्मेदः तत् जग्धं भुक्तं त्वयेतिशेषः। अदः एतत् अज्ञा अपि मूढ़ा अपि मन्यन्ते इति हेतोः प्रसूर्माता गुरुः पूज्या अत्यज्या च। यपि ७।, (च) मन्यन्ते ८॥, अदः ६।, जग्धं १।, ॥ ५१॥

मातरिति। हे मातः हे मम, क्षेमचिन्तासक्ते! कर्त्तरि आरब्धकर्म्मणि सति मातुर्निषेधः अशुभं क्तः अशुभकारकः स्यात्। कर्त्तरि कीदृशे क्षमेऽपि कर्म्मनिष्पादनसमर्थेऽपि। क्तः १।, आरब्धकर्म्मणि ७, कर्त्तरि ७, (अपि)॥ ५२॥

दुस्थ इति। दुस्थोऽपि दरिद्रोऽपि जनः तथा शीधोः सुरायाः प्रपायी अपि, माता गुरुः पूज्या यत्तनोर्यस्याः शरीरात् अहं भूतः इति वेत्ति जानाति। स्थः ५।, जनः ५।, (अपि) असत्कर्म्मश्लिषः ५।, शीधोः ५।, ॥ ५३॥

व्याकरणम्।

यपि च मन्यन्तेऽदो जग्धं। अदो जग्धः स्यादगुणे ते यपि च। जग्धपाकजं॥५१॥

क्त आरब्धकर्म्मणि कर्त्तर्य्यपि। आरब्धकर्म्मणि विहितः क्तः कर्त्तरि स्यात् अपिनाद्भावे च। अशुभं क्तः॥ ५२॥

स्थोजनोऽप्यसत्कर्म्मश्लिषः शीधोः। स्थाजन अकर्म्मकधातुश्लिषः शीङ्धातोश्च कर्त्तरि द्भावे च क्तः स्यात्। भूतोऽहम्॥ ५३॥

वज्रो रूढोपि तद्भावे कुण्ठितासिरिवेयते ।
यत् शीर्षमधिरूढं स्यात् यात्रायां मातृपद्रजः ॥ ५४
यथाधिशयितस्तेऽङ्कं तथा दुर्गमधिष्ठितः ।
स्वापं धास्ये सुखमनुजातं त्वत्पादरेणुभृत् ॥ ५५ ॥
यो विश्वमनुजीर्णोऽजस्तमाराधय सुव्रते ।
यथा कार्य्यं साधयिष्ये ईप्सितं निरवग्रहः ॥ ५६ ॥
मुनिपत्नीमिमां धात्रीमासास्याः पादमाश्रिता ।
वसास्या वाचिनो हेलां कर्त्तास्येनामुपासिता ॥ ५७ ॥

वज्र इति । यात्रायां यात्रासमये मातृपद्रजः मातुश्चरणरेणुः यत् शीर्षं यस्य मस्तकं अधिरूढं स्यात्, तद्भावे तस्य शरीरे रूढोऽपि आरूढोऽपि वज्रः कुण्ठितासिरिव कुण्ठित धार इव ईयते प्रतिगच्छति । ज्ञः ५।, रूहः ५।, (अपि) ॥ ५४ ॥

यथेति । यथा ते तव अङ्कं क्रोड़मधिशयितः सन् स्वापं भजामि तथैव तव पाद-रेणुभृत् सन् दुर्गमधिष्ठितोऽपि सुखमनुजातं स्वापं निद्रां धास्ये । पद्ये । सूत्रस्य ज्ञं ॥५५॥

यो विश्वमिति । यः अजः ईश्वरः विश्वमनुजीर्णः, हे सुव्रते ! तं आराधय, येन हेतुना निरवग्रहः सन् ईप्सितं कार्य्यं साधयिष्ये । पद्ये । सूत्रस्य ज्ञं ॥ ५६ ॥

मुनीति । इमां मुनिपत्नीं धात्रीं मातरं आसासि प्रासासि एनां उपासिता सती अस्याः पदं आश्रिता सती वस वासं कुरु । अस्य वाचि वाक्ये अवहेलां तुच्छत्वेन परिग्रहं न कर्त्तासि न करिष्यसि । (वस् आस् यात्राचिनः) वसास्यावाचिनः ५।, ॥ ५७ ॥

व्याकरणम् ।

शीरूहोपि । अरूहोपि तथा स्यात् । शीर्षमधिरूढं रजः ॥ ५४ ॥

अङ्कमधिशयितः, दुर्गमधिष्ठितः, सुखमनुजातं ॥ ५५ ॥

विश्वमनुजीर्णः ॥ ५६ ॥

वसास्यावाचिनः । वस आस आवाचिनः गतिवाचिधातोः कर्मण्यपि क्तः स्यात् । धात्रीमासा ॥ ५७ ॥

पथि सिद्धाश्रममित: सुखमध्युषितो निशाम् ।
सुखमाप्तो गमिष्यामि विमुञ्चोद्वेगमात्मन: ॥ ५८ ॥
शिवाचलगमार्थात्तथाधिकरणे मम ।
रक्षाकवचमुद्दीप्तेऽशिवं स्यात् किं ममासिते ॥ ५९ ॥

माता सुतं प्रति ।

यदि गन्तुं प्रोद्यतोऽसि तद्गच्छास्तु शिवं तव ।
मय्यायास्यसि जीवन्त्यां दृष्ट्वाशु पितुरास्थितम् ॥ ६० ॥
त्वद्गते तव भुक्ते च शयिते च गिरौ पथि ।
वने च त्वां सदा पातु विष्णु: स्वमनुमुद्रितम् ॥ ६१ ॥

पथीति । अस्यार्थ: सुगम: । पद्ये । सूत्रस्य ङं ॥ ५८ ॥

शिवेति । शिवाचलगमात् शिवस्य अचल: पर्व्वत: तस्मिन् गमात् गमनरूपात् अर्थात् कार्य्यात् शिवस्य पर्व्वते गमनरूपकार्य्यादित्यर्थ: । तथा मम अधिकरणे करणं शरीरमधिरुढं इति अधिकरणं तस्मिन् । मम शरीरमधिरुढे रक्षाकवचे उद्दीप्ते सति ममासिते मया आसितं उपविष्टं यस्मिन् स्थले तन्ममासिते पर्व्वतादौ किं अशिवं अमङ्गलं स्यात् अपि तु नेत्यर्थ: । अचलगमादर्थात् ५।, (तथा) अधिकरणे ७।, ॥५९॥

यदीति । यदि गन्तुं उद्यतोऽसि तत् तदा गच्छ तव शिवं मङ्गलमस्तु । पितुरास्थितं आस्थीयते यस्मिन् इति आस्थितं वासस्थानं आशु शीघ्रं दृष्ट्वा मयि जीवन्त्यां आयास्यसि । पद्ये । सूत्रस्य ङं ॥ ६० ॥

त्वद्गत इति । त्वया गम्यते यस्मिन् त्वया भुज्यते यस्मिन् त्वया शय्यते यस्मिन् तस्मिन् गिरौ पथि वने च विष्णु: सदा स्वमनुमुद्रितं स्वीयमन्त्रेण मुद्रितं अङ्कितं त्वां पातु । पद्ये । सूत्रस्य ङं ॥ ६१ ॥

व्याकरणम् ।

सिद्धाश्रममित:, निशामध्युषित:, सुखमाप्त: ॥ ५८ ॥

अचलगमादर्थात्तथाधिकरणे । अचलार्थात् गत्यर्थात् अदनार्थाच्च अधिकरणे क्त: स्यात् । तथा शब्दात् कर्तृकर्म्मभावे च । ममासिते ॥ ५९ ॥

आस्थितं ॥ ६० ॥

गते, भुक्ते, शयिते गिरौ ॥ ६१ ॥

अथ प्रियङ्करः मातरं प्रणम्य गुरुपत्नीं प्रति।

व्रतयज्ञेष्टपूजार्थान्मन्यते सत्यसून् तव।
यथा तथाश्रितानाञ्चावनार्थानप्यदो मतम्॥ ६२॥
त्वामर्च्चिता सत्शीलेद्धफलादेश्च भवत्कृते।
आहर्त्री जननीयं मे पाल्यतेधर्म्मशीलिते!॥ ६३॥
सतीद्धपुण्ये! मातैवमाधिसंफुल्लमानसा।
सर्व्वदा वाञ्छति मृतिं यथा जीवेस्तथा चरेः॥ ६४।

व्रतेति। हे सति! तव असून् प्राणान् यथा व्रतयज्ञेष्टपूजार्थान् मन्यते। व्रतं यज्ञः इष्टपूजा च अर्थः प्रयोजनं येषां असूनां ते तथा तान्। तथा एते तव असवः आश्रितानाञ्च अवनार्थाः आश्रितानां अवनं रक्षणं अर्थः प्रयोजनं येषां ते तथा। अदः इदं मतं मन्यते इत्यर्थः। शेष्टपूजार्थात् ५।, मन्यते ८।, सति ७।,॥ ६२॥

त्वामिति। हे धर्म्मशीलिते! धर्म्मं धर्म्मजनकं कर्म्म शीलयति आचरतीति धर्म्मशीलिता सा तथा। इयं मम जननी त्वां अर्च्चयन्ती सती सत्शीला भवत्कृते तव निमित्तं इद्धफलादेः काष्ठफलादीनां आहर्त्री ते तव पाल्या पालनीया। शीलेद्धफलादेः ५।, (च)॥ ६३॥

सतीति। हे सति! हे इद्धपुण्ये! प्रदीप्तपुण्ये! इयं मम माता आधिना मनःपीडया संफुल्लं स्फुटत् मानसं यस्याः सा तथा सर्व्वदा मृतिं मरणं वाञ्छति इयं यथा येनोपायेन जीवेत् तथा चरेः कुर्य्याः। पद्ये। मृतस्य ङ॥ ६४॥

व्याकरणम्।

शेष्टपूजार्थान्मन्यते सति। ज्ञानार्थ, इच्छार्थ, पूजार्थधातोः क्तः स्यात् सति वर्त्तमाने। कर्त्तृकर्म्मभावे। अदो मतं, मन्यते इत्यर्थः॥ ६२॥

शीलेद्धफलादेश्च। शीलादेर्व्वर्त्तमाने क्तः स्यात्। इद्धफलादेरिति तु क्तानुबन्धधातूनामुपलक्षणं। शीलिते॥ ६३॥

इद्ध, संफुल्ल॥ ६४॥

इत्याद्युक्त्वा तांश्च प्रणम्य निश्चक्राम । अथ स चिन्तयति ।

धन्वी पान्थमुखात् ज्ञातो वर्त्म यास्यामि साहसी ।
वनेचराः सहचरा भविष्यन्ति ममैष्यतः ॥ ६५ ॥
दिग्भागस्तु य आख्यातः षष्ठोऽस्ति तत्पवत् गतः ।
क्व सुस्थः प्रावृषं नेष्ये आवासं कस्य शिश्रिवान् ॥ ६६ ॥

अथ पञ्चालदेशमागतश्चिन्तयति ।

दिवानक्तं जजागर्वान् त्रिमासैर्दुद्रुवानहम् ।
पञ्चालराष्ट्रमत्रैव वत्स्याम्याप्रावृषः सुखी ॥ ६७ ॥

इति स वृक्षमूलमुपाविशत् । अथ काचिन्नगराङ्गना तं दृष्ट्वा सखीं प्रति ।

धन्वीति । अहं धन्वी साहसी सन् पान्थानां मुखात् वर्त्म पन्थानं ज्ञातः अर्थात् जानन् सन् यास्यामि । एष्यतो मम वनेचराः सहचरा भविष्यन्ति । पद्ये । सूत्रस्य छं ॥ ६५ ॥

दिगिति । यो दिग्भागः षष्ठ आख्यातः कथितः पवस्तत्पालकः पवनः तद्वत् गतः सन् क्व कुत्र सुस्थः सन् कस्य आवासं गृहं शिश्रिवान् आश्रितवान् सन् प्रावृषं वर्षाकालं नेष्ये यापयिष्यामि । यः १।, आख्यातः १।, षष्ठः १।, अस्ति ८।, तस्य ६।, पवत् १।, गतः १।, क्रमः १।, ॥ ६६ ॥

दिवेति । रात्रिन्दिवं जजागर्वान् जागरणशीलः सन् अहं त्रिमासैः पञ्चालं दुद्रुवान् आगतः । अत्रैव सुखी सन् आप्रावृषः प्रावृट्कालपर्यन्तं वत्स्यामि । पद्ये । सूत्रस्य ढं ॥ ६७ ॥

व्याकरणम् ।

पन्थानं ज्ञातः ॥ ६५ ॥

आख्यातः षष्ठोऽस्ति तस्य पवत् गतः क्रमः । य आख्यातः [illegible] पवत् परस्मै- अद्रवत् क्रमः गतः ज्ञातः । शिश्रिवान् ॥ ६६ ॥

जजागर्वान्, दुद्रुवान् ॥ ६७ ॥

हेमवत् भात्यसौ का नो भवत्यस्मिन् स्पृहावती ।
ईचाणामुं सानुरागमुरोभूषाय कामिनी ॥ ६८ ॥

काचिन्नागरी सखीं प्रति ।

नूनं विधुरसौ राहोर्भियागादत्र मन्यते ।
अन्यथा दृकचकोरी मे दधानः किं न मुञ्चति ॥ ६९ ॥

काचिदाह ।

सखीयीवान् परं भाग्यं जनो यस्त्वारिवानिदम् ।
वसु त्यस्यार्त्त्यादि नो वष्टीमं मणिमितं न का ॥ ७० ॥

हेमेति । असौ हेमवत् सुवर्णमिव भाति । का कामिनी असुं जनं सानुरागं यथा स्यात् तथा ईचाणा दृष्टवती सती उरो भूषणाय अस्मिन् जने स्पृहावती नो भवति अपि तु तथा भवतीत्यर्थः । भवत् १।, भाति ८।, असौ १।, कानः १।, भवति ८।, ॥ ६८ ॥

नूनमिति । नूनं निश्चितं असौ विधुः राहोर्भिया अत्र अगात् इति मन्यते । अन्यथा यद्ययं विधुर्न स्यात् तदा मे मम दृकचकोरी नेत्ररूपचकोरपक्षिणी दधानः सन् किं कथं न मुञ्चति । चकोरस्य विधौरतिप्रियत्वात् न मुञ्चतीति भावः । पक्षे । मूत्रस्य उं ॥६९॥

सखीति । हे सखि ! परमं भाग्यं ईयिवान् प्राप्तवान् यो जनः अर्थात् नारीजनः इदं वसु धनं आरिवान् त्यस्य जनस्य अर्त्त्यादि अर्त्तिः पीड़ा तदादिकं नो भवतीति शेषः । का नारी इतं प्राप्तं इमं मणिं न वष्टि न इच्छति अपि तु सर्व्वैव इच्छति । वसुत्यस्य ६।, अर्त्त्यादिनः ५।,वष्टि ८।, इमं २।, ॥ ७० ॥

व्याकरणम् ।

भवत् भात्यसौ कानो भवति । कानः स्यात् असौ अदाख्यातस्य भवत् भाति । ईचाणा ॥ ६८ ॥

दधाणः ॥ ६९ ॥

वसुत्यस्यार्त्त्यादिमो वष्टीमं । असौः कादन्तात् इनश्च वसुप्रत्ययस्य इमं इच्छति । भाग्यं ईयिवान् ॥ ७० ॥

अपरा । सखि ! अयं सोत्कण्ठचित्तो लक्ष्यते । यतः ।

एकयोक्त्या द्विरुक्त्यापि चैका च स्त्र्याह सुन्दर ! ।
श्रान्तो मद्गेह मेहीति नासौ तत् श्रोतुमीषिवान् ॥ ७१ ॥

अथैका विप्रपत्नी तं प्रति ।

लक्ष्यतेऽघस एवं न जक्षिवान् म्लायते न यत् ।
वत्स ! चेन्नादिवान् प्रातर्भुक्त्यै तर्ह्येहि मद्गृहम् ॥ ७२ ॥

एतत् श्रुत्वा स हृष्टः ।

तत्कृतावाहनो विन्दः क्षुधः सोऽगात्तया सह ।
तदावासं विविदिवान् विविद्वांश्च परां मुदम् ॥ ७३ ॥

एकयेति । हे सुन्दर ! त्वं श्रान्तोऽसि मद्गेहं मम गृहं एहि आयाहि इति एका स्त्री नारी एकया उक्त्या द्विरुक्त्या च अर्थात् बहुवारं ( अपि ) ( च ) एकाचः ५।, ॥ ७१ ॥

लक्ष्यत इति । हे वत्स ! त्वं अघसः भुक्तवान् एवं न लक्ष्यते न ज्ञायते यत् यस्मात् जक्षिवान् भुक्तवान् जनः न म्लायते म्लानो न भवति । चेत् यदि प्रातः न आदिवान् न भुक्तवान् तर्हि भुक्त्यै भोजननिमित्तं मद्गृहं एहि आगच्छ । लक्ष्यते ८।, घसः ६।, एवं १।, ॥ ७२ ॥

तत्कृतेति । क्षुधो विन्दः क्षुधां प्राप्तः सः प्रियङ्करः तत्कृतावाहनः तया ब्राह्मण्या कृतं आवाहनं आह्वानं यस्य स तथा तादृशः सन् तया ब्राह्मण्या सह अगात् । तदावासं तस्या गृहं विविदिवान् प्राप्तः सन् परां मुदं परमहर्षं विविद्वान् प्राप्तः । वा १।, हनः ५।, विन्दः ५।, ॥ ७३ ॥

व्याकरणम् ।

एकयोक्त्या द्विरुक्त्यापि चैकाचः । यो धातुरेकया उक्त्या एकाच् द्वित्वे कृतेऽपि एकाच् भवति तस्माच्च वसोरिम स्यात् ईषिवान् ॥ ७१ ॥

लक्ष्यते घस एवं । जक्षिवान्, आदिवान् ॥ ७२ ॥

वा हनो विन्दः । विविदिवान्, विविद्वान् ॥ ७३ ॥

तत्रेतो यस्य स विशो दृक्गमो भवतिस्म सः।
तं जग्मिवान् निधिमिव दुःखञ्च जघ्निवान् निजम्॥ ७४॥
तद्वात्सल्यं ददृश्वान् स सतीं ददृशिवांश्च ताम्।
भुक्त्यागारं विविशिवान् विविश्वानासनेऽथ सः॥ ७५॥
श्रद्धयाहृतशाकान्नैर्जगन्वान् तृप्तिमुत्तमाम्।
जघन्वान् क्षुत्पिपासार्त्तिमाहैवं ब्राह्मणीं स ताम्॥ ७६॥
अहमासे भजंस्तृप्तिमद्यामृतपवत् सति!।
श्रद्दधत्या त्वयादत्तमन्नं भुक्त्वा चतुर्व्विधम्॥ ७७॥

---

तत्रेति। स प्रियङ्करः तत्र इतः गतः सन् यस्य विशो मनुष्यस्य दृक्गमः दृष्टिगतो भवति स्म स मनुष्यः तं प्रियङ्करं निधिमिव जग्मिवान् प्राप्तवान् निजमात्मीयं दुःखञ्च जघ्निवान् नाशितवान्। सः १।, विशः ५।, दृग्गमः ५।, भवति ५।, ॥ ७४॥

तद्वात्सल्यमिति। सः प्रियङ्करः तद्वात्सल्यं तस्याः ब्राह्मण्या वात्सल्यभावं ददृश्वान् तां ब्राह्मणीं सतीं साध्वीं ददृशिवान् ज्ञातवान् सन् इत्यर्थः। दृक्ज्ञाने धातरि विष्विति कोषात्। भुक्त्यागारं भोजनगृहं विविशिवान् अथानन्तरं आसने विविश्वान् उपविवेश। पचे। सूत्रस्य ॥ ७५॥

श्रद्धेति। उत्तमां तृप्तिं जगन्वान् प्राप्तवान् सन् क्षुधापिपासाजनितामार्त्तिं पीडां जघन्वान् नाशितवान् सन् स प्रियङ्करः तां ब्राह्मणीं एवं वक्ष्यमाणं आह। पचे। सूत्रस्य ॥ ७६॥

अहमिति। हे सति! अद्य श्रद्दधत्या श्रद्धान्वितया त्वया दत्तं चतुर्व्विधं अन्नं भुक्त्वा अमृतपवत् अमृतं पिबतीति अमृतपः स इव तृप्तिं भजन् सन् अहं आसे स्थितोऽस्मि। पवत् १।, सति ७, अत् १।, ॥ ७७॥

व्याकरणम्।

स विशो दृक्गमो भवति। विशो दृशो गमोऽपि स विधिः। जग्मिवान्, जघ्निवान्॥ ७४॥

ददृश्वान्, ददृशिवान्, विविशिवान्, विविश्वान्॥ ७५॥

जगन्वान्, जघन्वान्॥ ७६॥

पवत् सति अत्। धोः अत् स्यात् अर्थात् शतृः स्यात् सति वर्त्तमाने काले स तु परस्मैपदवत् स्यात्। भजन्, दधती॥ ७७॥

एवं वसन् द्विजगृहे कतिचिद्वासराणि सः।
निनाय प्रीणयन् स्वीयशीलेन पुरवासिनः॥ ७८॥

अथैकदा द्विजपत्नीं रुदतीं दृष्ट्वा प्रियङ्करस्तां प्रति। मातः! कथं रोदिषि। सा तं प्रति।

ममवत् वैभवेच्छा नो राष्ट्रेऽस्मिन्नास्ति कस्य च।
कदा रक्षोऽत्स्यतीत्येवं दधानस्य सदा भयम्॥ ७९॥

नास्त्यत्र विद्वन्नविदोऽवसुर्व्वा श्रद्धान्विताः कर्म्मसु सर्व्व एव।
अहो विद्वन्! पश्य सदोत्कचित्ता रक्षोभियाऽप्राप्तसुखा वसन्ति ८०

एवमिति। सः प्रियङ्करः एवं अनेन प्रकारेण वसन् सन् स्वीयशीलेन निजसद्वृत्त्या पुरवासिनः प्रीणयन् सन् कतिचित् वासराणि दिनानि निनाय यापितवान्। पद्ये। सूत्रस्य ७। ॥ ७८॥

ममेति। अस्मिन् राष्ट्रे ममवत् मम इव कस्य च जनस्य वैभवेच्छा विभवसमूहं ऐश्वर्य्यं प्रति इच्छा नो अस्ति। किम्भूतस्य रक्षः राक्षसः कदा अत्स्यति भोक्ष्यते एवं भयं सर्व्वदा दधानस्य दधतः। ममवत् इत्यत्र वत्शब्दः इवार्थकः। इववद्वायथेति-कोषात्। मवत् १।, (वै) भवेत् ८।, शानः १।, ॥ ७९॥

नास्तीति। हे विद्वन्! अत्र ग्रामे अविदः अज्ञानः अवसुर्निर्धनो वा नास्ति। सर्व्वे एव जनाः कर्म्मसु वैधकर्म्मसु श्रद्धान्विताः। अहो विद्वन्! पश्य रक्षोभिया सदा उत्कचित्ता उत्कण्ठितचित्ताः अप्राप्तसुखाः सन्तः वसन्ति। विदः ५।, वसुः १।, वा १।, अत् १।, ॥ ८०॥

व्याकरणम्।

वसन्, प्रीणयन्॥ ७८॥

मवद्वै भवेत् शानः। धोः शानः स्यात् सति स तु मवत्। वै अवधारणे। भयं दधानस्य॥ ७९॥

विदो वसुर्व्वा अत्। विदः परः अत् अतः वसुः स्यात् वा। विद्वन्, विद्वन्। विदुष्याः॥ ८०॥

प्रियङ्करः। मातः। कथं राक्षसाद्भयं?। सा तं प्रति।

राष्ट्रेऽत्र राजनि हतेऽसपकेन राज्ञो-
ऽमात्यस्तदा प्रतिगृहं जनमेकमेकम्।
नीत्वाऽभिषिञ्चति नृपासन एकमह्नि
रात्रौ स रात्रिचर एत्य नृपं तमत्ति॥ ८१॥

अद्य तद्राक्षसातिथ्यनिबन्धो मउपस्थितः।
तद्विद्विष्या मम प्राणाः पुर इच्छन्ति सर्पितुम्॥ ८२॥

अद्य मम पतिं पुत्रं वा नीत्वा राज्येऽभिषेच्यति। प्रियङ्करस्तां प्रति।

नश्यत्यापत् तुषि महेशानेऽतो मन्मतं सति!।
शिवं शिवं सेवमाना भजमाना सुखं वस॥ ८३॥

ईशानस्यास्य चासः स्यात् चेत् क्षणं हृदि तद् विपत्।
नासीनस्यापि पञ्चास्यतक्षकस्यापि संमुखे॥ ८४॥

---

राष्ट्र इति। अत्र राष्ट्रे असपकेन राक्षसेन राजनि नृपे हते सति तदा तस्मिन् काले राज्ञोऽमात्यो मन्त्री प्रतिगृहं एकं एकं जनं नीत्वा अह्नि दिवसे एकं जनं नृपासने अभिषिञ्चति रात्रौ स रात्रिचरः एत्य आगत्य तं नृपं अत्ति खादति। अत्र श्लोके व्याकरण पक्षो नास्ति॥ ८१॥

अद्येति। अद्य मे मम तस्य राक्षसस्यातिथ्यनिबन्ध उपस्थितः। निबन्धः पाला इति ख्यातः। तद्विद्विष्या तत् कामन्या मम। शेषः सुगमः। पक्षे। सूत्रस्य छ॥८२॥

नश्यतीति। महेशाने महेश्वरे तुषि तुष्टे सति आपत् नश्यति। अतः कारणात् हे सति! मन्मतं मम सम्मतमेतत्। शिवं मङ्गलात्मकं शिवं सेवमाना सती सुखं भजमाना सती वस वासं कुरु। शाने ७।, अतः ६।, मन १।, ॥ ८३॥

ईशेति। चेत् यदि क्षणमपि हृदि मनसि अस्य ईशानस्य आसः स्थितिः स्यात् तत् तदा पञ्चास्य तक्षकस्यापि संमुखे आसीनस्य उपविष्टस्यापि विपत् न भवतीति शेषः। ई १।, शानस्य ६।, अस्य ६।, (च) आसः ६।, स्यात् ८।, ॥ ८४॥

व्याकरणम्।

शानेऽतो मन् मतं। अकारस्य मन् विहितं शाने। सेवमाना, भजमाना॥ ८३॥

ईशानस्यास्य चासः स्यात्। आसः परस्य शानस्य अवर्णस्य ईस्यात्। आसीनस्य॥८४॥

ब्राह्मणी तं प्रति ।

प्रजायतेऽस्य त्वपवत् भव्याख्यातस्य मे मनः ।
किन्तु तादृक् न मे पुण्यं रक्षिष्यन् येन मां शिवः ॥ ८५ ॥

प्रियङ्करस्तां प्रति ।

शिवं प्रपूजयिष्यन्त्या मत्कृते ते शुभाशिषः ।
भविष्यत्कुशलोऽथाहं भविष्यामि नृणां पतिः ॥ ८६ ॥

सा तं प्रति ।

भवतो वचनज आधिर्मम य ईक्ष्यतेऽस्य मानो नहि वत्स ! ।
अहमिव पौरा अपि यत्तव विरहमसोक्ष्यमाना मरिष्यन्ति ॥ ८७॥

---

प्रजेति । अस्य भव्याख्यातस्य मङ्गलवचनस्य अर्थात् अनेन तव मङ्गलवचसा मे मम मनः त्वपवत् त्वत्वत् जायते भवति । किन्तु तादृक् पुण्यं मम नास्ति येन पुण्येन शिवः मां रक्षिष्यन् । प्रजायते ८।, स्यत १।, पवत् १।, भव्याख्यातस्य ६।, ॥ ८५ ॥

शिवमिति । मत्कृते मम निमित्तं शिवं प्रपूजयिष्यन्त्यास्ते तव शुभाशिषः शुभाशीर्वादात् भविष्यत् कुशलं यस्य तादृशः सन् अथाहं नृणां पतिर्भविष्यामि । पद्ये । वृत्तस्य ऽऽ ॥ ८६ ॥

भवत इति । भवतस्तव वचनजः अहं राजा भविष्यामीति तव वाक्येन जातो यो मम आधिर्मानसी व्यथा अभूत् अस्य आधेर्मानः परिमाणं न ईक्ष्यते अपरिमिता आधिरित्यर्थः । हे वत्स ! यत् यस्मात् अहमिव पौरा अपि पुरवासिनोऽपि तव विरहं असोक्ष्यमाणाः सोढुमशक्ता भविष्यन्तो मरिष्यन्ति । ममयः १।, ईक्ष्यते ८।, क्ष्यमाणः १।, ॥ ८७ ॥

व्याकरणम् ।

प्रजायते स्यत पवत् भव्याख्यातस्य । भविष्यदर्थकाख्यातस्य पवत् परस्मै पदवत् स्यत स्यात् । रक्षिष्यन् ॥ ८५ ॥

प्रपूजयिष्यन्त्याः ॥ ८६ ॥

ममय ईक्ष्यते क्ष्यमाणः । ममयः मं आत्मनेपदं तन्मयस्तदात्मकः क्ष्यमाणो दृश्यते ॥ ८७ ॥

प्रियङ्करः ।

देशेऽस्मिन् क्षत्रियो नास्ति तेनायं राक्षसाहितः ।
स यद्बिभेति राजन्यात् तार्क्ष्यनाम्नः फणी यथा ॥ ८८ ॥

तव प्रसादाच्च गुरोः प्रसादात्
तथात्तविष्णोः कवचप्रसादात् ।
जनिष्यमाना विपदः क्वचिन्मे
नङ्क्ष्यन्ति सर्व्वाः स्वत एव मातः ! ॥ ८९ ॥

एवमुक्त्वा ब्राह्मणीमभिनन्द्यकालमपेक्ष्यासीत् ॥ ० ॥

देश इति । अयं देशः । स राक्षसः यत् यस्मात् राजन्यात् क्षत्रियात् बिभेति । तार्क्ष्यो गरुड़स्तन्नाम्नो यथा फणी बिभेति तथेत्यर्थः ॥ ८८ ॥

तवेति । आत्तविष्णोः कवचप्रसादात् गृहीतविष्णुकवचप्रसादेन । उत्पत्स्यमानाः सर्व्वा विपदः स्वत एव नङ्क्ष्यन्ति । पक्षे । भूतस्य उदाहरणम् ॥ ८९ ॥

व्याकरणम् ।

असीत्यमाणाः ॥ ८८ ॥

जनिष्यमाणाः ॥ ८९ ॥

इति कादिसंग्रहः ॥ ० ॥

अथ राजपुरुषास्तं नीत्वा राज्येऽभिषिषिचुः।

अथ प्रजातोषकर्त्तृवचनः सह भूव्रतः।
भ्राजयिष्णुरलं कुश्च भविष्णुः प्राप्य तं स्थिरा॥ १॥

समीक्ष्य तस्य प्रजनो वृधो रुचो-
निराकृतश्चन्द्ररुचामलङ्कृतेः।
ऊचुः स्त्रियोऽदोऽस्य निराकरिष्णवो
भयं वयं स्वानि समर्प्य रक्षसे॥ २॥

त्वां देव उपदेवोपि जनयिष्णुः शिवं सदा।
पायात् दिविचरो व्योमचरो धरणिचोऽपि च॥ ३॥

अथेति। अथानन्तरं स प्रियङ्करः भूव्रतः भुवा पृथिव्या व्रतः स्वामित्वेन व्रतः सन् भुवं भ्राजयिष्णुः आस्ते इति शेषः। कीदृशः प्रजानां तोषकर्त्तृ तोषकारकं वचनं यस्य स तादृशः। कुश्च पृथिवी अपि तं प्रियङ्करं प्राप्य स्थिरा भविष्णुः भविष्यतीत्यर्थः। कार्त्तृवचनः १।, सह भू व्रतः ५।, भ्राज ५।, इष्णुः १।, अलंकृ: ५।, ( च )॥ १॥

समीक्ष्येति। तस्य प्रियङ्करस्य वृधः वर्द्धमानाः रुचः प्रभाः समीक्ष्य स्त्रियः अदः वक्ष्यमाणं ऊचुः। किमूचुरित्याह। स्वानि स्वशरीराणि रक्षसे रक्षणाय समर्प्य अस्य प्रियङ्करस्य भयं निराकरिष्णवः वयं वारयिष्याम इत्यर्थः। रुचः किम्भूताः प्रजनः प्रजायन्ते इति प्रजनः जाता इत्यर्थः। पुनः कीदृश्यः चन्द्रस्य रुचां अलं कृते- र्निराकृतः वर्ज्जीकृतवत्यः। निराकृत इति कृञ्धातोः क्विपि सिद्धम्। प्रजनः ५।, वृधः ५।, रुचः ५।, निराकृतः ५।,॥ २॥

त्वामिति। दिवि स्वर्गचरः व्योमचरः धरणिचोऽपि देवः उपदेवोऽपि सदा सर्व्वदा शिवं मङ्गलं जनयिष्णुः सन् त्वां पायात् रक्षतु। णिचः ५।, ( अपि )॥ ३॥

व्याकरणम्।

कर्त्तृवचनः सहभूव्रतः भ्राज इष्णुः अलं कृञ। सहप्रभृतिधातोरिष्णुः स्यात् स च कर्त्तृवचनः। भविष्णुः॥ १॥

प्रजनो वृधो रुचो निराकृतः। एभ्योऽपि इष्णुः स्यात्। निराकरिष्णवः॥ २॥

णिचोऽपि च। णिजन्तादपि इष्णुः स्यात्। जनयिष्णुः॥ ३॥

इत्येवं स्त्रियः आशिषश्चक्रुः ।

एवं पौरान् रञ्जयिष्णु रासन्ध्यं स उपस्थितान् ।
व्यवहारान् निर्व्वर्त्याथ भुक्त्वा शयनमाविशत् ॥ ४ ॥

तदा त्रियामाचर उत्पदुन्मद-
श्चापत्रपोऽमुं नृपमत्तुमागतः ।
ददर्श पुर्द्वारि चरिष्णुमेकिकां
भयङ्करीं कामपि योषिदाकृतिम् ॥ ५ ॥

अथ राक्षसः आत्मगतं अहो केयं ।

रोचिष्णुर्नवमेघवच्च श्रवयुग्मालङ्करिष्णुश्रुति-
र्व्वर्द्धिष्णुश्चिरसिप्रदाऽभयशिरो भ्राजिष्णुहस्ताम्बुजा ।

एवमिति । स प्रियङ्करः एवं एवं प्रकारेण आसन्ध्यं सन्ध्याकालपर्य्यन्तं पौरान् रञ्जयिष्णुः सन् उपस्थितान् राजव्यवहारान् राजकर्म्माणि निर्व्वर्त्त्य अथानन्तरं शयनं शय्यां आविशत् । पद्ये । सूत्रस्य उं ॥ ४ ॥

तदेति । त्रियामाचरो राक्षसः अमुं नृपं अत्तुं भक्षितुं आगतः सन् पुरद्वारि चरिष्णुं एकां भयङ्करीं कामपि अनिर्व्वचनीयां योषिदाकृतिं ददर्श । त्रियामाचरः कीदृशः उत्पात् ऊर्द्धं पतति गच्छतीति स तथा । उन्मदः उन्मत्तः । अपत्रपो निर्लज्जः । चर उत्पदुन्मदः ५।, ( च ) अपत्रपः ५।, ॥ ५ ॥

रोचिष्णुरिति । नवमेघवत् रोचिष्णुः दीप्यमाना । श्रवयुग्मं अलं करिष्णु अलङ्कारभूतं श्रुती यस्याः सा तथा । वर्द्धिष्णु वर्द्धनशीलमर्च्चिर्ज्जो यस्य तादृशोऽसिः खड्गः प्रदा दानं अभयं शिरश्च एतैर्भ्राजिष्णूनि हस्ताम्बुजानि यस्याः सा तथा । श्रवस्य

व्याकरणम् ।

रञ्जयिष्णुः ॥ ४ ॥

चर उत्पदुन्मदश्चापत्रपः । एभ्योऽपि इष्णुः स्यात् । चरिष्णुः ॥ ५ ॥

वर्त्तिष्णुः शववचसीतवसना नापत्रपिष्णुः क्षणात्
मध्वाविशत उन्मदिष्णुरिव यद्भारासहिष्णुः क्षितिः ॥ ६ ॥
स्वनाशायोत्पतिष्णुं तां वीक्ष्य रक्षः क्षणं क्षितं।
प्रजनिष्णुभयात् क्षिप्रमुत्तरद्वारमाययौ ॥ ७ ॥
ब्रह्मभूतोऽजितः ष्णुक् च लोमकूपैः शिखावतः।
सर्व्वान् भूष्णून् जिष्णुरत्र ददृशे तेन कोपि ना ॥ ८ ॥
हरेः स्थातः स्नुर्यथेभैस्त्यज्यते रक्षसा तथा।

वक्षसि वर्त्तिष्णुः इतवसना विगतवसना। अपत्रपिष्णुर्न निर्लज्जेत्यर्थः। मध्वाविशतः मदिरापानस्याविशतः क्षणात् उत्सवात् उन्मदिष्णुरुन्मत्ता इव क्षितिः पृथ्वी यस्याः भारासहिष्णुः भारं वोढुं अशक्ता। पक्षे। सूत्रस्य उं ॥ ६ ॥

स्वनाशेति। अथ रक्षः राक्षसः तां कालीं स्वनाशाय स्वस्य आत्मनः हननाय उत्पतिष्णुं वीक्ष्य क्षणं क्षितं क्षीणं सत् प्रजनिष्णुभयात् उत्तरद्वारं आययौ। पक्षे। सूत्रस्य उं ॥ ७ ॥

ब्रह्मेति। तेन राक्षसेन अत्र उत्तरद्वारि कोऽपि अनिर्व्वचनीयः ना पुरुषः ददृशे। कीदृशः ब्रह्मभूतः ब्रह्मस्वरूपः। अजितः अपराजितः। लोमकूपैः शिखावतः वह्नीन् ष्णुक् उद्गारं कुर्व्वन्। सर्व्वान् भूष्णून् नव्यवस्तूनि जिष्णुः संहारक इत्यर्थः। भूतः ५।, जितः ५।, ष्णुक् १।, ॥ ८ ॥

हरेरिति। यथा इभैर्हस्तिभिः हरेः सिंहस्य स्थातः अवस्थानात् स्नुः पर्व्वतभूमि-

व्याकरणम्।

रोचिष्णुः, अलङ्करिष्णुः, वर्द्धिष्णुः, भ्राजिष्णुः, वर्त्तिष्णु अपत्रपिष्णुः, उन्मदिष्णुः, असहिष्णुः ॥ ६ ॥

उत्पतिष्णुं, प्रजनिष्णु ॥ ७ ॥

भूतो जितः ष्णुक्। भूष्णून्, जिष्णुः ॥ ८ ॥

तेनास्यास्तुहृदा सा दिक् तत्यजे शूल्यधिष्ठिता ॥ ९ ॥
एवं ग्लोग्लोपि भीत्यास्य जिघांसाग्लास्नुरेव न ।
दुर्ज्जनो म्रियमाणोपि स्वभावं नैव मुञ्चति ॥ १० ॥
तमोगुणोऽसौ त्रस्तोपि गृध्नुक्षिप्तोऽनु स्थिरग्रहः ।
नृपादने ययौ पूर्व्वं गृध्नोर्मृत्योर्भयं न यत् ॥ ११ ॥
शरासनं [illegible] गदाञ्च बिभ्रत् कराम्भोजनिभैश्चतुर्भिः ।
क्षिप्नुस्तमःश्यामलमूर्त्तिभासा संत्रस्नुना तेन पुमानदर्शि ॥ १२ ॥

त्यज्यते तथा तेन रक्षसा अस्यास्नुहृदा अस्थिरान्तःकरणेन सता शूल्यधिष्ठिता शूलिना शिवेन अधिष्ठिता सा दिक् तत्यजे त्यक्ता । स्यात: ५।, स्नु: १।, ॥ ९ ॥

एवमिति । अस्य राक्षसस्य भीत्या भयेन ग्ल: ग्लानस्य ग्ल: ग्लानस्यापि जिघांसा हन्तुमिच्छा ग्लास्नुर्न ग्लाना न अभवदित्यर्थः । शेषः सुगमः । एवं १।, ग्ल: ५।, ग्ल: ५।, ( अपि ) ॥ १० ॥

तम इति । तमोगुणोऽसौ राक्षसः त्रस्तोऽपि भीतोऽपि गृध्नुक्षिप्तः गृध्नु लोभस्तेन क्षिप्तः प्रेषितः सन् अनु पश्चात् पूर्व्वं प्राचीं दिशं ययौ । किम्भूतः नृपस्य अदने भक्षणे स्थिरग्रहः निश्चलबुद्धिः । यत् यस्मात् गृध्नोर्लोभितस्य मृत्योर्भयं न भवतीति शेषः । अगुण: १।, असौ १।, त्रस: ५।, ( अपि ) गृध्नक्षिप्त: ५।, नु: १।, ॥ ११ ॥

शरासनमिति । तेन संत्रस्नुना भीतेन रक्षसा पुमान् अदर्शि । कीदृशः चतुर्भिः कराम्भोजनिभैः करपद्मैः गदां असिं शरासनादिकं बिभ्रत् श्यामलमूर्त्तिभासा दीप्त्या तमोऽन्धकारं क्षिप्नुः क्षिपन् । पचे । सूत्रस्य छं ॥ १२ ॥

व्याकरणम् ।

स्यात: स्नु: । स्यास्नु ॥ ९ ॥

एवं ग्लो ग्लोऽपि । ग्लास्नु: ॥ १० ॥

अगुणोऽसौ त्रस्तोपि गृध्न क्षिती नु: । त्रस्तो गृध्न: क्षिपश्च नु: स्यात् असौ अगुणः स्यात् । गृध्नो: ॥ ११ ॥

क्षिप्नु, संत्रस्नुना ॥ १२ ॥

नाकभूस्थालसपदः कमश्च पन्नगमोऽणुकः।
योगिनोऽविदुषः स्थूलः स्थायुको द्वारि पालयन् ॥ १३ ॥
उत्पादुको भूतलभावुकानां मनोरथान् पातुकदुर्व्विभाव्यः।
पद्मालयाकामुक एष यस्य द्वार्गामुकस्तत्सुकृतं वदेत् कः ॥१४॥

अथ राक्षसश्चिन्तयति।

ईदृक् वृषो ह नो दृष्टः कस्यापीशेशकेशवाः।
यदमुं द्वारि तिष्ठन्तो रक्षन्त्यशुभघातुकाः ॥ १५ ॥

नाकेति। किम्भूतः पालयन् नृपं रक्षन् सन् द्वारि स्थायुकः। नाकः स्वर्गः भूः पृथ्वी तयोस्तिष्ठतीति नाकस्थानां भूस्थानाञ्च लसं अभिलषितं पदं यस्य स तथा। कमः कमनीयः स्पृहणीयो वा। पन्नां गच्छतीति पन्नगः। योगिनः अणुकः सूक्ष्मः। अविदुषः स्थूलः विराडित्यर्थः। भूस्था लस पदः ५।, कमः ५।, (च) पन्नगः ५।, णुकः १।, ॥ १३ ॥

उत्पादुक इति। भूतलभावुकानां मर्त्त्यानामित्यर्थः मनोरथान् उत्पादुकः। पातुकानां पतितानां दुर्व्विभाव्यः। एष यस्य द्वार्गामुकः द्वारपालस्तस्य पुण्यं को वदेत्। पद्मे। सुकृतस्य उ ॥ १४ ॥

ईदृगिति। ईदृक् वृषः पुण्यं कस्यापि नो दृष्टः। हकारोऽवधारणे। यत् यस्मात् ईशेशकेशवाः कालीशिवविष्णवः द्वारि तिष्ठन्तः अमुं नृपं रक्षन्ति। ते कीदृशाः अशुभघातुकाः। ईदृक् १।, वृषः ५।, हनः ५।, ॥ १५ ॥

व्याकरणम्।

भू स्था लस पदः कमश्च पन्नगमो णुकः। एभ्यो णुकः स्यात्। स्थायुकः ॥ १३ ॥
उत्पादुक, भावुक, पातुक, कामुक, गामुकः ॥ १४ ॥
ईदृक् वृषो हनः। घातुकाः ॥ १५ ॥

सोऽचिन्तयत् राट् घसोऽदोऽमरस्तुत्याङ्घ्रिपल्लवः ।
अयं विष्णुर्हतो येन रावणो घस्मरेश्वरः ॥ १६ ॥
तमोगुणो मन्यतेऽसौ सृतो भुवि कथं पुनः ।
इति सोऽन्तर्दधे भीतो मृगेन्द्रात् सृमरो यथा ॥ १७ ॥
महिषाको व्रतः स्वीयैर्दण्डधृक् यमराड़सुम् ।
रक्षो वराकमैक्षिष्ट भ्रुकुटीभीषणाननः ॥ १८ ॥
स प्राणभिक्षोऽजल्पोऽस्ति लुण्ठः स्म पतितो भुवि ।
यमस्तं कटुजल्पाको हन्तुमैच्छत् यदा तदा ॥ १९ ॥

स इति । स राट्घसः नृपभक्षको राक्षसः अदः इदं अचिन्तयत् । किमित्याह । अयं विष्णुः अमरैः स्तुत्यं स्तवनीयं अङ्घ्रिपल्लवं यस्य स तथा । शेषः सुगमः । घसः ५।, अदः ५।, मरः १।, ॥ १६ ॥

तम इति । असौ हरिः तमोगुणो मन्यते । कथं भुवि पुनः सृतः गतः । सृमरो मृगविशेषः । अन्यत् सुगमं । अगुणः १।, असौ १।, मन्यते ८।, सृतः ५।, ॥ १७ ॥

महिषाक इति । महिषेण अकति गच्छतीति महिषाको यमराड् स्वीयैर्गणैर्वृतः सन् असुं रक्षोवराकं रक्षसां मध्ये क्षुद्रं ऐक्षिष्ट । षाकः १।, व्रतः ५।, ॥ १८ ॥

सप्राणेति । स राक्षसः प्राणभिक्षः प्राणयाचकः अजल्पः वाक्यरहितः अस्तिस्म शेषः सुगमः । भिक्षः ५।, जल्पः ५।, अस्ति ८।, लुण्ठः ५।, ॥ १९ ॥

## व्याकरणम् ।

घसोऽदो मरः । आभ्यां मरः स्यात् । घस्मरः ॥ १६ ॥

अगुणो मन्यतेऽसौ सृतः । सृमरः ॥ १७ ॥

षाको व्रतः । वराकं ॥ १८ ॥

भिक्षो जल्पोऽस्ति लुण्टः । एभ्योऽपि षाकः स्यात् । कटुजल्पाकः ॥ १९ ॥

शुष्कोष्ठतालुः पतितः शीतस्फीताङ्गवेपथुः ।
संशयालुर्जीवितेऽभूत् साक्षात्कृतयमोऽसपः ॥ २० ॥
स्वग्रहैस्स्पृहितश्चैवं यमात् भीतो निशाचरः ।
ग्रहयालुस्तच्चरणाविदमाह कृताञ्जलिः ॥ २१ ॥

राक्षसो यमं प्रति ।

योऽशङ्को विगणय्य मां नृपरिपुं जानन् शयालुः सुखै-
र्द्वास्था यस्य समासते सह गणैः सेशा भवन्तोऽवितुम् ।
तं द्रष्टुं स्पृहयामि देव ! कृतिनं धन्यं महान्तं सकृत्
त्वत्पादे पतयालुरर्थये इदं तत् त्वं क्षणं पाहि माम् ॥ २२ ॥

शुष्केति । असपो राक्षसः साक्षात्कृतो यमो येन तादृशः सन् स्फीतः अङ्गवेपथुः कम्पो यस्य तादृशः सन् जीविते संशयालुर्बभूव । आलुः १।, पतितः ५।, शीतः ५।, ॥ २० ॥

स्वग्रह इति । स राक्षसः एवम्प्रकारेण स्वग्रहैः स्वस्यात्मनः ग्रहणैः स्पृहितः स्पृहावान् यमात् भीतः सन् तच्चरणौ यमस्य चरणौ ग्रहयालुः सन् इदं आह । ग्रहैः ५।, स्पृहितः ५।, ( च ) एवं १।, ॥ २१ ॥

य इति । यो राजा मां नृपभुजं जानन्नपि मां विगणय्य अशङ्कः सुखैः शयालुः आस्ते । सेशाः ईशेन सह वर्त्तमाना भवन्तः अवितुं रक्षितुं गणैः सह यस्य द्वास्थाः समासते । हे देव ! कृतिनं धन्यं महान्तं सकृत् द्रष्टुं स्पृहयामि इदं तव पदे पतयालुरहं अर्थये याचे । तत् तस्मात् क्षणं मां पाहि । पद्ये । सूनस्य उं ॥ २२ ॥

व्याकरणम् ।

आलुः पतितः शीतः । पत शीङ्भ्यां आलुः स्यात् । संशयालुः ॥ २० ॥
ग्रहैस्पृहितश्चैवं । ग्रहयालुः ॥ २१ ॥
शयालुः, पतयालुः ॥ २२ ॥

यमस्तं प्रति ।

शूली गदी खड्गिनीयं द्वास्था रक्षन्ति तत्र मे ।
नाधिकारोऽस्ति किं तं त्वं स्पृहयालुर्व्विहिंसितुम् ॥ २३ ॥

अथ राक्षसः यमगृहीतहस्तस्तं नृपं निद्रालुं दृष्ट्वा तस्मै स्वीयां अमोघां शक्तिं दत्त्वा यमं प्रत्याह ।

पतयालुस्त्वच्चरणे शपेऽहमिति दण्डभृत् ! ।
नैष्यामि पुनरेतत्र नृपो भवतु निर्भयः ॥ २४ ॥
यज्ञे हुतसमिद्भासः उरःसरसमाः क्रुधि ।
यमादयो भासुरास्ता यं रक्षन्त्यस्य का विपत् ॥ २५ ॥
मेदुराब्दरुचिः कृष्णोत्याख्याभृत् नन्दकासिभृत् ।
चतुर्व्वाहुः स्वाभयदा देवताऽमुं सदावति ॥ २६ ॥

शूलीति । शूली शिवः गदी विष्णुः खड्गिनी काली द्वारस्थाः सन्तः यं नृपं रक्षन्ति तस्मिन् जने यमस्य मम अधिकारो नास्ति किं कथं तं हिंसितुं स्पृहयालुस्त्वं । पक्षे । सूत्रस्य ञ ॥ २३ ॥

पतयालुरिति । हे दण्डभृत् ! अहं शपे शपथं करोमि । अन्यत् सुगमम् । पक्षे । सूत्रस्य ञ ॥ २४ ॥

यज्ञ इति । यज्ञे हुता या समित् तस्या इव भा येषां ते हुतसमित्भासः । क्रुधि क्रोधे उरःसरसमा भुजङ्गमसमाः । शेषः सुगमः । मिद्भासः ५।, उरः १।, ॥२५॥

मेदुरेति । स्वाभयदा स्वेषां स्वीयानां अभयदा देवता काली कृष्णश्च अमुं राजानं सदा अवति रक्षति । किम्भूता मेदुराब्दरुचिः मेदुरः स्निग्धो योऽब्दो मेघस्तस्य रुचिरिव रुचिर्यस्याः सा तथा । कालीपक्षे कृष्णा इति आख्याभृत् कृष्णपक्षे कृष्ण इति आख्याभृत् । विष्णुपक्षे नन्दकनामखड्गभृत् कालीपक्षे आनन्दजनकासिभृत् । पक्षे । सूत्रस्य ञ ॥ २६ ॥

व्याकरणम् ।

स्पृहयालुः ॥ २३ ॥ पतयालुः ॥ २४ ॥

मिद्भास उरः । भासुरः ॥ २५ ॥

मेदुरः ॥ २६ ॥

रक्षोजाघानुबन्धः स भञ्जोऽभूद्राष्ट्रविप्लवः ।
तमोनुदः सन्निधानात् तमः स्यात् किन्न भङ्गुरम् ॥ २७ ॥

इति सर्व्वे निष्क्रान्ताः । अथ प्रभाते मन्त्रिप्रभृतयः विस्मिता ऊचुः ।

य उक्तो निर्गुणः सत्यो वित् भिदश्च छिदोऽपि सः ।
तेन नाश्येऽस्ति कः पाता रक्षिते छिदुरोऽस्ति कः ॥ २८ ॥

तदा प्रियङ्करोऽपि प्रीताः प्रजाः पालयन् राज्यं शशास । अथ पौरजनानामुक्तिः ।

असौ राजा क्रूराणां छिदुरः शासिता च यङ्गतवतो दंशयूक-स्पर्शनाशनमशकादयोऽपि दन्दशूकाः क्रूरस्वभावात् न्यवर्त्तन्तास्य देशस्य ॥ २९ ॥

रक्ष इति । रक्षसा जायते इति रक्षोजं यत् अघं व्यसनं तदनुबन्धः तन्निमित्तको यो राष्ट्रस्य विप्लवोऽभूत् स विप्लवो भञ्जोऽभूत् भग्नो जातः । अत्र अर्थान्तरन्यासमाह तम इति । घानुबन्धः १।, सः १।, भञ्जः ५।, ॥ २७ ॥

य उक्त इति । यः सत्यः निर्गुणः वित् ज्ञानस्वरूप उक्तः अर्थात् ईश्वरः स भिदः भेदकर्त्ता छिदोऽपि छेदकोऽपि तेन नाश्ये कः पाता अस्ति तेन रक्षिते छिदुरः कोऽस्ति । यः १।, उक्तः १।, निर्गुणः १।, सः १।, वित् भिदः ५।, ( च ) छिदः ५।, अपि । सः १।, ॥ २८ ॥

असाविति । क्रूराणां छिदुरः शासिता यं राजानं गतवतः प्राप्तवतः अस्य देशस्य दंशाः यूकाः जलौकसः स्पर्शनाशनाः सर्पाः मशकाद्याश्च दन्दशूकाः क्रूरस्वभावात् न्यवर्त्तन्त । यङ्गतवतः ५।, दंशः ५।, ऊकः १।, ॥ २९ ॥

व्याकरणम् ।

घानुबन्धः स भञ्जः । भञ्जधातोः स घरः घकारानुबन्धः स्यात् । भङ्गुरम् ॥ २७ ॥

य उक्तो निर्गुणः स त्यो वित् भिदश्च छिदोऽपि सः । यः प्रत्यय उक्तः विदो भिदोऽपि स त्यः स प्रत्ययः निर्गुणः स्यात् । छिदोऽपि स स्यात् । छिदुरः, विदुरः ॥ २८ ॥

यङ्गतवतो दंश ऊकः । दन्दशूकः ॥ २९ ॥

सदाङ्गवत् वेदवदो यजो जपोऽप्यदोपि चास्मिन्नृवरेऽत्र राजनि ।
अयाजयूकोऽश्रुतिवावदूकोऽप्यजाजपूकोऽत्र न कोऽप्यभूत् द्विजः ॥३०॥
वृन्दारकवरो या या यतोऽपश्यत् सुकन्यकाः ।
उपयेमे तत्र तास्ता असौ यायावरो नृपः ।
राजश्रियैव भासः स तस्थौ भास्वरदण्डभृत् ॥ ३१ ॥
नृपासनस्थ ईशश्च यदेवाभूदसौ पुमान् ।
विसस्मार तदोद्देश्यं स्वं स्वज्ञानेऽप्यनीश्वरः ॥ ३२ ॥
इति निष्क्रान्ताः सर्व्वे । इति कवचमाहात्म्यप्रकाशः ॥ ० ॥

सदेति । अस्मिन् राजनि सति अङ्गवत् वेदवदः साङ्गवेदस्य वदो विचारः यजो यागः जपो वेदपाठश्च अदोपि । अत्र राज्ये कोऽपि द्विजः अयायजूको नाभूत् । वदः ५।, यजः ५।, जपः ५।, ( अपि ) ॥ ३० ॥

वृन्देति । वृन्दारकवरः वृन्दारकानां मध्ये श्रेष्ठः असौ राजा यतो यस्मिन् देशे या याः सुकन्यकाः अपश्यत् तत्र देशे यायावरः सन तास्ताः कन्या उपयेमे । सद्वेति । स प्रियङ्करः राजश्रिया भासः प्रदीप्यमानः सन् भास्वरदण्डभृत् सन् तस्थौ । वरः १।, यायायतः ५।, भासः ५।, सः १।, ॥ ३१ ॥

नृपेति । असौ पुमान्, प्रियङ्करः नृपासनस्थः ईशश्च राज्येश्वरश्च यदेव अभूत् तदेव उद्देश्यं पितृसमीपगमनरूपोद्देश्यं स्वं आत्मानञ्च विसस्मार स्वस्य आत्मनः ज्ञाने कोऽह-मिति ज्ञानेऽपि न ईश्वरः अक्षम इत्यर्थः । स्थः ५।, ईशः ५।, ( च ) ॥ ३२ ॥

## व्याकरणम् ।

वदो यजो जपोऽपि । यायजुकः, वावदूकः, जाजपूकः ॥ ३० ॥

वरो यायायतः । भासः सः । यायावरः, भास्वरः ॥ ३१ ॥

स्थ ईशश्च । अनीश्वरः ॥ ३२ ॥

अथ प्रविशति समातृकः प्रभाकरः भृगुपत्नी च। राजमहिषी मुनिपत्नीं प्रति। देवि! अद्यापि प्रियङ्करो नावर्त्तते।

ययोर्दुःखादतिम्लाना आश्रम्या स्थावरा अपि।
तौ विस्मृतौ मातरनुजौ प्रोषितेन सुतेन मे॥ १॥

देवि! पश्य योऽयं प्रभाकरः राजकुमारोऽतिसुखयोग्यः।

वने वासी निर्व्यसनो भिक्षाशंस उरुक्षमः।
आत्मानं वर्त्तयन्नास्ते आशंसुः सोदरागमम्॥ २॥
यथा गृहचरो दीपो दीप्रोघ्नन्ध्यान्तरं तमः।
तस्मिन् हतेऽन्धतमसं जायतेऽद्य तथा मम॥ ३॥

ययोरिति। आश्रम्याः आश्रमस्थिताः स्थावरा अपि ययोरावयोर्दुःखात् परिम्लाना आसन्। प्रोषितेन मम सुतेन तौ मातरनुजौ मातृकनिष्ठभ्रातरौ विस्मृतौ। पचेः। सूत्रस्य ष ॥ १॥

वन इति। स प्रभाकरो वनेवासी निर्व्यसनः वसनहीनः भिक्षाशं भिक्षितं अन्नाति भिक्षाशं आत्मानं वर्त्तयन् पोषयन् सन् स्वोदरस्य आगमनं आशंसुः सन् आस्ते। कीदृशः उरुक्षमः उरुर्महती क्षमा सहिष्णुता यस्य स तथा। सनः ५।, भिक्षाशंसः ५।, उः १।, ॥ २॥

यथेति। तस्मिन् गृहचरदीपे हते सति यथा अन्धतमसं जायते तथा मम अद्य अर्थात् प्रियङ्करेण रहिताया मम तादृक्दशाभूदिति। रः १।, दीपः ५।, ॥ ३॥

व्याकरणम्।

स्थावराः ॥ १॥

सनो भिक्षाशंस उः। सनन्तात् भिक्षः आशंसश्च उः स्यात्। आशंसुः ॥ २॥

रो दीपः। दीपो रः स्यात्। दीप्रः ॥ ३॥

तत्प्रत्ययो न मम उदेति तपःकृशाङ्गि !
आस्ते सुतः कुशलवानिति यत् ब्रवीषि।
यत् कर्म्मणा स्वपतिराज्यसुखाभिलाषा
अन्तर्हिता हि तदगान्न हि नम्रतां मे ॥ ४ ॥

सस्मितः कम आस्येन्दुर्द्रक्ष्यते तस्य किं पुनः।
अतिकम्रं वचः स्मेरवक्त्रात् श्रोष्यामि किं पुनः ॥ ५ ॥

मुनिपत्नी तां प्रति।

गुरुणानुगृहीतं तं पश्यन् हिंस्रोऽपि ते सुतम्।
सहानुकम्पोऽहिंसः स्यात् सत्यो व्याहार एष मे ॥ ६ ॥

तत्प्रत्यय इति। हे तपःकृशाङ्गि ! सुतः प्रियङ्करः कुशलवान् सन् आस्ते इति यत् ब्रवीषि तत्प्रत्ययस्तस्य सत्यत्वज्ञानं न मम उदेति। अत्र हेतुमाह। येन कर्म्मणा स्वस्य पतिराज्यसुखाभिलाषा अन्तर्हिता मे मम तत् कर्म्म नम्रतां न हि अगात् न प्राप। तत्प्रत्ययः १।, नमः ५।, उदेति ८।, ॥ ४ ॥

सस्मित इति। तस्य प्रियङ्करस्य स्मितयुक्तः कमः कमनीयः आस्येन्दुः मुखेन्दुः किं पुनः द्रक्ष्यते मयेति शेषः। सः १।, स्मितः ५।, कमः ५।, ॥ ५ ॥

गुरुणेति। गुरुणा अनुगृहीतं तं ते तव सुतं पश्यन् सन् हिंस्रोऽपि जन्तुः सहानुकम्पः अनुकम्पया दयया सह वर्त्तमानः सन् अहिंसः स्यात् एष व्याहारः उक्तिः मे मम सत्यः। कम्पः ५।, हिंसः ५।, स्यात् ८।, सः १।, त्यः १।, ॥ ६ ॥

व्याकरणम्।

तत्प्रत्ययो मम उदेति। नम्रतां ॥ ४ ॥

स स्मितः कमः। कम्रं, स्मेरः, ॥ ५ ॥

कम्पो हिंसः स्यात् स त्यः। हिंसः ॥ ६ ॥

उदेतकि प्रत्ययोऽह्निभावश्चाहृत आत्मनः।
पित्रास्ते तत्भक्तिदधिश्चक्रिः सेवां स इत्यसौ ॥ ७ ॥

तव विपत् न स्यास्यति। यतः।

भवोदधौ यस्तु नित्यं धर्म्मपादोपधानशः।
सत्य आहितहृच्चास्य विपत् जघ्निश्च नश्यति ॥ ८ ॥

न हि प्रसन्नस्य दयैत्वरस्य गुरोर्व्वरः स्यात् कपटानुबन्धः।
इतो नशस्तस्य न शङ्कनीयो न नश्वरः सोऽह्निमुखे त्वरोपि ॥९॥

उदेतकीति। सः प्रियङ्करः श्रीत्मनः पित्रा आहृतः सन् तत्भक्तिदधिः पितुर्भक्तिं दधानः पितुः सेवाञ्च चक्रिः कुर्व्वन् सन् अह्निभावः न स्तः द्वौ भावौ चेष्टे भावने वा यस्य स तथा अन्यचेष्टारहितः अन्यचिन्तारहितश्चेत्यर्थः। इद्दशः सन् आस्ते। इत्यसौ प्रत्ययो बोधो मम उदेतकि उदेतीत्यर्थः। कि प्रत्ययः १।, ह्निभावः १।, (च) आहृतः ५।, ॥ ७ ॥

भवेति। यो जनः भवसमुद्रे नित्यं सर्व्वदा धर्म्मपादोपधानशः धर्म्मस्य पादं उपधानं कृत्वा शेते तथा सत्ये आहितहृत् अर्पितचित्तः अस्य जनस्य विपत् जघ्निरपि स्वयं नश्यति। उपधानशः ५।, स १।, त्यः १।, ॥ ८ ॥

नहीति। प्रसन्नस्य तथा दयैत्वरस्य दयां प्राप्तस्य गुरोर्व्वरः कपटानुबन्धः कपटजनितः अर्थात् मिथ्या न स्यात्। इतः कारणात् तस्य प्रियङ्करस्य नशः विनाशः न शङ्कनीयः अह्निमुखे त्वरोऽपि सर्पमुखगतोऽपि स न हि नश्वरः। वरः १।, स्यात् ८।, कपटानुबन्धः १।, इतः ५।, नशः ५।, ॥ ९ ॥

व्याकरणम्।

किप्रत्ययो ह्निभावश्चाहृतः। आदन्तात् ऋकारान्ताञ्च किप्रत्ययः स्यात् तस्मिंश्च द्वित्वं स्यात्। भक्तिदधिः, चक्रिः ॥ ७ ॥

उपधानशः स त्यः। उपधा नट् नाम्नौ यस्य तादृशधातोः स प्रत्ययः स्यात्। घ्निः ॥ ८ ॥

वरः स्यात् कपटानुबन्ध इतो नशः। इनमशो वरः स्यात् स कपटानुबन्धः स्यात्। इत्वरः नश्वरः ॥ ९ ॥

धिङ्मां गुर्व्वाप्तसर्व्वास्त्रं योऽहं भीरुः परात् बली ।
काकादिव दिवाभीतोऽरुक् दिवादीपवत् विधे ! ॥ १० ॥

अग्रजस्य नैतदुचितं ।

सुखस्वपो न जित्वारिं सेव्यते तेन वा कथम् ।
अस्त्रास्त्रं ग्रैवमस्त्रञ्च अस्त्रप्रक् यस्य धन्विनः ॥ ११ ॥

तदहं दक्षिणप्रयागे गुरुस्तपस्तप्यते तत्र गत्वा एतत् सर्व्वं तस्मै निवेदयिष्यामि ।

आधारुर्व्वन्दितः श्रोत्रयुगे गुरुरिदं वचः ।
वन्दारोर्म्मम शिष्यस्य कर्त्तव्यमुपदेक्ष्यति ॥ १२ ॥

धिगिति । गुरोः सकाशात् आप्तसर्व्वास्त्रमपि मां धिक् योऽहं परात् शत्रोर्भीरुः बली वनवासी तिष्ठामीति शेषः । काकात् दिवाभीत इव पेचक इव अरुक् निस्तेजाः दीपवत् । हे विधे ! । भीतः ५।, रुक् १।, ॥ १० ॥

सुखेति । ते ज्येष्ठेन अरिं न जित्वा कथं वा सुखस्वपः सुखेन निद्रा सेव्यते । शेषः सुगमः । स्वपः ५।, नज १।, ॥ ११ ॥

आधारुरिति । वन्दितो गुरुः मम वचः श्रोत्रयुगे आधारुः आधायकः सन् वन्दारोर्वन्दनां कुर्व्वतः शिष्यस्य मम कर्त्तव्यं उपदेक्ष्यति । आरुः १।, वन्दितः ५।, श्रः ५ः, ॥ १२ ॥

व्याकरणम् ।

भीतौ रुक् । भीधातौ रुक् स्यात् । भीरुः ॥ १० ॥

स्वपो नज् । स्वप्नक् ॥ ११ ॥

आरुर्व्वन्दितः श्रः । वन्दधातोः आरुः स्यात् । वन्दारोः ॥ १२ ॥

**माता तं प्रति।**

**यो भवान् स्तनयित्नूनां संश्रुत: स्तनितो हृदि।**
**मर्दितो गर्दितोऽलुप्ततनुरस्ति स्म पुत्रक ! ॥ १३ ॥**

**प्रभाकरो मातरं प्रति।**

**कार्भीर्मेऽस्ति शम्भुतुल्यो गुरुर्मे प्रशम: स्वयम्।**
**समोऽवेरुडुदेति स्म भुव: पूज्यो मम प्रभु: ॥ १४ ॥**
**गन्तास्मि निर्भयो धन्वी पवित्रं जप्यमाजपन्।**
**मन्त्रमित्र: सङ्कृत् पूत: करणे कवचं दधत् ॥ १५ ॥**

यो भवानिति। हे पुत्रक ! यो भवान् स्तनयित्नूनां मेघानां संश्रुतं स्तनितं शब्दितं येन स तथा मेघशब्दं श्रुत्वा मर्दित: मां हत: प्राप्त: सन् अगर्दित: वाक्यरहित: हृदि मम वक्षसि अलुप्ततनुरस्ति स्म। संश्रुत: १।, स्तनित: ५।, हृदित: ५।, मर्दित: ५।, गर्दित: ५।, अलुप्ततनु: १।, अस्ति ८।, ॥ १३ ॥

कार्भीरिति। मे मम कार्भीरस्ति अर्थात् भयं नास्ति। मे मम गुरु: स्वयं शम्भुरिव प्रशम: प्रशान्त: आस्ते इति शेष:। किन्तु रुट् रुष्ट: सन् अवे: सूर्य्यस्य सम: सन् उदेति। भुव: पूज्य: मम प्रभु:। अवय: शैलमेषार्का इत्यमर:। प्रशम: ५।, स्वयं सम: ५।, वे: ५।, रुड् १।, उदेति ८।, (स्म) ॥ १४ ॥

गन्तेति। धन्वी अहं निर्भयो गन्तास्मि गमिष्यामि। किं कुर्व्वन् पवित्रं जप्यं मन्त्रं आजपन्। मन्त्र एव मित्रं यस्य इति तथा सन्। सङ्कृत् सदा सङ्ग वर्त्तमान: सावधान इत्यर्थ:। करणे गात्रे इष्टकवचं दधत् सन् पूत: पवित्र:। इत्र: १।, (सङ्ग कृत्) सङ्कृत् पूत: ५।, करणे ७।, ॥ १५ ॥

व्याकरणम्।

संश्रुत: स्तनितो हृदिमर्दितो गर्दितोऽलुप्ततनुरस्ति स्म। स्तनिहृदिमर्दिगर्दिभ्य: अकारलुप्ततनु: संश्रुतोऽस्मि। स्तनयित्नूनां ॥ १३ ॥

प्रशम: स्वयं समो वेरुडुदेति स्म भुव:। प्र शं स्वयं मे विभ्यो भुव: उड् स्यात्। शम्भो:। प्रभु: ॥ १४ ॥

इत्र: सङ्कृत् पूत: करणे। सङ्ग कृपूभ्य: इत्र: स्यात् करणे। पवित्रं ॥ १५ ॥

अहं यत् खललूसूत: खन् चर: पथि दुर्हृदाम् ।
खलवित्वैर्गमिष्यामि कुतो मे व्यसनं भवेत् ॥ १६ ॥

पापकर्म्मणामेव व्यसनभयं । यत: ।

भावेऽघकारके घञ्जायते नट् च भवेत्तत: ।
अताद्दृशां कुतोमातर्व्विपत् स्यात् पापपाकजा ॥ १७ ॥
तथालपितमालोच्य सुतस्य जननी तत: ।
अनुजज्ञे गमं तस्य स्वाशीर्वचनपूर्व्वकम् ॥ १८ ॥

अथ प्रभाकर: मातरं गुरुपत्नीञ्च प्रणम्य प्रतस्थे । पथि गच्छन् बहूनि रथरथिहस्त्यश्वादीनि दृष्ट्वा एकं राजपुरुषं पप्रच्छ ।

अहमिति । खलान् लुनातीति खललूस्तस्य सुतोऽहं । पथिचर: गच्छन् सन् खलवित्तै: स्वीयास्त्रै: दुर्हृदां शत्रूणां खन विदारक: सन् गमिष्यामि । व्यसनं विपत् । लूसूत: ५।, खनचर: ५।, ॥ १६ ॥

भावेति । अघकारके पापकारिणि भावे सत्ये अर्थात् प्राणिनि अघं व्यसनं जायते तत: व्यसनात् नट् च नाशश्च भवेत् । अताद्दृशां निष्पापानां पापपाकजा पापस्य परिणामेन जाता विपत् कुत: स्यात् अर्थात् विपत् न स्यात् । भावे ७।, अघकारके ७', घञ् १।, जायते ८।, अनट् १।, ( च ) ॥ १७ ॥

तथेति । ततस्तदनन्तरं जननी सुतस्य तथा तेन प्रकारेण लपितं कथितं आलोच्य स्वाशीर्व्वचनपूर्व्वकं तस्य गमं गमनं अनुजज्ञे अनुज्ञां कृतवती । तथा १।, अल् १।, ( अपि ) ॥ १८ ॥

व्याकरणम् ।

लूसूत: खन चर: । लवित्तै: ॥ १६ ॥
भावेऽघकारके घञ् जायतेऽनट् च । पाकजा ॥ १७ ॥
तथा अल् अपि । गमं ॥ १८ ॥

केऽमी किमर्थमिह वा कुत्र यास्यन्ति वेति सः ॥ १९ ॥

राजपुरुषस्तं प्रति ।

इष्टपूर्त्तादि सत्कर्म्मदयाधार उदेतकि ।
किरन्नर्थं भूरिसेनो नाम्ना राजा गुणाम्बुधिः ॥ २० ॥
तस्यास्ते कन्यका मुक्ताष्ठीविनी सुप्रभाभिधा ।
मुक्तां ष्ठीवति या तस्या रूपधेः का रुचेः कथा ॥ २१ ॥
धनुर्व्विद्यापारगाय देयेयं कन्यकेति तु ।
भावे भवति चान्तर्गे राजेमं विदधे विधिम् ॥ २२ ॥

केऽमीति । अमी पुरुषाः के ? अन्यत् सुगमं । के ७, अमी १॥, ॥ १९ ॥

इष्टेति । नाम्ना भूरिसेनः राजा गुणाम्बुधिः गुणसमुद्रः अर्थं धनं किरन् वितरन् सन् उदेतकि । किम्भूतः इष्टपूर्त्तादिसत्कर्म्मदयानां आधारः । आदि सत्कर्म्म दः ५।, आधारे ७।, उदेतकि ८।, किः १।, ॥ २० ॥

तस्येति । तस्य राज्ञः सुप्रभा नाम्नी मुक्ताष्ठीविनी कन्या आस्ते । या मुक्तां निष्ठीवति रूपं दधात्यस्यामिति रूपधेस्तस्याः रुचेः सौन्दर्य्यस्य का कथा । पचे । पूर्व्व-सूत्रस्य उदाहरणम् ॥ २१ ॥

धनुरिति । इयं कन्या धनुर्व्विद्यापारगायैव देया इति भावे भावनायां अन्तर्मनोगते भवति सति स राजा इमं विधिं विदधे चकार । इति १।, ( तु ) भावे ७।, भवति ८।, ( च ) अन्तर्गे: ५।, ॥ २२ ॥

व्याकरणम् ।

केऽमी । अमी प्रत्ययाः कारके स्युः ॥ १९ ॥

आदिसत्कर्म्मदयाधार उदेतकि किः । आदौ सत् वर्त्तमानं कर्म्म यस्य तादृशदा-संज्ञकदाधातोः किः स्यात् आधारे । गुणाम्बुधिः ॥ २० ॥

रूपधेः ॥ २१ ॥

इति तु भावे भवति चान्तर्गेः । अन्तरो गेश्च दाधातोरिति तु किप्रत्ययस्तु भावे स्यात् । विधिं ॥ २२ ॥

मत्स्याभासमिमं शरैस्त्रिभिरपि द्राक् छेत्स्यते योऽस्त्रवित्
कन्यारत्नमिदं स लप्स्यत ऋतं शुल्केन वीर्य्यात्मना ।
राज्ञां वीर्य्यपरीक्षणाय जनपोऽकार्षीत् स एवं पणं
यत् श्रुत्वा मतिमानहंयुरिषुभागन्तर्द्धिमालम्बते ॥ २३ ॥

एते क्षत्रियाश्च तस्याः स्वयम्बरे निमन्त्रितास्तत् कन्यालाभार्थं गच्छन्ति । भवानपि शस्त्री धन्वी बृहद्बाहुर्दृश्यते तदर्थं कथं न गच्छति । प्रभाकरस्तं प्रति ।

न विद्यतेऽस्वपद्यजो नो वाच्ये भावे प्रवर्त्तिनाम् ।
शतयज्ञास्वपस्काम्यस्त्रीलाभो नः कुतो भवेत् ॥ २४ ॥
तदेवं याच्यत उत वीरकीर्त्तिं नहीश्वरः ।
योग्या याञ्ञा हि फलिनी भवेत् यत्नोऽपि तादृशः ॥ २५ ॥

मत्स्येति । योऽस्त्रवित् इमं मत्स्याभासं द्राक् शीघ्रं छेत्स्यते स जनः वीर्य्यात्मना शौर्य्यस्वरूपेण शुल्केन पणेन इदं ऋतं प्रदीप्तं कन्यारत्नं लप्स्यते एवं पणं नृपतिः अकार्षीत् । किमर्थं तदकार्षीत् इत्याह राज्ञां क्षत्रियाणां वीर्य्यपरीक्षणाय शौर्य्यपरीक्षार्थम् । यत श्रुत्वा मतिमान् बुद्धिमानहंयुः साहङ्कारः इषुभाक् धन्वज्ञः अन्तर्द्धिं अन्तर्द्धानं आलम्बते । पक्षे । मूत्रस्य त्वं ॥ २३ ॥

न विद्यत इति । वाच्ये गर्हणीये भावे स्वभावे प्रवर्त्तिनां नोऽस्माकं अस्वपद्यजः अस्वपो देवास्तेषां यजो यजनं नास्ति कुतः कारणात् शतयज्ञास्वपस्य इन्द्रस्य काम्यस्त्रीलाभो भवेत् । विद्यते ८।, स्वपयजः ५।, नः १।, भावे ७।, वाच्ये ७।, ॥ २४ ॥

तदेवमिति । तत् तस्मात् उत भोः एवं अनिर्व्वचनीयं वीरकीर्त्तिं ईश्वरो न हि याच्यते । हि यस्मात् योग्या याञ्ञैव फलिनी फलवती स्यात् न त्वयोग्या तादृशो यत्नश्च फलवान् स्यात् । तत् १।, ( एवं ) याच्यतः ५।, ॥ २५ ॥

व्याकरणम् ।

अन्तर्द्धिं ॥ २३ ॥

विद्यते स्वपयज्ञो नो भावे वाच्ये । यज्ञः, स्वपः ॥ २४ ॥

तदेवं याच्यतः । याचो यतश्च नः स्यात् भावे । याञ्ञा, यत्नः ॥ २५ ॥

एष प्रच्छोऽप्यगुणवन्नराणां नोपयुज्यते ।
सद्रत्नमूल्यसंप्रश्न उपहासाय वार्द्धुषेः ॥ २६ ॥
स्त्रीरत्नाप्तेः का प्रसक्तिर्भवेत् भावेऽघकारके ।
दृश्यतेऽस्त्री तत्परो न जिष्णुवत् तत्पणोद्धृतौ ॥ २७ ॥

अथ प्रभाकरश्चिन्तयति। अस्त्रविद्यापरीक्षार्थं मत्स्याभासस्य छेदनाय यत्नो मया कर्त्तव्यः इति तत्र गतिर्युज्यते ।

लक्ष्यभेदे महालब्धिरसिद्धौ वास्ति का क्षतिः ।
अपराद्धपृषत्कानां पथा यास्यामि भूभुजाम् ॥ २८ ॥

इत्यालोच्य स वीरपुराख्यभूरिसेननगरे अगमत्। तत्र वृक्षमूले आसीनं तं दृष्ट्वा पुरवनितानामुक्तिः ।

एष इति । एषः प्रच्छः प्रश्नोऽपि अगुणवन्नराणां गुणहीननराणां न उपयुज्यते । हि यस्मात् वार्द्धुषेः धान्यवृद्धिजीविनां सद्रत्नानां मूल्यप्रश्नः उपहासाय भवति । एषः १।, प्रच्छः ५।, ( अपि ) अगुणवत् १।, ॥ २६ ॥

स्त्रीति । अघकारके पापकारिणि भावे प्राणिनि अर्थात् जने स्त्रीरत्नस्य प्राप्तेः का प्रसक्तिः सम्भावना भवेत् । तत्पणोद्धृते मत्स्याभासच्छेदरूपपणस्य उद्धृतौ जिष्णुवत् अर्जुनतुल्यः तत्परः शक्तिमान् अस्त्री न दृश्यते । क्तिः १।, भवेत् ८, भावे ७', अघकारके ७।, दृश्यते ८।, स्त्री १।, तत्परः १।, ॥ २७ ॥

लक्ष्येति । लक्ष्यस्य भेदे महालब्धिः अतिशयलाभः असिद्धौ लक्ष्यभेदस्यासिद्धौ वा कापि क्षतिरस्ति । अपराद्धपृषत्कानां लक्ष्यात् व्यर्थबाणानां भूभुजां पथा आयास्यामि । पद्ये । सूत्रस्य उ ॥ २८ ॥

व्याकरणम् ।

एष प्रच्छोऽप्यगुणवत् । एष नप्रत्ययः प्रच्छधातोः परः अगुण इव भवति । संप्रश्नः ॥ २६ ॥

क्तिर्भवेत् भावेऽघकारके दृश्यते स्त्री तत्परः । उद्धृतौ ॥ २७ ॥

लब्धिः, सिद्धौ, क्षतिः ॥ २८ ॥

अहो निरीक्ष्यतेऽनुक्तिरासीनः कोऽपि ना सखि ! ।
शशी नासावेणहानेरनङ्गो नेक्ष्यते तनुः ॥ २९ ॥
न शक्रोऽग्र्योऽपि रूप्याणां निमिषेणेति लक्ष्यते ।
किन्त्वस्याङ्गे कीर्णनेत्रा अनिमिषा भवेत् क्षणात् ॥ ३० ॥
काप्याह । पथिकं स्पृहयालोक्य विभृतोऽत्याधिरिव यत् ।
आसीत् सीमन्तभृत्ये सन्मणौ काचग्रहोऽद्य नः ॥ ३१ ॥
सखि ! अयं पुरतो भाति दहनो हृदयशय्याचरस्त्वेष शीतोऽपि भवति ॥ ३२ ॥

---

अहो इति । अहो सखि ! कोऽपि अनिर्व्वचनीयो ना पुरुषः निरीक्ष्यते । किम्भूतः आसीनः उपविष्टः अनुक्तिः उक्तिरहितः । असौ शशी न अत्र हेतुः एणहानेः एणो हरिणस्तस्य हानेः राहित्यात् निष्कलङ्क इत्यर्थः । असौ अनङ्गः कामोऽपि न । अत्र हेतुः । तनुः शरीरं ईक्ष्यते । हः ६।, निः १।, ईक्ष्यते ८।, ( अनु ) क्तिः १।, ॥२९॥

न शक्र इति । रूप्याणां प्रशस्तरूपिणां मध्ये अग्र्यः अग्रिमः शक्रोऽपि नायं इति निमिषेण लक्ष्यते । इन्द्रस्य निमिषरहितत्वात् । किन्तु अस्य अङ्गे कीर्णे क्षिप्ते नेत्रे याभिस्ताः स्त्रियः क्षणात् अनिमिषा भवन्ति । क्रः ५।, षः ५।, ( अपि ) ॥ ३० ॥

पथिकमिति । स्पृहया इच्छया पथिकं आलोक्य अत्याधिरिव अतिमानसीव्यथैव विभृतः धृतः यत् यस्मात् सीमन्ते भृत्या धारणं यस्य तस्मिन् सन्मणौ अपि अद्य नोऽस्माकं काच-बुद्धिः आसीत् तथा हि सीमन्ते धृतो मणिः पतिरेव तस्मिन् मणौ काचबुद्धि-रभवदिति भावः । क्यप् १।, इभृतः ५।, ॥ ३१ ॥

सखीति । अयं जनः पुरतोऽग्रे दहनवत् भाति । किन्तु एष जनः हृदयशय्याचरः हृदयशायी चेत् शीतलोऽपि भवति । चरः ५।, ( तु ) एषः १।, शीतः ५। ( अपि ) भवति ८।, ॥ ३२ ॥

## व्याकरणम् ।

हो निरीक्ष्यतेऽनुक्तिः । हाधातोरनुपसर्गात् कर्त्तरि क्तिर्निःस्यात् । हानेः ॥ २९ ॥

क्रोऽग्र्योऽपि । कृगम्भ्यामपि क्तिर्निःस्यात् । कीर्णिः ॥ ३० ॥

क्यविभृतः । इन् भृञ्भ्यां क्यप् स्यात् भावे । भृत्या ॥ ३१ ॥

चरस्त्वेष शीतोऽपि भवति । एष क्यप् चरधातोः शीङ्धातोश्च स्यात् । शय्या ॥ ३२ ॥

व्रजासो दृश्यते चैष चन्द्रकान्तमणिः स्त्रियः ।
अस्यास्यासीत् यदुदरे रत्नगर्भेव सोच्यते ॥ ३३ ॥
पत्यङ्घ्रिसेवासुमनो यज्ञादेरिज्ययाऽर्ज्जितम् ।
यदस्माभिः शं ततोऽमुं सुप्रभा लभतां पतिम् ॥ ३४ ॥

अथ प्रभाकरः विप्रपत्नीं प्रणम्य तां प्रति ।

अत्राव्रज्या धनुर्व्विद्या सफला चेत्युदेति मे ।
मन्यानुकूलयन्त्यर्थे यन्मातस्त्वत् शुभाशिषः ॥ ३५ ॥

सा तं प्रति ।

अटाव्यया सुखम्लानिः क्षुद्बाधाचानुमीयते ।
तत् तवेत्यां मम गृहे विश्रान्त्यै तात ! कामये ॥ ३६ ॥

---

व्रजेति । व्रजासः व्रजे पथि आसः स्थितिर्यस्य स एष चन्द्रकान्तमणिर्दृश्यते हे स्त्रियः यदुदरे यस्याः नार्य्याः उदरे अस्य आस्या स्थितिः सा नारी रत्नगर्भेव उच्यते । व्रजासः ५।, दृश्यते ८, ( च ) एषः १।, ॥ ३३ ॥

पत्यङ्घ्रीति । पत्युश्चरणसेवातः सुमनसां देवानां यज्ञादेश्च अर्च्चनादितश्च इज्यया च यत् शं पुण्यं अस्माभिरर्जितं तस्मात् पुण्यात् सुप्रभा अमुं पतिं लभतां । सुमनः ५।, यज्ञादेः ५।, ( च ) ॥ ३४ ॥

अत्रेति । मम अत्र आव्रज्या आगमनं धनुर्व्विद्या च सफला इति मन्या बुद्धिर्मे मम उदेति । यत् यस्मात् हे मातः ! त्वत्शुभाशिषः अर्थे आगमनरूपे अर्थे प्रयोजने अनुकूला भवन्ति । पद्ये । सूत्रस्य ऊं ॥ ३५ ॥

अटाव्येति । तत् तस्मात् हे तात ! विश्रामार्थं मम गृहे तव इत्यां गमनं कामये पद्ये । सूत्रस्य ऊं ॥ ३६ ॥

व्याकरणम् ।

व्रजासो दृश्यते चैषः । आस्या ॥ ३३ ॥

सु मनो यज्ञादेश्च । एभ्योऽपि क्यप् स्यात् आदिपदात् विदादेर्ग्रहणं । इज्यया ॥ ३४ ॥

व्रज्या, विद्या, मन्या ॥ ३५ ॥

अटाव्यया, इत्यां ॥ ३६ ॥

एतत् श्रुत्वा प्रभाकरस्तथाकरोत्।

चक्रे नित्यक्रिया तेन तत्राशश्च कृतस्ततः।
सायं कृत्याञ्च निर्व्वर्त्य सुष्वाप मृदुलासने॥ ३७॥

अथ रात्रिशेषे काली स्वप्ने तं प्रति।

नृपाङ्गजागुर्य्य इह क्षितीन्द्रा लोके सजागर्य्ययशःप्रतापाः।
पश्यत्सु तेष्वद्य वरिष्यति त्वां नृपात्मजा सिन्धुसुतेव विष्णुम्॥३८॥

अथ प्रातः राजसभां जिगमिषुं तं प्रति विप्रपत्नी।

अस्त्याप्रशंसो माहेन्द्रक्षणोऽयं दुर्लभः सुत!।
अत्र प्रयातुः स्यात् लिप्सा सार्थाशंसेत्युदेति मे॥ ३९॥
इति प्रशंसां स श्रुत्वा समयस्य नृपात्मजः।
तां नत्वागात् क्षणे तस्मिन् मत्स्याभासदिदृक्षया॥ ४०॥

चक्र इति। तेन प्रभाकरेण तत्र विजगृहे नित्यक्रिया चक्रे अशश्च भोजनञ्च कृतः शः १।, (च) कृतः ५', ॥ ३७॥

नृपेति। हे नृपाङ्गज! इह स्वयम्बरे ये क्षितीन्द्राः आगुः आगताः कीदृशाः सजागराः यशःप्रतापा येषां ते सजागर्य्ययशःप्रतापाः। तेषु पश्यत्सु नृपात्मजा त्वां वरिष्यति। सिन्धुसुता लक्ष्मीर्विष्णुमिव। आगुः ५', यः १।, ॥ ३८॥

अस्तीति। हे सुत! अयं आसम्यक् प्रशंसः प्रशस्तः माहेन्द्रक्षणः अस्ति अत्र क्षणे प्रयातुर्जनस्य लिप्सा लाभेच्छा। सार्था सफला स्यात् इति मम आशंसा उदेति। अस्ति ८, आ प्र शंसः ५।, ॥ ३९॥

इतीति। समयस्य माहेन्द्रक्षणस्य। अन्यत् सुगमम्। पचे मूत्रस्य च' ॥ ४०॥

व्याकरणम्।

अश्च कृतः। कृधातोः शः स्यात् चकारात् क्यप् च। क्रिया, कृत्यां॥ ३७॥

आगुर्य्यः। आगर्त्तेर्यः स्यात्। सजागर्य्ययशः॥ ३८॥

अस्त्याप्रशंसः। त्यः प्रत्ययस्तदन्तात् आ प्र पूर्व्वक शंसश्च अः स्यात् भावे स च स्त्रियां। लिप्सा, आशंसा॥ ३९॥

प्रशंसा, दिदृक्षा॥ ४०॥

तमस्विणं धन्विनमागतं सभां मलीमसं क्षीणमटाव्यया भृशम् ।
जटाधरं कच्चरजीर्णवाससं विलोक्य सर्व्वे जहसुर्महीभुजः ॥ ४१ ॥

अथ राजानः सोपहासं तं प्रति ।

अस्त्री धन्वी बद्धगोधाङ्गुलित्रो निर्भयोऽत्रपः ।
आगमस्तत् पणोद्धारे भारस्त्वय्येव मन्यते ॥ ४२ ॥

प्रभाकरः ।

धनुरस्त्रे बले यस्य श्रेयसेऽङ्क्तो यतस्ततः ।
स गुरोरपि भारस्य स्वेहाचार्य्युद्धृतौ क्षमः ॥ ४३ ॥

अहं निर्लज्ज इति सत्यम् ।

स्त्रीरत्नलब्धये लुब्धा मोहिता अपि कामुकाः ।
केऽत्रपा वात्र नायाताः के वाऽनाप्तत्रपा गताः ॥ ४४ ॥

---

तमिति । तं प्रभाकरं सभामागतं विलोक्य सर्व्वे महीभुजो जहसुः । किम्भूतं अस्त्रिणं धन्विनं मलीमसं मलिनं अटाव्यया भृशमत्यर्थं क्षीणं जटाधरं तथा कच्चरजीर्णवाससं कच्चरं मलदूषितं चीरवासो यस्य स तथा । पद्ये । सूत्रस्य ङ ॥ ४१ ॥

अस्त्रीति । बद्धे गोधाङ्गुलित्रे येन स तथा अत्र सभायां एवम्भूतः सन् त्वं आगमः आगतवानसि । तत् तस्मात् पणोद्धारे लक्ष्यच्छेदने त्वय्येव भारोऽस्तीति मन्यते । अत्र श्लोके व्याकरणपक्षो नास्ति ॥ ४२ ॥

धनुरिति । श्रेयसे कल्याणाय धनुरस्त्रे धनुः अस्त्रञ्च ते बले यस्य जनस्य अङ्क्तः व्यक्तीभवतः स जनः यतस्ततः यत्र तत्र अर्थात् सर्व्वत्र गुरोरपि महतोऽपि भारस्य उद्धृतौ वहने स्वेहाचारी स्वेच्छाचारी सन् क्षमो भवति । सेङ्क्तः १, यतः ५।, ततः ५।, सः १।, गुरोः ५।, ( अपि ) ॥ ४३ ॥

स्त्रीरत्नेति । केवा अत्रपा निर्लज्जा अत्र न आयाता न आगताः । के वा अनाप्तत्रपाः अनाप्ता अप्राप्ता त्रपा लज्जा यैः तादृशाः सन्तः गताः ॥ ४४ ॥

व्याकरणम् ।

अटाव्यया ॥ ४१ ॥ ४२ ॥

सेङ्क्तो यतस्ततः स गुरोरपि । यतो धातोः सेङ्क्तः इमा सह वर्त्तमानः क्तः तस्मादपि गुरुमतो धातोः अः स्यात् भावे स च स्त्रियां । सेङ्क्त इतिअत्र मकारस्यानुस्वारे के परे तस्य ङकारः । स्वेहा ॥ ४३ ॥ ४४ ॥

राजानः सक्रोधं तं प्रति। अरे! मैवं मर्त्तुकामोऽसि इतो निःसर। प्रभाकरस्तान् प्रति सस्मितम्, भयप्रदर्शनेनालं महाशयाः। यतः।

अतुल्ययोषित् स्पृहिदोलि भीषितोऽप्यङ्ग स्थिरीकर्त्तुमलं न कामुकः।
त्रपाप्तिभीतिं विगणय्य तत्स्पृहा यत् यूयमप्यागमतात्र संसदि ॥४५॥

अथ भूरिसेनः विवदमानं राजानं प्रति। राजन्! निवर्त्तस्व।

सचिन्तितश्च कथितो यो व्याहारो विपश्चिताम्।
तत्कथोत्तरचिन्ते हि कार्य्ये किं बालभाषितैः॥ ४६ ॥

अथ भूरिसेनः पुरोहितं कर्णे आह।

अतुल्येति। कामुको जनः भीषितोऽपि परैः प्रदर्शितभयोऽपि अतुल्ययोषित् स्पृहि अनुपमस्त्रियं प्रति स्पृहायुक्तं तेन दोलि आन्दोलायमानं अङ्ग मनः स्थिरीकर्त्तुं अलं न, न समर्थो भवति। यत् यस्मात् यूयमपि त्रपाप्तिभीतिं लज्जाप्राप्तिभयं विगणय्य न गणयित्वा तत्स्पृहाः तस्मिन् स्त्रीरत्ने स्पृहा येषां तादृशाः सन्तः अत्र संसदि सभायां आगमत आगतवन्तः। अङ्ग मनसि काये चेति कोषः। षित्स्पृहिदोलिभीषितः ५।, (अपि) अङ् १।, ॥ ४५ ॥

सचिन्तित इति। विपश्चितां पण्डितानामेव यो व्याहारो वाक्यं सचिन्तितः कथितः स्यात् चिन्तया सहितः अर्थात् चिन्तापूर्व्वकं कथितः स्यात् तत् कथोत्तरचिन्ते हि तस्या एव कथाया उत्तरं चिन्ता च कार्य्ये कर्त्तव्ये शिशुभाषितैः किं चिन्ता उत्तरञ्च न कार्य्य-मिति भावः। सः १।, चिन्तितः ५।, (च) कथितः ५।, ॥ ४६ ॥

व्याकरणम्।

षित्स्पृहिदोलिभीषितोऽप्यङ्। चकारानुबन्धात् स्पृहिप्रभृतिधातुभ्योऽपि अङ् स्यात् भावे स च स्त्रियां। स्पृहा ॥ ४५ ॥

स चिन्तितश्च कथितः। चिन्तिकथिभ्यामपि स अङ् स्यात् भावे स च स्त्रियां। कथा, चिन्ता ॥ ४६ ॥

कस्य श्रेयःपरिपचा महात्मा लक्ष्यते शिशुः।
यदसौ दीप्यते भूपसभे गोषु यथा वृषः॥ ४७॥
उत्साही साहसी धन्वी वाग्मी तेजस्व्यपीक्ष्यते।
बालोऽसौ छेत्स्यते लक्ष्यं सदोलमिति मे मनः॥ ४८॥

अथ विद्यानिवासनामा राजपुरोहितः प्रभाकरं प्रति। अहो धन्विन्! वाक्जालेनालं यदि ते लक्ष्यच्छेदे शक्तिः स्यात् तदा तत्रैव प्रवर्त्तताम्। प्रभाकरः। ब्रह्मन् अहं तदर्थं नागतोऽस्मि।

दिदृक्षया राट्घटादेः सत्वरोऽङ्गेति कौतुकी।
को न यस्यास्त्ययघटा वीरकीर्त्तिं स लप्स्यते॥ ४९॥
यस्तु पूजार्हगन्धाद्यैरर्चितः पूजितस्तथा।
भिदादेरपि लक्ष्यस्य स कर्त्ताऽवेहि चर्चया॥ ५०॥

---

कस्येति। श्रेयः पुण्यं तस्य परिपचा परिपाकः अयं महात्मा इति लक्ष्यते अनुमीयते। पचे। सूत्रस्य छ॥ ४७॥

उत्साहीति। सदोलं दोलया सह वर्त्तमानं। अन्यत् सुगमं। पचे। सूत्रस्य छ॥ ४८॥

दिदृक्षयेति। अङ्ग सम्बोधने। राजघटादेः राज्ञां क्षत्रियाणां घटा सभा आदिना लक्ष्यच्छेदादेर्दिदृक्षया कौतुकी सत्वरः त्वरान्वितः सन् को जनो नैति नागच्छति अपि तु सर्व्व एव। यस्य अयघटा शुभावहविधिरस्ति स एव वीरकीर्त्तिं लप्स्यते। घटादेः ५।, सत्वरः ५।, अङ् १।, ॥ ४९॥

यस्त्विति। गन्धाद्यैरर्चितः विलेपितः। लक्ष्यस्य भिदादेः छेदादेः स एव कर्त्ता इति चर्चया विचारेण अवेहि जानीहि। चर्चा संख्याविचारणेत्यमरः। अर्चितः ५।, पूजितः ५।, (तथा) भिदादेः ५।, (अपि)॥ ५०॥

### व्याकरणम्।

परिपचा॥ ४७॥ दोला॥ ४८॥

घटादेः सत्वरोऽङ्। त्वरपर्य्यन्तात् घटादेरङ् स्यात्। घटा॥ ४९॥

अर्चितः पूजितस्तथा भिदादेरपि। पूजिअर्चिभिदादेरपि अङ् स्यात्। पूजा, चर्चा॥ ५०॥

नालङ्कृत: कुचेलश्चानाहूतोऽनादृतस्तत: ।
मानदम्भविहीन: किं विधास्ये लक्ष्मणो भिदाम् ॥ ५१ ॥

अथ भूरिसेन: । अहो सर्व्वे नृपा: शृखन्तु ।

अन्तरा तोयमुद्वीक्ष्य छायां विवरवर्त्मना ।
बाणेन यो नयेल्लक्ष्यमन्तर्द्धां विट्पति: स मे ॥ ५२ ॥
इत्याश्रुतं नृपा: सर्व्वे श्रद्धातश्च निमन्त्रिता: ।
त एतास्त्वाधुनाऽश्रद्धा भूर्निर्व्वीरेति जायते ॥ ५३ ॥

एतत् श्रुत्वा राजसु तुष्णींभूतेषु प्रभाकरो नृपं प्रति ।

स्वभोगे रात आघाते तिष्ठेन्नाशीविषो नत: ।
डुण्डुभोऽहि: संज्ञयापि निर्व्विष: किं करिष्यति ॥ ५४ ॥

---

नालमिति । लक्ष्मण: लक्ष्यस्य भिदां छेदं कथं विधास्ये करोमीत्यर्थ: । पद्ये । सूत्रस्य छं ॥ ५१ ॥

अन्तरेति । तोयं अन्तरा जलस्य मध्ये छायां लक्ष्यस्य छायां उद्वीक्ष्य दृष्ट्वा विवरवर्त्मना छिद्रपथेन य: बाणेन लक्ष्यं अन्तर्द्धां अन्तर्द्धानं नयेत् स मे विट्पतिर्जामाता भवेत् । अन्तरात: ५।, ॥ ५२ ॥

इत्याश्रुतमिति । इति आश्रुतं प्रतिज्ञातं भवेति शेष: । श्रद्धात: श्रद्धया जायते । श्रद्धात: ५।, ( ष ) ॥ ५३ ॥

स्वभोग इति । स्वभोगे स्वस्य फणायां आघाते राते दत्ते सति आशीविष: सर्प: नत: सन् न तिष्ठेत् । डुण्डुभ: जलसर्पविशेष: संज्ञया नाम्ना अहिरपि स निर्व्विष: किं करिष्यति । गेरात: ५।, ॥ ५४ ॥

व्याकरणम् ।

भिदां ॥ ५१ ॥

अन्तरात: । अन्तरशब्दपूर्व्वकाद्दादन्तादङ् स्यात् । अन्तर्द्धां ॥ ५२ ॥

श्रद्धातश्च । श्रद्धा ॥ ५३ ॥

गेरात: । उपसर्गाद्दादन्तात् अङ् स्यात् । संज्ञा ॥ ५४ ॥

तस्माद्राजन्! एतेषु सभास्थेषु उपलम्भो निरर्थकः। राजा सावज्ञं।

आयासो नो भवत्यत्र धन्विनो लक्ष्यभेदने।
स्त्रीरत्नकीर्त्तिफलके किन्त्वेषां वृथासना ॥ ५५ ॥

प्रभाकरो नृपं प्रति।

वेत्ति वन्द्योऽप्यवज्ञोत्थवेदनामिति मानिनः।
नावजानाति रौढ़ा हि मरणादतिरिच्यते ॥ ५६ ॥

अतो मानिना भवता मानिनामवमानना न युज्यते। राजा तं प्रति बालस्त्वं लक्ष्यं भेत्तुमर्हसि। स तं प्रति।

ब्रह्मप्रदेऽस्त्रेषिणि च स्थिरामति-
स्तिष्ठेत् ममास्यापि मयि प्रसन्नता।
तदा विभिन्द्यामपि तारकामहो
का भावना कृत्रिमलक्ष्यवेधने ॥ ५७ ॥

आयास इति। अत्र लक्ष्यभेदने धन्विनो जनस्य आयासः परिश्रमः न भवति। भेदने किम्भूते स्त्रीरत्नकीर्त्तिफलके स्त्रीरत्नं कीर्त्तिश्च फलं यस्य तादृशे। तदा एतेषां नृपाणां किं कथं वृथा आसना उपवेशः एते उत्थाय गच्छन्तु इति भावः। आसः ५।, अनः १।, भवति ८।, ॥ ५५ ॥

वेत्तीति। वन्दी वन्दनीयो जनः अवज्ञोत्थवेदनां अवज्ञाजनितवेदनां वेत्ति इति हेतोः मानिनो जनान् नावजानाति अवज्ञां न करोति। हि यस्मात् रौढ़ा अवमानना मरणात् अतिरिच्यते। वेत्ति वन्दः ५।, (अपि) ॥ ५६ ॥

ब्रह्मेति। ब्रह्मप्रदे गुरौ अस्त्रेषिणि च अस्त्रं अस्त्रविद्यां ईषते ददातीति अस्त्रेषिन् तस्मिन् यदि मम स्थिरा मतिस्तिष्ठेत्। अस्यापि गुरोरपि यदि मयि प्रसन्नता तिष्ठति तदा तारकामपि विभिन्द्यां। ईषि णिचः ५।, ॥ ५७ ॥

व्याकरणम्।

आसोऽनो भवति। आसना ॥ ५५ ॥

वेत्ति वन्दोऽपि। आभ्यामपि अनः स्यात्। वेदना ॥ ५६ ॥

ईषि णिचः। ईषधातोर्णिजन्ताच्च अनः स्यात्। भावना ॥ ५७ ॥

अथो स कृत्वा गुरुदेववन्दनां
चक्रे धनुः सज्यमिभेन्द्रविक्रमः।
ज्याघोषमास्थाय बलं तथाकरोत्
यतो मुमुर्च्छुः क्षितिपाः सभासदः॥ ५८॥

पश्यन्नम्भसि लक्ष्यबिम्बमधरे संयोज्य चापे शरं
सन्धायाश्रुतिमूलमूर्द्ध्वममुचत् रन्ध्रात्मना वर्त्मना।
मत्स्याभासमथो उदस्तविशिखैश्छित्वाऽकरोत्पातनां
तत्कर्म्माप्यतिमानुषं नृपतयो दृष्ट्वाऽभवन् विस्मिताः॥ ५९॥

अथ भूरिसेनः सानुनयं प्रभाकरं प्रति। तात! तव कुलं ज्ञातुमिच्छामि। प्रभाकरस्तं प्रति।

ब्राह्मे विवाहे वरकन्ययोः कुलं वक्तुं कुलज्ञैरुपपुज्यतेऽत्र तु।
सुवीर्य्यशुल्के पणपूर्व्वकेऽधमेऽनावश्यकी तत्कुलपाठना नृप!॥६०॥

अथो इति। स प्रभाकरः गुरुदेवयोर्वन्दनं कृत्वा धनुः सज्यं आरोपितगुणं कृत्वा बलं आस्थाय ज्याघोषं तथाऽकरोत् यतः ज्याशब्दात् सभासदो नृपाः मुमुर्च्छुः। पद्ये। सूत्रस्य उदाहरणम्॥ ५८॥

पश्यन्निति। अधरे नीचे अम्भसि जले लक्ष्यस्य बिम्बं प्रतिबिम्बं पश्यन् सन् चापे शरं संयोज्य आश्रुतिमूलं श्रुतिमूलपर्य्यन्तं सन्धाय रन्ध्रात्मना वर्त्मना रन्ध्रात्मकपथेन ऊर्द्ध्वं अमुचत्। अथानन्तरं स उदस्तविशिखैर्विक्षिप्तबाणैर्मत्स्याभासं छित्वा पातनां अकरोत्। पद्ये। सूत्रस्य उं॥ ५९॥

ब्राह्म इति। ब्राह्मे विवाहे एव वरस्य कन्यायाश्च कुलं कुलज्ञैर्व्वक्तुं उपयुज्यते न तु अन्येषु। अत्र तु पणपूर्व्वके अधमविवाहे कुलपाठना न आवश्यकी। पद्ये। सूत्रस्य उं॥ ६०॥

## व्याकरणम्।

वन्दनां॥ ५८॥ पातनां॥ ५९॥

पाठना॥ ६०॥

अपि च।

शूरायैव सुता देया एतन्मात्रं प्रतिश्रुतम्।
इदानीं कुलपृच्छाया किं तत् कुलस्य विवेचना॥ ६१॥

एतावदुक्त्वा विरराम। अथ भूरिसेनमधोमुखमितिकर्त्तव्यताविमूढं प्रति विद्यानिवासः।

परीक्षणात् दुष्करकर्म्मभावयोः सुतः खलु श्रेष्ठनृपस्य कस्यचित्।
असावितिज्ञानमुदेति मामकं न कृत्यमीदृक् सुकरं ह्यबाहुजैः॥६२॥

भवतु वा अन्यो यः कोऽपि।

ईषद्दुरोदरं कृत्वा सर्व्वस्वपणमेव वा।
को न दत्ते ग्लहं जेत्रे दुःसहाऽयशसो भिया॥ ६३॥

शूरायेति। प्रतिश्रुतं प्रतिज्ञातं त्वयेति शेषः। इदानीं कुलपृच्छा तत्कुलस्य वरकुलस्य किं कथं विवेचना। पथ्ये। सूत्रस्य छं॥ ६१॥

परीक्षणादिति। दुष्करकर्म्मभावयोः दुष्करं कर्म्म मत्स्याभासच्छेदः भावश्चरित्रं कायव्यापारो वा तयोः परीक्षणात् असौ धन्वी कस्यापि श्रेष्ठनृपस्य सुतः इति ज्ञानं मामकं उदेति। हि यस्मात् ईदृक् कृत्यं अबाहुजैः बाहुजः क्षत्रियः तद्भिन्नैः न सुकरं अशक्यमित्यर्थः। कर्म्मभावयोः ७॥, सुतः ५।, खल १।, ॥ ६२॥

ईषदिति। ईषत् स्वल्पं दुरोदरं द्यूतक्रीड़ां सर्व्वस्वपणं सर्व्वस्वं पणो यस्मिन् द्यूते तत् तथा दुरोदरं कृत्वा को जनः जेत्रे जयिने ग्लहं पणीकृतं धनं न दत्ते अपि तु दत्ते एव। पथ्ये। छं॥ ६३॥

## व्याकरणम्।

विवेचना॥ ६१॥

कर्म्मभावयोः सुतः खल्। सूपसर्गात् धातोः खल् स्यात् कर्म्मणि भावे च। सुकरं॥ ६२॥

ईषद्दुरः। आभ्यामपि धातोः खल् स्यात्। दुःसह॥ ६३॥

अतोऽत्र कन्याग्लहके धनुर्द्यूते धनुर्धरैः।
जितेऽस्मै धन्विने देयो दुर्दानोऽपि हि तत्ग्लहः॥ ६४॥

अथ राजा तद्वाक्यात् निरस्तसंशयः कन्यां आनेतुमन्वजानात्।

ततो गृहान्निरगमदङ्ग! सुप्रभा
शरद्घनादिव चपला चिरप्रभा।
तदाऽनु तां दुरधिगमां दधुः स्पृहां
नृपा यथाऽकृतसुकृता दिवं प्रति॥ ६५॥
अहो असौ किमुत पुराधिदेवता
दिवश्च्युता तड़िदथ वा चिरप्रभा।
यशः प्रकाशत उतवास्य धन्विनो
विचेतसः क्षितिभुज इत्यमंसत॥ ६६॥

अत इति। अतः कारणात् कन्याग्लहके कन्यैव ग्लहः पणो यत्र तादृशे धनुर्धरैः सह धनुर्द्यूते अस्मै जिते धन्विने दुर्दानोऽपि ग्लहः पणीकृता कन्या देयः। पणे। सूत्रस्थं॥ ६४॥

तत इति। अङ्ग सम्बोधने ततस्तदनन्तरं सुप्रभा गृहात् निरगमत् का इव शरत्कालीनमेघात् अर्थात् शुक्लमेघात् स्थिरप्रभा चपला इव। तदा दुरधिगमां दुष्प्रापां तां अनु तां प्रति नृपाः स्पृहां दधुः। यथा अकृतसुकृता अकृतपुण्या जना दिवं स्वर्गं प्रति स्पृहां दधति तथेत्यर्थः॥ ६५॥

अहो इति। तदा क्षितिभुजः सभास्थनृपतयो विचेतसः मुग्धाः सन्तः इति अमंसत मन्यन्ते स्म। किमित्याह। अहो आश्चर्यं असौ किं पुराधिदेवता नगराधिष्ठात्री देवता अथवा दिवः आकाशात् च्युता पतिता चिरप्रभा तड़ित्। उत वा अस्य धन्विनः यश एव प्रकाशते॥ ६६॥

द्विजद्वयीकलितकरद्वयोभतः
सभां गता प्रणवपुटश्रिया समा ।
ददौ स्रजं रसरभसेन सुप्रभा
प्रभाकरस्य गले उभतसु राजसु ॥ ६७ ॥
ततो यशः पटहमृदङ्गभर्झरा
विनेदुरुन्ननृतुरुरुत्सवाः स्त्रियः ।
मुहुर्मुहुर्हुलु हुलुनादवादना
जगुश्चमाङ्गलिकमुदञ्चितस्वराः ॥ ६८ ॥

एवं विवाहे निर्वृत्ते राजानः कुपिता भूरिसेनं प्रति ।

सुदर्शना नः सदृशो युधोऽमृषोऽधृषोऽपि वा सत्कुलमानसम्पदः ।
के सन्त्यहो विष्णुरथस्य पश्यतो बलिं बलाको हरते सुधर्षणः ॥६९॥

द्विजेति । उभयतः उभयपार्श्वे द्विजद्वय्या ब्राह्मणद्वयेन कलितं गृहीतं करद्वयं यस्याः सा तथा सती सभां गता कीदृशी प्रणवेन पुटितया श्रिया श्रीबीजेन समा तुल्या । उभतसु सूद्वयतसु नृपेषु सुप्रभा रसरभसेन रसेन अनुरागेण रभसेन हर्षेण प्रभाकरस्य गले स्रजं मालां ददौ ॥ ६७ ॥

तत इति । स्त्रियः उरुर्म्महान् उत्सवो यासां तादृश्यः सत्यः स्त्रियः ननृतुः तथा उदञ्चितस्वराः सत्य माङ्गलिकं गानं जगुः ॥ ६८ ॥

सुदर्शेति । नोऽस्माकं सदृशस्तुल्याः युधः योद्धारः अधृषः अधर्षणीयाः अमृषः अमर्षणीया सत्कुलमानसम्पदोऽपि वा के सन्ति अपि तु न केपि । अहो आश्चर्य्यं पश्यत । विष्णुरथस्य गरुड़स्य बलिं सुधर्षणो बलाको बको हरते । अनः १।, सः १।, दृशः ५।, युधः ५।, मृषः ५।, धृषः ५।, ( अपि ) वा १।, ॥ ६९ ॥

व्याकरणम् ।

दृष्टान्तः ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥

अनः स दृशो युधो मृषो धृषोऽपि वा । सः अनः स्वादिपूर्व्वकात् दृशादेरपि वा स्यात् । सुदर्शनाः । सुधर्षणः ॥ ६९ ॥

अयं शासो दण्डधरो जानीयादिति चेत् तदा ।
भयात् देवं पुरोडाशं नेहते श्वा सुशासनः ॥ ७० ॥

अतो दण्डधरान् अस्मान् अज्ञात्वैव ईदृगाचरितमनेन । अयमात्मानं दुःशासनं मन्यते तस्मादयं दण्डनीयः । भूरिसेनं प्रति ।

दुर्धर्षमिदमस्माभिर्यत्पूर्व्वं नो निमन्त्रितान् ।
अवज्ञाय सुता दत्ता क्षुद्रायाज्ञातजातये ॥ ७१ ॥

तव कन्यार्थिनोऽस्मानपि धिक् । यतः ।

यदीतरस्य प्रकृत्याऽवाच्योऽर्थी स्यात् तदा चतु ।
महो महत्वं स्वं त्यक्तुमनिच्छोर्जीवितं पुरः ॥ ७२ ॥

अयमिति । अयं शासः शासिता दण्डधरः इति चेत् यदि असौ सुशासनः श्वा कुक्कुरोऽशास्यं तदा देवहवि नेहते नाहरिष्यं । पद्ये । सूत्रस्य ङ' ॥ ७० ॥

दुर्धर्षेति । इदं अस्माभिर्दुर्धर्षं असुमशक्यं यत् यस्मात् । अन्यत् सुगमम् । पद्ये । ङ' ॥ ७१ ॥

यदीति । प्रकृत्या स्वभावतः अवाच्योऽनिन्दनीयो जनः यदि इतरस्य नीचस्य अर्थी याचकः स्यात् तदा स्वं आत्मीयं महत्तेजः महत्त्वम् त्यक्तुं अनिच्छोस्तस्य जीवितं मायो अग्रे याञ्चायाः पूर्व्वमेव अचतु गच्छतु । (यदि) इतरस्य ६।, प्रकृत्या ६।, वाच्यः १।, अर्थी १।, स्यात् ८।, तदा ७।, चतुम् १।, ॥ ७२ ॥

व्याकरणम् ।

सुशासनः ॥ ७० ॥

दुर्धर्षम् ॥ ७१ ॥

यदीतरस्य प्रकृत्या वाच्योऽर्थी स्यात् तदा चतुम् । प्रकृतेर्व्वाच्योऽर्थो यदि इतरस्य धात्वर्थस्य अर्थी स्यात् प्रयोजनीभूतः स्यात् तदा प्रकृतेश्चतुम् । स्वं त्यक्तुमनिच्छोः ॥७२॥

प्रभाकरस्तान् प्रति। अरे! निवर्त्तस्व तव कटुवाक्‌निवारणे नृपोयमसमर्थः इति भ्रान्तिं त्यज।

निवारणेऽलं खलुनाऽवाक्त्वाऽचित्‌क्षाम्यतीह यत्।
तदुक्त्वालमितीशः संख्यात्यागश्चैद्यहा इव॥ ७३॥

सत्यं सर्व्वे सुदर्शा स्थः सर्व्वे दुर्य्योधना अपि।
दुर्द्धर्षणा मानिनः सहंशा दुर्मर्षणा अपि॥ ७४॥

किन्त्वस्त्रविद्भिः समरे सुयोधनाः सुधर्षणाश्च स्थ तथा सुमर्षणाः।
परीक्षितासीदधुनैव मानिता परैऽर्वाशिष्टं क्रमशः स्फुटीष्यति॥ ७५॥

अथ मगधराजः प्रभाकरं प्रति।

मर्त्तुकामोऽसिदुर्ब्बुद्धे! दर्पित्वा खलु नः पुरः।

निवारण इति। हे अचित्! अज्ञान! अयं ना पुरुषः अर्थादयं नृपः निवारणे तव दुर्व्वाक्यनिवारणे अलं समर्थोऽपि यत् अवाक् वाक्यरहितः सन् त्वा त्वां इह क्षणे क्षाम्यति तत् उक्त्वा अलं उक्तैः प्रयोजनं नास्ति। इति कृत्वा ईशो नृपः आगः युष्माकं अपराधं संख्याति गणयति। चैद्यहा चैद्यस्य शिशुपालस्य हन्ता कृष्ण इव। निवारणे ७।, अलं खलुना ३।, वा १।, क्त्वा १।, चित् १।, ॥ ७३॥

सत्यमिति। यूयं सर्व्वे सुदर्शाः सुदर्शनीयास्थः सहंशाः सवंशोद्भवा इति सत्यम्। अन्यत् सुगमं। पचे। सूत्रस्य ख'॥ ७४॥

किन्त्विति। समरे युद्धे अस्त्रविद्भिः सुयोधनाः सुखेन योधनीया न तु दुर्य्योधनाः सुधर्षणाश्च स्थः। युष्माकं मानिता अधुनैव परीक्षिता आसीत्। पचे। ख'॥ ७५॥

व्याकरणम्।

निवारणे अलं खलुना वाक्त्वाचित्। अलं खल्वोर्योगे निषेधार्थे चित् अकारानुबन्धः क्त्वा वा स्यात्। उक्त्वा अलं॥ ७३॥

दुर्य्योधनाः, दुर्धर्षणाः, दुर्मर्षणाः॥ ७४॥

सुदर्शा, सुयोधना, सुधर्षणाः॥ ७५॥

अधुनैव परीक्षस्व आत्मनो बलपौरुषम् ॥ ७६ ॥
य आसीद्दैव निर्ब्बन्धस्त्वदुद्वाहप्रयोजकः ।
तेनैव लक्ष्यं संच्छिन्नं दर्पित्वाऽलं ततः शिशो ! ॥ ७७ ॥

इत्युक्त्वा राजभिः सम्भूय हठेन तां कन्यामादाय दधाव । अथ तं धावमानः प्रभाकरः । अरे शृणु ।

स प्रत्ययः पूर्व्वकाले उदेति न दुरात्मनाम् ।
पापं कृत्वाऽनुतपतां य उदेति फलोदये ॥ ७८ ॥

वेदान्ती । इत्युक्त्वाशु धनुः सज्यं कृत्वा स शरजालकम् ।
अकरोत् येन संछन्ना आसन् सूर्य्यगभस्तयः ॥ ७९ ॥

मर्त्तुकाम इति । रे दुर्ब्बुद्धे । नोऽस्माकं पुरोऽग्रे दर्पित्वा खलु दर्पं माकुरु इत्यर्थः दर्पं कृत्वा मर्त्तुमिच्छुरसि । पद्ये । छं ॥ ७६ ॥

य आसीदिति । त्वदुद्वाहस्य तव विवाहस्य प्रयोजकः यो दैवनिर्ब्बन्ध आसीत् तेनैव लक्ष्यं मत्स्याभासः स्वयमेव संछिन्नमभूत ततस्तस्मात् रे शिशो ! दर्पित्वा अलं दर्पं माकुरु । पद्ये । पूर्व्वसूत्रस्य छं ॥ ७७ ॥

स इति । पापं कृत्वा फलोदये फलोदयकाले अनुतापं कुर्व्वतां यः प्रत्ययः यत् ज्ञानं उदेति सप्रत्ययः तत् ज्ञानं दुरात्मनां पूर्व्वकाले न उदेति । सः १।, प्रत्ययः १।, पूर्व्वकाले ७।, उदेति ८।, ॥ ७८ ॥

इत्युक्त्वेति । स प्रभाकरः धनुः सज्यं कृत्वा शरजालकं अकरोत् येन शरजालेन सूर्य्यस्य गभस्तयः संछन्ना अभवन् । पद्ये । सूत्रस्य छं ॥ ७९ ॥

व्याकरणम् ।

दर्पित्वा खलु ॥ ७६ ॥

दर्पित्वा अलं ॥ ७७ ॥

स प्रत्ययः पूर्व्वकाले उदेति । स क्वाच् । पापं कृत्वा अनुतपतां ॥ ७८ ॥

कृत्वा ॥ ७९ ॥

प्रभाकरः मागधं प्रति । अयं प्रस्तावो प्रस्तावोक्त्या इत्यादिक-सुक्तम् ।

किन्नोक्तेमा गिरो दर्पात् सन्दर्शयत तत्फलम् ।
किमु वा वीरशय्यायां शयित्वा दर्शयिष्यथ ॥ ८० ॥
दुःसाहसा दिव्युपधावतो वोऽवाप्यैव दिव्या ललना लषन्त्यः ।
प्रेम्णा वरिष्यन्ति तदैव मोदित्वा च द्युतित्वा विहरिष्यथात्र ॥ ८१ ॥
कान्तामुषोऽविदो रुद्राः किन्नित्यं विरता नहि ।
दिवि ताभिर्वसथेति विदित्वा तत्र गच्छत ॥ ८२ ॥

किमिति । इमाः पूर्व्वोक्ता गिरः वाक्यानि दर्पात् उक्ता किं कथं न तत् फलं सन्दर्शयत । किमुवा तत्फलं वीरशय्यायां शयित्वा दर्शयिष्यथ । कित् १।, नो १।, क्ता १।, इमा ३।, ॥ ८० ॥

दुःसाहसा इति । हे दुःसाहसाः !, दिवि स्वर्गे उपधावतो वो युष्मान् प्राप्यैव दिव्यललनाः स्वर्गीयस्त्रियः विलषन्त्यः सत्यः प्रेम्णा वरिष्यन्ति तदैव अत्र स्वर्गे मोदित्वा द्युतित्वा च विहरिष्यथ । इसादिव्युपधावतः ५।, अवः ५।, वा १।, ॥ ८१ ॥

कान्तेति । हे कान्तामुषः ! स्त्री चौराः ! हे अविदः ! अज्ञानाः ! नित्यं रुद्राः रोदनेभ्यः किं कथं न विरताः । दिवि स्वर्गे ताभिः स्त्रीभिः सह वसथ इति विदित्वा तत्र गच्छत । मुषः ५।, विदः ५।, रुद्राः ५॥, कित् १।, ( नित्यं ) ॥ ८२ ॥

व्याकरणम् ।

किन्नोक्तेमा । इमा सह क्ता किन्न स्यात् । शयित्वा ॥ ८० ॥

इसादिव्युपधावतोऽन्वी वा । अवः वान्तवर्ज्जात् इसादेः अथ च व्युपधावतः उश्च इश्च इति वी तावेव उपधे उपान्तवर्णौ विद्येते यस्य तादृशात् धातोः सेमक्ता कित् स्यात् । मोदित्वा, द्युतित्वा ॥ ८१ ॥

मुषो विदः रुद्राः किन्नित्यम् । विदित्वा ॥ ८२ ॥

यूयं यद्यपि पापिष्ठा नरकार्हास्तथाप्यसौ ।
मुषित्वा मच्छरोघं वः शुद्धान् स्वः प्रापयिष्यति ॥ ८३ ॥
स्वर्गं मुदित्वा द्योतित्वा देवित्वाऽप्सरसां गणैः ।
स्थास्यथेति रुदित्वाऽलमेनोमयतनोः कृते ॥ ८४ ॥
इत्युक्त्वा स नृपान् सर्व्वान् छित्वा प्रत्यागमद्रणात् ।
भार्य्यामादाय बाहुभ्यां दन्ती विषलतामिव ॥ ८५ ॥

अथ क्रन्दन्तीं राजमहिषीं प्रति दास्यः ।

एवं ग्रहोऽस्ति स्म पुरा न कस्यचित् जीवन्नसौ युद्धत एष्यतीत्यहो ।
भार्य्यां गृहीत्वा विनिहत्य शात्रवानायाति ते विट्पतिरेष पश्यतु ॥८६॥

अथ प्रभाकरः श्वशुरं प्रति ।

यूयमिति । यद्यपि यूयं पापिष्ठाः नरकयोग्याः तथापि मम शरः बाणः वो युष्माकं अघं पापं मुषित्वा शुद्धान् कृत्वा स्वः स्वर्गं प्रापयिष्यति । पचे । मूवस्य ज ॥ ८३ ॥

स्वर्गेति । एनोमयतनोः एनः पापं तन्मयशरीरस्य कृते निमित्तं रुदित्वा अलं रोदनं माकुरुत इत्यर्थः । पचे । ज ॥ ८४ ॥

इत्युक्तेति । विषलतां मृणाललतां अन्यत् सुगमम् ॥ ८५ ॥

एवमिति । असौ जीवन् युद्धतः युद्धात् एष्यति आगमिष्यति इति एवं ग्रहो बोधो न कस्यापि पुरा अस्तिस्म । अहो आश्चर्यं भार्य्यां गृहीत्वा एष तव विट्पतिर्जामाता आयाति पश्यतु । एवं १।, ग्रहः ५।, अस्ति ८, ॥ ८६ ॥

व्याकरणम् ।

मुषित्वा ॥ ८३ ॥

मुदित्वा, द्योतित्वा, रुदित्वा ॥ ८४ ॥ ८५ ॥

एवं ग्रहोऽस्ति । ग्रहधातोरेवं स्यात् । गृहीत्वा ॥ ८६

तन्मन्यते वसतिवत् क्षुत्क्लिशश्चागतोऽल्पम् ।
उषित्वातिसुखी चासं यस्मिन् द्विजनिकेतने ॥ ८७ ॥
नाम्ना मुकुन्दशर्म्मास्ति तन्माता यतिधर्म्मिणी ।
पुत्रेत्युदित्वा मयि सा सस्नेहा मां दिदृक्षते ॥ ८८ ॥
मां विना सा क्लिशित्वास्ते जातस्नेहा तपस्विनी ।
तत्राहं यामि राजेन्द्र ! तद्भवाननुमोदताम् ॥ ८९ ॥

राजा आ: किमेतत् ।

न क्षुधित्वा तृषित्वेति वर: श्वशुरगृहात् क्वचित् ।
तत् पिबाशान मोदस्व गन्तासि समयान्तरे ॥ ९० ॥

तन्मन्यत इति । क्षुत्क्लिश: सन् यस्मिन् द्विजस्य निकेतने गृहे आगत: सन् अल्पं तृप्तिं प्राप्तोऽस्मि यस्मिंश्च उषित्वा सुखी आसं तन्निकेतनं वसतिवत् स्वगृहवत् मन्यते । तत् १।, मन्यते ८।, वसतिवत् १।, क्षुत्क्लिश: ५।, (च) ॥ ८७ ॥

नाम्नेति । सा पुत्र इति उदित्वा उक्त्वा मयि सस्नेहा मां दिदृक्षते । पद्ये। उं ॥ ८८ ॥

मां विनेति । सुगमम् ॥ ८९ ॥

न क्षुधित्वेति । क्षुधित्वा क्षुधान्वितो भूत्वा तृषित्वा तृषान्वितो भूत्वा श्वशुरगृहात् वरो न एति गच्छति । तत् तस्मात् अशान भुङ्क्ष्व पिब मोदस्व । पद्ये । सूत्रस्य उं ॥ ९० ॥

व्याकरणम् ।

तन्मन्यते वसतिवत् क्षुत्क्लिशश्च । वस इव क्षुध: क्लिशश्च तत् अर्थात् क्त्वाच् नित्यं किम् मन्यते । उषित्वा ॥ ८७ ॥

उदित्वा ॥ ८८ ॥

क्लिशित्वा ॥ ८९ ॥

क्षुधित्वा, तृषित्वा ॥ ९० ॥

अथ राजा तं जिगमिषुं ज्ञात्वा अन्तःपुरे प्रेषयामास अथ तमन्तःपुरमागतं सुप्रभायाः सख्य आहुः ।

पाणिं गृहीत्वा न तया स्त्रियाऽकार्षीः सहासनम् ।
स्वयं श्लथित्वा यन्नीवी रसनामवलम्बते ॥ ८१ ॥
रसास्वादे यो द्विरेफो द्विरेफो नेदृगीक्ष्यते ।
मकरन्देऽस्पृहां धत्ते यत् भजन्नपि पद्मिनीम् ॥ ८२ ॥

एवं श्रुत्वा स तद्दिवसं तत्रोवास । अथ रात्रौ सहशयाना सुप्रभा तं प्रति । नाथ ! श्रुतं मया मां विहाय गमिष्यसीति । तत् कथं सम्भवति । यतः ।

वञ्चित्वा स्वतनोश्छायां प्रयातुं कोऽपि नार्हति ।
शरीरी तत् कथं नाथ ! वञ्चित्वा मां प्रयास्यसि ॥ ८३ ॥

प्रभाकरस्तां प्रति ।

पाणिमिति । पाणिं गृहीत्वा तया स्त्रिया सहासनं न अकार्षीः । यन्नीवी यस्या नीवी स्त्रीकटीवस्त्रबन्धः स्वयं श्लथीभूय रसनां काञ्चीं अवलम्बते । पचे । सूत्रस्य छ' ॥ ८१ ॥

रसेति । ईदृक् द्विरेफो न ईक्ष्यते यो द्विरेफः रसस्य आस्वादने द्विरेफः मूर्खः । यत् यस्मात् पद्मिनीं भजन्नपि मकरन्देऽस्पृहां धत्ते ॥ ८२ ॥

वञ्चित्वेति । कोऽपि शरीरी स्वतनोः स्वीयदेहस्य छायां वञ्चित्वा वञ्चनां कृत्वा प्रयातुं नार्हति । तत् तस्मात् हे नाथ ! मां वञ्चित्वा कथं प्रयास्यसि । पचे । छ' ॥ ८३ ॥

व्याकरणम् ।

श्लथित्वा ॥ ८१ ॥ ८२ ॥

वञ्चित्वा, वञ्चित्वा ॥ ८३ ॥

भवती मुदितोदारशीले! यदि मयान्विता।
तदा कालं प्रतीक्षस्व भ्रमित्वा यावदैम्यहम्॥ ९४॥
पूतः क्लिशश्च तपसा पितास्ते हिमवद्गिरौ।
तं समीक्ष्य पवित्वाहं पुनरेष्यामि तेऽन्तिकम्॥ ९५॥
कस्यचिद्राजसिंहस्य सुतं जानीहि मां प्रिये!।
भ्रान्त्वा क्लिशित्वा स्वीयार्थसाधनार्थं यतेऽधुना॥ ९६॥

सुप्रभा तं प्रति।

भ्रमिष्यसि वने क्लिष्ट्वा त्वं किं स्यान्मे गृहे सुखम्।
पूत्वा त्वत्सेवयात्मानं भ्रमिष्यामि त्वया सुखैः॥ ९७॥

भवतीति। हे उदारशीले! सच्चरित्रे! यदि भवती मया अनु मया सह इता गमने मुदिता हर्षिता भवसि तदा कालं प्रतीक्षस्व यावदहं भ्रमित्वा ऐमि आगच्छामि। भवति ८। इम् १। उदितः ५।, ॥ ९४॥

पूत इति। मम पिता हिमवत्पर्वतसमीपे तपसा पूतः क्लिशश्च आस्ते। तं समीक्ष्य दृष्ट्वा पवित्वा पवित्रो भूत्वा तव समीपे पुनः एष्यामि। पूतः ५।, क्लिशः ५।, (च)॥ ९५॥

कस्येति। अधुना स्वीयार्थस्य स्वकार्य्यस्य साधनार्थं भ्रान्त्वा क्लिशित्वा यते यत्नं करोमि। पद्ये। उ ॥ ९६॥

भ्रमिष्यसीति। त्वं वने क्लिष्ट्वा भ्रमिष्यसि मे मम गृहे किं सुखं स्यात्। तव सेवया आत्मानं पूत्वा पवित्रीकृत्य त्वया सह सुखैः भ्रमिष्यामि। पद्ये। उ ॥ ९७॥

व्याकरणम्।

भवतीमुदितः। उकारानुबन्धधातोः क्त्वाचः इम् भवति वा। भ्रमित्वा॥ ९४॥

पूतः क्लिशश्च। पवित्वा॥ ९५॥

भ्रान्त्वा, क्लिशित्वा॥ ९६॥

क्लिष्ट्वा, पूत्वा॥ ९७॥

प्रभाकरस्तां प्रति।

क्रमो भवत्याः क्वचिदेव चत्वरे न हि क्रमित्वा क्लमदुःखमन्वभूः।
कदापि तेनैव वनं यियाससि क्रान्त्वा दुरध्वान् नवनीतकोमले! ॥९८॥

सुप्रभा तं प्रति।

न हि व्रश्चोऽजिरेऽटन्त्या वियोगिन्याः शुचो वने।
भ्रमोऽपि साधुर्भर्त्रा यो व्रश्चित्वाऽकं ददाति शम् ॥ ९९ ॥
हा को हि स्वीं सतीं हित्वा निरगान्नाथ! संस्मर।
पाण्डवा नलरामाद्याः सस्त्रीका निर्ययुर्वनम् ॥ १०० ॥

प्रभाकरस्तां प्रति। प्रिये! सत्यमेतत् किन्तु।

क्रम इति। क्वचिदपि समये भवत्याः क्रमः गमनं चत्वरे एव। क्रमित्वा गत्वा क्लमदुःखं क्लान्तिजनितदुःखं कदापि नहि अन्वभूः नानुभवमकार्षीः। हे नवनीत-कोमले! तेनैव हेतुना दुरध्वान् क्रान्त्वा गत्वा वनं यियाससि यातुमिच्छसि। क्रमः ६।, अः १।, भवति ८।, आः १।, क्वचित् ७।, (एव) ॥ ९८ ॥

नहीति। अजिरे अङ्गने अटन्त्या वियोगिन्याः शुचः शोकस्य व्रश्चः छेदो नहि भवतीति शेषः। भर्त्रा सह वने भ्रमणमपि साधु यो भर्ता अकं दुःखं व्रश्चित्वा शं सुखं ददाति। नहि १।, व्रश्चः ६।, निः १।, ॥ ९९ ॥

हाक इति। हा विषादे को जनः सतीं स्वीं भार्य्यां हित्वा त्यक्त्वा निरगात् हे नाथ! इति स्मर। पाण्डवा नलराजः रामादयश्च सस्त्रीका एव वनं निर्ययुः। हाकः ६।, हिः १।, ॥ १०० ॥

व्याकरणम्।

क्रमो भवत्याः क्वचिदेव। क्रमः क्रमधातुसम्बन्धीयोऽकारः अः स्यात् वा। क्रमित्वा, क्रान्त्वा ॥ ९८ ॥

नहि व्रश्चो निः। व्रश्चित्वा ॥ ९९ ॥

हाको हिः। हित्वा ॥ १०० ॥

सेधित्वा सह वल्लभेन गहनं शं प्राप का सुन्दरी
भैमीं क्रूरकलिर्व्ययोजयदलं नाथेन नीतापदा ।
प्राप्ता कीचकधर्षणं द्रुपदजा रक्षोग्रहं जानकी
तत् ते सुन्दरि ! युज्यते न हि मयापन्नेन वन्ये भ्रमः ॥१०१॥

सुप्रभा । नाथ ! एतदपि सत्यं अतः स्थिताऽस्मि । प्रभाकरः । कल्य द्विजगृहे त्वया सह यास्यामि सा विप्रपत्नी मम माता स्नुषायास्तव मुखं द्रष्टुमिच्छति ।

अथ प्रभाते कृतनित्यकृत्यौ ।

नत्वा स श्वश्रुश्वशुरौ श्वशुर्यान् संभाष्य पौरानपि साश्रुनेत्रान् । प्रीतो रथस्थः प्रययौ सभार्यः ॥ १०२ ॥

अथ पूर्वं निमन्त्रितः प्रियङ्करः आगत्य पथि यान्तं सभार्यं प्रभाकरमालोक्य पौरानपृच्छत् । पौराः कथयन्ति स्म ।

प्रेम्णि रक्ताऽत्यस्य सेयमन्यते नव्यसङ्गमात् ।

सेधित्वेति । वल्लभेन भर्त्रा सह गहनं वनं सेधित्वा गत्वा का सुन्दरी शं कल्याणं प्राप अपि तु कापि न । एतत् दर्शयति । भैमीं दमयन्तीं नाथेन भर्त्रा नलेन क्रूरः कलिः व्ययोजयत् वियुक्तां कृतवान् । कीदृशेन नीतापदा प्रापितविपदा । द्रुपदजा द्रौपदी कीचकेन जयद्रथेन धर्षणं प्राप्ता । जानकी रक्षो ग्रहं राक्षसेन ग्रहणं प्राप्ता । तत् तस्मात् हे सुन्दरि ! आपन्नेन विपत्प्राप्तेन मया सह वने भ्रमणं तव न युज्यते । वन्ये । ठ ॥ १०१ ॥

अथेति । स प्रभाकरः । श्वशुर्यान् श्यालकान् । शेषः सुगमः ॥ १०२ ॥

प्रेम्णीति । इयं सा सुप्रभा अस्य पुरुषस्य प्रेम्णि अतिरक्ता अत्यनुरागयुता मूला

व्याकरणम् ।

सेधित्वा ॥ १०१ ॥

नत्वा ॥ १०२ ॥

सुधाब्धिमग्नामात्मानं यामाकाङ्क्ष्य हता नृपाः ॥ १०३ ॥

अथ प्रियङ्करस्तां दृष्ट्वा सविस्मयम्।

मुक्तां निष्ठीवतीयं यत् मन्ये मुक्तामयीमिमाम्।
आलोक्येमां पुमान् मुक्तां प्रतिष्ठीवति सत्ग्रही ॥ १०४ ॥

स प्रभाकरं प्रति।

विबुधा अपि वाञ्छन्ति वामां नेमां विनाशनम्।
तत्तवास्याः कृते नूनमवगत्येत्यमूं त्यज ॥ १०५ ॥

प्रभाकरस्तं प्रति। भवदुक्तं सत्यं दृष्टञ्च।

नव्यसङ्क्रमात् सुधाब्धिमग्नां मन्यते। यां आकाङ्क्ष्य नृपा हताः। क्त्वा ल्यस्य ६।, से ७।, यप् १।, मन्यते ८।, अनव्यसङ्क्रमात् ५।, ॥ १०३ ॥

मुक्तामिति। इमां मुक्तामयीं मन्ये यत् यस्मादियं मुक्तां निष्ठीवति। इमां आलोक्य सत्ग्रही सतबुद्धिमान् पुमान् अश्रद्धया मुक्तां प्रतिष्ठीवति। पद्ये। गूवस्य उं ॥ १०४ ॥

विबुधा इति। इमां वामां स्त्रियं विबुधा अपि न वाञ्छन्त्येव। तत् तस्मात् अस्याः कृते निमित्तं नूनं निश्चितं तव विनाशनं भविष्यतीति शेषः। इति अवगत्य ज्ञात्वा अमुं स्त्रियं त्यज। विबुधाः १॥, (अपि) वाञ्छन्ति ८॥, वा १।, मां ६॥, नेमां ६॥, विनाशनं २।, ॥ १०५ ॥

व्याकरणम्।

क्त्वा-ल्यस्य से यप् मन्यतेऽनव्यसङ्क्रमात्। नञभिन्नाव्यययोगात् क्त्वाप्रत्ययस्य समासे यप् मन्यते। आकाङ्क्ष्य ॥ १०३ ॥

आलोक्य ॥ १०४ ॥

विबुधा अपि वाञ्छन्ति वा मां नेमां विनाशनं। अनिमां मकाराणां वा विनाशनं लोपं पण्डिता वाञ्छन्ति। अवगत्य ॥ १०५ ॥

अधिगम्य स्पृहामस्यां मदान्धा रथिनो हताः ।
बहवो देवभोज्यायां सुधायामसुरा यथा ॥ १०६ ॥

प्रियङ्करः सक्रोधम् । अरे मामप्येवमवजानासि पश्य मे बलपौरुषम् । प्रभाकरः । एवं भवतु । अथ तयोर्महायुद्धम् ।

सज्यीकृत्य शरासने मुमुचतुर्व्वाणान् मिथस्तांश्च तौ
पान्थान् चिच्छिदतुर्म्मिथः समबलोत्साहौ सतीर्थावपि ।
तुल्यास्त्रौ समशिक्षिताववि समाभ्यासौ सहिष्णू समं
तावित्थं समयुध्यतामतिबलाविन्द्रौ सुधार्थे यथा ॥ १०७ ॥

प्रभाकरं सोऽवगत्याऽजेयं शक्त्याऽस्त्रपात्तया ।
अमोघया निहत्याशु भार्य्यामादाय निर्ययौ ॥ १०८ ॥

अधिगम्येति । देवभोज्यायां सुधायां स्पृहां अधिगम्य प्राप्य यथा असुरा हताः तथेत्यर्थः । पथ्ये । सूत्रस्य उं ॥ १०६ ॥

सज्यीकृतेति । तौ शरासने धनुषी सज्यीकृत्य मिथः परस्परं वाणान् मुमुचतुः तांश्च वाणान् पान्थान् पथिस्थितान् तौ मिथः चिच्छिदतुः । कीदृशौ तुल्यबलोत्साहौ सतीर्थौ एकगुरोः शिष्यौ । इत्थम् अनेन प्रकारेण तौ अतिबलौ अयुध्यताम् । यथा सुधार्थे इन्द्रौ अयुध्यतां । तथेत्यर्थः । पथ्ये । उं ॥ १०७ ॥

प्रभाकरमिति । स प्रियङ्करः प्रभाकरं अजेयं जेतुमशक्यं अवगत्य ज्ञात्वा अस्त्रपात् राक्षसात् आत्तया प्राप्तया अमोघया शक्त्या आहत्य तस्य भार्य्यामादाय ययौ । पथ्ये । उं ॥ १०८ ॥

व्याकरणम् ।

अधिगम्य ॥ १०६ ॥

सज्यीकृत्य ॥ १०७ ॥

अवगत्य ॥ १०८ ॥

अथ प्रभाकरः शक्तिविभिन्नहृदयः इष्टदेवतां प्रति।

शिवरमणि! जयो लघोरपि त्वन्
मनु परमास्त्रभृतः सदेति जानन्।
यममपि विगणय्य हृप्त आसं
लघुविजितोऽद्य बिभेम्यमुत्र गन्तुम्॥ १०९॥

इत्युक्त्वा स मुमोह।

अथो विप्रावापस्खलितचिकुरोमासहचरी
क्षमानाम्ना योगिन्यमुमवनिपृष्ठेशयमथ।
विशल्यीकृत्याथो झटिति मृतसञ्जीवमनुना
क्षणात् संज्ञां प्रापय्य च तमिदमाहाश्रुनयना॥११०॥

शिवेति। हे शिवरमणि! त्वन्मनुपरमास्त्रभृतः तव मन्त्रस्वरूप परमास्त्रभृतो लघो-रपि पुरुषस्य जयः स्यात् इति सदा जानन् सन् यममपि विगणय्य अगणयित्वा हृप्तः साहङ्कार आसं। अद्य लघोः सकाशात् विजितः सन् अमुत्र परलोकं गन्तुं बिभेमि। णिजयः १।, लघोः ५।, ॥ १०९॥

अथो इति। अथो अनन्तरं हे विप्र! स्खलितचिकुरा आलुलायितकेशा उमा-सहचरी भगवत्याः सखी क्षमानामधेया काचित् योगिनी अवनिपृष्ठेशयं भूमौ शयानं अमुं प्रभाकरं अवाप प्राप्तवती। अथ झटिति शीघ्रं विशल्यीकृत्य अस्त्रजनितवेदना-मपनीय मृतसञ्जीवमनुना मृतसञ्जीवमन्त्रेण क्षणात् चैतन्यं प्रापय्य दत्वा अश्रुनयना तं इदं वक्ष्यमाणं वच आह। वा १।, आपः ५।, ॥ ११०॥

व्याकरणम्।

णिजयो लघोः। लघुपूर्व्वकात् णिच् अयः स्यात् यपि परे। विगणय्य॥ १०९॥
वापः। आपः परो णिच् अयः स्यात् वा यपि परे। प्रापय्य॥ ११०॥

उत्तिष्ठोत्तिष्ठ रे वत्स ! माभीस्ते सन्निधौ मम ।
स्थैर्य्यं स्वं मानसं प्राप्य व्याहरस्व वचोऽमृतम् ॥ १११ ॥
इत्युक्त्वा सा स्वबाहुभ्यामुत्थाप्याङ्के निधाय तम् ।
रजोऽञ्चलेनापनिन्ये चक्रे च मुखमार्ज्जनम् ॥ ११२ ॥

सा पुनस्तं प्रति ।

उरस्ते बाधते यादृक् शक्त्या भिन्नं तथैव मे ।
बाधते हृत् तव म्लानं पश्यन्त्या मुखपङ्कजम् ॥ ११३ ॥
वज्रादिभिरजेयस्त्वं यन्मूर्च्छामगमः क्षणम् ।
तत् सम्मानाय कौमारशक्त्याः स्वस्याग्रजस्य च ॥ ११४ ॥

तत् श्रुत्वा प्रभाकरःससम्भ्रमम् । अग्रजस्येति किमुक्तं भवत्या ?

सा तं प्रति ।

निहतोऽसि रणे येन स ते ज्येष्ठः प्रियङ्करः ।
पाञ्चालेशो याहि तत्र सुप्रभां तत्र लप्स्यसे ॥ ११५ ॥

उत्तिष्ठेति । स्थैर्य्यं प्राप्य स्थिरत्वं प्राप्य । अमृतं अमृततुल्यं वचः व्याहरस्व कथय । शेषः सुगमः । पद्ये । सूत्रस्य छं ॥ १११ ॥

इत्युक्तेति । अञ्चलेन वस्त्रप्रान्तेन रजः गात्रधूलिं अपनिन्ये अपसारितवती । अन्यत् सुगमम् । पद्ये । छं ॥ ११२ ॥

उर इति । शक्त्या कुमारशक्त्या द्वारा तव उरो वक्षःस्थलं यादृक् बाधते तथैव तादृगेव तव म्लानं मुखपङ्कजं पश्यन्त्या मम हृत् हृदयं बाधते व्यथते ॥ ११३ ॥

वज्रादीति । कौमारशक्त्याः कार्त्तिकेयशक्त्याः अग्रजस्य तव ज्येष्ठस्य प्रियङ्करस्य च सम्मानाय मानरक्षार्थम् ॥ ११४ ॥

निहत इति । पाञ्चालेशः पाञ्चालदेशाधिपतिः । शेषः सुगमः ॥ ११५ ॥

व्याकरणम् ।

प्राप्य ॥ १११ ॥

प्रभाकरस्तां प्रति । तद्भवतु मातस्त्वं काऽसि ? ।

मातस्त्वदङ्गसम्पर्कात् नेच्छा मायामयेऽस्ति मे ।
स्तन्यार्थिनो मातुरङ्गसम्पर्कात् क्रीड़ने यथा ॥ ११६ ॥
प्रजायते म आदित्सा नित्यानन्दस्य कर्म्मणा ।
सहापमित्य पापीत्थं देहं कालीपदार्पणम् ॥ ११७ ॥
यत्पादपद्ममकरन्दसुधारसं स-
च्चेतोमृगाः खलु निपीय निवृत्ततृष्णाः ।
धावन्त्यसद्विषयविभ्रममरीचिकां नो
तस्मिन् सुधाब्धिपयसि प्लवतां मनो मे ॥ ११८ ॥

मातरिति । हे मातः ! स्तन्यार्थिनो बालकस्य मातुः क्रोडं प्राप्य खेलने यथा इच्छा न भवेत् तद्वत् तव क्रोडं प्राप्य मायामये संसारे मम इच्छा न भवतीति शेषः ॥ ११६ ॥

प्रजायत इति । पापीत्थं देहं कर्म्मणा सह कालीपदार्पणं अपमित्यविनिमयीकृत्य । अपमित्येति मे ङ प्रतिदाने इत्यस्य रूपं । मे मम नित्यानन्दरसस्य ब्रह्मानन्दरसस्य आदित्सा आग्रहः प्रजायते भवतीत्यर्थः । प्रजायते । ८।, म ६।, आत् १।, इत् १।, ॥ ११७ ॥

यदिति । सच्चेतो मृगाः सतां साधूनां चेतो मृगाः चित्तरूपहरिणाः यत् पादपद्ममकरन्दसुधारसं यस्याः काल्याः पादपद्ममकरन्दामृतरसं निपीय पीत्वा निवृत्ततृष्णाः सन्तः असद्विषयविभ्रममरीचिकां असतां अज्ञानानां विषयो यद् विम्बं तदेव मरीचिका मृगतृष्णा तां न धावन्ति न गच्छन्ति । अतस्तस्मिन् सुधाब्धिपयसि कालीपादपद्मे मे मम मनः प्लवतां गच्छतु ॥ ११८ ॥

व्याकरणम् ।

उत्थाप्य, निधाय ॥ ११२ ॥ ११३ ॥ ११४ ॥ ११५ ॥ ११६ ॥

प्रजायते म आदित् । मेङ धातोः आत् इत् स्यात् वा । वा इत्यनुवर्त्तते । अपमित्य ॥ ११७ ॥ ११८ ॥

योगिनी । तं प्रति । इदानीं मम परिचयेनालम् ।

तनूमनुपमायापि नित्यानन्दरसस्त्वया ।
सुलभोऽस्ति प्रतीक्षस्व क्षयं प्रारब्धकर्म्मणः ॥ ११९ ॥

सशरीरस्यैव ते नित्यानन्दरसानुभवो भावी । किन्तु नायं समयः । अपि च ।

अष्टौ प्रकृतयस्तिस्रः शक्तयः षड्गुणा अपि ।
त्रिवर्गोऽपि क्षत्रियाणामस्ति सर्व्वार्थसाधनम् ॥ १२० ॥

अतस्तस्मिन्नेवेदानीं मनोनिवेशय । अपि च ।

शत्रुनिर्य्यातनादन्यो धर्म्मो नास्ति महीभृताम् ।
तेनैव वीरलोकाप्तिः पुरुषार्थः स एव हि ॥ १२१ ॥

अपि च । राज्यात् प्रच्यवनं मातुर्हृदि शूलायते सदा ।
समर्थस्तदनुद्धर्त्ता वीरलोकं न लप्स्यसे ॥ १२२ ॥

अपि च । यत् पुष्पसमये दीर्घमुष्णं निश्वसिति प्रिया ।
साध्वी बाला तद्धि पुंसः सर्व्वार्थान् दहतीप्सितान् ॥ १२३ ॥

---

तनूमिति । तनूं शरीरं अनुपमायापि विनिमयमकृत्वापि नित्यानन्दरसः त्वया सुलभोऽस्ति प्रारब्धकर्म्मणः क्षयं प्रतीक्षस्व । पद्ये । ण ॥ ११९ ॥

अष्टाविति । स्वाम्यमात्यप्रभृतीनि अष्टौ प्रकृतयः । प्रभावोत्साहमन्त्रजास्तिस्रः शक्तयः । सन्धिविग्रहादयः षट् गुणाः । त्रयस्त्रयाणामुद्दयस्त्रिवर्गः सर्व्वार्थसाधनमस्ति ॥ १२० ॥

शत्रुनिर्यातनादिति । तेनैव कर्म्मणा वीरलोकस्य प्राप्तिः स्यात् क्षत्रियाणां स एव पुरुषार्थः ॥ १२१ ॥

राज्यादिति । समर्थः सन् तदनुद्धर्त्ता मातृहृत्शूलस्य अनुद्धर्त्ता सन् वीरलोकं न लप्स्यसे ॥ १२२ ॥

यत् पुष्पेति । बाला युवती साध्वी प्रिया भार्य्या पुष्पसमये वसन्तकाले ऋतुकाले वा यत् दीर्घं उष्णं निश्वसिति तद्धि तदेव निश्वसितं पुंसः सर्व्वार्थान् ईप्सितान् दहति ॥ १२३ ॥

व्याकरणम् ।

अनुपमाय ॥ ११९ ॥ १२० ॥ १२१ ॥ १२२ ॥ १२३ ॥

मृतेवास्ते सुप्रभाद्य क्षीणा तद्विरहज्वरात् ।
नान्यत् भेषजमस्त्यस्य त्वन्मुखाब्जाऽमृतं विना ॥ १२४ ॥

अतः साध्वी यथा न म्रियेत तथैव त्वया करणीयमित्युक्त्वा सान्तर्दधे । अथ प्रभाकरः तत् सर्व्वं स्वप्नवत् मत्वा क्षणं विभाव्य च पाञ्चालनगरीं प्रतिययौ । अथ तमागतं वीक्ष्य राजा प्रियङ्करः प्रतीहारं प्रति ।

क एष विधुवत् भाति संव्याय क्षौमवाससा ।
कुशाङ्गुरीयकं बिभ्रत् पुमान् नव्योऽजिरे पुरः ॥ १२५ ॥

अथ नृपानुमत्या सभायां प्रविष्टं प्रभाकरं प्रति प्रियङ्करः ।

ज्याघातकिणवत् दीर्घबाहुस्ते दृश्यते द्विज !
मणेः प्रसादात् तारुण्यात् नासि द्रौणिर्भृगुः कृपः ॥ १२६ ॥

त्वद्दर्शनेन न हि तृप्यत ईक्षणे मे
स्नेहादजस्रमतिसंस्रवदस्रुधारे ।
आलिङ्गितुं प्रसरतः किल मे भुजौ त्वां
नो याति मानसमसेचनक ! त्वदन्यम् ॥ १२७ ॥

---

मृतेति । तव विरहज्वरात् क्षीणा सती सुप्रभा अद्य मृता इव आस्ते । त्वन्मुखाब्जामृतं विना तव मुखचन्द्रसुधां विना अस्य ज्वरस्य अन्यत् भेषजं नास्ति ॥ १२४ ॥

क एष इति । क्षौमवाससा संव्याय उत्तरीयं कृत्वा नव्यः युवा पुमान् पुरोऽग्रे अजिरे अङ्गने विधुवत् को भाति । न १।, व्यः ६।, जिः ॥ १२५ ॥

ज्याघातेति । हे द्विज ! ज्याया आघातेन किणवत् किणो घर्षणचक्रं काड़ा इति ख्यातं तद्युक्तो बाहुस्तव दृश्यते । त्वं द्रौणिरश्वत्थामा नासि । अत्र हेतुः मणेः तव मस्तकस्य मणिरस्ति द्रौणेर्मणिर्नास्तीत्यर्थः । भृगुः परशुरामोऽपि नासि । अत्र हेतुः प्रसादात् परशुरामस्य क्षत्रियेषु अप्रसन्नत्वात् । कृपाचार्य्योऽपि नासि । अत्र हेतुः तारुण्यात् यौवनात् स तु वृद्ध इत्यर्थः ॥ १२६ ॥

त्वद्दर्शनेनेति । तव दर्शनेन मम ईक्षणे चक्षुषी न तृप्यतः न तृप्तिं प्राप्नुतः ।

व्याकरणम् ।

न व्यो जिः । व्येधातोर्जिर्न स्यात् यपि । संव्याय ॥ १२५ ॥ १२६ ॥

कस्त्वं कुतः किमर्थं वा सिंहसंहननागमः ।
ब्रूहि चेदुपकारो मत्प्राणैर्दास्यामि तानपि ॥ १२८ ॥

प्रभाकरः ।

ज्यावोऽस्ति नाथोऽनाथानां भुरिसेन इतीरितः ।
संज्यायास्ते तपो विद्यादयादानार्जवान्वितः ॥ १२९ ॥
भव्यः समो वासवेन योगी दीनानुकम्पनः ।
यशःपटेन संवीयः यः पालयति मेदिनीम् ॥ १३० ॥
तत्सुता सुप्रभा नाम्ना प्रभेवामृतदीधितेः ।
तयोद्याप्यं मद्गृहीतं महासन्तपनव्रतम् ॥ १३१ ॥

तस्य व्रतस्य इतिकर्त्तव्यतां कथाञ्च अहमेव जानामि नान्यः । एतदेव ममागमनकारणम् । राजा प्रियङ्करः । एवमस्तु । अथ पुरबालिकास्तत् श्रुत्वा सत्वरं सुप्रभायै न्यवेदयत् । बालिकाः ।

ईक्षणे कीदृशे कस्मात् अजस्रं अतिसंस्रवदश्रुधारा याभ्यां ते तथा । त्वां आलिङ्गितुं मम भुजौ प्रसरतः प्रसारितौ भवतः । हे अवेक्षक ! मानसमपि त्वत्तोऽन्यं न याति ॥ १२७ ॥

कस्त्वमिति । हे सिंहसंहनन ! आगमः आगतवानसि । वराङ्गरूपोपेतो यः सिंहसंहननोऽपि स इति कोषः ॥ १२८ ॥

ज्याव इति । ज्यावः ज्यां पृथिवीं अवति पालयति इति ज्यावः पृथ्वीपालकः अस्ति अनाथानां नाथः भुरिसेन इति नाम्ना ईरितः ख्यातः । संज्याय वृद्धो भूत्वा आस्ते । ज्यावः ६।, अस्ति ८।, न १।, ॥ १२९ ॥

भव्य इति । भव्यः कुशलयुक्तः । इन्द्रेण तुल्यः । यः मेदिनीं यशःपटेन संवीय आच्छाद्य पालयति । व्यः ६।, समः ६।, वा १।, ॥ १३० ॥

तत्सुतेति । अमृतदीधितेश्चन्द्रस्य प्रभा इव । मद्गृहीतं मम सकाशात् गृहीतं महासन्तपनं नाम व्रतं तया सुप्रभया उद्याप्यं प्रतिष्ठाप्यं ॥ १३१ ॥

व्याकरणम् ।

ज्यावोऽस्ति न । अनयोरपि जिनं स्यात् यपि । संज्याय ॥ १२९ ॥

व्यः समो वा । संपूर्व्वकव्येधातोर्जिवां स्यात् यपि । संवीय ॥ १३० ॥ १३१॥१३१॥

महासन्तपनं नाम किं व्रतं तन्न वयं विद्मः तत् व्रतमुद्यापयितुं तव पुरोहित आगतः । तत् व्रतं मम सकाशात् सुप्रभया गृहीतं तद्व्रतस्योद्यापनविधिमहमेव जानामि नान्य इति स वक्ति । सुप्रभा एतत् श्रुत्वा मम प्राणनाथ एवागत इति निश्चित्य हृष्टासीत् ।

दग्धा शुचेति शिशुवागमृताभिषिक्ता
सान्तर्निगूढमविषह्यमलक्ष्यमन्यैः ।
तापं सवाष्पमजहादभवच्च शीता
दग्धाऽनलेन जलशुक्तिरिवाऽमृताद्रा ॥ १३२ ॥

अथ नृपस्यानुमत्या पश्चद्वारमागतं प्रभाकरं दृष्ट्वा सुप्रभा प्रणम्य कृताञ्जलिः ।

भवतो दर्शनादेव महासन्तपनव्रतम् ।
अङ्गोपाङ्गं विनाप्यद्य आसीदुद्यापितं मम ॥ १३३ ॥

अथ राजा हृष्टः अमात्यान् प्रति ।

व्रतोद्यापस्य सम्भारः क्रियतां कर्म्म कोविदाः ।
पत्रञ्च प्रेष्यतां भद्रैः कुटुम्बाध्यापकान् प्रति ॥ १३४ ॥

अथ वैशाखे मासि सत्ययुगस्य प्रथमेऽहनि प्रभाकरः चतुरस्रे चतुरजनैः सेव्ये चतुराश्रमि चतुर्व्वर्णमये चतुराम्नायस्य चतुःप्रमा-

---

दग्धेति सा सुप्रभा शुचा शोकेन दग्धा इति प्रागुक्तेन शिशूनां वाङ्मयामृतेन अभिषिक्ता सती सवाष्पं नेत्रजलेन सहितं तापं अजहात् तापं नेत्रजलञ्च तत्याज इत्यर्थः । तापं कीदृशं अन्तर्निगूढं हृदये स्थितं अविषह्यं सोढुमशक्यं । अन्यैरलक्ष्यं अज्ञेयं । अनन्तरं शीता च शीतला च अभवत् । अत्र सादृश्यमाह । अनलेन दग्धा अनन्तरं अमृतेन जलेनाद्रा जलशुक्तिः शम्बूका इव । सा यथा अन्तर्निगूढं असह्यं अन्यैरलक्ष्यं तापं वाष्पेण सह जहाति अनन्तरं शीतला च भवति तथेत्यर्थः ॥ १३२ ॥

भवत इति । सुगमम ॥ १३३ ॥

व्रतेति । व्रतोद्यापस्य व्रतप्रतिष्ठायाः सम्भारः सामग्रीसमवधानम ॥ १३४ ॥

अथेति । चतुराश्रमिनः ब्रह्मचारि गृहि वानप्रस्थ भिक्षुकाः । चतुराम्नायस्य

णकनिगमस्य षड्प्रमाणकशास्त्रस्य च विचारे नादिते सदसि सामाजिकेषूपविष्टेषु सभासमीपे तिरस्करिण्यन्तरितमण्डपे सुप्रभाप्रभृतिषु योषित्सूपविष्टासु मध्ये सभं कुशासनमुपाविशत् ॥१२५॥

शिवं शिवामशिवनुदे शिवाय चार्च्चयत् प्रणीय स विधुनामकं शुचिम्।
यदस्पृशत् गुरुरनुको निजाङ्गनां तदुत्थदूषणशमनं जुहाव च ॥१२६॥

अथ प्रभाकरः। भोः कथाः श्रूयतामिति विज्ञाप्य कथितुमारेभे।

सुविच्चणम्पूर्व्वकाले पौनःपुन्ये मखे रतम्।
स्मारं स्मारं यं शतेज्यः स्वैश्वर्य्ये ममतां जहौ ॥ १२७ ॥

नाम्नासीत् स जनार्द्दनः क्षितिपतिस्तस्मिन् वनं प्रस्थिते
तद्राज्ये रिपुभिर्हृतेऽस्य महिषी प्रायात् वनं सात्मजा।
तस्या ज्येष्ठसुतः प्रियङ्कर इति ख्यातः पुलस्त्यात्तसत्
विद्योऽगात् पितृदर्शनार्थमटवीमद्यापि नावर्त्तते ॥ १२८ ॥

चतुर्व्वेदस्य चतुःप्रमाणकनिगमः तर्कशास्त्रं। षट्प्रमाणकं वेदान्त शास्त्रं। तिरस्करणी प्रावारणपटः प्रतिसीरा यवनिका स्यात् तिरस्करणी च सा इति कोषः ॥ १२५ ॥

शिवमिति। स प्रभाकरः अशिवनुदे अमङ्गलच्छेदाय शिवाय च शिवं शिवां दुर्गाञ्च अर्च्चयत्। ततः विधुनामकं शुचिं वह्निं प्रणीय संस्थाप्य गुरुर्ज्येष्ठभ्राता अनुकः कामुकः सन् यत् निजाङ्गनां भार्य्यां अस्पृशत् तदुत्थदूषण शमनं यथा स्यात् तथा जुहाव च ॥ १२६ ॥

सुविदिति। सुवित् सुविद्या तया ख्यातमिति सुविच्चणं मखे यज्ञे रतं अनुरक्तं यं नृपं स्मृत्वा स्मृत्वा शतेज्यः शतमन्युरिन्द्रः स्वीयैश्वर्य्ये ममतां अहीतत्याज। अथम् १।, पूर्व्वकाले ७।, पौनः पुन्ये ७।, ॥ १२७ ॥

नाम्नेति। नाम्ना जनार्द्दनः स प्रसिद्धः क्षितिपतिरासीत्। तस्मिन् नृपे वनं प्रस्थिते सति तस्य राज्ये शत्रुभिर्हृते सति अस्य नृपस्य महिषी सात्मजा सपुत्रा वनं प्रायात् गतवती। तस्याः ज्येष्ठः पुत्रः पुलस्त्यमुनेः सकाशात् आप्ता गृहीता सद्विद्या येन तादृशः सन् पितृदर्शनार्थं अटवीं अगात् अद्यापि न आवर्त्तते न प्रत्यागतोऽभूत् ॥ १२८ ॥

व्याकरणम्।

अथम् पूर्व्वकाले पौनःपुन्ये। स्मारं स्मारं ॥ १२७ ॥ १२८ ॥

एतत् श्रुत्वा प्रियङ्कर आत्मानं स्मरन् हामात: ! हा भ्रातरित्युक्त्वा मूर्च्छामाप। अनन्तरं प्राप्तसंज्ञ: अधैर्य्य: उच्चैरुदन् आह ।

सोऽहं प्रियङ्कर इति प्रथितो दुरात्मा
योऽहं विहाय जननीं सहजावटव्याम् ।
अत्रावसामि सदनाहृतभोगलुब्धो
मुग्ध: पिबन् विषमहो अमृतं विहाय ॥ १३९ ॥

सम्पदैश्वर्य्यराज्यादि सुखं धिगविवेकिनाम् ।
यस्मादिहागमोद्देश्यं विस्मराम्यात्मना सह ॥ १४० ॥

तत: शोकावरुद्धकण्ठ: प्रभाकरं प्रति। ब्रह्मन्! ममानुज: प्रभाकर: किमकरोत् यदि जानासि तद्वद। प्रभाकरस्तं प्रति।
प्रभाकरोऽग्रजं मृगयन्नितस्ततो रत्नं धनुर्य्यूत उरौ पणीकृतम्।
यत् भूरिसेनेन जिगायतद्गृहं नीत्वा व्रजन् तत्पथि दस्युना हत: १४१

अथ प्रियङ्कर: एतदतिदु:सहं श्रुत्वा ।

हा भ्रातराधिनुदसेचनकासुतुल्य !
हा कण्ठहारतरलाऽमृतराशिहासिन् ! ।

सोऽहमिति। प्रियङ्कर इति नाम्ना प्रथित: ख्यात: स दुरात्माहं योऽहं अटव्यां कानने जननीसहजौ जननीं सहजं भातरञ्च विहाय सदनाहृतभोगलुब्ध: सद्मिरनाहृतौ यो भोगस्तस्मिन् लुब्धो मुग्ध: सन् अमृतं विहाय विषं पिबन् सन् अत्र आवसामि ॥ १३९ ॥

सम्पदिति। अविवेकिनां जनानां राज्यादिसुखं धिक्। यस्मात् सुखात् यत् सुखं प्राप्य इहागमोद्देश्यं पितृदर्शनरूपं अत्रागमनोद्देश्यं विस्मरामि। तथा सुखं धिक्। यथा सुखं प्राप्य इहागमोद्देश्यं इह कर्म्मक्षेत्रे आगमनोद्देश्यं विस्मरति तथेति भाव: ॥ १४० ॥

प्रभाकर इति। प्रभाकर: इतस्तत: अग्रं अग्रजं मृगयन् अनुसन्दधत् सन् भूरिसेनेन नृपेण उरौ महति धनुर्द्यूते यत् रत्नं पणीकृतं ग्लहीभूतं तत् रत्नं जिगाय जितवान् तत् रत्नं नीत्वा गृहीत्वा आव्रजन् आगच्छन् सन् पथि दस्युना हत: ॥ १४१ ॥

हाभ्रातरिति। आधिनुत् मनोव्यथाच्छेदक ! हे असेचनक ! हे असुतुल्य प्राणतुल्य !

हानेत्रपुत्तलिवह्निस्वरजीवनात्मन् !
हा वीर ! धीर ! नयनाञ्जन ! दग्धबाहो ! ॥ १४२ ॥

इत्युच्चैरुक्त्वा मुमोह । एतत् दृष्ट्वा सभासदः चित्रार्पिता इवासन् ।

एतर्हि योगी विरतः समाधितः
पुलस्त्य आगन्तुमनाः स्वमाश्रमम् ।
पश्यन् धिया चेष्टितमात्मशिष्ययो-
र्जगाम पाञ्चालपुरीं तयोः पुरः ॥ १४३ ॥

गुरोः स्वर्गात् प्राप्तसंज्ञो वीक्ष्य तं स पुरो गुरुम् ।
ननाम वाष्पपूर्णाक्षस्तथा हृष्टः प्रभाकरः ॥ १४४ ॥

अथ गुरुं प्रति प्रियङ्करः ।

गुरो ! शोचामि नात्मानं मातरं न च सोदरम् ।
यथा तवाशीर्वचसो वैफल्यं प्रति सत्यवाक् ॥ १४५ ॥

पुलस्त्यस्तं प्रति । वत्स ! न मादृशां वचो मिथ्याभवितुमर्हति । किन्तु ।

यदन्वभूतं दुःखानि पुत्रकौ बहुधा युवाम् ।
मनसो मुद्रितत्वं मे युञ्जानस्यात्र कारणम् ॥ १४६ ॥

---

हे कण्ठहारतरल ! हारमध्यगमणे ! वह्निस्वरजीवनात्मस्वरूप !। हे नयनाञ्जन ! हे दग्धिपवाहो ! ॥ १४२ ॥

एतर्हीति । एतत्समये योगी पुलस्त्यः समाधितो योगात् विरतः सन् स्वीयं आश्रमं आगन्तुमना सन् आत्मनः शिष्ययोश्चेष्टितं धिया पश्यन् सन् तयोः पुरः अग्रे पाञ्चालपुरीं जगाम ॥ १४३ ॥

गुरोरिति । प्राप्तसंज्ञः चेतनां प्राप्तः सन् स प्रियङ्करः तं गुरुं पुरोऽग्रे वीक्ष्य ननाम । प्रभाकरोपि हृष्टो ननाम ॥ १४४ ॥

गुरो इति । हे गुरो ! हे सत्यवाक् ! आत्मानं मातरं मातरञ्च न शोचामि यथा तव आशीर्वचसः वैफल्यं शोचामि ॥ १४५ ॥

यदिति । हे पुत्रकौ ! युवां बहुधा दुःखानि यत् अन्वभूत अनुभवं कृतवन्तौ अत्र कारणं युञ्जानस्य समाधिं कुर्वतो मम मनसो मुद्रितत्वं विषयग्रामरहितत्वं ॥ १४६ ॥

अथ प्रियङ्करः । पुत्रकाविति कथं सम्बुध्यते ? । पुलस्त्यः । न ज्ञातवानसि ।

असौ तवानुजो भ्राता मम शिष्यः प्रभाकरः ।
यो जिगाय धनुर्द्यूते स्त्रीरत्नं सुप्रभाभिधम् ॥ १४७ ॥

प्रभाकरं प्रत्याह ।

असौ ज्येष्ठस्तव भ्राता मम शिष्यः प्रियङ्करः ।
वीर ! त्वं निहतो येनाऽमोघशक्त्या महाहवे ॥ १४८ ॥

इति श्रुत्वा प्रियङ्करः भ्रातर्भ्रातरिति स्वानुजं भ्रातरमालिङ्ग्य मूर्ध्नि समुपाघ्राय च तद्विरहजं शोकं जहौ । अथ पुलस्त्यः ।

अच्छाय मातुरन्धायाश्चक्षुषी भवतं सुतौ ।
उद्धृत्य तस्या हृच्छूलं लभेतां पैत्रमासनम् ॥ १४९ ॥

एतत् श्रुत्वा तौ तथा कृतवन्तौ ।

इति महामहोपाध्याय श्रीकृष्णानन्दसरस्वती विरचिते
नाट्यपरिशिष्टनामनाटके महाविद्याकवचमाहात्म्ये
नवमीरात्रिविनोदः ॥ ० ॥

---

असौ इति । सुगमम् ॥ १४७ ॥

असाविति । महाहवे महायुद्धे । अन्यत् सुगमम् ॥ १४८ ॥

अच्छायेति । हे सुतौ ! अच्छाय झटिति अन्धयामातुश्चक्षुषी भवतं । अस्या मातुः हृत्शूलं अर्थात् दुःखरूपशूलं उद्धृत्य पैत्रं सिंहासनं लभेतां ॥ १४९ ॥

इति कविभूषण श्रीअजितनाथ न्यायरत्न विरचिता राजसरणी नाम टीका समाप्ता ।

# अनुशिष्टम् ।

अथ प्रविश्य सशिष्यो वेदान्ती पठति ।

गुरुं नमामि वरदं वाचां वैचित्र्यसिद्धये ।
विद्याद्या गुरुतोभिन्ना न वाचाख्या नु पञ्चवाक् ॥ १ ॥

ओं नमः शिवाय तस्मै स हि अजासङ्ग इच्छायुक् आद्यन्तद्वय-रहित इङ्गति पदाहीनः सह रयवल इलोदय भङ्गकृदिति ॥ २ ॥

गुरुमिति । वाचां वाक्यानाम् । वैचित्र्यसिद्धये वाक्यरचनाकौशलसिद्धये गुरुं नमामि । ननु वाग्वैचित्र्यकामिनां कालिकाया वाग्देवताया वा नमस्कारो युज्यते इत्यत आह । नु भोः आद्या विद्या काली गुरुतो भिन्ना न गुरुमन्त्रदेवतानामैक्यात । वाचाख्या च वाचा आख्या यस्याः सा सरस्वती च तद्भिन्ना न तयोर्बीजस्यैक्यादिति भावः । काली सरस्वती च कीदृशी पञ्चवाक् पञ्च विस्तृता वाक् यतः सा तथा वाक्यस्फूर्त्तिजनिका । तेषां गद्यानि पद्यानि च मुखकुहरादुद्गच्छन्तीव वाच इति श्रवणात् पद्ये । विद्येत्यन्तपूर्व्वभागः मङ्गलाचरणम् । ( च आद्या ) आद्याः १।॥, गुरुतः ५।, अभिन्नाः १।॥, नव १।॥, अचाख्याः १।॥, । पञ्च १।॥, वा १।, अक् १।, ॥ २ ॥

ओमिति । तस्मै सर्व्वजनप्रसिद्धायेत्यर्थः, तस्य नमस्यताप्रयोजकमैश्वर्य्यं दर्शयति । स महेश्वरः अजा मूलप्रकृतिः तत्सङ्गतः सन् इच्छायुक् "बहु स्यां प्रजायेय"मितीच्छायुक्तो भवति । आद्यन्तद्वयरहितः नित्य इत्यर्थः । स ह स च पदाहीनोऽपि चरणहीनोऽपि रयवलः रयो वेगो विद्यतेऽस्येति स तथा तादृशः इङ्गति चलति । "अपाणिपादो जवन" इति श्रुतेः । इला पृथ्वी तस्या उदयभङ्गकृत् सृष्टिसंहारकृत् । पद्ये । तस्मै इत्यन्त पूर्वभागः मङ्गलार्थः । इच्छायुगिति छिदकारकस्य गतिपदेति गमनप्रापस्य उदय-भङ्गकृदिति निकृत्साहच्छेदकस्य सम्बोधनम् । सः १।, ( हि ) अच् १।, ( अपसङ्ग )

व्याकरणम् ।

आद्या नवाचाख्याः । अकाराद्या नव अच् संज्ञाः स्युः । पञ्चवाक् । अकाराद्याः पञ्चैव अक् संज्ञाः स्युः ॥ १ ॥

स हि अजासङ्ग इच् । स एव अच् आसङ्गः अकारेण अयुक्तश्चेत् इच् । आद्यन्त-द्वयरहित इङ् । स च अच् आदिना अकारेण अन्तद्वयेन ऐकारौकाराभ्यां रहितश्चेत्

ततः प्रविश्य स्नातोद्या वेदान्तिनं प्रति।

अध्वन्निह खलु अनुभूतसंसारस्वरा एजन्ते चत्वारो वर्णा अतः परे चेकुनामधामानि भवन्ति अतो विप्रवाह्य वाचो बोधो भवति यन्नाम शृण्वतस्तस्माच्च जायन्ते मोक्षवर्गान्ता वरलाभाः संसारवणिजां केऽन्ये ॥ ३ ॥

---

आमज्ञः १।, इच् १।, । आद्यन्तद्वयरहितः १।, इङ् १।, ॥ अहीनः १।, सहरयवलः १।, इल १।, ॥ २ ॥

अध्वन्निति। हे अध्वन्! इह काश्यां अनुभूतसंसारस्वराः अनुभूता ज्ञाताः दारादिमयसंसारजन्याः स्वरा उपतापा यैस्ते तथा संसारिण इत्यर्थः। स्वर इति स्वृ उपतापे इत्यस्य अलि रूपम्। तादृशाश्चत्वारो वर्णा ब्राह्मणादय एजन्ते कम्पन्ते। अतः परे च परकाले च ईकुनामधामानि कुत्सितनामकानि स्थानानि नरकनामस्थानानि भवन्ति प्राप्नुवन्ति। ईकु इति ईजङ् कुत्से इत्यस्य क्विपि रूपम्। भवन्तीति भूञ्प्राप्तौ इत्यस्य रूपम्। अतो वाचो वचनानि विप्रवाह्य विशेषेण प्रवाह्य अविश्रान्तं कथयेति यावत्। यं वाक्प्रवाहं शृण्वतो जनस्य बोधो भवति यतो बोधात् मोक्षवर्गान्ता मोक्षघटितवर्गस्य कामक्रोधादिसमूहस्य अन्ता नाशा जायन्ते संसारवणिजां केऽन्ये वरलाभाः! उत्तमलाभाः स्युः। अर्थादेत उत्तमो न कोऽपि लाभोऽस्ति। पक्षे। अनुभूतसंसार इति, विप्र इति, च इति, आ इति, च सम्बोधनम्॥ वाकारः अवधारणे। अतः पश्चात् यन्नाम या संज्ञा भवति अतःपरे शृणु इत्यर्थः। स्वराः १॥, एच् १।, अन्ते ७, चत्वारः १॥, वर्णाः १॥, ॥ अतः ५।, परे ७।, (च) इकुनामधामानि १॥, भवन्ति ८॥, ॥ इयवायावः १॥, अवः १।, ॥ जायन्ते ८॥, अमः १।, (च) वर्गान्ता वरलाः १॥, ॥ ३ ॥

व्याकरणम्।

इङ्। अहीनः स ह र य व लः इल। स च अच अकारेण हीनः हरयवलैः सहितः इल संज्ञः स्यात् ॥ २ ॥

स्वरा एजन्ते चत्वारो वर्णाः। अन्ते स्थिताश्चत्वारः स्वरवर्णा एच्। अतः परे चेकुनामधामानि भवन्ति। अकारात् परस्थाश्चत्वारो वर्णा इकनामास्पदानि भवन्ति। इयवायावोऽवः। इयवायाश्च अच् च अवः स्यात्। जायन्ते मोक्षवर्गान्ता वरलाः। वर्गान्ताः पञ्च तथा भवः रलौ च अमसंज्ञाः स्युः। इकारोऽवधारणे ॥ ३ ॥

संसारक्लेशदावो जवझ्झाभामोद्वेग-मोहशोक-

प्रभञ्जनवृद्ध एव स इह वो वाचा मुक्तोदवारिदेन शाम्यतु ॥ ४ ॥

वेदान्तौ । नमस्तस्मै पुरुषाय मध्यमायान्ते-

ऽवशेषायाद्याय लोहितसिताऽसिताय ॥ ५ ॥

राजवाडव ! जगदास्ते सुसुप्तियुगिव स्वधामचारिभिर्लुप्यमानं

परमार्थमनवदधदतः सुप्तिं समुज्झ भोः जवोत्तराः पञ्चा-

शुगाद्याः स्वधामचारिण इति स्मर्त्तव्यम् ॥ ६ ॥

संसारेति । संसारक्लेशरूपो दावो वह्निः, जवो वेगवान् यो झः प्रचण्डानिलस्तस्येव भा दीप्तिर्येषां ते जवझ्झाभास्तादृशा ये अमोद्वेगमोहशोकप्रभञ्जना वायवस्तैर्वृद्धः परिवर्द्धितः । अमो रोगः, उद्वेगश्चिन्ता, मोहः अज्ञानं, शोकः अनुतापः, एते एव प्रभञ्जना वायवः तैर्वर्द्धितः, सह स तु वह्निर्वो युष्माकं वाचा वचसा मुक्तोदवारिदेन मुक्तम् उदकं येन तादृशेन वारिदेन शाम्यतु । झः प्रचण्डानिले वर्षे इति कोषः । मोहेत्यादिकं यथाकथञ्चित् योजनीयम् । जवः १।, जवझ्झामः १॥, ॥ ४ ॥

नम इति । तस्मै पुरुषाय नमः । कथम्भूताय आद्याय जगतः प्रथमाय, तथा मध्यमाय मध्ये स्थिताय अन्ते अवशेषाय प्रलये अवशिष्टाय । लोहितसिताऽसिताय रञ्जनात्मकं लोहितं रजः, प्रकाशात्मकं सितं सत्त्वं, आवरणात्मकं असितं तमः, तदेतद्-गुणत्रयाधिष्ठानाय ईश्वराय इत्यर्थः । पक्षे । ह्नितेत्यादिकं सं । वशेषाः १॥, याद्याः १॥, यत्नः १।, ॥ ५ ॥

राजेति । हे राजवाडव ! द्विजश्रेष्ठ ! जगत् सुसुप्तियुगिव निद्रायुक्तमिव आस्ते । अत्र हेतुमाह स्वधामचारिभिः स्वगेहचारिभिः । प्रकृतार्थपक्षे स्वशरीरचारिभिः । परमार्थं धनम् । प्रकृतपक्षे परमपुरुषार्थमित्यर्थः । अनवदधत् अवधानमकुर्व्वत् । अतः कारणात् भोः सुप्तिं समुज्झ त्यज । जवोत्तरा जवो वेगः उत्तर उत्तमो येषां ते अतिवेगयुक्ताः पञ्चाशुगाद्याः कामाद्याः । गृहदेहत्विट्प्रभावा धामानीत्यमरः । पक्षे ।

व्याकरणम् ।

जवौ जवझ्झामः । जवझ्झाभ्यां सह अमः अवसंज्ञः स्यात् । अङ्गो वाचामुक्तः । स अवः अथा रहितः इव संज्ञः स्यात् । वा एवार्थे ॥ ४ ॥

वशेषा याद्या यत्नः । याद्या यकाराद्या वशेषा वकारान्ता वर्णा यत्न संज्ञाः स्युः ॥ ५ ॥

सत्पथावलम्बिनो नाकाद्या अचरा हस्ते ।
अहयावसस्तु भवन्ति पर्य्यया: ॥ ७ ॥
कपटसुहृदः पोष्यवर्गा आपोषात् पुरुषस्य प्रवणा:
स च तं कपटञ्च पश्चादेवाशक्तो जानीहि ॥ ८ ॥
सावधानस्य विशेषतोऽवगच्छतश्च तथा जायन्तेऽमाटच्छठेन

रा इति दातुः सम्बोधनम् । सुधिं ससुदिति सुधिं प्रतिश्वर्ययुक्तस्य सम्बोधनम् । जवाः १॥, डवजगदाः १॥, ते १॥, ॥ झभः १॥, जवौत्तराः १॥, पञ्च १॥,॥ ६ ॥

सदिति । सत्पथावलम्बिनो जनस्य नाकाद्याः स्वर्गाद्या लोका अचरा अचया हस्ते वसन्तीति शेषः । अहयावसस्तु हयः पन्था न हयः अहयस्तस्मिन् कुपथे आवसी वासिनो जनस्य पर्य्यया विपरीता नरकाद्या लोका अचरा भवन्तीत्यर्थः । अतिपातस्तु स्यात् पर्य्यय उपात्यय इति कोषः । पक्षे । अवशिष्टं सम्बोधनं तच्च यथाकथञ्चित् सङ्गमनीयम् । काद्याः १॥, अचराः १॥, हस् १।, ॥ ते १॥, अहयाः १॥, वसः १।, (तु) भवन्ति ८॥, ॥ ७ ॥

कपटेति । कपटसुहृदः कपटमित्राणि आपोषात् पोषणपर्य्यन्तं प्रवणा अनुगता भवन्तीति शेषः । स च पुरुषः तं कपटं कैतवं अशक्तः पोषणादावशक्तः सन् पश्चा-देवजानीहि अतिशयं जानाति न तु आपातत इत्यर्थः । जानीहीत्यत्र मुहुर्भृशार्थे हिलस्वध्वमिति सूत्रेण अतिशयार्थे हिः । पक्षे । अदेवाशक्तः अक्रीडाशक्तो जानीहीति शिष्यावधानार्थम् । सचतं १।, कपटं १।, चपः १।, ॥ ८ ॥

ननु स्वधामचारिभ्यः चौरेभ्यः कथं परमार्थरक्षणं भवतीत्याकाङ्क्षायामाह साव-

## व्याकरणम् ।

जवा डवजगदास्ते । ते डवजगदा जवाः स्युः । झभौ जवौत्तराः पञ्च । जव परवर्णाः पञ्च झभसंज्ञाः स्युः ॥ ६ ॥

काद्या अचरा हस् । ककाराद्या वर्णा हस् संज्ञाः स्युः । ते अहया वसस्तु भवन्ति । ते ककाराद्या वर्णा हकार यकाररहिताः वस संज्ञाः स्युः ॥ ७ ॥

सचतं कपटं चपः । चकारतकारेण सह कपटं चपसंज्ञं स्यात् ॥ ८ ॥

**कामाद्येन स्वधामचारिणा जिह्मगेनेव न क्षतय: ॥ ९ ॥**
**समाधियुजो निर्ज्जितेन्द्रियवर्गान् पञ्चगन्धवहोञ्चाररहितानवेहि**
**समुज्झपञ्चविषयानुभवानपुनर्दुःखभाजः ॥ १० ॥**
**अरे! कायलवर्गात्मकं यममवेहि ॥ ११ ॥**

---

धानेति । विशेषतोऽवगच्छतो जानतः सावधानस्य जनस्य स्वधामचारिणा जिह्मगेन सर्पेणेव कामक्रोधादिना तथा क्षतयो हानयो न जायन्ते कीदृशेन अमाटत्कठेन अमा सह अटन्तीति अमाटनाः ते च ते शठाश्चेति ते तथा ; अमा सह समीपे चेति कोषः । पक्षे । अवग इति प्राणिनः कामाद्येन—न क्षतय इति साधुना सम्बोधनं ॥ क्षतः १॥, क्षतयः १॥, जायन्ते ८॥, अमा ११, ट कठेन ३१, ॥ ९ ॥

ननु कामाद्यैः कथमतिरिच्यत आह समाधीति । समाधियुजो योगयुक्तान् जितेन्द्रियान् अपुनर्दुःखभाजोऽवेहि जानीहि । तथाहि अजितेन्द्रियाः परमदुःखभाजो भवन्तीति भावः । कीदृशान् पञ्चानां गन्धवहानां प्राणादिवायूनाम् उच्चारः शरीरान्तः प्रचारस्तेन रहितान् संयतप्राणानित्यर्थः । समुज्झस्त्यक्तः पञ्चानां विषयाणां रूपरसगन्धस्पर्शशब्दानामनुभवो ज्ञानं यैस्ते तथा तान् । समुज्झ इति उज्झ श त्यागे इत्यस्य कर्म्मणि घञि रूपं । पृषदश्वो गन्धवह इत्यमरः । वर्गान् २॥, पञ्च २॥, गन्धवहोञ्चाररहितान् २॥, अवेहि ८।, ( समुत् ! ) झपं २।, ॥ १० ॥

अरेति । अरे सम्बोधनम् । कायलवर्गात्मकं कायो विद्यते येषां ते कायलाः शरीरिणः तेषां यो वर्गः समूहस्तस्यात्मकं नाशकं यममवेहि । तथाहि शरीरमनित्यं जानीहीति भावः । पक्षे । अरेऽका इति दुःखिनां सम्बोधनम् । यलवर्गात्मकं २।, यमं २।, अवेहि ८।, ॥ ११ ॥

व्याकरणम् ।

क्षतयस्तथा जायन्तेऽमाटत्कठेन । ट क ठेन अमा सह च तथाः चकारसकारथकाराः क्षतो भवन्ति ॥ ९ ॥

वर्गान् पञ्च गन्धवहोञ्चाररहितान् अवेहि समुज्झपम् । अनुनासिकवर्णपञ्चरहितान् वर्गान् पञ्च झपमवेहि । समुदिति शिष्यसम्बोधनम् ॥ १० ॥

यलवर्गात्मकं यममवेहि । यलस्तथा वर्गान्तकं अ ण न ङ म रूपं पञ्चकं यमसंज्ञकं जानीहि ॥ ११ ॥

सर्व्वदा य इह यमासक्तो ह स एव समुज्झसोप-
तापपुनर्भवभीति मुट् ॥ १२ ॥

उष्मनिर्म्मुक्तः सहसाख्योऽयपो भवत्यष्टादशव्यसन-
निर्म्मुक् सर्व्वानुरक्तिभागिहामुत्र च न शोकभाक् ॥ १३

श्रुतमस्ति वा लेखपस्य पतत्परपक्षवाणाहति मुट् ॥ १४ ॥

सर्व्वदेति। इह लोके योजनः सर्व्वदा यमासक्तः समाधियुक्तः स एव समुज्झ-सोपतापपुनर्भवभीति मुट् समुज्झ उज्झित उपतापेन सह पुनर्भवभीति मुट् मोहो येन स तथा। मुट् इति मुहधातोरूपं। ह: पादपूरणे। पचे। सर्व्वदाय इति सर्व्वस्वदातुः सम्बोधनम्। समुदिति अपतापेत्यादिकस्य सं। यमासक्तः १।, हसः १।, (एव) भसः १।, ॥ १२ ॥

उष्मेति। उष्मनिर्म्मुक्त उष्मस्वभावरहितः सहसाख्यः हर्षेण हास्येन सह वर्त्तमाना आख्या यस्य स तथा अयपः शुभावहविधिपालकः अक्षक्रीडादिवाक्पारुष्यादि अष्टादश-व्यसनरहितः सर्व्वानुरक्तिभाक् सर्व्वेषामनुरागविषयो जन इहामुत्र च न शोकभाक् भवति। उष्मनिर्म्मुक्तः १।, सः १।, हसाख्यः १।, यपः १।, भवति ८।, ॥ १३ ॥

श्रुतमिति। लेखान् देवान् पातीति लेखप इन्द्रः सोऽपि पतन्तो ये परपक्षबाणास्तेषां अनुभूतकामस्य शरासेर्वा या आहतिराघातस्तेन मुट् मुग्ध आसीदिति शेषः। लेखाः अदितिनन्दना इत्यमरः। पचे। वाणी इति सं। खपः १।, अपतत्परपक्ष १॥, ॥ १४ ॥

व्याकरणम्।

यमासक्तो हस एव भसः। यमरहिता हसः भसः स्यात्। समुदिति शिष्य-सम्बोधनम् ॥ १२ ॥

उष्मनिर्म्मुक्तः स हसाख्यो यपो भवति। उष्मसंज्ञाः शषसहास्तैर्निर्म्मुक्तः स हसाख्यः पूर्व्वोक्तहसनामकवर्णसमूहो यपः स्यात् ॥ १३ ॥

खपः अपतत्परपक्ष। अपतत्परपक्ष च खपः स्यात् ॥ १४ ॥

दक्षमखसोऽपि योगग्रस: स्वपयोनिध्यतिवेल इति श्रूयते ॥ १५ ॥

इत: कस्मैचिदपि कार्य्याय प्रकृति-
मुखे प्रयुक्ता अक्षरा दृगविधेया ॥ १६ ॥

शृणु यथावत् स्वर्णमुतं लघुगुर्व्वतिमात्रं भवति गुरुतुल्यार्घभाक्
तथा साधुसंसर्गभागपि ॥ १७ ॥

दक्षेति । दक्षस्य मखं स्यति नाशयतीति दक्षमखस: शिव: योगग्रस: योगेन ग्रसति निद्रातीति स तथा । ग्रस स्वापे इत्यस्य रूपम् । तादृश: शिवोऽपि स्वपयो निध्यतिवेल: खमिन्द्रियं तदेव अतार्थ्यत्वेन दुष्परिहारत्वेन च पयोनिधिरिव स एव अतिवेलोऽतिक्रान्तमर्य्यादो यस्य स तथा । अतिवेल इति अतिक्रान्ता वेला मर्य्यादा येन स तथा । इति श्रूयते । वेला कालमर्य्यादयोरप्यमर: । पक्षे । स्वप इत्यनन्तरं विसर्गस्य ओकारे परे यकार: । ओ सम्बोधने । निध्यतिवेल इति अतिशयनिधि-स्वामिन: सं । खस: १।, (अपि) योगग्रस: १।, स्वप: १।, ॥ १५ ॥

इत इति । इत: कारणात् कस्मैचिदपि कार्य्याय यत्किञ्चिदपि प्राप्तुं प्रकृतिमुखे प्रकृति: सत्त्वरजस्तमसां साम्यावस्था तदादौ महदादौ जडे अपुरुषार्थसाधनीभूते वस्तुनि श्लेषात् कामिनीमुखे च । अक्षरा निश्चला दृक् दृष्टि: प्रयुक्ता क्षिप्ता अविधेया न कार्य्येत्यर्थ: । वाकार एवार्थे । पक्षे । दृगविधेया इति ज्ञानवतामविनययाज्ञिका सम्बोधनम् । इत: १॥, कस्मैचित् ४।, कार्य्याय ४।, प्रकृतिमुखे ७।, प्रयुक्ता: १॥, अक्षरा: १॥, ॥ १६ ॥

शृण्विति । यथावत् स्वर्णमुतं शोभनोऽर्घो मूल्यं येषां तानि स्वर्णानि महामूल्य-द्रव्याणि तत्र मुतं मिश्रीभूतं लघुवस्तु अपि गुरु सत् अतिमात्रम् अतिशयं यथा स्यात्

व्याकरणम् ।

खसोऽपि योगग्रस: खप: । योग: ग्रसेन यस्य तादृश: अर्थात् ग्रसयुक्त खप: खस: स्यात् । अ इ उ ऋ लृ क, ए ओ ङ ऐ औ च, ह य व र ल, ञ ण न ङ म, झ ढ ध घ भ, ज ड़ द ग ब, ख फ छ ठ थ, च ट त क प, श ष साद्यान्ताख्या: । एषां मध्ये ये वर्णास्ते आदिवर्णान्तवर्णसमाहारसंज्ञा स्यु: । सुं ॥ १५ ॥

इत: कस्मैचित् कार्य्याय प्रकृतिमुखे प्रयुक्ता अक्षरा: । कस्मैचिदपि कार्य्याय प्रकृतिप्रत्ययादौ प्रयुक्ता वर्णा इत् संज्ञा: स्यु: ॥ १६ ॥

शिष्याः ।

ब्रह्मन् ! वर्णानामेकप्रभवत्वेन कुतो न सर्व्वेषां साम्यम् ॥ १८ ॥

वेदान्ती । नैवं विभागानुपपत्तेः । किन्तु एकावयवविशेष-प्रभवत्वेन हि वर्णानां साम्यम् ॥ १९ ॥

स तु विशेषो महाजनानां संग्रहतोऽवगन्तव्यः ॥ २० ॥

क्वचिदतथाविधोऽपि कार्य्यवशतो विभिन्नजातिसन्निवेशाच्च तत्साम्यमाप्नोतीति विशेषोऽनुसन्धेयः ॥ २१ ॥

---

तथा गुरुतुल्यार्घभाक् भवति तथा साधुसंसर्गभाक् लघुरपि गुरुतुल्यार्घभाक् गुरुतुल्य पूजाभाक् भवति । मूल्ये पूजाविधावर्घ इत्यमरः । यावत् १।, स्वर्घम् तं लघुगुर्व्वति-मात्रं १।, भवति ८।, ॥ १७ ॥

ब्रह्मन्निति । वर्णानां ब्राह्मणादीनां एकस्मादेव ब्रह्मणः प्रभवत्वेन । वर्णानां ६॥, एकप्रभवत्वेन ३।, कुतः ५।, न १।, सर्व्वेषां ६॥, साम्यं १।, ॥ १८ ॥

नैवमिति । विभागानुपपत्तेः ब्राह्मणक्षत्रियत्वादिना विशेषविभागानुपपत्तेः । किन्तु एकावयवविशेषा ये ब्रह्मणो मुखबाहूरुपादास्तत्प्रभवत्वेन ब्राह्मणादीनां साम्यम् । महा-जनानां मन्वादीनां संग्रहात् स च विशेषोऽवगन्तव्यः ॥ १९ ॥ २० ॥

क्वचिदिति । अतथाविधोऽपि एकावयवाप्रभवोऽपि क्वचित् विश्वामित्रादीनामिव कार्य्यवशतः तपोबलात् क्वचित् विभिन्नजातिसन्निवेशादपि भिन्नजातिषु दृढतरसंसर्गात् तत्साम्यमाप्नोति ॥ २१ ॥

व्याकरणम् ।

यावत् स्वर्घम् तं लघुगुर्व्वतिमात्रं भवति । अतिमात्रं विमात्रम् ॥ १७ ॥

वर्णानामक्षराणामेकप्रभवत्वेन आकाशप्रभवत्वेन । इति पूर्व्वपक्षः ॥ १८ ॥

एकावयवविशेषप्रभवत्वेन वर्णानां साम्यम् । एकावयवविशेषाः कण्ठतालुकादय-स्तत्प्रभवत्वेन साम्यमित्यर्थः ॥ १९ ॥

क्वचिदतथाविधोऽपि कार्य्यवशतोऽपि भिन्नजातिसन्निवेशाच्च तत्साम्यमाप्नोतीति विशेषोऽनुसन्धेयः । अतथाविधो यथा ऋकार ऌकारयोः साम्यं कार्य्यवशात् गुणादि-रूपकार्य्यार्थम्, एकारादीनां तालव्यमध्ये पुनः सन्निवेशादिकारैकारयोः साम्यम् ॥ २१ ॥

तेषाञ्च यो येन समः स तस्य तत्र वा ततः।
स्निग्धो विक्रमिता लब्धभार्य्यश्चेत् तत् प्रशस्यते॥ २२॥
एतद्विपर्य्यये कीर्त्तिं माभविद्धं कदाचन।
सत्सम्मतं कर्म्मकुर्व्वन्न वाच्यः स्याद्धि सर्व्वतः॥ २३॥
आपद्यपि सुनृतवागनुबन्धनिर्म्मुक्त आदृतः सर्व्वत्र
सवर्णभाक् भवति च पश्चोदित् विबुधलोकेऽर्कवत्॥ २४॥

---

तेषामिति। तेषां ब्राह्मणादीनां मध्ये यो जनो येन समः कुलसौन्दर्य्यैश्वर्य्यादिभिस्तुल्यः स्यात् स जनस्तस्य स्निग्धो वयस्यश्चेत् तत् तदा प्रशस्यते। तथा स जनस्तत्र तस्य समीपे विक्रमिता विक्रमकर्त्ता चेत् तदा प्रशस्यते। तथा स जनस्तस्मात् लब्धभार्य्यश्चेत् तदा प्रशस्यते इति क्रमेणान्वयो बोद्धव्यः। वयस्यः स्निग्धः सवय इत्यमरः। तेषां ६॥, (च) यः १।, येन ३।, समः १।, स १।, तस्य ६।, तत्र ७।, (वा) ततः ५।, ॥ २२॥

एतदिति। उत्तमाधमयोर्म्मैत्र्यादिकरणे कीर्त्तिं 'माभविद्ध' मा प्राप्नुथ। भूञ् प्राप्तावित्यस्य रूपमिदम्॥ २३॥

आपद्यपीति। आपद्यपि विपत्कालेऽपि सुनृतवाक् प्रियसत्यवाक् अनुबन्धनिर्म्मुक्तः दोषरहितो यो जनो भवति स सर्व्वत्र आदृतो भवति वर्णभाक् स्तुतिभाक् भवति तथा विबुधलोके स्वर्गे अर्कवत् पश्चोदित् परकाले उदित् उदितो भवति। पश्चात् उदित् पश्चोदित् पश्चार्द्धेन प्रविष्ट इतिवत्। वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णन्तु वाक्षरे इत्यमरः। पक्षे। सुनृतव इति सुनृतयुक्तस्य सं। विबुधेत्यादिकाल सं। अक् १।, अनुबन्धनिर्म्मुक्तः १।, आदृतः १।, सर्व्वत्र ७।, सवर्णभाक् १।, भवति ८।, अप: १।, (च) उदित् १।, ॥ २४॥

व्याकरणम्।

तेषाञ्च यो येन समः स तस्य तत्र वा ततः॥ २२॥

यथा अभविद्ध सम्मतं स्याद्धि॥ २३॥

अगनुबन्ध निर्म्मुक्त आदृतः सर्व्वत्र सवर्णभाक् भवति चपश्चोदित्। अनुबन्धरहितोऽक् उदित् चपश्च सवर्णभाक् भवति॥ २४॥

अरेऽबलादेशोऽणुश्चानुष्ठीयतामीशः ॥ २५ ॥

ज्ञानभृन्नित्यसुखवृद्धिरैजालाऽरोच इति जानीहि ॥ २६ ॥

यतः ।

प्रकृतेर्यः परः सत्यः स एव प्रत्ययः सताम् ॥ २७ ॥

यदिह कर्णधारो भवोदन्वति निष्परोपाधि सुदुष्प्रापम् ।

अरे इति । अरे अबल ! ज्ञानदुर्ब्बल ! ईशः ईश्वरस्य आदेशः विधिनिषेधरूपा आज्ञा अणुश्च स्वल्पोऽपि अनुष्ठीयताम् । लवलेशकणाऽणव इत्यमरः । पचे । इश इति प्रभूनां सं । अर् ए ओ अल् आदेशः १।, अणुः १।, ( च ) अनुष्ठीयतां ८।, ॥२५॥

ज्ञानेति । ज्ञानभृत् ज्ञानी नित्यसुखवृत् मुमुक्षुः नित्यसुखं मोक्षं वृणोतीति स तथा । हि अवधारणे । तादृशो जनः रैजालाऽरोचः रा धनं तस्य जालं समूहः ऐश्वर्य्यमिति यावत् । तस्मै न रोचते यः स तथा इति जानीहि । वृद्धिः १।, ऐच्, आल्, आरः १॥, अचः ६।, ( इति ) जानीहि ८।, ॥ २६ ॥

धननिस्पृहत्वे हेतुमाह । प्रकृतेरिति । प्रकृतेर्म्मायायाः परो यः स एव ईश्वरः सत्यः सतां साधूनां प्रत्ययश्च प्रतीतिविषयश्च । प्रत्यय इति कर्म्मणि अल् प्रत्यये सिद्धम् । तथा हि मायापरिणामस्य ऐहिकसुखसाधनस्य धनस्यानित्यतया तस्मै साधवो न रोचन्ते इति भावः । प्रकृतेः ५।, यः १।, परः १।, सः १।, त्यः १।, सः १।, ( एव ) प्रत्ययः १।, सतां ६॥, ॥ २७ ॥

प्रकृतेः परो यः स एव सत्यः स क इत्यत आह यदिति । इह भवोदन्वति भव-रूपसमुद्रे यत् ब्रह्म वस्तु कर्णधारः तदेव ब्रह्म सम्प्रति इदानीं गिरो वचसः मनसश्च

## व्याकरणम् ।

अरेबलादेशो गुणश्चानुष्ठीयताम् । अर, ए, ओ, अल, आदेशो गुणश्च इत्यनुष्ठीयताम् ॥ २५ ॥

वृद्धिरैजालारोऽच इति जानीहि । अच स्थाने ऐच् आल् आर एते वृद्धिसंज्ञाः स्युः ॥ २६ ॥

प्रकृतेर्यः परः स त्यः स एव प्रत्ययः सताम् । प्रकृतेः परो जायमानो यः स त्यसंज्ञः स्यात् । स एव प्रत्ययसंज्ञः प्राचाम् ॥ २७ ॥

अवनिपर्य्यभिव्यापि सम्प्रति गिरो मनसोऽपि विषयी कुरु तत् ॥२८॥

क्वचिदर्थे न केषाञ्चित् स सेच्छो भक्तबान्धवः ।
यस्तं सुस्तौति मतिमान् स तत् ह्रुत परिसेवते ॥ २९ ॥

अध्रुवोऽसौ स्वादिधातुमयप्रपञ्चो धव इति ध्रुवं मन्यते ।
पूर्व्वदृग्भिस्तु एते सर्व्वे धातव इति दृश्यन्ते ॥ ३० ॥

विषयीकुरु । चक्षुरविषयत्वात् केवलं वाङ्मनसयोर्व्विषयं कुरु इत्यर्थः । अत्र हेतुमाह । कीदृशं निष्करोपाधि नास्ति परमन्यत् शरीरादि उपाधिर्यस्य तत्तथा विशुद्धचैतन्यस्वरूपमित्यर्थः । अतएव सुदुष्प्रापम् । ननु तदा क्वैतत् प्राप्यमित्यत आह अवनिपर्य्यभिव्यापि सर्व्वतोभावेन पृथिवीव्यापकं सर्व्वत्रैवास्त इत्यर्थः । पद्ये । यत् यत्नवान् सन् इह मदुक्तौ कर्णधारी भव कर्णं पातय । तत् नूनं गिरो मनसोऽपि विषयीकुरु ॥२८॥

ननु तदा तस्मै कर्णधाराय किं तरपण्यं देयमित्यत आह क्वचिदिति । भक्तबान्धवः स ईश्वरः केषाञ्चिदपि जनानां क्वचिदप्यर्थे धने सेच्छो न सस्पृहो न । ननु तदा कथं तस्य तुष्टिरित्यत आह यो जनस्तमीश्वरं सुस्तौति स तस्य ह्रुत् परिसेवते गच्छतीत्यर्थः । अत्र परेर्गतिद्योतनान्न गिसंज्ञा ॥ २९ ॥

अध्रुव इति । असौ स्वादिमयप्रपञ्चः पृथिव्यादिपञ्चभूतमयप्रपञ्चो विश्वं अध्रुवम् अनित्यं धवो मनुष्यस्तं प्रपञ्चं ध्रुवं नित्यं मन्यते । पूर्व्वदृग्भिस्तु सूक्ष्माद्यकालज्ञानिभिस्तु एते सर्वे घटपटादयः धातवः पञ्चभूतमात्राण्येव दृश्यन्ते । महाभूतानि तद्गुणाः, इन्द्रियाण्यप्यविकृतिः शब्दयोनिश्च धातव इति, पतिशाखिनरा धवा इति, दृक् ज्ञाने ज्ञातरि त्रिष्वित्यमरः ॥ ३० ॥

## व्याकरणम् ।

उत्, अनु, अति, निर्, परा, उप, अधि, सु, दुर्, प्र, अप, अव, नि, परि, अभि, वि, आ, अपि, सं, प्रति, गिः । एते विंशतिर्गिसंज्ञाः स्युः ॥ २८ ॥

क्वचिदर्थे न केषाञ्चित् । केषाञ्चिदुपसर्गाणां क्वचिदर्थे गिसंज्ञा न स्यात् । यथा सुस्तौति परिसेवते इत्यादि ॥ २९ ॥

स्वादिधातुमयप्रपञ्चो धव इति ध्रुवं मन्यते पूर्व्वदृग्भिस्तु एते सर्व्वे धातव इति दृश्यन्ते ॥ ३० ॥

शिष्यः । यत ईशानुरक्तिः स्यादित्यादिश महामते ! ॥ ३१ ॥

वेदान्ती । श्रूयतां यदुक्तं जनकेन कश्चिद्वानप्रस्थाश्रमिणं प्रति ।

प्रशस्तक्त्तद्व्वान्येकद्विबहुष्वेकशो विहितसमयं कर्षणेषु
क्तेष्वेव शस्यं फलति तथा बहुशः साधुसङ्गपुराणेति-
हासश्रवणतीर्थाटनादिभिर्व्विशुद्धात्मनि उप्तोऽध्यात्मोपदेश
ईशानुरक्तिं फलति न तु वनवासमात्रेणेति ॥ ३२ ॥
विद्धि वृत्तं सक्तिकन्दं नामान्यत् दृश्यते किम् ।

यत इति । यतो यस्मात् कर्मणः ईशानुरक्तिः परमेश्वरे अनुरागो भक्तिरिति यावत् । पचे । श्रमहामते इति शान्तित्यक्तशाकवत: सं । क्तिः १।, स्यादि १।, श्यादि १।, ॥ ३१ ॥

प्रशस्तेति । हे वाण्येक ! वानिको वानप्रस्थाश्रमिणां मध्ये एक श्रेष्ठ ! विहितसमयं यथाकालं एकशः एकैकक्रमेण द्विबहुषु कर्षणेषु कृतेष्वेव प्रशस्तकत् प्रशस्ता अनूषरा या क्तः भूमौ तां अतति प्राप्नोतीति तत्तथा प्रशस्तभूमौपाप्तमित्यर्थः उप्यते यत् तत् वप उप्त-मित्यर्थः । वप् इति वपधातोर्विच् प्रत्यये रूपम् । तथा च प्रशस्तभूमिप्राप्तं उप्तं वीजं शस्यं फलति बह्वनीहशं फलति । तथा बहुशो बहुवारं साधुसङ्गादिभिर्विशुद्धात्मनि अध्यात्मोपदेशः आत्मानमधिकृत्य प्रवर्त्तमानो य उपदेशः स एव ईश्वरानुरक्तिं फलति । क्त-द्व्वानि १॥, एकद्विबहुषु ७॥, एकशः १।, ॥ ३२ ॥

ननु अस्तां साधुसङ्गेन किमित्यत आह विद्धीति । वृत्तं सदसच्चरित्रं सक्तिकन्दं सक्तिः सङ्गः स एव कन्दो मूलं कारणं यस्य तत् तथा सङ्गमूलकमित्यर्थः विद्धि जानीहि । अतएवोक्तं संसर्गजा दोषगुणा भवन्तीति । नाम सम्भावनायां उ भोः !

व्याकरणम् ।

क्तिः स्यादित्यादि । स्यादिस्त्यादिश क्तिसंज्ञः स्यात् ॥ ३१ ॥

क्तद्व्वान्येकद्विबहुषु कशः । तैरेकैकं वचनं क्रमात् क्त द व्वसंज्ञं स्यात् । तानि चैकद्विबहुष्वर्थेषु प्रयुज्यन्ते ॥ ३२ ॥

सर्व्वज्ञोऽज्ञोह्यजासङ्गात् विर्व्वाग्मी वाग्मिसङ्गतः॥ ३३॥
कर्म्मभिर्मुक्त उन्नद्धे वृथा कर्म्मोपदेशनम्।
दिष्टे लुपि तु सन्ध्याद्यविधिनापि कृता यथा॥ ३४॥
शिष्याः। एतद्वाचाऽद्योपसर्गं निःशेषं विदधात्युत।
तदुच्यतां महाभाग! अन्धानां वर्त्मदर्शक॥ ३५॥

---

अन्यत् किं दर्श्यते उदाहरणविषयीति शेषः। सर्व्वज्ञ ईश्वरः अजासङ्गात् जीवत्व-निर्व्वाहकजड़ीभूतमायासङ्गात् अज्ञो मूढ़ो भवतीति शेषः। विः पक्षी वाग्मिसङ्गतः वक्तृजनसङ्गात् वाग्मी प्रशस्तवाक्ययुक्तो भवतीति शेषः। वृत्तं पद्ये चरित्रे चेत्यमरः। पद्ये। विद्धि वृत्तं पद्यं जानीहीत्यर्थः। अन्यत् स्पष्टं॥ सक्तिकं १, दं १, नाम १, अन्यत् १, दर्श्यते ८, ॥ ३३॥

अध्यात्मोपदेशस्तु पात्रे एव फलतीत्याह कर्म्मेति। कर्म्मभिर्व्वैदिकतान्त्रिकैः कर्म्मभि-र्मुक्ते उन्नद्धे धनाद्युन्मत्ते जने कर्म्मोपदेशनं कर्म्मविधायकशास्त्रोपदेशनं वृथैव निष्फल-मेव। अत्र दृष्टान्तयति। दिष्टे काले लुपि लुप्ते अतिक्रान्ते सतीति यावत्। आद्य-विधिना मुख्यकल्पेन कृतापि सन्ध्या यथा निष्फला तथेत्यर्थः। कालो दिष्टोऽप्यनेहा-पीत्यमरः। पद्ये कर्म्मेत्यादिकम् उदाहरणवाक्यम्। दिष्टे ७, लुपि ७, (तु) सन्ध्याद्यविधि १, न १, ॥ ३४॥

एतदिति। एतद्वाचा एतत् तव वाक्यम् अद्य उपसर्गम् उद्वेगं निःशेषं निरवशेषं निर्नास्ति शेषोऽवशिष्टो यस्य तादृशं विदधाति करोतीत्यर्थः उपसर्गं दूरीकरोतीत्यर्थः। अन्यत् सुगमम्। वाद्योपसर्गं १, निः १, ॥ ३५॥

व्याकरणम्।

सक्तिकं दं नामाऽन्यत् दर्श्यते। सविभक्तिकं दसञ्ज्ञं स्यात् अन्यत् नामसंज्ञकं लिङ्ग-सञ्ज्ञकमित्यर्थः॥ ३३॥

दिष्टे लुपि तु सन्ध्याद्यविधि न। लुबिति लोपे आदिष्टे सन्ध्याद्यविधौ न स्तः। कर्म्मभिः, मुक्त उन्नद्धे, कर्म्मोपदेशनम्॥ ३४॥

वाद्योपसर्गं निः। वादिर्गण उदाद्युपसर्गश्च निसंज्ञः स्यात्॥ ३५॥

धीमन्निदन्ते सुवचः सुधाऽमिता संजन्यते स्वादित एव तृप्तिकृत् ।
सम्यङ्ङिदन्तस्य महांस्तनोति यो रसग्रहीता श्रुतिजात कौतुकः ३६

तन्वन् यशांसि वितरन् विद्यां सद्वर्णितश्चर ।
मा च स्थेया मूर्खसभे विद्वान् यत्रावमानितः ॥ ३७ ॥

सदुपदेशेन च परोपकारः कर्त्तव्यो भवद्भिः । यतः ।

बिन्दुमात्रस्याक्षरं स्यान्नुः क्वाप्युपकृतं सतः ।

धीमन्निति । हे धीमन् ! ते तव इदं सुवचः साधुवाक्यम् अमिता अपरिमिता सुधेव अमृतमिव स्वादितः स्वस्यारम्भकाल एव तृप्तिकृत् तृप्तिजनिका संजन्यते भवतीत्यर्थः । हे सम्यङ् ! साधो ! यो जनो रसग्रहीता रसग्राही तथा श्रुतिजातकौतुकः श्रुत्वा जातं कौतुकं कुतूहलं यस्य तादृशो भवति इदं वचस्तस्यैव जनस्य महान् उत्सवान् आनन्दविशेषान् तनोति विस्तारयति । मह उद्धव उत्सव इत्यमरः । महांस्तनोति ग्रहीता इत्यादिकम् उं । नित् १।, अन्ते ७, ॥ मिता ३।, जन्यते ८।, स्वादितः ७।, ( एव ) ॥ ङित् १।, अन्तस्य ६।, ॥ ३६ ॥

तन्वन्निति । तन्वन् विस्तारयन् । सद्वर्णितः सद्भिः साधुभिः पण्डितैश्च वर्णितः स्तूयमानः सन् चर प्रचरणशीलो भव । पक्षे । सद्वर इति सद्भिर्वृतस्य सं । पूर्वापरभागौ उं ॥ णितः १।, चरमाचः ५।, ॥ ३७ ॥

विन्द्विति । क्वापि कस्मिन्नपि काले सतः साधोः नुर्मनुष्यस्य विन्दुमात्रस्य स्वल्पमपि उपकृतम् उपकारः अक्षरं स्यात् सदा अर्थ्यमाणत्वेनाविनाशि स्यात् । अत्र दृष्टान्तयति ।

## व्याकरणम् ।

निदन्ते । नित् मकारानुबन्धः स्वसम्बन्धिनः अन्ते जायते । मिता जन्यते स्वादित एव । मिता मकारानुबन्धेन स्वादितः स्वसम्बन्धिनः आदौ जन्यते । ङिदन्तस्य । ङित् ङानुबन्धः स्वसम्बन्धिनः अन्त्यस्य स्थाने जायते । महांस्तनोति, ग्रहीता ॥३६॥

णितश्चरमाचः । णित् णकारानुबन्धश्चरमाचः अन्त्याचः परे जायते । तन्वन्, यशांसि, विद्वान् ॥ ३७ ॥

यथा प्रणीतेऽस्तमेकद्विविन्द्वात्माक्षरं सुवि: ॥ ३८ ॥

वयं शिष्या: प्रणता: स्म ॥ ० ॥

---

वेदान्ती । न यस्यादिर्निरूप्योत्र शक्त: प्रकृतिसङ्गत: ।

यदज्ञानात् पुमान् मूढ़ो नमतैनं महेश्वरम् ॥ १ ॥

तेनैव सर्व्वसिद्धि: । शिष्या: ।

उक्तिस्तु प्रीतिपूर्व्वात्र भवता संप्रयुज्यते ।

सालिङ्गत इवाङ्गान्यलङ्कृता स्त्रीव सद्रसा ॥ २ ॥

प्रणीते संस्कृते वर्त्ती अस्तं क्षिप्तम् एकद्विविन्दु एकद्विविन्दुपरिमितं सुवियथा आत्मनो निजस्य अक्षरमक्षयं भवति तथेत्यर्थ: । विन्दुमात्रं १।, ( अ ) अक्षरं १।, सु: १।, । द्विविन्दात्माक्षरं १।, वि: १।, ( सु ) ॥ ३८ ॥

---

नयस्वेति । तं महेश्वरं नमत । यस्य महेश्वरस्य आदिर्निरूप्यो निरूपयितुं शक्यो न मुनिभिरिति शेष: । य: प्रकृतिसङ्गत: प्रकृत्या युक्त: सन् शक्त: सृष्ट्यादिकरणे समर्थो भवति यदज्ञानात् यद्विषयकज्ञानाभावात् पुमान् आत्ममूढ़: । पद्ये । नय इति नगस्य सं । स्यादि: १।, निरूप्य: १।, अत्र ७, शक्त: १।, प्रकृतिसङ्गत: ५।, ॥ १ ॥

उक्तिरिति । अत्र समये प्रीतिपूर्व्वा स्नेहपूर्व्विका उक्तिर्व्वाक्यं भवता सम्यक् प्रयुज्यते येतिशेष: । सा उक्ति: अङ्गानि अस्माकं मनांसि आलिङ्गते प्रविशति हृदयङ्गमा भवतीत्यर्थ: । का इव इत्याह । सद्रसा सन् साधु: रसोऽनुरागो यस्यास्ताद्दशी अलङ्कृता स्त्रीव । एतेन उक्तावपि सरसत्वं सालङ्कारत्वञ्च सूचितम् । पद्ये । उ सस्यो-

व्याकरणम् ।

विन्दुमात्रस्याक्षरं सु: । विन्दमात्रम् अक्षरं सुसंज्ञं स्यात् । द्विविन्द्वात्माक्षरं वि: । द्विविन्दुमात्रो वर्णो विसंज्ञ: स्यात् । इकारोऽवधारणे । कतं, सत:, अन्तं, इवि: ॥ ३८ ॥

इति संज्ञापाद: ॥ ० ॥

---

स्यादिर्निरूप्योऽत्र शक्त: प्रकृतिसङ्गत: । अत्र इदानीं स्यादिर्निरूपणीय: य: स्यादि: प्रकृतिसङ्गत एव शक्त: शक्तिमान् भवति । यदज्ञानात् पुमान् मूढ़: ॥ १ ॥

**काऽप्रीतिपूर्व्वोक्तिः ? परस्यौजसो व्यक्तयो यत् ॥ ३ ॥**

**का व्यक्तिर्द्वितीया भवति ? अमा वा ग्रस्तं कर्म्मकं यया प्रतिपाद्यते ॥ ४ ॥**

**चेत् परतः स्त्री सैव भवत्यमाटाभ्यामुत्तरेऽभिस्कन्द्यते कुत्सितलोकात् ॥ ५ ॥**

धने। क्तिः १।, ( तु ) ( प्री इति ) प्रीतिपूर्व्वा १।, अत्र भवता ३।, संप्रयुज्यते ८।, सा १।, लिङ्गतः ५, ॥ २ ॥

केति। अप्रीतिपूर्व्वा उक्तिः का ? अर्थात् अप्रीतिजनिका का उक्तिरित्यर्थः। अस्योत्तरम्। यत् यस्मात् वाक्यात् परस्यौजसः परस्य ग्रचोः ओजसां तेजसां बलानाञ्च अभिव्यक्तयो भवन्ति अर्थात् ग्रवोः स्तुतयोऽप्रीतिजनिकाः। पक्षे। पर इति उत्कृष्टस्य यदिति यतवतः सं। का १।, प्री १।, इति १।, पूर्व्वा १।, ( उ ! ) क्तिः १।, ( पर ! ) स्यौजसः १॥, व्यक्तयः १॥, ॥ ३ ॥

केति। का व्यक्तिर्द्वितीया सङ्गया भवतीति प्रश्नः। अस्योत्तरम्। यया अमा वा सहैव ग्रस्तं ग्रग्रसम् अर्थात् वैधं कर्म्मकं कर्म्मसमूहः प्रतिपाद्यते निष्पाद्यते पुम्भिरिति शेषः। अर्थात् भार्य्यैव पुंसां द्वितीया। अमा सह समीपे चेत्यमरः। का १।, व्यक्तिः १।, द्वितीया १।, भवति ८।, । अमावा ३।, ग्रस् १।, ॥ ४ ॥

चेदिति। चेत् यदि सैव स्त्री परतः परत्र अमाटा अमा सह अटतीति अमाटा सहगामिनी भवति तदा आभ्यां स्त्रीपुंसाभ्यां कुत्सितलोकात् अभि निर्भयं यथा स्यात् तथा

## व्याकरणम्।

क्तिस्तु प्रीतिपूर्व्वैव भवता संप्रयुज्यते सा लिङ्गतः। प्री प्रथमा इत्याद्या क्तिर्व्विभक्तिः सा लिङ्गतः लिङ्गात् परे अत्र भवता मान्येन प्रयुज्यते ॥ २ ॥

का प्रीतिपूर्व्वोक्तिः। परस्यौजसः व्यक्तयः। उ भो ! का प्री इति पूर्वा प्रथमा क्तिर्विभक्तिः। अस्योत्तरम्। सि, औ, जसः व्यक्तयः। पर इति सम्बोधनम् ॥ ३ ॥

का व्यक्तिर्द्वितीया भवति ?। अस्योत्तरम् अमावा ग्रस्। अम औ सह ग्रस्। अम् च औ च इति अमौ तेन अमावा इति। अथवा अमा आवा च सह ग्रस् द्वितीया भवतीति पूर्व्वेणान्वयः। यया विभक्त्या तं प्रसिद्धं कर्म्मकं कर्म्मत्वं प्रतिपाद्यते ॥ ४ ॥

यथा कुटुम्बपोषात् भ्यसन्ते नेभ्या मन्विति
चीवरवाससोऽपि ॥ ६ ॥
तत् पूर्व्वापरद्वयमपि न स्याद्यं मन्यतेऽपीह
लोकमर्य्यादातिक्रमकृदिति ॥ ७ ॥
क युत ! परमार्थपेपीति ज्ञानसोऽसामय
मत्सर इति परेषां षष्ठी व्यक्तिः ॥ ८ ॥

स्कन्द्यते गम्यते। अमा सह समीपे चेत्यमरः। पचे। चेदिति चेतनस्य सं ॥ परतः ७।, त्री १।, मा १।, ( एव ) भवति ८।, अमाटाभ्यां १।, उत्तरे ७।, भिस् १।, ॥ ५ ॥

यथेति। इभ्याः धनिनः चीवरवाससश्च पोष्यवर्गात् न भ्यसन्ते न बिभ्यति इति ननु जानीहि। भ्यसन्ते इति भ्यसञ भये इत्यस्य रूपम्। चीवरं भिक्षुवाससीति कोषः। पचे। वरवासस इति सं। भ्यस् १।, अन्ते ७।, ने, भ्यां, ( अनु इति ) चो १।, ॥ ६ ॥

तदिति। तत् पूर्व्वापरद्वयं तस्य जनस्य पूर्व्वापरलोकद्वयमपि न स्यात् यं जनं लोकमर्य्यादातिक्रमकृदिति ज्ञात्वा मन्यते। पचे। लोकेत्यादिकं सं। तत् पूर्व्वापर-द्वयं १।, ( अपि ) नसि १।, आद्यं १।, मन्यते ८।, पी १, ॥ ७ ॥

क इति। उत भोः! को जनः परमार्थपेपी परमार्थनाशकः ? अस्योत्तरम्। ज्ञानसः ज्ञानं स्यति नाशयतीति स तथा असामः असाम्यः। मत्सरः अन्यशुभद्वेषः। तथा च एतादृशो मत्सर एव परमार्थनाशकः इति एष एव परेषां शत्रूणां मध्ये षष्ठी व्यक्तिः। मात्सर्य्यस्य षड्रिपुत्वात्। मत्सरोऽन्यशुभद्वेष इत्यमरः। पचे। परमार्थपे इति

व्याकरणम्।

परतस्त्री सैव भवति अमा टाभ्यामुत्तरे भिस्। परत्र त्री तृतीया सैव भवति टाभ्याम् अमा सह उत्तरे उत्तरप्रतीके भिस्। अर्थात् टाभ्यां, भिस्, ॥ ५ ॥

भ्यसन्ते नेभ्यामन्विति चो। अनु पश्चात् ने, भ्यां, भ्यस्, अन्ते इति चो चतुर्थी ॥ ६ ॥

तत् पूर्व्वापरद्वयमपि ( नसि आद्यं ) नस्याद्यं मन्यते पी। तस्याश्चतुर्थ्याः पूर्व्वापर-द्वयम् आद्यं नसि च पी पञ्चमी मन्यते ॥ ७ ॥

पीतिज्ञानसोसामय मत्सर इति परेषां षष्ठी व्यक्तिः। हे ज्ञाः! ज्ञानिनः! ( नस्

न नु ! सप्तमी श्रूयते तथाऽन्योऽसौ सुप् मनसि स्मर इति ॥ ९ ॥

अन्यदपि कथयामि । पुरा सुतपा नाम विप्रो ज्ञानार्थी जनकराजमुपगम्य सानुनयं तं प्रति । राजन् ! तद्दर्शनेन सहसा मम मनः प्रसीदतीति जानामि भवान् साधुः यत् श्रुतम् ।

सहसान्तस्फोरणं स्यात् यस्मिन् दृष्टे स पुण्यभाक् ।
स पापोऽच्चिगतोऽकस्मात् यः स्यादच्चिगतः सताम् ॥ १० ॥

तस्मात् ।

सं । क युत इति च सं । चीति २।, ( ञा: १।।।, ) ( नस् औस् आम् ) नसौ साम: १।।।, ( च ) मत् ५।, ( स्मर ८।, ) ॥ ८ ॥

नन्विति । शु भोः । सप्तमी न श्रूयते अर्थात् सप्तमी अनुर्व्यक्तिर्न श्रूयते तेषां षट्संख्यकत्वात् । तथा अन्योऽसौ मनसिसुप् शयनशील: स्मर: काम: परमार्थपेषी अनुरिति श्रूयते । इत्यर्थः । सुप् इति स्वपधातोः क्विपि रूपम् । पचे । ननु सम्बोधने । सप्तमी १।, श्रूयते ८।, ( तथा ) ( निऔस् ) न्यौसौ १॥, सुप् १।, ॥ ९ ॥

सहेति । यस्मिन् जने दृष्टे सति सहसा हठात् अन्तस्फोरणम् अन्तरात्मन: स्फोरणं विकाशः स्यात् स जनः पुण्यभाक् । यो जनोऽच्चिगतो दृष्टः सन् अकस्मात् निष्कारणं सतां साधूनाम् अच्चिगतो द्वेष्यः स्यात् स एव पापः । द्वेष्येऽच्चिगत इत्यमरः । सहसान्तः १।, फः १।, ॥ १० ॥

व्याकरणम् ।

औस् आम् ) नसौसाम: मौ इति मत् मम सकाशात् स्मर जानीहि इति तु अन्येषां मते षष्ठी ॥ ८ ॥

सप्तमी श्रूयते तथा ( नि औस् सुप् ) न्यसौसुप् । निश् औस् च इति न्यौसौ सुप् च सप्तमी श्रूयते इति मनसि स्मर ॥ ९ ॥

सहसान्तस्फः । हसेन सह अन्तो विराम: फसंज्ञः स्यात् ॥ १० ॥

दान्त ! वत्स ! भियस्ते न जेताऽसि यमकिङ्करान् ।
जितानि येनाऽजय्यानि किन्तस्य लघुभिः परैः ॥ ११ ॥

जनकः विप्रं प्रति ।

आव्यान्तिके काकुवाग्घि रौष्यञ्जस्सिद्धये मनाक् ।
अर्थस्य किं न सर्व्वार्थसिद्धयेऽर्थयसे शिवम् ॥ १२ ॥

( विप्रः । )

विनाशि मन्ये नो पण्डे सफले वाऽर्थनेऽर्थिनाम् ।
मानित्वं मानिनां राजन्नतो याचे धनानि न ॥ १३ ॥

दान्तेति । हे वत्स ! हे दान्त ! निगृहीतेन्द्रियः ! ते तव भियो भयानि न । त्वं यमकिङ्करान् जेतासि जयशीलोऽसि । अत्र ज्ञापकमाह । येन जनेन अजय्यानि जेतुमशक्यानि अर्थात् इन्द्रियाणि जितानि तस्य जनस्य लघुभिः परैः शत्रुभिः किं ? किं भयमित्यर्थः । पद्ये । य इति वायोः सं ॥ दान्तवत् १।, सभि ७, ॥ ११ ॥

आद्येति । मनाक् अर्थस्य स्वल्पार्थस्य सिद्धये लाभार्थम् आव्यान्तिके धनिनां समीपे काकुवाक् काकूक्तियुक्तः सन् रौषि शब्दवान् भवसि । किं कथं सर्व्वार्थसिद्धये शिवं नार्थयसे याचसे । अञ्ज इति सम्बोधनम् । अञ्जसरौष्यसीति भागवते दृष्टं हि पादपूरणे । पद्ये । काकुवागिति सं ॥ घिः १।, ( औ सि अम् जस् ) औस्यञ्जस् १।, ॥ १२ ॥

विनेति । मानिनाम् अर्थिनां याचकानाम् अर्थने याच्ञे पण्डे निष्फले सति सफले वा सति मानित्वं विनाशि विनष्टं मन्ये नो अपि तु विनाश्येव मन्ये हे राजन् ! अतः कारणात् धनानि न याचे । विना १।, शि २।, मन्ये १॥, नो १।, पण्डे ७, सः १।, ॥ १३ ॥

व्याकरणम् ।

दान्तवत् सभि । सभयोः परयोर्दान्तवत् कार्य्यं स्यात् ॥ ११ ॥

घिरौस्यञ्जस् । औ, सि, अम, जस्, एते घिसंज्ञाः स्युः ॥ १२ ॥

विना शिमन्ये नो पण्डे सः । पण्डे क्लीबे शिं विना अन्ये स घिर्न अर्थात् शिरेव घिः । धनानि ॥ १३ ॥

जनक: । यद्येवं तदा मां कथं स्तौषि शिव: स्तोतुं युज्यते ।
यत: ।

क्लीन शिवनाम्नो ह सोऽन्त: सद्भिर्विचिन्त्यते ।
न हि स्वप्नेऽपि यो दण्डं धत्ते पापिषु भीमरुक् ॥ १४ ॥
मुग् तर्षो यो धवीय: स भोऽविरामो वहत्यसौ ।
विवेकाब्दं नयत्यारात् मुग्धस्य विषये सदा ॥ १५ ॥

( विप्र: । )

भो ज्ञानामृतधि: सम्बोधनेऽसि स्थितिमान् नु ! न: ।
किं कर्त्तव्यं ब्रूहि तस्मै येनात्माशु प्रसीदति ॥ १६ ॥

क्लीनेति । शिवनाम्नो क्लीन सद्भि: साधुभि: स्वप्नेऽपि सोऽन्त: स यम: न विचिन्त्यते यो यम: पापिषु दण्डं धत्ते भीमरुक् भयानककान्ति: । अन्ततीति अन्तो यम: । हकार: एवकारार्थे । पक्षे । क्लीन शिव इति शिवतुल्यस्य सं । नाम्न: ५।, ह्स: १।, अन्त: १।, सद् १।, भि: १।, ॥ १४ ॥

मुगिति । धवो मनुष्यस्तत्सम्बन्धीय इति धवीयो यो मुग् मोह: तर्षो विषयस्पृहा स एव भ: प्रचण्डानिल: अविरामोऽत्यमत्यर्थं वहति असौ प्रचण्डो वायु: विषये मुग्धस्य जनस्य विवेकाब्दं विवेकरूपं मेघम् आरात् दूरे नयति प्रापयति । धवीय: १।, स: १।, भस् १।, विराम: १।, ॥ १५ ॥

भो इति । भो गुरो ! ज्ञानामृतधि: ज्ञानरूपं यदमृतं तस्याधारस्त्वं नोऽस्माकं सम्बोधने सम्यक् बोधनविषये स्थितिमानसि । पक्षे । ज्ञानामृत इति सं । धि: १।, सम्बोधने ७।, सि: १।, स्थितिमान १।, ॥ १६ ॥

### व्याकरणम् ।

नाम्नोहसोऽन्त: सद्भिर्विचिन्त्यते । लिङ्गादुत्तरे सद् मतौ ह्सौ विरामस्य भिसंज्ञ: स्यात् । रुक् ॥ १४ ॥

धवीय: स भो विराम: । भस् विरामस्य धातुसम्बन्धीय: स भिरित्यर्थ: । मुग ॥१५॥

धि: सम्बोधने सि: स्थितिमान् । भो ज्ञानामृत ! ॥ १६ ॥

( जनकः । )

सर्व्व ! त्वमेकः समभवदुभो विश्वस्य त्वत् तथाऽसि मोऽभय-
स्येति सर्व्वनाम स्मर्त्तव्यं शिवशङ्करावपि ॥ १७ ॥
अन्यश्च यत्तत् किं यदस्मत् युष्मत् त्वत् द्विनाम इदमोदयेत
तदा का भीतिः श्रमनतः ॥ १८ ॥
शृणु त्वं जगतः पूर्व्वोऽन्तरोऽधरश्च स्वः परश्च उत्तरोऽवरश्च
दक्षिणश्च तथाऽपरश्च ॥ १९ ॥
अभ्युपगच्छन्त्यन्ये तरमन्यतरञ्च तरतममपि सर्व्वनाम परिहाय
ते त्वविदः ॥ २० ॥

सर्व्वेति । हे सर्व्व ! त्वमेकः अद्वितीयः उभो ! हे भवन् ! विश्वं जगत् त्वत् त्वत्तः समभवत् तथा तेन हेतुना मोऽसि स्रष्टासि त्वं, ब्रह्मणो जगदुत्पादकत्वात् । अभयस्य नास्ति भयं यस्मादिति सोऽभयः पातीति तेन विष्णुरपीत्यर्थः । इति इत्थमेव शिवशङ्करावपि शिवनाम स्मर्त्तव्यम् ॥ १७ ॥

अन्यादिति । अन्यत् यत् अर्थात् सर्व्वनाम्नोऽन्यत् यदस्ति भजनं तत् किं तद्-किञ्चित्करमित्यर्थः । यत् यदि अस्मात् अस्मान् आश्रित्य युष्मत् त्वत् द्विनाम पूर्व्वोक्त-नामद्वयं हे इदम ! इः कामस्तद्दमन ! उदयेत उदयं प्राप्नुयात् । पश्चि । अन्यच्च यन्नाम तत् शृण्वित्यर्थः ॥ १८ ॥

शृण्विति । हे शिव ! शृणु, त्वं जगतः पूर्व्वः अन्तरः मध्यभूतः अधरश्च जगतः पश्चाद्वर्त्ती तथा त्वं स्वः आत्मीयः परश्च स्वभिन्नश्च । त्वम् उत्तरः उत्तमः अवरश्च नीचश्च दक्षिणः अनुकूलः तथाच श्रुतिः, “ब्रह्मैवेदममृतं पुरस्तात् ब्रह्म पश्चात् ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्द्ध्वञ्च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठमिति” तथा परः श्रत्रुः रुद्ररूपत्वात् ॥ १९ ॥

अभ्युपेति । अन्ये जनाः तरतमं तराणां तरणोपायानामुत्तममिति तरतमम् अपि

व्याकरणम् ।

सर्व्व त्वमेकः समभवदुभो विश्वस्य त्वत्तथा सिमोभयश्चेति सर्व्वनाम स्मर्त्तव्यम् ॥ १७ ॥
तत् किं यदस्मत् युष्मत् त्यत् द्विनाम इदमोऽदस् एतद् ॥ १८ ॥
पूर्व्वोऽन्तरोऽधरश्च स्वः परश्च उत्तरोऽवरश्च दक्षिणस्तथाऽपरश्च ॥ १९ ॥

अनुरक्ताश्च केचिदत्रार्थविशेषे भवन्ति सर्व्वनामानि
सर्व्वार्थहेतून् हित्वा ते पशोः समाः ॥ २१ ॥
न रोचनं वचो मोक्षे पिताख्याति जनन्यपि ।
अर्थे मुख्ये च नाख्याती सा स चेह रिपुः शिशोः ॥ २२ ॥

( अपि च । )

अप्याराच्चे तेजसि वारिबुद्धिः स्यात् यथा पशोः ।

सर्व्वनाम शिवनाम परिहाय अन्यतरं तरं तरणोपायं यागादिकम् अभ्युपगच्छन्ति आलम्बन्ते ॥ २० ॥

अन्विति । अत्र जगति केचिज्जनाः अर्थविशेषे अर्थानां पुरुषार्थानां विषयः स्वर्गादिर्यस्य कर्म्मणः तस्मिन् अर्थात् यागादिकर्म्मणि अनुरक्ता भवन्ति सर्व्वनामानि सर्व्वार्थहेतून् सकलपुरुषार्थसाधकानि ॥ २१ ॥

न रोचनमिति । मोक्षे मुक्तिविषये रोचनं रुचिजनकं वचः पिता न आख्याति न वक्ति जनन्यपि मुख्ये अर्थे पुरुषार्थे मोक्षरूपे रोचनं वचो नाख्यानशीला । तथा च वात्सल्येन पितरौ ऐहिकसुखसाधने विरुद्धविद्यादौ रोचनं वचो वदतः सा माता स च पिता शिशोर्बालकस्य रिपुः । अर्थे ७।, अमुख्ये ७।, ( च ) न १।, आख्या चौ३ा२स च ७।, ॥ २२ ॥

अप्याराविति । आराच्चेऽपि आरात् समीपे चरतीति आराच्चं समीपगतं तस्मिन्नपि तेजसि यथा पशोर्वारिबुद्धिः स्यात् तथा स्वाविदुषाम् अनात्मविदाम् अर्थाद-

व्याकरणम् ।

अन्येतरमन्यतरञ्च तरतरमपि सर्व्वनाम । तरतममपि डतरडतमप्रत्ययौ ग्राह्यौ ॥२०॥

केचिदर्थविशेषे भवन्ति हि सर्व्वनामानि । पशोः समाः ॥ २१ ॥

अर्थे मुख्ये च नाख्यातौ ३ा२स चे । अमुख्यार्थे गौणार्थे आख्यायां संज्ञायां चौसाः तृतीयासमासस्तदसमासस्तत्पुरुषतृतीयासमासयोर्व्यस्थले च चे द्वन्द्वसमासे च ते सर्व्वनाम संज्ञा न स्युः ॥ २२ ॥

तथा स्फुरन्ति स्वपरा: स्वस्मिन् स्वाऽविदुषां सदा ॥ २३ ॥

रेऽवाजसि च पूर्व्वाद्या आरूढ़ा ये महापथम् ।

के स्वीयास्ताननुययुस्तन्न स्वा: केऽपि कस्यचित् ॥ २४ ॥

अरेऽबोध ! प्रथमे स्वकुटुम्बा आत्मीया भवन्तु तेषामुपकुर्व्वता भवता कालोऽतिवाञ्छित: प्रथमश्चरमाऽर्द्धकतिपया अपि अल्पतयायत्या नेमो वा हरिर्व्वा श्रायतां स एव परलोके आत्मीय: ॥ २५ ॥

विविचयेत्यवाच्याद्य क्रोती योजनगाम्यपि ।

तत्त्वज्ञानिनां स्वस्मिन् परमेश्वरे स्वपरा: स्फुरन्ति आत्मानात्मज्ञानं भवति । पद्मे । आरादिति समीपगतस्य सं । अरिबुद्वीत्यादिकम् ऊ । चे ७।, ते १॥, जसि ७।, वा ११, ॥ २३ ॥

रे वेति । रे सम्बोधने अवाजसि आसाशीत्यर्थ: अवपूर्व्वकगत्यर्थाजधातोर्ज्ञानार्थकत्वात् । ये पूर्व्वाद्या: महापथं परलोकम् आरूढ़ास्तान् के स्वीया आत्मीया जना: अनुययु: पश्चात् ययु: तत् तस्मात् केऽपि कस्यचित् स्वा: आत्मीया: न ॥ वा ११, जसि ७।, च ११, पूर्व्वाद्या: १॥, ॥ २४ ॥

अरे इति । स्वकुटुम्बा: पोष्यवर्गा: । प्रथम: कालोऽतिवाञ्छित: यापित: चरमाऽर्द्धकतिपया अपि चरम: शेषो योऽर्द्धस्तस्यापि कतिपया: काला अपि अतिवाञ्छिता: आयत्या: उत्तरकालस्य अल्पतया नेमो महादेवो हरिर्वा आश्रीयताम् । पद्मे । अतिवाञ्छित इत्यन्तभाग: ऊ ॥ २५ ॥

विविचयेति । हे अवाच्य । अनिर्वचनीय । अद्य वर्त्तमानदिने योजनगामी

व्याकरणम् ।

चे ते जसि वा । स्वपरा: ॥ २३ ॥

वा जसि च पूर्व्वाद्या: । स्वा: ॥ २४ ॥

प्रथमश्चरमाऽर्द्धकतिपया अपि अल्पतयायत्यानेमो वा । प्रथमाद्या: सर्व्वनामानि वा स्युर्जसि परे । तय अयत्या: तय अयप्रत्ययान्ता: ॥ २५ ॥

इत्येकस्त्वं द्वितीयस्मिन् लोके एकः किमेष्यसि ॥ २६ ॥
स्वकाले ह्यन्तिमात् पूर्व्वं उपधावन् वशीकुरु ।
स्वीयं तं त्वां योऽनुगन्ता चतुर्थे दुर्घटं हि तत् ॥ २७ ॥
कः परोऽस्त्यानन्दमयादीश्वराद्विश्वमित्रतः ।
अन्त्याजादिष्टिः सखा स्वोऽसत्ये दुःखमये भवे ॥ २८ ॥

योजनपरिमितमपि पन्थानं गमिष्यन्नपि जनः क कुत्र इतो इतं गमनं तद्विद्यतेऽस्येति इतो गमनवान् अर्थात् कुत्र गन्तास्मीति विवेचय पुनःपुनरतिशयेन वा विवेचयति । तथा हि योजनमितेऽपि पथि गन्तव्ये क गन्तास्मीति अतिविवेचयति इति द्वैतोः एकस्त्वं द्वितीयस्मिन् लोके किम् एष्यसि यास्यसि । पद्ये । विवेचयेति शिष्यावधानार्थम् । वा १।, व्याद्यके ७।, तीयः १।, ॥ २६ ॥

स्वकाल इति । स्वकाले उक्तसमये अन्तिमात् चरमकालात् पूर्वं उपधावन् समीपे धावन् सन् तं स्वीयम् आत्मीयं वशीकुरु यः आत्मीयः त्वाम् अनुगन्ता सह गमिष्यति । चतुर्थे काले तत्वशीकरणं दुर्घटम् । पद्ये । काले स्व इति सं । अवन्नित्यादिका-नुन्नेयम् । अन्तिमात् ५।, पूर्वः १।, उपधा १।, ॥ २७ ॥

ननु आत्मीय एव क इत्यत आह क इति । असत्ये अनित्ये दुःखमये भवे दारादिमयसंसारे आनन्दमयात् आनन्दस्वरूपात् ईश्वरात् परोऽन्य इष्टिरभीष्टः सखा सुहृत् स्व-आत्मीयः कोऽस्ति अपि तु न कोऽपि कोदृशात् विश्वमित्रतः सर्वेषां मित्रात् अन्त्याजात् अन्त्यजाशी अजश्चेति स तथा तस्मात् । अन्त्यजादिः १।, टिः १।, ॥ २८ ॥

व्याकरणम् ।

वा व्याद्य के तीयः । ङौ चतुर्थी तदादीनां के एकवचने तीयान्तशब्दाः सर्व्व-नामानि वा स्युः । द्वितीयस्मिन् ॥ २६ ॥

अन्तिमात् पूर्व्वं उपधा ॥ २७ ॥

अन्त्याजादिष्टिः ॥ २८ ॥

क्षणात् भवति लुक् यस्य तस्मिन् कार्य्यं न कर्हिचित् ।
ममत्वं तद्धि शोकाय शोकाद्द्देहो विनश्यति ॥ २९ ॥
युक्तो भजन् सुखं जातश्चिन्मयप्रत्ययोऽव्ययम् ।
अपि स्वरादिनिलयं नेहते पातशङ्कया ॥ ३० ॥
निरन्तरहसः स्योऽस्ति पश्यन् मायामयं जगत् ।
निद्रामुक्तः स्वप्नदृष्टवैचित्रं संस्मरन् यथा ॥ ३१ ॥
दीव्यन्तो हि स्त्रीयुतोऽमी तत्फलं कीटमङ्कजम् ।

क्षणादिति । यस्य वस्तुनः क्षणात् लुक् नाशो भवति तस्मिन् वस्तुनि कर्हिचिदपि ममत्वं न कार्य्यं हि यस्मात् तन्ममत्वं शोकाय भवति शोकाद्देहो विनश्यति । पक्षे । क्षणादिति हर्षेण शोक्तुः सं । भवति ८।, लुक् १।, यस ६।, तस्मिन् ७।, कार्य्यं १।, न १।, कर्हिचित् ७।, ॥ २९ ॥

युक्त इति । जात उत्पन्नश्चिन्मयस्य ब्रह्मणः प्रत्ययो ज्ञानं यस्य स जातचिन्मयप्रत्ययः उत्पन्नतत्त्वज्ञान इत्यर्थः एतादृशो युक्तो योगयुक्तो जनः अव्ययं नित्यमानन्दं भजन् सन् स्वरादिनिलयं स्वर्गादिवासमपि पातशङ्कया नेहते नेच्छति । ( च इत् चित् ) चिन्मयप्रत्ययः १।, अव्ययं १।, ( अपि ) स्वरादि १।, नि १।, ॥ ३० ॥

निरन्तरेति । स्यः स योगी मायामयं जगत् पश्यन् सन् निरन्तरहसः निरन्तरहास्ययुक्तोऽस्ति । क इव स्वप्नदृष्टवैचित्र्यं स्मरन् निद्रामुक्तो जनो यथा निरन्तरहास्ययुक्तः स्यात् तथेत्यर्थः । निरन्तरहसः १।, स्यः १।, अस्ति ८।, ॥ ३१ ॥

दीव्यन्त इति । स्त्रीयुतः स्त्रिया युक्ताः अमी संसारिणः दीव्यन्तः क्रीडन्तः सन्तः

व्याकरणम् ।

भवति लुक् यस्य तस्मिन् कार्य्यं न कर्हिचित् ॥ २९ ॥

चिन्मयप्रत्ययोऽव्ययमपि स्वरादि नि । च इत् यस्य तदात्मकप्रत्ययः स्वरादिगणो निर्निपातश्च अव्ययसंज्ञः स्यात् ॥ ३० ॥

निरन्तरहसः स्योऽस्ति । अचामन्तादितो हसः स्य संज्ञः स्यात् ॥ ३१ ॥

मन्यन्ते स्वं तद्वियोगस्तन्वा: चित्यै किमद्भुतम् ॥ ३२ ॥
ना स्त्री युवस्थानमियात् युवती नवचम्पकम् ।
हस्तग्राह्यं स्वधम्मिल्ले काऽनुरागात् दधाति न ॥ ३३ ॥
क्वचिन्न परयामिस्पृट् न भवेत् परिणामदृक् ।
दग्धं स्यात् तेन हृत् चेत्तं तस्मिन् ज्ञानाङ्कुर: कुत: ॥ ३४ ॥
मैवं त्वया वाक् वाच्याद्य कोऽह स्त्रीयुक्च क: पुमान् ।

तत्फलं क्रीडाफलम् अङ्गजम् कीटं स्वं आत्मीयं मन्यन्ते तद्वियोगस्तस्याङ्गजकीटस्य विरहस्तन्वा: शरीरस्य चित्यै क्षयाय भवति किमद्भुतम् । दी १।, व्यस्त: १।, ( चि ) स्त्री १।, ॥ ३२ ॥

नास्त्रीति । स्त्री अर्थात् युवती युवस्थानं यूनां सन्निधौ ना इयात् न गच्छेत् अत्र हेतुमाह । का युवती हस्तग्राह्यं स्वहस्तप्राप्यं नवचम्पकम् अनुरागात् धम्मिल्ले स्त्रीय-संयतकेशे न दधाति न धारयति अपि तु तथा । धम्मिल्ल: संयता: कचा इत्यमर: । न १।, अस्त्री १।, युवस्थानं १।, ॥ ३३ ॥

क्वचिदिति । परिणामदृक् जन: क्वचिदपि समये परयामिस्पृट् परेषां यामिं कुल-स्त्रियं स्पृशतीति स तथा तादृशो न भवेत् । अत्र हेतुमाह दग्धमिति तेन परस्त्रीस्पृशान-शीन । यामि: स्वसृकुलस्त्रियोरिति कोष: । क्वचित् ७।, ( अ ) परे ७।, यामि ७।, ॥ ३४ ॥

मैवमिति । एवं वाक् त्वया न वाच्या का वाक् न वाच्या इत्याह अद्य कश्चो

व्याकरणम् ।

दी यन्तो चि स्त्री । ऊङ ईश इति श्री तदन्तस्त्री एवं नित्यस्त्रीलिङ्गशब्द: दीसंज्ञ: स्यात् । चिशब्द एवकारार्थक: । तन्वा: ॥ ३२ ॥

नास्त्री युवस्थानम् । इय उवस्थानम् ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ न स्यात् । नतु स्त्री ॥ ३३ ॥

क्वचिन्न परयामि । तादृक् स्त्रीलिङ्गशब्द: क्वचिन्न अर्थात् विकल्पेन नदीसंज्ञ: स्यात् आमि परे ॥ ३४ ॥